# वाचस्पत्यम्

( बृहत् संस्कृताभिधानम् )

षष्ठो भागः

चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

THE

CHOWKHAMBA SANSKRIT SERIES

WORK NO. 94

# VACHASPATYAM

**( A Comprehensive Sanskrit Dictionary )**

COMPILED BY

SRI TARANATHA TARKAVACHASPATI

**Professor of Grammar and Philosophy**

**Govt. Sanskrit College, Calcutta.**

## VOL. VI

THE

**CHOWKHAMBA SANSKRIT SERIES OFFICE**

**POST BOX 8,** **VARANASI-1 ( India )** **Phone : 3145**

**1962**

पूर्णमुख पु॰ जनमेजयसर्पसत्रे दग्धनागभेदे भा॰ आ॰५७अ॰।

पूर्णयोग पु॰ बाहुयुद्धभेदे तत्प्रकारः भा॰स॰२२अ॰उक्तो यथा "ततस्तौ नरशार्दूलौ बाहुशस्त्रौ समीयतुः। वीरौ परमसंहृष्टावन्योऽन्यजयकाङ्क्षिणौ। करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम्। कक्षैः कक्षां विधुन्वानावास्फोटं तत्र चक्रतुः। स्कन्धे दोर्भ्यां समाहत्य निहत्य च मुहुर्मुहुः। अङ्गमङ्गैः समाश्लिष्य पुनरास्फालनं विभो!। चित्रहस्तादिकं कृत्वा कक्षाबन्धं च चक्रतुः। गलगण्डाभिघातेन सस्फुलिङ्गेन चाशनिम्। बाहुपाशादिकं कृत्वा पादाहतशिरावुभौ। उरोहस्तं ततश्चक्रौ पूर्णकुम्भौ प्रयुज्य तु। करसंपीडनं कृत्वा गर्जन्तौ वारणाविव। नर्दन्तौ मेघसङ्काशौ बाहुप्रहरणावुभौ। तलेनाहन्यमानौ तु अन्योऽन्यं कृतवीक्षणौ। सिंहाविव सुसंक्रुद्धावाकृष्याकृष्य युध्यताम्। अङ्गेनाङ्गं समापीड्य बाहुभ्यामुभयोरपि। आवृत्य बाहुभिश्चापि उदरं च प्रचक्रतुः। उभौ कट्यां सुपार्श्वे तु तक्षवन्तौ च शिक्षितौ। अधोहस्तं स्वकण्ठे तूदरस्योरसि चाक्षिपत्। सर्वातिक्रान्तमर्यादं पृष्ठभङ्गं च चक्रतुः। स पूर्णमूर्च्छं बाहुभ्यां पूर्णकुम्भं प्रचक्रतुः। तृणपीडं यथाकामं पूर्णयोगं समुष्टिकम्। एवमादीनि युद्धानि प्रकुर्वन्तौ परस्परम्" मू॰। "कक्षैर्दोर्मूलैः कक्षां प्रकोष्ठगतां रज्जुं धुन्वानौ यत्र यत्र कक्षे आस्फोटं चक्रतुः बाहुमूलास्फालनेनाङ्गदवज्ररज्जुशेषं कम्पयन्तावित्यर्थः। चित्रहस्तादिकं हस्तस्यातिवेगेनाकुञ्चनप्रसारणोपर्यधश्चालनं सदीकरणानि चित्रहस्ताः। आदिपदात् पादस्याप्याकुञ्चनादि। कक्षाबन्धं परस्परकक्षायां हस्तौ कृत्वा बन्धनम् गले गण्डेन भालदेशेनाभिघातस्तेन पाषाणघट्टनाङ्गत्वात्तयोरभिघातेन विस्फुलिङ्गोत्पत्त्याऽशनिं वज्रमिव सशब्दतरित्यर्थः। बाहुपाशादिकं चरणपाशादिशब्दार्थः। पादाभ्यामाहताः शिराः स्नायवो याभ्यां तौ दृढप्रहारेण नाडीपर्यन्तमपि वेदनावन्तावित्यर्थः। उरोहस्ततरसि चपेटाप्रहारं पूर्णकुम्भौ ग्रथिताङ्गुलिभ्यां हस्ताभ्यां परशिरसः पीडनं पूर्णकुम्भः द्वित्वं परस्परं द्वावपि चक्रतुरिति वक्तुम्। तलेन चपेटया, आहत्य जानुदेशे पृष्ठं कृत्वा बाहुभिर्बद्ध्वा द्वावपि मिथ उदरमादाय प्रचक्रतुः प्रचिक्षिपतुः कृ विक्षेपेऽस्य रूपम्। एवं कट्यां सुपार्श्वे च प्रचक्रतुः। तक्षवन्तौ तक्षणानुकरणं गात्रसङ्कोच इत्यर्थः तद्वन्तौ। अधोहस्तमुदरस्याधस्तात् हस्तावादरमानेतुं स्वकण्ठे उरसि च कण्ठोरःसमीपे आनीयाक्षिपदास्फालितवान्। पृष्ठस्य भूस्पर्शेन जातं भङ्गं पराभवं बाहुभ्यामुदरादीनि पीडने सम्पूर्णमूर्च्छम्" नीलकण्ठः।

पूर्णवैनाशिक पु॰ सर्ववैनाशिके सर्वशून्यत्ववादिनि बौद्धभेदे सर्ववैनाशिकोऽप्यत्र।

पूर्णहोम पु॰ पूर्णो होमः। पूर्णाहुतौ।

पूर्णा स्त्री "नन्दा भद्रा जया रिक्ता पूर्णा प्रतिपदः क्रमात्" ज्यो॰त॰उक्ते पक्षयोः पञ्चमीदशमीपञ्चदशीरूपे तिथिभेदे।

पूर्णाङ्गद पु॰ नागभेदे भा॰ आ॰ ५७ अ॰।

पूर्णान(ल)क न॰। वर्द्धापनायाम् पूर्णपात्रे मेदि॰ पूर्णपात्रशब्दे दृश्यम्। [कारे विदङ्गे च।

पूर्णानन्द पु॰ पूर्ण आनन्दो यत्र। १परमेश्वरे २तन्त्रप्रकरण-

पूर्णाभिषेक पु॰ कर्म॰। तन्त्रोक्ते कौलाभिषेकभेदे।

पूर्णायुस् पु॰ १प्राधेये गन्धर्वभेदे भा॰आ॰६५ अ॰। पूर्णमायुरस्य। २शतायुष्के कर्म॰। ३शतवर्षमिते जीवनकाले न॰।

पूर्णावतार पु॰ कर्म॰। १नृसिंहे २रामे ३श्रीकृष्णे च तेषां भगवतः संपूर्णावतारत्वात् तथात्वं अन्येषान्तु कलावतारत्वम्। "पूर्णो नृसिंहो रामश्च श्वेतद्वीपविराड् विभुः। परिपूर्णतमः कृष्णो वैकुण्ठे गोकुले स्वयम्। वैकुण्ठे कमलाकान्तो रूपभेदाच्चतुर्भुजः। गोलोके गोकुले राधाकान्तोऽयं द्विभुजः स्वयम्" ब्रह्मवै॰जन्मख॰२८ अ॰ उक्तेस्तेषां तथात्वम्।

पूर्णाशा स्त्री नदीभेदे भा॰ भी॰ ९ अ॰।

पूर्णाहुति स्त्री पूर्णा आहुतिः। होमसमाप्तौ होम्यायामाहुतौ शत॰ब्रा॰ २ २। १।

पूर्णि स्त्री पॄ–णिच्। पूर्तौ पूर्णिमा।

पूर्णिका स्त्री नासाच्छिन्नीनामकखगे त्रिका॰।

पूर्णिमा स्त्री पूर्णिं पूर्त्तिं मिमीते मा–क। १पौर्णमास्यां तिथौ मरीचेः कलायां पत्न्यां जाते २कन्याभेदे "भार्य्या मरीचेस्तु कला सुषुवे कर्दमात्मजा। कश्यपं पूर्णिकाञ्चैव ययोरापूरितं जगत्। पूर्णिकाऽसूत विरजं विश्वगञ्च परन्तप!। भाग॰४।१।१२ तत्तिथिस्वरूपं द्वैधे सुगम्यभेदस्य कर्मभेदे व्याप्ततादिकं च कालमा॰ न्यरूपि यथा "तत्र शुक्लायां पञ्चदश्यां चन्द्रमण्डलं स्वकलाभिः सर्वात्मना पूर्य्यते सेयं मण्डलपरिपूर्त्तिः पूर्णिमेत्यनेन नाम्ना ज्ञायते। तदुक्तं ब्रह्माण्डमत्स्यपुराणयोः "कालत्रये व्यतिक्रान्ते दिवापूर्णौ परस्परम्। चन्द्रादित्यौ प॰

राह्णे तु पूर्णत्वात् पूर्णिमा स्मृता” इति। अह्नः परो भागः पराह्णः सूर्य्यास्तमयकाल इत्यर्थः। तत्र यथादित्यः संपूर्णमण्डलः सन्नस्तमेति तथोत्तरस्यां चन्द्रः सम्पूर्णमण्डलः सन्नुदेतीति। दृष्टान्तदार्ष्टान्तिकभावस्य विवक्षितत्वाद् द्वयोरादित्यचन्द्रयोरुपन्यासः। यथा मण्डलसम्पूर्णत्वविवक्षया पूर्णिमाशब्दः प्रयुज्यते तथा मासपूर्णत्वविवक्षया पौर्णमासीशब्दः प्रयुज्यते। तदुक्तं भविष्योत्तरे “पौर्णमासी महाराज! सोमस्य दयिता तिथिः। पूर्णो मासो भवेद् यस्मात् पौर्णमासी ततः स्मृता” इति। पूर्णिमामावास्ययोर्विस्तरेण मासान्तत्वं मासप्रस्तावे दर्शितम्। अतएव पौर्णमास्यामत्यन्तविप्रकर्षे सत्यनभिभूतत्वाच्चन्द्रमण्डलः सम्पूर्णो दृश्यते। तावेतौ सन्निकर्षविप्रकर्षौ गोभिल आह “यः परो विप्रकर्षः सूर्य्याचन्द्रमसोः सा पौर्णमासी। यः परः सन्निकर्षः सामावास्येति”। तदेवं पर्वाभिधायाः पञ्चदश्याः पूर्णिमादिनामनिर्वचनेन स्वभावविशेषो दर्शितो भवति। ते च पूर्णमास्यामावास्ये प्रत्येकं द्विविधे। तच्च पुराणे दर्शितम् “राका चानुमतिश्चैव पौर्णमासी द्विधा स्मृता। सिनीवाली कुहूश्चैवममावास्या द्विधैव तु” इति। एतासां चतसृणां स्वरूपं काठकशाखायां विस्पष्टं श्रूयते “या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका। या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः” इति। वृद्धवसिष्ठोऽपि “राका चानुमतिश्चैव पौर्णमासीद्वयं विदुः। राका संपूर्णचन्द्रा स्यात् कलोनाऽनुमतिर्मता। पौर्णमासी दिवा दृष्टे शशिन्यनुमतिः स्मृता। रात्रिदृष्टे पुनस्तस्मिन् सैव राकेति कीर्त्तिता”। मत्स्यब्रह्माण्डपुराणयोः “यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह। तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता। अत्यर्थं राजते यस्मात् पौर्णमास्यां निशाकरः। रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः” इति। “अथ पञ्चदशी निर्णीयते। सा द्विविधा पौर्णमास्यमावास्या च। तत्र पौर्णमास्यां परस्परविरुद्धानि वाक्यान्युपलभ्यन्ते। तत्र परविद्धाया ग्राह्यत्वं विष्णुधर्मोत्तरे “एकादश्यष्टमी षष्ठी पौर्णमासी चतुर्दशी। अमावास्या तृतीया च उपोष्या स्युः परान्विताः”। परविद्धानिषेधः पूर्वविद्धाविधिश्च ब्रह्मपुराणपद्मपुराणयोः “एकादश्यमावास्या पूर्वविद्धा तथाऽष्टमी। पूर्णिमा परविद्धा च नोपोष्यं तिथिपञ्चकम्। पूर्वविद्धा तु कर्त्तव्या सप्तमी व्रतिभिर्नरैः। पौर्णमासी, चतुर्दशी परावा नियमाकृता” इति। पूर्वविद्धाग्राह्यत्वं च युग्मवाक्ये। “चतुर्दश्या च पूर्णिमेति”। एवं परस्परविरोधे सति तद्व्यवस्था सा ब्रह्मवैवर्त्ते दर्शिता “भूतविद्धा न कर्त्तव्या अमावास्या च पूर्णिमा। वर्जयित्वा मुनिश्रेष्ठ! सावित्रीव्रतमुत्तमम्” इति। सावित्री राजकन्या तया चीर्णं व्रतं सावित्रीव्रतम्। तच्च भविष्योत्तरपुराणे दर्शितम् “कथयामि कुलस्त्रीणां महिम्नो वर्द्धनं परम्। यथा चीर्णं व्रतं पूर्वं सावित्र्या राजकन्यया” इति। एतच्च पौर्णमास्याममावास्यायां च विहितम्। तस्मिन् व्रते पूर्वविद्धा ग्राह्या। व्रतान्तरे पूर्वविद्धा न कर्त्तव्या किन्तु परविद्धैव कर्त्तव्येति परस्परविरुद्धस्य शास्त्रद्वयस्य व्यवस्था। यदा तु चतुर्दश्यष्टादशनाडिका भवति तदा सावित्रीव्रतमपि तत्र परित्याज्यम्। “भूतोऽष्टादशनाडीभिर्दूषयत्युत्तरां तिथिमिति” स्मृतेः। सोऽयं पौर्णमासीनिर्णयः स एवामावास्यायामप्यवगन्तव्यः। तत्रापि सावित्रीव्रतं पूर्वदिने कर्त्तव्यं व्रतान्तराण्युत्तरदिने। अस्यां च व्यवस्थायां ब्रह्मवैवर्त्तवचनं पूर्वमुदाहृतम्। स्कन्दपुराणेऽपि “भूतविद्धा सिनीवाली न तु तत्र व्रतं चरेत्। वर्जयित्वा तु सावित्रीव्रतं तु शिखिवाहन!” इति। एवं च सति युग्मशास्त्रं सावित्रीव्रतव्यतिरिक्तेषु व्रतेषु द्रष्टव्यम्। प्रचेता अपि “नागविद्धा तु या षष्ठी सप्तम्या च युताष्टमी। दशम्येकादशीविद्धा त्रयोदश्या चतुर्दशी। भूतविद्धाप्यमावास्या न ग्राह्या मुनिपुङ्गवैः। उत्तरोत्तरविद्धास्ताः कर्त्तव्याः काठकी श्रुतिः” इति। पद्मपुराणेऽपि “षष्ठ्यष्टमी तथा दर्शः कृष्णपक्षे त्रयोदशी। एताः परयुताः कार्य्याः पराः पूर्वेण संयुताः” इति। यत्तु नारदीयपुराणे “दर्शं च पौर्णमासं च पितुः सांवत्सरं दिनम्। पूर्वविद्धमकुर्वाणो नरकं प्रतिपद्यते” इति तत् सावित्रीव्रतविषयं श्राद्धविषयं वा। अमावास्यायामिव पौर्णमास्यामपि श्राद्धं विहितम् तथाच पितामहः “अमावास्याव्यतीपातपौर्णमास्यष्टकासु च। विद्वान् श्राद्धमकुर्वाणः प्रायश्चित्तीयते द्विजः” इति। अमावास्याश्राद्धस्य च पार्वणरूपत्वमपराह्णस्य तत्कर्मकालत्वं कुतपस्य प्रारम्भकालत्वमित्येतन्नितयं प्रतिपत्प्रकरणे प्रत्याब्दिकनिर्णये प्रपञ्चितम्”।

“सा चतुर्दशीयुता ग्राह्या युग्मात्। अतः “पञ्चान्ते चो-

सति स्नायात् तेन नायाति यत्पुरम्" विष्णुः "इत्येते सहितौ यस्यां दिवि चन्द्रबृहस्पती। पौर्णमासी तु महती प्रोक्ता संवत्सरे तु सा। तस्यां स्नानोपवासाद्यमक्षयं परिकीर्त्तितम्"। सहितौ माससंज्ञानिमित्तकृत्तिकादिनक्षत्रगतौ महाकार्त्तिक्यादिदर्शनात्। तथा च राजमार्त्तण्डः "माससंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः। गुरुणा याति संयोगं सा तिथिर्महती स्मृता"। स्कान्दपाद्मयोः "पौर्णमासीषु चैतासु मासर्क्षसहितासु च। एतासु स्नानदानाभ्यां फलं दशगुणं स्मृतम्" ति॰त॰ स्मृतम्।

**पूर्णेन्दु** पु॰ कर्म॰। पञ्चदशभिः कलाभिः पूर्णे चन्द्रे।

**पूर्णोत्कट** पु॰ पु॰ प्राच्ये देशभेदे मार्क॰५८अ॰। [दृश्यम्।

**पूर्णोपमा** स्त्री उपमालङ्कारभेदे अलङ्कारशब्दे ३८६ पृ॰

**पूर्त्त** त्रि॰ पूर—क्त नि॰। १पूरिते २छन्ने च विश्वः। पृ—पालने कर्मणि क्त। ३पालिते। भावे क्त। ४पालने न॰ ५शब्दर॰। ५खातादिकर्मणि न॰ अमरः। कात्यायनः "वापी कूपतडागादिदेवतायतनानि च। अन्नप्रदानमारामः पूर्त्तमित्यभिधीयते"। आरामः पुष्पफलोपायहेतुर्भूभागः। "अग्निहोत्रं तपः सत्यं वेदानाञ्चानुपालनम्। आतिथ्यं वैश्वदेवञ्च इष्टमित्यभिधीयते। ग्रहोपरागे यद्दानं पूर्त्तमित्यभिधीयते। इष्टापूर्त्तं द्विजातीनां धर्मः सामान्य उच्यते। अधिकारी भवेच्छूद्रः पूर्त्ते धर्मे न वैदिके"। वैदिके वेदाध्ययनसाध्ये अग्निहोत्रादाविति" रत्नाकरः। एवं स्त्रीणामपि पूर्त्ताधिकारः। तथा नारीमधिकृत्य बृहस्पतिः "पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्रीयमातुलान्। पूजयेत् कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः"। एतेन "जलाशयोत्सर्गे गौरवतरत्वाद्वन्मन्त्रयोर्ज्ञानकर्मसमन्त्रपाठः तत्तामन्त्रकतया स्त्रीशूद्रयोरनधिकारेण तद्वति यागेऽप्यनधिकारः विशेषोपदेशविरहादिति" द्वैतनिर्णयोक्तं निरस्तम्। अतएव तयोर्जलाशयोत्सर्गादिप्रयोगवेदीहोमादिसमाचारः। अत्र होमो यज्ञो न कार्य्यात् ब्राह्मणद्वाराकरणस्यापस्तम्बवचनात्। तद्यथा आरणवत्यादुपक्रम्य "तत्र तमस्ततमग्नौ न स्त्री जुहुयान्नानुपेतः इति" अनुपेतः अनुपनीतः, किन्तु ब्राह्मणद्वारा करणीयः। "श्रौतस्मार्त्तक्रियाहेतोर्वृणुयादृत्विजः स्वयम्" इति याज्ञवल्क्योक्तेः। "ऋत्विग्वादे नियुक्तौ च यौ संपरिकीर्त्तितौ। यथा स्वामाप्नुयात् पुण्यं हानिं वादेऽथ वा जयम्" इति बृहस्पत्युक्तेः। वैदिकेतरमन्त्रपाठे शूद्रादेरप्यधिकारः। "वेदमन्त्रवर्जं शूद्रस्येति" छन्दोगपरिशिष्टाचार्यचिन्तामणिधृतस्मृतौ वेदेतिविशेषणात्। "शूद्रोऽप्येवंविधः प्रोक्तो विना मन्त्रेण संस्कृतः। न केनचित् समसृजत् छन्दसा तं प्रजापतिः" इति समस्मृतौ छन्दसा वेदेन इत्युक्तेश्च। तं शूद्रम्। पञ्चयज्ञानुष्ठानेषु वैदिकेतरमन्त्रोऽपि निषिद्धः। शूद्रमधिकृत्य "नमस्कारेण मन्त्रेण पञ्चयज्ञान् न हापयेत्" इति याज्ञवल्कीयेन "ब्रह्मक्षत्रविशामेव मन्त्रवत् स्नानमिष्यते। तूष्णीमेव हि शूद्रस्य सनमस्कारकं मतम्" इति योगियाज्ञवल्कीयेन चाह्मधिकृत्य "अयमेव विधिः प्रोक्तः शूद्राणां मन्त्रवर्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति वराहपुराणीयेन च नमस्कारेणेति तूष्णीमिति मन्त्रवर्जित इत्यभिधानात्"।

**पूर्त्ति** स्त्री पृ—भावे क्तिन्। १पूरणे "हविः पूर्त्तिश्च पूरणे" ज्यो॰त॰उक्ते २सुखने च। [ङीप्।

**पूर्त्तिन्** त्रि॰ पूर्त्तमनेन इष्टा॰ इनि। कृतपूरणे। स्त्रियां

**पूर्द्वार** न॰ ६त॰। पुरस्य द्वारे गोपुरे अमरः। [अपूर्धीत्।

**पूर्धि** वाक्यायां आ॰प॰सक॰सेट्. निघण्टुः। पूर्धयति

**पूर्ब** निमन्त्रणे सक॰ निवासे अक॰ चु॰उभ॰ सेट्। पूर्बयति ते अपुपूर्बत् त। ओष्ठ्यान्तोऽयम्।

**पूर्य्य** त्रि॰ पृ—क्यप् पूर—ण्यत् वा। १पूरणीये २परिपाल्ये च

**पूर्व** निवासे अक॰ निमन्त्रणे सक॰ भ्वा॰ प॰ सेट। अन्तस्थान्तोऽयम्। पूर्वति अपूर्वीत्।

**पूर्व(र्ब)** त्रि॰ पूर्व(र्ब)—अच्। १प्रथमे आद्ये यस्यां दिशि येषां सूर्यस्य प्रथमं दृष्टिः तेषां तस्यां २दिशि स्त्री तदुपलक्षिते ३देशे यस्य यदपेक्षया प्रथमं जन्मादि तस्य ४तादृशकाले ५तदुपलक्षिते च। तस्य दिग्देशकालव्यवस्थावाचित्वे सर्वनामकार्य्यं पूर्वस्मै इत्यादि जसि ङिङस्योस्तु वा पूर्वे पूर्वाः पूर्वस्मात् पूर्वात् पूर्वे पूर्वस्मिन्। स्त्रियां तु न विभाषा पूर्वस्यै पूर्वस्याम् इत्यादि। सर्वनामत्वेन वृत्तिमात्रेऽस्य पुंवद्भावः। पूर्वस्यां स्थितं पूर्वस्थितम्। पूर्वस्या रूपं पूर्वरूपम् इत्यादि।

**पूर्व(र्ब)कर्म्मन्** न॰ कर्म॰। प्रथमे कर्मणि "कर्म त्रिविधं पूर्वकर्मप्रधानकर्म पश्चात्कर्मेति" सुश्रुतः। पूर्वभागे।

**पूर्व(र्ब)काय** पु॰ पूर्वं(र्बं) कायस्य एकदेशित॰। कायस्य

**पूर्व(र्ब)कालिक** त्रि॰ पूर्वः(र्बः)कालः साधनतयाऽस्त्यस्य ठन्। पूर्व(र्ब)कालसाध्ये "हर्षणं पूर्व(र्ब)कालिकम्"

शा॰शौ॰दृश॰। पूर्व(र्व)काले भवः ठञि वृद्धिः। पौर्व्व(र्व)-कालिक इत्येव तत्रार्थे त्रि॰ स्त्रियां ङीप् इति भेदः।

पूर्व(र्व)कृत् पु॰ पूर्वां(र्वां) करोति कृ-क्विप् वृत्तौ पुंवत्। १पूर्व(र्व)दिगधिपतौ आदित्ये २तदधिपे इन्द्रे च यजु॰ १०२६। ३पूर्व(र्व)कारकमात्रे त्रि॰।

पूर्व(र्व)कोटि स्त्री विप्रतिपत्तौ पूर्वोपात्ते विषये पूर्वपक्षे

पूर्व(र्व)गङ्गा स्त्री नित्यक॰। नर्मदानद्यां हेम॰।

पूर्व(र्व)चित्ति स्त्री॰ चित-भावे क्तिन् पूर्वं(र्वं) चित्तिः स्मरणं यस्य। १पूर्वानुभवविषये यजु॰१२।१।१२।४२। २अप्सरो-भेदे स्त्री हरिवं॰ १२अ॰।

पूर्व(र्व)ज पु॰ पूर्वस्मिन् काले जायते जन-ड। १ज्येष्ठभ्रातरि रघुः १०।२६। २ज्येष्ठभगिन्यां स्त्री अमरः। ३पूर्वकाल-जातमात्रे त्रि॰। "ज्येष्ठाम्बुतीयमिच्छन्ति आवमाणाद् पूर्व(र्व)जम्"। ४चन्द्रलोकस्थे दिव्यपितृगणे "अथ पूर्व(र्व)जाः पितरश्चन्द्रलोकस्था व्यक्तयक्षाः स्वधाभुजः। अव्यवायादवस्ते च" त्रिका॰। ५पितामहादौ "स पूर्व(र्व)जानां कपिलेन रोषात्" रघुः। [त्रिका॰

पूर्व(र्व)जिन पु॰ कर्म॰। प्राचीने जिनभेदे मञ्जुघोषप्रभृतौ

पूर्व(र्व)दक्षिणा स्त्री पूर्व(र्व)स्या दक्षिणस्याश्चान्तराला दिक् "दिङ्नामान्यन्तराले" पा॰स॰। पूर्वदक्षिणयोर्दिशोरन्त-रालायां दिशि १अग्निकोणे २तद्दिक्स्थे देशे च मार्क॰ पु॰ ५८ अ॰।

पूर्व(र्व)दिक्पति पु॰ कर्म॰ ६त॰। इन्द्रे हेम॰। पूर्व(र्व)दिगी-शादयोऽप्यत्र। २मेषसिंहादिराशिषु। "प्रागादिककुभां नाथा यथासंख्यं प्रदक्षिणम्। मेषाद्या राशयो ज्ञेया स्त्रिरावृत्तिपरिभ्रमात्" ज्यो॰त॰।

पूर्व(र्व)दिग्बल न॰ दिग्बलशब्दे ३५७२ पृ॰ उक्ते ग्रहा-दिपदानां बलभेदे पूर्वस्यां दिशिभवे बलभेदे

पूर्व(र्व)दिग्वदन न॰ पूर्वदिशि वदनमस्य। दिग्वदनशब्दे ३५७५ पृ॰ उक्ते मेषसिंहधनूरूपराशित्रिके

पूर्व(र्व)दिश् स्त्री कर्म॰। प्राच्यां दिशि यस्यां दिशि येषां सूर्यस्य प्रथमदृष्टिः तेषां सा दिक्प्राची। तज्ज्ञानो-पायश्च दिग्ज्ञानशब्दे ३५७४ पृ॰ दृश्यः।

पूर्व(र्व)दिष्ट त्रि॰ पूर्व(र्व) दिष्टं भाग्यं साधनत्वेनास्त्यस्य अच्। पूर्वभाग्यानुरूपेण जाते १दुःखादौ "दैवैर्मर्त्यस्य बहुमोत्र पूर्व(र्व)दिष्टं हि तत् स्मृतम्" भाग॰ ६।१७ श्लो॰। पूर्व(र्व) दिष्टम्। २पूर्वविहिते त्रि॰।

पूर्व(र्व)देव पु॰ पूर्व(र्व) देवाः। १असुरे अमरः। तेषां प्रथमं देवत्वेन जायमानत्वेऽपि अन्यायाचरणात् ततो भ्रष्टानां दैत्यभावं प्राप्तिरिति पौराणिकी कथानुसन्धेया। कर्म॰। पूर्वतनयोः देवयोः २नरनारायणयोः हि॰ व॰ ४ भा॰ उ॰ ४८ अ॰।

पूर्व(र्व)देवता स्त्री कर्म॰। अनादिदेवभावेषु पितृषु "अक्रो-धनाः शौचपराः सततं ब्रह्मचारिणः। न्यस्तशस्त्रा महाभागाः पितरः पूर्व(र्व)देवताः" मनुः। तदधिकं पितृशब्दे दृश्यम्।

पूर्व(र्व)देश पु॰ पूर्व(र्व)वर्त्ती देशः। जम्बुद्वीपस्थे देशभेदे स च देशः वृ॰ सं॰ १४ अ॰ कूर्मविभागे दर्शितः।

पूर्व(र्व)नदी स्त्री कर्म॰। कूर्मविभागे उक्तायां पूर्वदिक्स्थायां नद्याम् ततो नद्यन्तत्वात् ढक् उत्तरपदवृद्धिः पौर्वनादेय तत्र-भवे त्रि॰।

पूर्व(र्व)पक्ष पु॰ कर्म॰। १शुक्लपक्षे अमरः। शास्त्रीयसंशय-निरासार्थप्रश्ने २फक्किकायाम्। ३सिद्धान्तविरुद्धकोटौ "वि-षयो विषयश्चैव पूर्वपक्षस्तथोत्तरम्" इत्युक्ताधिकरणा-वयवभेदे व्यवहारे प्रतिज्ञापरपर्य्याये भाषापत्ररूपे ४प्रथमावयवभेदे। तल्लक्षणादिकं वीरमि॰ उक्तं यथा "पूर्वपक्षः स्मृतः पादो द्वितीयश्चोत्तरस्तथा। क्रिया-पादस्तृतीयस्तु चतुर्थो निर्णयस्तथा" इति बृहस्पतिवच-नस्य निर्णयफलकपरामर्शरूपप्रत्याकलितपरमेव निर्णय-पदमुपचारादित्याह "इतरथा पूर्वोदाहृततद्वचनविरोधः स्यात्। तत्र प्रतिज्ञावादी कः स्यादित्यपेक्षिते नारदः "राज्ञे कुर्य्यात् पूर्वमावेदनं यस्तस्य ज्ञेयः पूर्ववादो विधि-ज्ञैः" इति पूर्ववादः प्रतिज्ञा। पूर्ववादकस्यैव प्रतिज्ञावादि-त्वलक्षणापवादमाह स एव "यस्य वाऽभ्यधिका पीडा कार्य्यं वाऽभ्यधिकं भवेत्। तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत्"। अर्थिवादः प्रतिज्ञा। बृहस्पतिः "अहंपूर्वि(र्वि)कया यातावर्थिप्रत्यर्थिनौ यदा। वादो वर्णा-नुपूर्व्येण ग्राह्यः पीडामवेक्ष्य चेति"। मनुरपि "यथो-नयावुभौ बुद्ध्वा धर्माधर्मौ च केवलौ। वर्णक्रमेण सर्वाणि पश्येत् कार्य्याणि कार्य्यिणाम्"। ब्राह्मणादीनां युग-पद्धर्माधिकरणं प्राप्तानां वर्णानुक्रमेण ब्राह्मणस्यादौ ततः क्षत्रियस्येत्येवमादिक्रमेण चतुर्णां व्यवहारः प्रव-र्त्तनीयो राज्ञा पीडाधिक्यकार्य्यगौरवं चेदर्थिप्रत्यर्थिनो-रन्यतरस्य तदा न पूर्वावेदनक्रमो नापि वर्णक्रमः। यदा तु सर्वं सममेव तदा आवेदनक्रमः। युगपदावेदने स-मानवर्णत्वे समानपीडत्वे च [illegible]

पूर्व(र्व)वर्त्तिन् त्रि॰ पूर्वं वर्त्तते वृत–णिनि। अन्यथा-सिद्धिशून्ये १प्रागवर्त्तिनि कारणे २प्राग्वर्त्तिमात्रे च त्रि॰।

पूर्व(र्व)वाद पु॰पूर्वो वादः। व्यवहारे प्रथमावेदने पक्षभाषा-ऽपरपर्य्याये पूर्वपक्षवादे। "पूर्ववादं परित्यज्य योऽन्य-मालम्बते पुनः। पदसंक्रमणात् ज्ञेयो हीनवादी स वै नरः" मिताक्षरा।

पूर्व(र्व)वादिन् त्रि॰ पूर्वं वदति वद–णिनि। पूर्ववादकारके व्यवहारे प्रथमावेदनकर्त्तरि अर्थिनि। "मिथ्योक्तौ पूर्व-वादी तु प्रतिपत्तौ न सा भवेत्"। "मिथ्योत्तरे पूर्ववादी कारणे प्रतिवादिनि च" मिता॰।

पूर्व(र्व)वार्षिक त्रि॰पूर्वं वर्षाणाम् एकदेशिस॰ ततः "कालात् ठञ्" पा॰ ठञ् "अवयवादृतोः" पा॰ उत्तरपदवृद्धिः। वर्षाणां पूर्वभागभवे अवयवादित्युक्तेः पूर्वासु वर्षासु भवः इत्यर्थे ठञि पूर्वपदवृद्धिः पौर्ववर्षिक इत्येव सि॰ कौ॰।

पूर्व(र्व)वाह् पु॰ पूर्वं वयसि वहति वह–ण्वि ७त॰। पूर्व-वयसि वाहके शत॰ब्रा॰ २.१.४.१७।

पूर्व(र्व)हस्त न॰पूर्वं हस्तम्। कर्म॰। प्राचीने हस्ते दृतिकाभी।

पूर्व(र्व)शारद त्रि॰ पूर्वं शरदः एकदेशिस॰। तत्र भवः अण् च "अवयवादृतोः" पा॰ उत्तरपदवृद्धिः। शरदः पूर्वभवे।

पूर्व(र्व)शैल पु॰ कर्म॰। उदयाचले जटा॰। पूर्वाचलादयोऽप्यत्र।

पूर्व(र्व)शकथ न॰ पूर्वं शकथः एकदेशिस॰अच्समा॰। शक्थ्नः पूर्वभागे। [दयोऽप्यत्र।

पूर्व(र्व)समुद्र पु॰ कर्म॰। पूर्ववर्त्तिनि समुद्रे पूर्वसागरा-

पूर्व(र्व)सर त्रि॰ पूर्वः सन् सरति कर्त्तरि उप पदे एव सृ+ट उप॰ स॰। पूर्वभूयगामिनि स्त्रियां ङीप्। अन्यत्र पूर्वं सरतीति वाक्ये अच् पूर्वसार अग्र-गामिनि त्रि॰।

पूर्वा(र्वा)तिथि पु॰ गोत्रप्रवरर्षिभेदे।

पूर्वा(र्वा)द्रि पु॰ पूर्वः आदिर्यस्य। व्यवस्थायामसंज्ञायां सर्व-नामकर्मनिमित्ते १शब्दगणे स च गणः "पूर्व पर अवर द-क्षिण उत्तर अपर अ–धर"। "पूर्वादिभ्यो नवभ्यो वा" पा॰ पूर्वे पूर्वा इत्यादि। पूर्वा आदिर्यस्याः।२पूर्वादिककुभि स्त्री

पूर्वा(र्वा)निलः पु॰ कर्म॰। पूर्वदिक्स्थवायौ तद्गुणाश्च "पूर्वस्तु मधुरो वातः स्निग्धः कटुरसान्वितः। गुरुर्विदाह-शमनो वातदः पित्तनाशनः" राजनि॰। "प्राग्वातो मधुरः क्षारो वह्निमान्द्यकरो गुरुः। वैरस्यगौरवो-त्पादानि करोत्यप्स्वोषधीषु च। भग्नोत्पिष्टक्षतादीषु रागश्वयथुदाहकृत्। सन्निपातज्वरश्वासत्वग्दोषार्शो विषक्रिमीन्। कोपयेदामवातञ्च मलसंघातकारणम्" राजवल्लभः।

पूर्वा(र्वा)नुयोग पु॰ दृष्टिवादभेदे "प्रतिकर्मसूत्रपूर्वानुयोग पूर्वगतचूलिकाः। पञ्च स्युर्दृष्टिवादभेदाः" हेम॰।

पूर्वा(र्वा)पर त्रि॰द्वन्द्व॰। पूर्वस्मिन् अपरस्मिन् च देशे तयो-र्भावः ष्यञ्। पौर्वापर्य्यं तद्भावे न॰। क्वचित् पूर्वपद-वृद्धिः। पूर्वापर्य्यं तत्रार्थे न॰।

पूर्वा(र्वा)पहाना स्त्री पूर्वमपहीयते अप–हा–कर्मणि ल्युट् अजा॰ टाप्। पूर्वापहानकर्मणि अजादिगणः।

पूर्वा(र्वा)र्द्ध त्रि॰ पूर्वार्द्धे भवः पक्षे यत्। पूर्वार्द्धभवे। पक्षे ठञ्। पौर्वा(र्वा)र्द्धिक तत्रार्थे त्रि॰।

पूर्वा(र्वा)षाढ़ा स्त्री कर्म॰। अश्विन्यादिषु विंशे नक्षत्रे तत्-स्वरूपादिकमश्लेषाशब्दे उक्तम्।

पूर्वा(र्वा)ह्ण पु॰ पूर्वमह्नः एकदेशिस॰ टच्समा॰ अह्नादेशः "रात्राह्नाहाः पुंसि" पा॰ पुंस्त्वम्। दिनस्य पूर्वभागे पूर्वाह्णश्च त्रिधा विभक्तदिनस्य प्रथमभागः। "पूर्वाह्णो वै देवानां मध्याह्नो मनुष्याणामिति" श्रुतिः। अह्नः प्रथम-प्रहरद्वयकालश्च। "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परम्" स्कन्दपु॰। "आवर्त्तनात् पश्चिमदिग्वर्त्तिच्छायायाः परिवर्त्तनम्"। अतएव "अयनं यन्दवेदिन्यं पूर्वाह्णे प्रहरद्वये" मल॰त॰।

पूर्वा(र्वा)ह्ण(ह्णे)तन त्रि॰ पूर्वाह्णे काले भवः ट्यु तुट् च "कालतनेति" सप्तम्या अलुक्। १पूर्वाह्णभवे स्त्रियां ङीप्। पूर्वाह्णः सोढोऽस्य इति विग्रहे तु पूर्वाह्णतन इत्येव। २पूर्वाह्णसहनकर्त्तरि त्रि॰।

पूर्वा(र्वा)ह्णिक त्रि॰ पूर्वाह्णः साधनतयाऽस्त्यस्य ठन् पूर्वाह्ण-साध्ये कर्मणि। "दैवं पूर्वाह्णिकं कुर्य्यादपराह्णे तु पैतृकम्" भा॰ आ॰ २१ अ॰।

पूर्वि(र्वि)न् त्रि॰पूर्वं कृतमनेन "पूर्वादिनिः" पा॰इनि। १पूर्व-क्रियाकारके। वेदे तु "पूर्वैः कृतमिनयौ च" पा॰ इन। पूर्विण पूर्व्यैः कृते "आयान्तु नः पितरः सोम्यासो गम्भी-रेभिः पथिभिः पूर्विणेभिः" पित्राह्वानमन्त्रः। छान्दसौ रूपसिद्धिः। [स्मिन् दिने इत्यर्थे।

पूर्वे(र्वे)द्युस् अव्य॰ पूर्वस्मिन् अहनि पूर्व(र्व)+एद्युस्। पूर्व-

पूर्वे(र्वे)षुकामशमी स्त्री कर्म॰। पूर्वदिग्वर्त्ति नगरीभेदे अन्तोदात्तमाऽस्य। पूर्वेषुकामशम्यां भवः अण् उत्तरपद-वृद्धिः पूर्वैषुकामशम तद्भवे त्रि॰। [दैशानकोणे विदिशि।

पूर्वो(र्वो)त्तरा स्त्री पूर्वस्याः उत्तरस्याश्चान्तराला दिक् ब॰व॰।

अस्य भवि पदान्ते च षस्य षत्वम् । पृतनाषाट् अन्यत्र न षत्वम् पृतनासाहम् इत्यादि ।

**पृत्सुध** पु॰ पृत्सु धीयते धा-कर्मणि घञर्थे क अलुक्स॰ । १संग्रामे निघण्टौ पाठान्तरम् ।

**पृथ** प्रक्षेपे चुरा॰उभ॰सक॰सेट् । पार्थयति-ते अपीपृथत् त अपपर्थत्-त । [अमरः ।

**पृथक्** अव्य॰पृथ-वा॰कन् । १भिन्ने २नानारूपे ३विनार्थे च ।

**पृथक्त्व** न॰ पृथक् इत्यस्य भावः त्व । वैशेषिकोक्ते पृथक्त्वबुद्धिसम्पादके गुणभेदे । तत्परीक्षा च कणा॰ सू॰ वृत्त्योर्दर्शिता यथा "तथा पृथक्त्वम्" सू॰ । "एकत्ववद्व्यतवैकपृथक्त्वमपि साधयितुमाह अपोद्धार व्यवहारस्तावदस्ति इदमस्मात् पृथगन्यदर्थान्तरमित्याकारः अपदव्यावधिमपेक्ष्य स चव्हारो निर्द्धारणं अस्यापोद्धारः तत्र च न रूपादि तन्त्रं व्यभिचारादनन्यनिरूप्यत्वाच्च । नन्वन्योन्याभाव एव पृथक्त्वम् इदमस्मात् पृथगन्यदर्थान्तरमितिवच्चिदमिति प्रतीतेरन्योन्याभावावलम्बनत्वात्, न, पृथगादिशब्दानां पर्य्यायत्वेऽपि नान्योन्याभावार्थत्वं तत्र पञ्चमीप्रयोगानुपपत्तेः इदमस्मात् पृथक् इदमिदं न भवतीति प्रतीत्योर्भिन्नविषयत्वात्, न चान्योन्याभाववानर्थः पृथक्त्वम् अघटः पट इत्यत्रापि पञ्चमीप्रयोगापत्तेः । ननु पृथगिति विशिष्ट इति प्रतीत्योरेकाकारत्वाद्वैशिष्ट्यमेव पृथक्त्वमिति चेन्न नैतस्य दण्डवैशिष्ट्यदशायां चैत्रात् पृथगयं चैत्र इत्यपि प्रतीत्यापत्तेः । एवं शब्दविशिष्टे व्योम्नि बुद्धिविशिष्टे चात्मनि पृथक्त्वव्यवहारापत्तेः । अतएव वैधर्म्यमपि न पृथक्त्वं पाकरक्ते घटे श्यामाद्घटात् पृथगयं घट इति व्यवहारापत्तेः तद्विरोधिधर्मवत्त्वमेव हि तद्वैधर्म्यं तच्च श्यामानन्तरं रक्ततादशायामपि । न च सामान्यमेव पृथक्त्वं सामान्यस्यावध्यनिरूप्यत्वात् जातिसङ्करप्रसङ्गाच्च । द्रव्यमात्रवृत्तित्वे सत्तया, द्रव्यमात्रवृत्तित्वे द्रव्यत्वेनान्यूनानतिरिक्तवृत्तित्वापत्तेः" वृत्तिः । "एकत्वैकपृथक्त्वयोरेकत्वैकपृथक्त्वाभावोऽणुत्वमहत्त्वाभ्यां व्याख्यातः" क॰सू॰। "नन्वेकमेकत्वं रूपादिभ्यः पृथक्पृथक्त्वमिति व्यवहारादेकत्वेऽप्येकत्वं पृथक्त्वेऽपि पृथक्त्वमेवं तत्र तत्रापीत्यत आह यथाऽणुत्वमहत्त्वे नाणुत्वमहत्त्ववती तद्व्यवहारस्तत्र भाक्तस्तथैकत्वैकपृथक्त्वे नैकत्वैकपृथक्त्ववती तद्व्यवहारस्तत्र भाक्त इत्यर्थः । कर्मभिः कर्माणि गुणैर्गुणाः इत्यपि दृष्टान्तद्वयं पूर्वदृष्टान्तस्थलेऽपेक्षाव्यतापन्नमेवात्र भासते यथा कर्माणि न कर्मवन्ति गुणाश्च न गुणवन्तस्तथैकत्वैकपृथक्त्वे न तद्वती इत्यर्थः" वृत्तिः ।

**पृथक्त्वचा** स्त्री पृथक् त्वचा यस्याः । मूर्वायाम् । रत्नमा॰

**पृथक्पर्णी** स्त्री पृथक् पर्णान्यस्याः ङीप् । (चाकुलिया) क्षुपभेदे अमरः ।

**पृथक्क्षेत्र** पु॰ पृथक् भिन्नं क्षेत्रमुत्पत्तिस्थानमस्य । एकस्मात् पितुर्विभिन्नमातृजाते पुत्रे मिता॰ । [१भेदे २विशेषे ।

**पृथगात्मता** स्त्री पृथक् आत्मा स्वरूपं यस्य तस्य भावः तल् ।

**पृथगात्मिका** स्त्री पृथक् आत्मा स्वरूपं यस्याः कप् नलोपे कापि अत इत्वम् । व्यक्तौ । व्यक्तित्वेनैकरूपाणामपि व्यक्तीनां महानणीयस्त्वादिरूपेण तेषां स्वरूपभेदात् तथात्वम् ।

**पृथग्जन** पु॰ पृथक् भिन्नो जनो महाजनो यस्मात् । १नीचे २मूर्खे ३पामरे च अमरः । [अमरः ।

**पृथग्विध** त्रि॰ पृथक् भिन्ना विधा यस्य । नानारूपे

**पृथग्बीज** पु॰पृथक् बीजान्यस्य । भल्लातकवृक्षे (भेला) राजनि॰

**पृथा** स्त्री कुन्तिभोजकन्यायाम् कुन्त्याम् जटाधरः ।

**पृथाज** पु॰ पृथायां जायते जन-ड ७त॰ । १युधिष्ठिरादौ कुन्तीपुत्रे २अर्जुनवृक्षे राजनि॰ ।

**पृथापति** पु॰ ६त॰ । पाण्डुराजे त्रिका॰ ।

**पृथिका** स्त्री पृथ-प्रक्षेपे-क स्वार्थे क शतपद्याम् अत इत्वम् । शतपद्याम् शब्दमाला ।

**पृथिन्** पु॰ प्रथ-वा॰ किनि संप्र॰ । वेनपुत्रे पृथुनामके नृपे "पृथी ह वै वैन्यो मनुष्याणां प्रथमोऽभिषिषिचे" शत॰ब्रा॰५।३।५।४ "पृथी यद्वां वैन्यः" ऋ॰८।९।१॰ "लोकेऽस्य पृथुसंज्ञा" ।

**पृथ(थि)(वि)वी** स्त्री प्रथते विस्तारमेति प्रथ-षिवन् (षवन्) वा नि॰ संप्रसारणं षित्वात् ङीप् पृषो॰ वा ह्रस्वः । धरायाम् क्षितौ तद्गुणादिकं यथा "रूपद्रवत्वप्रत्यक्षयोगि स्यात् प्रथमत्रिकम् । गुरुणी द्वे रसवती द्वयोर्नैमित्तिको द्रवः । स्पर्शादयोऽष्टौ वेगश्च द्रव्यत्वञ्च गुरुत्वकम् । रूपं रसस्तथा स्नेहो वारिण्येते चतुर्दश । स्नेहहीना गन्धयुता क्षितावेते चतुर्दश" । "तत्र क्षितिर्गन्धहेतुर्नानारूपवती मता । षड्विधस्तु रसस्तत्र गन्धोऽपि द्विविधो मतः । स्पर्शस्तु तस्या विज्ञेयो ह्यनुष्णाशीतपाकजः । नित्या नित्या च सा द्वेधा नित्या स्यादणुलक्षणा । अनित्या तु तदन्या स्यात् सैवावयवयोगिनी । सा च त्रिधा भवेद्देह इन्द्रियं विषयस्तथा । योनिजादिर्भवेद्देहमिन्द्रियं घ्राणलक्षणम् ।

विषयो द्व्यणुकादिस्तु ब्रह्माण्डान्त उदाहृतः” भाषाप०। तस्या अध्यात्मादिभेदा यथा “पृथिवी पञ्चमं भूतं प्राणश्चाध्यात्ममुच्यते। अधिभूतं तथा गन्धो वायुस्तत्राधिदैवतम्” भा०आश्व० ४२अ०। तस्या उत्पत्तिकारणं यथा “श्रूयतां वसुधाजन्म सर्वमङ्गलकारणम्। विघ्ननिघ्नकरं पापनाशनं पुण्यवर्द्धनम्। अहो केचिद्वदन्तीति मधुकैटभमेदसा। बभूव वसुधा जन्म तद्विरुद्धमतं शृणु। ऊचतुस्तौ पुरा विष्णुं तुष्टौ युद्धेन तेजसा। आवां जहि न यत्रोर्वी पयसा संवृतेति च। तयोर्जीवनकाले च प्रत्यक्षा साऽभवत् स्फुटम्। ततो बभूव मेदश्च मरणस्यान्तरं तयोः। मेदिनीति च विख्यातेत्युक्ता यैस्तन्मतं शृणु। जलीता तथा पूर्वं वर्द्धिता मेदसा यतः। कथयामि च तज्जन्म सार्थकं सर्वसम्मतम्। पुरा श्रुतं यत् श्रुत्युक्तं धर्मवक्त्राच्च पुष्करे। महाविराट् शरीरस्य जलस्थस्य चिरं स्फुटम्। मलो बभूव कालेन सर्वाङ्गव्यापको ध्रुवम्। स च प्रविष्टः सर्वेषां तल्लोम्नां विवरेषु च। कालेन महता तस्माद्बभूव वसुधा मुने!। प्रत्येकं प्रतिलोम्नाञ्च कूपेषु सा स्थिरा स्थिता। आविर्भूता तिरोभूता सा जले च पुनःपुनः। आविर्भूता सृष्टिकाले तज्जलोपर्य्यवस्थिता। प्रलये च तिरोभूता जलाभ्यन्तरसंस्थिता। प्रतिविश्वेषु वसुधा शैलकाननसंयुता। सप्तसागरसंयुक्ता सप्तद्वीपयुता सती। हिमाद्रिमेरुसंयुक्ता ग्रहचन्द्रार्कसंयुता। ब्रह्मविष्णुशिवाद्यैश्च सुरैर्लोकैस्तदाज्ञया। पुण्यतीर्थसमायुक्ता पुण्यभारतसंयुता। पातालसप्त तदधस्तदूर्द्ध्वं ब्रह्मलोककः। ब्रह्मलोकश्च तत्रैव सर्वविश्वञ्च तत्र वै। एवं सर्वाणि विश्वानि पृथिव्यां निर्मितानि च। ऊर्द्ध्वं गोलोकवैकुण्ठौ नित्यौ विश्वपरौ च तौ। नश्वराणि च विश्वानि सर्वाणि कृत्रिमाणि च। प्रलये प्राकृते ब्रह्मन्! ब्रह्मणश्च निपातने। महाविराडादिसृष्टौ सृष्टेः कृत्स्नेन चात्मना। नित्यैः स्थिता च प्रलये काष्ठाकाशेश्वरैः सह। क्षित्यधिष्ठातृदेवी सा वाराहे पूजिता सुरैः। मुनिभिर्मनुभिर्विप्रैर्गन्धर्वादिभिरेव च। विष्णोर्वराहरूपस्य पत्नी सा श्रुतिसम्मता। तत्पुत्रो मङ्गलो ज्ञेयो घटेशो मङ्गलात्मजः। भवनं यत्र सर्वेषां भूमिस्तेन कीर्त्तिता। वसुरत्नं या दधाति वसुधा सा वसुन्धरा। हरेरूरौ च सा जाता सा चोर्वी परिकीर्त्तिता। धरा धरित्री धरणी सर्वेषां धारणात्तु वा। इज्याच यागाधाराच्च क्षौणी क्षीणा लये च या। महालये क्षयं याति क्षितिस्तेन प्रकीर्त्तिता। काश्यपी कश्यपस्येयमचला स्थिररूपतः। विश्वम्भरा तद्भरणादनन्तानन्तरूपतः। पृथिवी पृथुकन्यात्वाद्विस्तृतत्वान्महामुने!” ब्रह्मवै०प्र०ख०७अ०।

तस्याः सर्वंसहत्वेऽपि केषाञ्चित् भारासहनकथा यथा “कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः। तेषां महापातकिनामशक्ता भारवाहने। स्वधर्माचारहीना ये नित्यकृत्यविवर्जिताः। श्रद्धाहीनाश्च वेदेषु तेषां भारेण पीड़िता। पितृमातृगुरुस्त्रीणां पोषणं पुत्रपोष्ययोः। ये न कुर्वन्ति तेषाञ्च न शक्ता भारवाहने। ये मिथ्यावादिनस्तात! दयासत्यविहीनकाः। निन्दका गुरुदाराणां तेषां भारेण पीड़िता। मित्रद्रोही कृतघ्नश्च मिथ्यासाक्ष्यप्रदायकः। विश्वासघ्नः स्थाप्यहारी तेषां भारेण पीड़िता। कल्याणसूक्तसामानि हरेर्नामैकमङ्गलम्। कुर्वन्ति विक्रयं ये वै तेषां भारेण पीड़िता। जीवघाती गुरुद्रोही ग्रामयाजी च लुब्धकः। शवदाही शूद्रभोजी तेषां भारेण पीड़िता। पूजायज्ञोपवासादि व्रतानि नियमानि च। ये ये मूढा विहन्तारस्तेषां भारेण पीड़िता। सदा द्विषन्ति ये पापा गोविप्रसुरवैष्णवान्। हरिं हरिकथां भक्तिं तेषां भारेण पीड़िता। शङ्खादीनाञ्च भारेण पीड़िताऽहं यथा विधे!। ततोऽधिकेन दैत्यानां तेषां भारेण पीड़िता” ब्रह्मवै०पु० जन्मख० ४ अ०।

पृथिवीक्षित् पु० क्षि—ऐश्वर्य्ये क्विप् ६त०। भूमीशे नृपे।

पृथिवीञ्जय पु० पृथिवीं जयति जि-बा० खच् मुम् च। दानवभेदे हरिवं० २४२ अ०।

पृथिवीतीर्थ न० तीर्थभेदे भा० वन० ८३ अ०।

पृथिवीपति पु० ६त०। १भूमिपतौ राजनि २ऋषभनामौषधौ च मेदि०। ३यमे हेम०। पृथिवीनाथादयोऽपि राजनि।

पृथिवीपाल पु० पृथिवीं पालयति पालि—अण् उप०स०। भूमिपाले। स्त्रियां ङीप्। पृथिवीपालक तत्रार्थे पु०।

पृथिवीभुज् पु० पृथिवीं भुनक्ति अवति भुज पालने क्विप्। भूपाले च। पृथिवीभुजोऽपि तत्रार्थे।

पृथिवीरुह पु० पृथिव्यां रोहति रुह—क। भूमिरुहे वृक्षे।

पृथिवीशक्र पु० पृथिव्यां शक्र इव। राजनि हेमच०। पृथिवीन्द्रभूमीन्द्रादयोऽप्यत्र।

**पृथु** त्रि० प्रथ–कु सम्प्र० । १विस्तीर्णे स्त्रियां गुणवचनोदन्तत्वात् ङीप् । २आदिराजे वेनपुत्रे सूर्य्यवंश्ये नृपभेदे पु० तदुत्पत्तिकथा भाग० ४।१५ अ० ।

अथ तस्य (वेनस्य) पुत्रविप्रैरपुत्रस्य महीपतेः । बाहुभ्यां मथ्यमानाभ्यां मिथुनं समपद्यत । तद्दृष्ट्वा मिथुनं जातमृषयो ब्रह्मवादिनः । ऊचुः परमसन्तुष्टा विदित्वा भगवत्कलाम् । एष विष्णोर्भगवतः कला भुवनपालिनी । इयञ्च लक्ष्मीः संभूतिः पुरुषस्यानपायिनी । अत्र यः प्रथमो राज्ञां पुमान् प्रथयिता यशः । पृथुर्नाम महाराजो भविष्यति पृथुश्रवाः” । तेन च भगवदवतारेण पृथिवी समीकृता नानौषधीश्च मथिता दुहितृत्वेन कल्पिता च । तत्कथा उत्तरस्याध्याये दृश्या ४।१८ अ० ।

“एवं पृथ्वादयः पृथ्वीं दुदुहुः स्वन्नमात्मनः । दोहवत्सादिभेदेन क्षीरभेदं कुरूद्वह ! । ततो महीपतिः प्रीतः सर्वकामदुघां पृथुः । दुहितृत्वे चकारेमां प्रेम्णा दुहितृवत्सलः । चूर्णयन् स्वधनुःकोट्या गिरिकूटानि राजराट् । भूमण्डलमिदं वैन्यः प्रायश्चक्रे समं विभुः” ३महादेवे भा० अनु० १७ अ० । चतुर्थमन्वन्तरे जाते ४सप्तर्षिभेदे हरिवं० ७अ० । ५काकुत्स्थे अनेनसः पुत्रे नृपभेदे १७अ० । अजमीढवंश्ये पारपुत्रस्य ६पुत्रभेदे हरिवं० २० अ० । क्रोष्टुवंश्ये चित्रक पुत्रे ७नृपभेदे ३५ अ० । ८दानवभेदे २६अ० । ९अग्नौ मेदि० । १०कृष्णजीरके पु० अमरः ११त्वक्पत्र्यां १२हिङ्गुपत्रयाञ्च स्त्री मेदि०१३अहिफेने शब्दरत्ना० १४महति त्रि० शब्दर० १५विष्णौ पु० । “प्राग्दः प्रथमः पृथुः” विष्णु स० ।

**पृथुक** पु० पृथु कं जलं येनास्ते भाव्यस्य अच् । १चिपिटके अमरः । तस्य चर्वणे बहुजलयोजनात् तस्य तथात्वम् । अस्य क्लीवत्वमपि “द्विःस्विन्नञ्च पृथुकं यच्च देवविशेषके” ब्रह्मवै०ख०२१अ० । पृथु कं शिरोऽस्य । २बालके पुंस्त्री० मेदि० । ३हिङ्गुपत्र्यां स्त्री शब्दरत्ना० ।

**पृथुकीय** त्रि० पृथुकाय हितं अपूपा०छ । पृथुकहिते । पक्षे यत् पृथुक्य तदर्थे त्रि० ।

**पृथुकीर्त्ति** स्त्री पृथानुजायाम् वसुदेवभगिनीभेदे “पृथुकीर्त्त्यां तु संजज्ञे तनयो वृद्धशर्म्मणः । करूषाधिपतिर्वीरो दन्तवक्त्रो महाबलः” । हरिवं० ३७ अ० पृथुः कीर्त्तिरस्य । २उच्चयशस्के त्रि० ।

**पृथुकोल** पु० कर्म० । राजबदरे राजनि० ।

**पृथुग्रीव** पु० १राक्षसभेदे रामा०आ०२३स०। २विस्तीर्णग्रीवे त्रि० ।

**पृथुच्छद** पु० पृथु छदोऽस्य । १हरिदर्भे राजनि० । २उच्चैःपत्रयुक्ते त्रि० ।

**पृथुपत्र** पु० पृथूनि पत्राण्यस्य । रक्तलशुने राजनि० ।

**पृथुपलाशिका** स्त्री पृथूनि पलाशान्यस्याः कप् कापि अत इत्त्वम् । शट्याम् राजनि० ।

**पृथुरुक्म** पु० क्रोष्टुवंश्ये रुक्मकवचपुत्रभेदे हरिवं० ३७अ० ।

**पृथुरोमन्** पु० पृथूनि रोमाणि रोमस्थानीयशल्कान्यस्य । १मत्स्ये अमरः । २उच्चरोमयुक्ते त्रि० स्त्रियां वा डाप् ।

**पृथुल** त्रि० पृथु+स्वार्थे लच पृथुः पतनमस्त्यस्य सिध्मा० लच् वा । १स्थूले अमरः । २हिङ्गुपत्र्यां स्त्री जटाध० ।

**पृथुलाक्ष** त्रि० पृथुले अक्षिणी यस्य षच्समा० । १उच्चनेत्रयुक्ते २पुरुवंश्ये चतुरङ्गपुत्रभेदे पु० हरिवं० ३१ अ० ।

**पृथुवक्त्र** त्रि० पृथु वक्त्रमस्य । १उच्चमुखयुक्ते । २कुमारानुचरमातृभेदे स्त्री भा० श० ४७ अ० ।

**पृथुशिम्ब** पु० पृथ्वी शिम्बा यस्य । श्योनाकभेदे राजनि० ।

**पृथुशेखर** पु० पृथु शेखरं यस्य । पर्वते त्रिका० ।

**पृथुश्रव(स)** त्रि० पृथु श्रवः कर्णोऽस्य । १उच्चकर्णे भदन्तः २कुमारानुचरभेदे भा० श० ४६ अ० । शान्तनु । २शशबिन्दुनृपपुत्रभेदे पु० हरिवं०३६अ० ।

**पृथुषेण** पु० यदुवंश्ये रुचिरनृपपुत्रभेदे हरिवं० २० अ० ।

**पृथुस्कन्ध** पुंस्त्री पृथुः स्कन्धोऽस्य । शूकरे राजनि० स्त्रियां जातित्वात् ङीष् ।

**पृथूदक** न० तीर्थभेदे भा० श० ३९ अ० ।

तच्च सरस्वतीप्रदेशस्थितम् यथोक्तम् “जातिस्मरो रुषङ्गुस्तु गङ्गाद्वारे सदास्थितः । अन्तकाले ततो दृष्ट्वा पुत्रान् वचनमब्रवीत् । इह श्रेयो न पश्यामि नयध्वं मां पृथूदकम् । विज्ञाय तस्य तद्भावं रुषङ्गोस्ते तपोधनाः । तं वै तीर्थमुपानिन्युः सरस्वत्यास्तपोधनम् । स तैः पुत्रैः समानीतः सरस्वत्यां समीपतः । स्मृत्वा तीर्थगुणान् सर्वान् प्राहेदमृषिसत्तमः । सरस्वत्यास्तु तीरे यः संत्यजेदात्मनस्तनुम् । पृथूदके जप्यपरो नैनं श्वो मरणं लभेत् । तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता” वामनपु० ३८ अ० ।

**पृथूदर** पुंस्त्री० पृथु उदरं यस्य । १मेषे स्त्रियां जातित्वात् ङीष् । २उच्चतुन्दे त्रि० हारा० । स्त्रियां स्वाङ्गत्वात् वा ङीष् ।

**पृथ्वादि** पु० “पृथ्वादिभ्य इमनिज् वा” पा० भावे इमनिच्प्रत्ययनिमित्ते शब्दगणे स च पा०ग० उक्तो यथा

"पृथु मृदु महत् पटु तनु लघु बहु साधु आशु उरु गुरु बहुल खण्ड दण्ड चण्ड अकिञ्चन होड़ पाक वत्स मन्द स्वादु ह्रस्व दीर्घ प्रिय वृष ऋजु क्षिप्र क्षुद्र अणु"।

**पृथ्वी** स्त्री पृथुत्वगुणयुक्ता स्त्री ङीष्। १पृथुत्वयुक्तायां स्त्रियां २भूमौ ३हिङ्गुपत्र्यां ४कृष्णजीरके च। ५स्थूलैलायाम् ६पुनर्नवायाम् मेदि०। ७हस्तार्द्धमात्रभेदे हेम० स्वार्थे क। पृथ्वीका। इक्षुदेलायाम् हिङ्गुपत्र्यां कृष्णजीरके च। तत्र पृथिव्याः पृथुराजेन दुहितृत्वस्य कल्पनात् पुंयोगे ङीष्। "दुहितृत्वमनुप्राप्ता देवी पृथ्वी तथोच्यते" अग्निपु०। "असौ जसयसावसुयश्चयतिश्च पृथ्वी गुरुः" वृ० र० उक्ते दशसप्तदशाक्षरपादके छन्दोभेदे।

**पृथ्वीकुरवक** पु० पृथ्व्यां भूमौ कुरवक इव शुभ्रत्वात्। श्वेतमन्दारके राजनि०। [२गणेशे हेमच०।

**पृथ्वीगर्भ** पु० पृथ्वीव लम्बमानो गर्भ उदरमस्य। १लम्बोदरे

**पृथ्वीज** त्रि० पृथ्व्यां जायते जन—ड ७त०। १भूमिजाते २गडलवणे न० राजनि०।

**पृथ्वीधर** पु० पृथ्वीं धरति धृ—अच्। महीधरे पर्वते।

**पृदाकु** पु० स्पर्द्द—वा० काकु सम्प्रसारणे सलोपश्च। सर्पे अमरः १वृश्चिके २व्याघ्रे ३चित्रके मेदि०। ४गजे ५वृक्षे च। संप्रसारणोणादिहेमच०। [८।१७।१५।

**पृदाकुसानु** पु० पृदाकुः गज इव सानुः समुन्नतः। इन्द्रे च

**पृशन्य** पु० स्पृश—भावे क्यु पृषो० सलोपः पृशनं स्पर्शः तत्र साधु यत्। स्पर्शसाध्ये ऋ० १।७१।५ आत्मनः पृशन-मिच्छति क्यच् उ। पृशनायु तदिच्छौ ऋ० १।८४।११।

**पृश्नि** त्रि० स्पृश—प्रच्छ—वा नि किच्च पृषो० सलोपः। १अल्पे २दुर्बलास्थियुक्ते ३खर्वे च अमरः। ४रश्मौ श्रीकृष्णस्य जन्मान्तरे मातृभूतायां देवकीरूपेण द्वापरे प्रादुर्भूतायां ५वसुदेवपत्न्यां च स्त्री। "त्वमेव पूर्वसर्गेऽभूः पृश्निः स्वायम्भुवे सति!। तदायं सुतपा नाम प्रजापतिरकल्मषः। अहं सुतो वामभवं पृश्निगर्भ इति श्रुतः। तयोर्वां पुन-रेवाहमदित्यामास कश्यपात्। उपेन्द्र इति विख्यातो वामनत्वाच्च वामनः। तृतीयेऽस्मिन् भवेऽहं वै तेनैव वपुषा हि वाम्। जातो भूयस्तयोरेव" भाग० १०।३ अ०। देवकीं प्रति वासुदेववाक्यम्। ५साधरणे त्रि० निघण्टुः ६सविनुःपत्नीभेदे स्त्री भाग० ६।१८।१। ७ऋषिभेदे पु० भा० द्रो० १९१ अ०। युधाजिन्नृपस्य माद्र्यां जाते ८नृपभेदे अग्निपु०। [शब्दमाला।

**पृश्निका** स्त्री पृश्नि अल्पं कं जलमत्र। कुम्भिकायां (पाना)

**पृश्निगर्भ** पृश्नेः सुतपःप्रजापतिपत्न्याः गर्भः साधकत्वेन" कस्य अच्। नारायणे पृश्निशब्दे दृश्यम्।

**पृश्निगु** त्रि० पृश्नयो नानावर्णत्वात् साधरणा गावो रश्म-योऽस्य। नानावर्णदीप्तिके ऋ० १।११२।७। वेदे क्वचित् "गोस्त्रियोरुपसर्जनस्येति न ह्रस्वः" ऋ० ७।१८।१०। उदा० दृश्यम्। [विख्यातायां लतायाम् अमरः।

**पृश्निपर्णी** स्त्री पृश्नि अल्पं पर्णमस्याः ङीप्। (चाकुलिया)

**पृश्निभद्र** पु० ७त०। पृश्निगर्भजाते नारायणांशभेदे।

**पृश्निमातृ** पु० पृश्निः नानावर्णा भूमिर्मातेव जन्मभूमिर्यस्य समासान्तविधेरनित्यत्वात् न कप्। नानावर्णभूमि-जाते ऋ० १।२३।१७।

**पृश्निशृङ्ग** पु० पृश्नि शृङ्गमग्रमस्य। गणेशे त्रिका०। तस्य मुखे गजमुखत्वेन शृङ्गाकारत्वात् तथात्वम्। पृश्निः शृङ्गं शिवाख्य उत्पत्तिस्थानत्वेन। पृश्निगर्भजाते २विष्णौ शब्दमाला। [ (पाना) शब्दमाला।

**पृश्नी** स्त्री पृश्नि+कृदिकारान्तत्वात् वा ङीप्। कुम्भिकायां

**पृष** सेके भ्वा०पर०सक०सेट्। पर्षति अपर्षीत्। पपर्ष।

**पृषत्** न० पृष—अति कित् . . . वार्थे तेन पृषन्ति। १बिन्दौ अमरः। २सेकयुक्ते त्रि०। अस्य बिन्दौ बहुत्व-मिच्छन्त्येके।

**पृषत** पुंस्त्री० पृष—अतच् कित्। १शुभ्रबिन्दुमति मृगभेदे स्त्रियां जातित्वात् ङीष्। २बिन्दौ पु० अमरः। ३वायुवाहने मृगे पुंस्त्री निघण्टुः। "पृषतो मरुताम्" इत्यत्र स्त्रीत्वमविवक्षितम्। भरद्वाजसुते ४नृपभेदे पु० भा० आ० ११ अ०।

**पृषतांपति** पु० ६त० अलुक्स०। वायौ जटा०।

**पृषताश्व** पु० पृषतो मृगभेदोऽश्व इव गतिसाधनं यस्य। वायौ अमरः।

**पृषत्क** पु० पृषन्ति बिन्दव इव को वायुरत्र। वाणे अमरः।

**पृषदंश** पु० पृषात बिन्दौ अंशोऽस्य। वायौ ततः उत्सा० अपत्यादौ अञ्। पार्षदंश तद्वादौ त्रि०। [वायौ अमरः

**पृषदश्व** पु० पृषन् मृगभेदोऽश्व इव वाहकत्वात् यस्य।

**पृषदाज्य** न० पृषद्युक्तं दधिबिन्दुयुक्तं दधिसेकयुक्तं वा आज्यम् शाक०त०। दधिमिश्रे घृते अमरः।

**पृषद्बल** पु० पृषदेव बलमस्य। वायोरश्वे शब्दमाला।

**पृषध्र** पु० वैवस्वतमनोःपुत्रभेदे हरिवं० १० अ०। [१५६अ०

**पृषध्रु** पु० द्वापरयुगीये युधिष्ठिरपक्षस्थे नृपभेदे भा० द्रो०

**पृषन्ति** पु० पृष—वा झि। बिन्दौ। "पयः पृषन्तिभिः स्पृष्टा

यान्ति वाताः शनैः शनैः” जाम्बवतीविजयपद्यम् ।

**पृषभाषा** स्त्री पृष–सेके क ताद्दशी भाषा यस्याः । अमरावत्यामिन्द्रनगर्य्याम् शब्दमाला॰ ।

**पृषाकरा** स्त्री पृषदिवाकीर्य्यते आ+कॄ–कर्मणि अप् पृषो॰ । क्षुद्रशिलायाम् (बाट्खारा) शब्दच॰ ।

**पृषातक** न॰ पृषन्तं पृषदाज्यं तकति हसति तक-अच् । पृषो॰ । दधियुक्ताज्ये हेमच॰ ।

**पृषोदर** त्रि॰ पृषदिवोदरं यस्य पृषो॰ तलोपः । १अल्पोदरे पृषन्ति उदरे यस्य । २वायौ पु॰ ।

**पृषोदरादि** “पृषोदरादीनि यथोपदिष्टम्” पा॰ विहित लोपादिनिमित्ते शब्दगणे स च गणः पा॰ ग॰ सू॰ उक्तो यथा “पृषोदर पृषोत्थान बलाहक जीमूत श्मशान उलूखल पिशाच वृषी मयूर”। “वर्णागमो वर्णविपर्य्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धातोस्तदर्थातिशयेन योगस्तदुच्यते पञ्चविधं निरुक्तम्” । एतञ्च समासविषयकमेवेति नियमो न प्राचीनकारिकायां हंससिंहादिशब्दानामपि पृषोदरादित्वात् सिद्धत्वोक्तेः । तस्यार्थः सि॰ कौ॰ मनोरमादौ यथा

“पृषोदरप्रकाराणि शिष्टैर्यथोच्चारितानि तथैव साधूनि स्युः । पृषत् उदरम् पृषोदरम् । तलोपः । वारिवाहको बलाहकः । पूर्वपदस्य वः उत्तरपदादेश्च लत्वम् । “भवेद्वर्णागमात् हंसः सिंहो वर्णविपर्य्ययात् । गूढोत्मा वर्णविकृतेर्वर्णनाशात्पृषोदरम्” दिक्शब्देभ्यस्तीरस्य तारभावो वा । दक्षिणतारम् दक्षिणतीरम् । उत्तरतारम् उत्तरतीरम् । दुरो दाशनाशदभध्येषूत्त्वमुत्तरपदादेष्टुत्वञ्च । दुःखेन दाश्यते दूडाशः । एवं दुःखेन नाश्यते दूणाशः दुःखेन दभ्यते दूडभः । ध्यज् लिप्सः । दश्वर्णलोपो निपात्यते । दुष्टं ध्यायतीति दूढ्यः । ध्यातश्चेति कः । स्वरन्तोऽस्यां सीदन्तीति वृषी । ब्रुवच्छब्दस्य ब आदेशः । सदेरधिकरणे डट् । आकृतिगणोऽयम्” । हन्तेः पक्षाद्यचि समागमे हंस इति हिंसेस्तु पचाद्यचि हकारसकारयोः स्थानव्यत्ययात् सिंह इति गूढोत्मेत्यत्र आकारविकृत्या उकारादेशः पृषोदरमित्यत्र तकारवर्णलोपः इत्येवं रीत्या सर्वत्र बोध्यम् । एतन्मूलकमेव “लुम्पेदवश्यमः कृत्ये तुम् काममनसोरपि । समो वा हिततनयोर्मांसस्य पचियुञ्घञोरिति” । अन्तमिति शेषः कृत्यप्रत्ययान्ते उत्तरपदे अवश्यम्शब्दस्यान्त्यमकारं लुम्पेत् । अवश्यसेव्यः । तथा कामशब्दमनःशब्दयोः परतः तुम्शब्दस्यान्तम् । हन्तुकामः गन्तुमनाः । तुमिति षष्ठ्यर्थे प्रथमा । हिततनशब्दयोः परतः समोऽन्त्यं मकारम् वा लुम्पेत् । सहितः संहितः सततः सन्ततः । युञ्घञ्परपचिधातौ परे मांसशब्दान्त्याकारं लुम्पेत् । मांस्पचनः मांसपचनः मांस्पाकः मांसपाक इत्यादि ।”

**पृष्ट** त्रि॰ पृषु सेके प्रच्छ–वा क्त । १सिक्ते–यजु॰२३।८ । २जिज्ञासिते “नापृष्टः कस्यचित् ब्रूयात्” मनुः ।

**पृष्टहायन** पु॰ नित्यक॰ । १धान्यभेदे २गजे पुंस्त्री मेदि॰ । स्त्रियां जातित्वात् ङीष् ।

**पृष्टि** स्त्री पृष+सेके भावे क्तिन् । सेके शत॰ब्रा॰ ७।५।१।१२। २।१।१५। प्रच्छ-क्तिन् । २जिज्ञासायाञ्च । पृष–कर्त्तरि क्तिच् दीर्घः । ३पार्श्वस्थे स्त्री ऋ॰१०।८।१० पृष्टीः पार्श्वस्थान् भा॰ । ४पृष्ठदेशे यजु॰ २।८ । “पृष्टीः पृष्ठदेशः” वेददीप॰ । पृष्टिवह पृष्ठ्यावहः । पृष्ठवहे अथ॰ १८।४।१०

**पृष्ठ** न॰पृष-सृष–वा थक् नि॰। तनोः पश्चाद्भागे अमरः। निरुक्ते ४।३“पृष्टं संस्पृष्टमङ्गैः” इत्युक्तं युक्तश्चैतत् पृषधातोस्तु तद्रूपसिद्धेः निपातनानुपपत्तेः अतः स्पृशधातोरेव निपा॰ । २स्तोत्रविशेषे स च का॰श्रौ॰ भाष्ये उक्तो यथा “एकस्मिन् सूक्ते विद्यमानानां तिसृणामृचां आम्नायोक्तविधानेन सप्तदशधाभ्यासः सप्तदशस्तोमः ताद्दशेषु स्तोत्रेषु पृष्ठशब्दः श्रूयते “सप्तदशानि पृष्ठानि इति” तानि पृष्ठानि विश्वजिति चोदकप्राप्तत्वात् सर्वपृष्ठशब्देनानूद्यन्त इत्येकः पक्षः । रथन्तर पृष्ठ वृहत्पृष्ठयोर्ज्योतिष्टोमे विकल्पितयोरिहापि चोदकेन विकल्पप्राप्तौ सर्वशब्देन समुच्चयो विधीयते । तथा सत्यनुवादकृतं वैयर्थ्यं न भविष्यति इति द्वितीयः । सर्वत्वं बहुषु मुख्यं न तु द्वयोः । तस्मादनेन सर्वपृष्ठशब्देन षट्संख्याकानि पृष्ठान्यतिदिश्यन्ते षड़हे प्रतिदिनमेकैकं पृष्ठं विहितम् । तानि च पृष्ठानि षट् रथन्तरबृहद्वैरूपवैराजशाक्वररैवतसामभिः निष्पाद्यानि” ।

**पृष्ठगोप** पु॰ पृष्ठं गोपायति गुप–वा अयाभावे ण्वुल् । पृष्ठदेशरक्षके योधभेदे भा॰ आ॰ २०१ अ॰ ।

**पृष्ठग्रन्थि** त्रि॰ पृष्ठे ग्रन्थिर्यस्य । (कुजो) कुब्जे हेमच॰ ।

**पृष्ठचक्षुस्** पु॰ पृष्ठे पश्चाद्भागे चक्षुः दृष्टिः तद्व्यापारोऽस्य । पश्चाद्दृष्टियुक्ते भल्लूके शब्दार्थक॰ ।

**पृष्ठज** त्रि॰ पृष्ठे पश्चात् जायते जन–ड । पश्चाद् जाते भा॰ आ॰ ६२ अ॰ ।

**पृष्ठजाह** त्रि० पृष्ठस्य मूलं जघा० मूले जाहच् । पृष्ठमूले ।

**पृष्ठतल्पन** न० तल्पमिवाचरति तल्प+क्विप् ततः भावे ल्युट् । पृष्ठस्य तल्पनं तल्पवदाचरणम् । (पिठे योओया) प्रदेशे त्रिका० ।

**पृष्ठतस्** अव्य० पृष्ठ+तसिल् । पश्चाद्भागे इत्यर्थे ।

**पृष्ठदृष्टि** पु० पृष्ठे दृष्टिस्तद्व्यापारोऽस्य । भल्लूके राजनि० ।

**पृष्ठमर्म्मन्** न० ७त० । सुश्रुतोक्ते पृष्ठस्थमर्मभेदे स च तत्रोक्तो यथा "अत ऊर्द्ध्वं पृष्ठमर्म्माण्यनुव्याख्यास्यामः । तत्र पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्म्मणी तत्र शोणितक्षयात् पाण्डुर्विवर्णो हीनरूपश्च म्रियते । पार्श्वजघनवहिर्भागे पृष्ठवंशमुभयतो नातिनिम्ने कुकुन्दरे नाम मर्म्मणी तत्र स्पर्शाज्ञानमधःकाये चेष्टोपघातश्च । श्रोणीकाण्डयोरुपर्य्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौ नाम तत्राधःकायशोषो दौर्बल्याच्च मरणम् । अधःपार्श्वान्तरप्रतिबद्धौ जघनपार्श्वमध्ययोस्तिर्य्यगूर्द्ध्वं च जघनात् पार्श्वसन्धी नाम तत्र लोहितपूर्णकोष्ठतया म्रियते । स्तनमूलादृजुभयतः पृष्ठवंशस्य बृहती नाम तत्र शोणितातिप्रवृत्तिनिमित्तैरुपद्रवैर्म्रियते । पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम तत्र बाह्वोः स्वापः शोषो वा । बाहुमूर्द्ध्वग्रीवामध्येऽसपीठस्कन्धनिबन्धनावंसौ नाम तत्र स्तब्धबाहुता । एवमेतानि चतुर्दश पृष्ठमर्म्माणि व्याख्यातानि" ।

**पृष्ठमांस** न० पृष्ठस्य मांसम् । पश्वादीनां पृष्ठस्थे मांसे । तस्याभक्ष्यता मार्कपु० उक्ता यथा "पृष्ठमांसं वृथामांसं गर्भमांसं च पुत्रक ! । न भक्षयीत सततं प्रत्यक्षलवणानि च" ।

**पृष्ठमांसाद** त्रि० पृष्ठे परोक्षे मांसाद इव । १परोक्षे मत्सरेण वाक्याभिधायिनि पुरुषे दोषोद्घोषके त्रिका० । "कृत्स्नत्या विमथान्वेषोत्थितः कृत्स्नेति समाकर्णात् वाक्याभिधानेऽन्वये तथार्थत्वम् । पृष्ठमांसादनशब्दे दृश्यम् । पश्वादेः २पृष्ठमांसभक्षके त्रि० ।

**पृष्ठमांसादन** न० पृष्ठे परोक्षे मांसादनमिव । "पृष्ठमांसादनं तद् यत् परोक्षे दोषकीर्त्तनम्" हेमच० उक्तेऽर्थे २पश्वादीनां पृष्ठमांसस्य भक्षणे च ।

**पृष्ठयज्वन्** पु० पृष्ठैः रथन्तरादिभिरिष्टवान् यज–ङ्वनिप् । रथन्तरादिभिः षड्भिःस्तोत्रसमूहैरिष्टवति मु० ५ ५४१

**पृष्ठयान** न० पृष्ठेन यानं गमनम् । (पिठे याओया) पृष्ठेन गमने । तच्च चर्य्यारोगे निदानं सुश्रुते उक्तं चर्य्याशब्दे दृश्यम् ।

**पृष्ठवंश** पु० ६त० । (पिटेर दाँड़ा) पृष्ठास्थि हेमच० । "चतुर्विंशतिः पृष्ठवंशे" सुश्रुतोक्तेः तत्र चतुर्विंशति रस्थीनि । पृष्ठमर्म्मन्शब्दे दृश्यम् ।

**पृष्ठवास्तु** न० ७त० । वलिदानः पृष्ठभागस्थे वास्तुनि "पृष्ठवास्तुनि कुर्वीत वलिं सर्वात्मभूतये" मनुः । "अट्टो परिच्छदं पृष्ठवास्तु" २कुल्लूकभट्टोक्तेऽर्थे च ।

**पृष्ठवाह्** त्रि० पृष्ठं पश्चाद्भागं वहति वह–ण्वि । १पश्चाद्भागवाहके कवि० १६६ श्लो० । भत्वे वाह ऊठ् । पृष्ठौहः । स्त्रियां ङीप् । पृष्ठं युगपार्श्वं वहति वह–ण्वि । २युगपार्श्ववाहकवृषे [वृषे हेमच० ।

**पृष्ठवाह्य** पु० पृष्ठेन वाह्यं वहनं यस्य । पृष्ठेन भारवाहक-

**पृष्ठशय** त्रि० पृष्ठे शेते पृष्ठरूपाधिकरणोपपदे कर्त्तरि अच् । पृष्ठे शायिनि उत्तानशये ।

**पृष्ठशृङ्ग** पुंस्त्री पृष्ठे शृङ्गमस्य । वनच्छागे हेमच० । स्त्रियां जातित्वात् ङीप् । [मेदि० ।

**पृष्ठशृङ्गिन्** पु० ७त० । १महिषे २नपुंसके ३भीमसेने च

**पृष्ठेमुख** पु० पृष्ठे मुखमस्य बहुव्री० । कुमारानुचरभेदे भा०श०४६ अ० ।

**पृष्ठोदय** पु० पृष्ठेनोदयो यस्य । ज्योतिषोक्ते पृष्ठेनोदययुक्ते राशिभेदे "अजो गोपतियुग्मञ्च कर्किधन्विमृगास्तथा । निशासंज्ञाः स्मृतास्त्वेते शेषाश्चान्ये दिनात्मकाः । निशासंज्ञा विमिथुनाः स्मृताः पृष्ठोदयास्तथा । शेषाः शीर्षोदया ह्येते मीनश्चोभयसंज्ञकः" ।

**पृष्ठ्य** न० पृष्ठानां स्तोत्रभेदानां समूहः "पृष्ठस्योपसंख्यानम्" वार्त्ति० समूहे यत् । १स्तोत्रसमूहे । पृष्ठे भवः यत् । २पृष्ठभवे त्रि० । "सोमयागेषु छन्दोगैः क्रियमाणः पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोत्रः" सि०कौ० । पृष्ठेन वहति यत् । ३पृष्ठेन भारवाहके अश्वे (पिठोघोड़ा) अमरः ,

**पृष्ठ्यस्तोम** पु० पृष्ठ्यस्तोमः साधनतयाऽस्त्यस्य अच् । सामवेदप्रसिद्धेषु षट्सु क्रतुभेदेषु "पृष्ठ्यस्तोमास्त्रिवृत्पञ्चदशसप्तदशैकविंशत्रिणवत्रयस्त्रिंशाः" कात्या०श्रौ०२२.६.२६ "पृष्ठ्यस्तोमसंज्ञकाः षट् क्रतवो भवन्ति त्रिवृदादयः" कर्कः ।

**पृषिथ** पु० पृषि+पृषो० । नानावर्णयुक्ते अश्वे २पार्श्वभागे स्त्री उणादि० ।

**पृ** पालने पूर्त्तौ च क्र्या० स्वा० पर० सक० सेट् आपत्वे परे

गुणः। पृणाति अपारीत्। पपार पपरतुः पपतुः।
पॄ पूर्तौ चु॰ उभ॰ सक॰सेट्। पारयति-ते अपीपरत् त।
पेचक पु॰स्त्री॰ पच-वुन् अतपत्व। (पेँचा) १उलूके स्त्रियां जातित्वात् ङीष्। २गजपुच्छमूलोपान्ते ३मुदाच्छादकमांसपिण्डभेदे पु॰ अमरः। ४पर्य्यङ्के ५यूके पु॰ विश्वः। ६मेघे शब्दर॰। [शब्दरत्ना॰ स्त्रियां ङीप्।
पेचकिन् पु॰ पेचकः पुच्छमूलोपान्तोऽस्त्यस्य इनि। गजे
पेचिल पुंस्त्री॰ पच+बा॰ इलच् अतपत्व। गजे त्रिका॰। स्त्रियां जातित्वात् ङीष्।
पेतु न॰ पचि-सन् अत इत्वम्। पेपृष्ठ्यां त्रिका॰। [त्रिका॰।
पेतुली स्त्री पच-उलच् अतपत् गौरा॰ ङीष्। शाकभेदे।
पेट पु॰ पिट-अच्। १प्रहस्ते राजनि॰। २संहतिकारके त्रि॰
पेटक पु॰न॰ पिट-ण्वुल्। पुस्तकादीनां स्थापनार्थे वेत्रादिनिर्मिते १पदार्थे २वृन्दमात्रके ३समूहे च मेदि॰। ४वंशादिनिर्मिते बृहद्गृहकाकारे (पेटारा) पदार्थे पु॰ अमरः।
पेटाक पु॰ पेटक+पृषो॰। पेटके हिकृतकोषः।
पेटिका स्त्री पिट-ण्वुल् कापि अत इत्वम्। (टेपारि) क्षुपभेदे रत्नमाला।
पेटी स्त्री पिट-अच् स्वल्पार्थे ङीप्। क्षुद्रपेटके अमरः।
पेडा स्त्री पेट+पृषो॰। बृहत्पेटिकायां भरतः।
पेढाल पु॰ अवसर्पिण्यां जिनोत्तमभेदे हेमच॰।
पेथ गतौ मेथे च सक॰ क्षेपे अक॰ भ्वा॰ पर॰ सेट्। पेथति अपेथीत्। ऋदित् चङि न ह्रस्वः अपिपेथत् त।
पेत्व न॰ पा-पाने कर्मणि त्वन्। १अमृते २घृते च उज्ज्वल॰
पेदु पु॰ राजभेदे ऋ॰ १।११८।१॰ भा॰।
पेय त्रि॰पा-पाने कर्मणि यत्। १पातव्ये २जले मेदि॰।३दुग्धे शब्दच॰। ४षड्विधाहारान्तर्गते तरलद्रव्यपानादौ आहारभेदे "भोज्यं पेयं तथा चूष्यं लेह्यं खाद्यञ्च चर्वणम्। निष्पेयञ्चेव भक्ष्यं चाद्यमष्टविधं मतम्" राजनि॰। ५मिकाकुक्षुपेयद्रव्ये स्त्री। "पेया खेदाग्निजननी वातवर्चोऽनुलोमनी। क्षुत्तृष्णाग्लानिदौर्बल्यकुक्षिरोगविनाशिनी" राजव॰। ६भाष्यायां मेदि॰।
पेयूष पु॰न॰ पीय-ऊष॰ अयन् बाहुलकात् पर्वे गुणः। १अमृते २नवघृते। "सप्तरात्रप्रसूतायाः क्षीरं पेयूषमुच्यते" हारा॰ उक्ते आसप्तरात्राभ्यन्तरकालीने ३दुग्धे च।
पेरज न॰ उपरत्नभेदे राजनि॰। पिरोजशब्दे दृश्यम्।
पेरा स्त्री पि-बा॰ रे। वाद्यभेदे भक्तिः १३।७।
पेरु पु॰ पीयते रसान् पी-रु। १आदित्ये २वह्नौ च उज्ज्वल॰। पुर-उ स्नगव्यादेराकृतिगणत्वात् नि॰। ३समुद्रे त्रिका॰
पेरुक पु॰ राजभेदे ऋ॰ ६।६३।८
पेरोज न॰ उपरत्नभेदे (पोरोजा) राजनि॰। तत्र द्विविधं पीताभं हरिताभञ्च। तस्य गुणाः "पेरजं तुवरं स्वादु मधुरं दीपनं परम्। स्थावरं जङ्गमञ्चैव संयोगाञ्च यथाविधम्। तत्सर्वं नाशयेत् शीघ्रं शूलं भूतादिदोषजम्। पाठान्तरं यथा "पेरजं तुवरं स्वादुमधुरं दीपनं द्वयोः। स्थावरादिविषघ्नं च आहरितस्रापरं स्मृतम्। पीताभं नाशयेच्छीघ्रं शूलं तिमिरभूतजम्" राजनि॰।
पेल कम्पे अक॰गतौ सक॰भ्वा॰पर॰सेट्। पेलति अपेलीत्। ऋदित् चङि न ह्रस्वः अपिपेलत् त। निघण्टौ अयं गतिकर्मतया चुरादित्वेन पठितः। तेन पेलयति ते
पेल न॰ पेल-अच्। पुंचिह्ने अण्डभेदे (अण्डकोष) हेमच॰।
पेलव त्रि॰ पेल-वन् पेलं वाति वा-क। १कोमले त्रिका॰ २कृशे हेमच॰। ३विरले अमरः।
पेलि पु॰पेल-इन्। गन्तरि ऋत॰। तदुपरं शाखायाः न क्लीवत्वम्। आद्युदात्तता चास्य।
पेव सेवने भ्वा॰सक॰आत्म॰सेट्। पेवते अपेविष्ट। ऋदित् चङि न ह्रस्वः। अपिपेवत् त। ओष्ठ्यान्त्यतयाऽयं धातुपाठे पठितस्तेनोभयरूपता।
पेश पु॰ पिश-अच्। रूपे निघण्टुः पेशलशब्दे दृश्यम्।
पेश ल)(स)ल त्रि॰ पिश(ष)(व)-अलच्। १सुन्दरे २दक्षे ३कोमले च अमरः। मूर्द्धन्यदन्त्यमध्योऽप्यत्रार्थे भरतः। ४धूर्त्ते शब्दर॰। पेशोरूपमस्त्यस्य सिध्मा॰लच्। ५विष्णौ पु॰। "अक्रूरः पेशलो दक्षः" विष्णुस॰
पेशस् न॰ पिश-असुन्। १रूपे २हिरण्ये च निघण्टुः। ३कोषे च।
पेशस्कार त्रि॰पेशो रूपान्तरं करोति स्वस्तीतकीटस्य कृ-अण् उप॰स॰। शलभकारे कीटभेदे स्त्रियां ङीप्। यजु॰३०।८।
पेशस्कृत् त्रि॰ पेशो रूपान्तरं स्वस्तीतकीटस्य करोति कृ-क्विप्। कीटभेदे (काँचपोका) "कीटः पेशस्कृतं ध्यायन् कुड्यां तेन प्रवेशितः। याति तत्सात्मतां राजन्! पूर्वरूपमसंत्यजन्" भाग॰ ११।९।२४
पेशि(शी) स्त्री पिश-इन् वा ङीप्। १वज्रे २मांसपिण्डे च उणादि॰। दीर्घान्तः ३अण्डे अमरः। ४सुपक्वकलिकायां ५मांसां ६खड्गपिधाने (खाप) ७मांसपिण्ड्यां च मेदि॰। ८नदीभेदे ९पिशाचीभेदे १०राक्षसीभेदे शब्दरत्ना॰। इतमौ॰

**पैनद्धक** त्रि० पिनद्ध+चतुरर्थ्यां वराहा० कक् । पिनद्धसमीपादौ ।

**पैप्पलाद** पु० ब०व०। पिप्पलादेन ऋषिणा प्रोक्तमधीयते अण् । १पिप्पलादर्षिप्रोक्ताध्यायिषु तदर्थस्य २वेत्तृषु च कार्त्तकौज० गणे तत्र द्वन्द्वे पूर्वं प्रकृतिस्वरः ।

**पैप्पलादि** पुंस्त्री पिप्पलादस्यर्षेरपत्यम् इञ् । पिप्पलादर्षेरपत्ये स च गोत्रप्रवरर्षिभेदः प्रवराध्यायः स्त्रियां ङीप् ।

**पैल(लेय)** पुंस्त्री० पीलाया अपत्यं "पीलाया वा" पा० अण् पक्षे ढक् । पीलाया अपत्ये स्त्रियां ङीप् । युवापत्ये तु "अणोद्व्यचः" पा० फिञ् तस्य पैलादि० लुक् । तस्य युवापत्येऽपि । तथा च पैलः पिता पुत्रश्च ।

**पैलगर्ग** पु० कर्म० । ऋषिभेदे तदाश्रमस्य च तीर्थत्वम् भा० व० १८७ अ० ।

**पैलव** त्रि० पीलौ दीयते कार्य्यं वा व्युष्टा० अण् । पीलौ १दीयमाने २कार्य्ये च । व्युष्टा० गणे पीलुमूलेति मतान्तरे बनसावित्यन्ये । इदमर्थेऽण् । पीलुसम्बन्धिनि त्रि० मनुः २।४० । [अक्षादिभवे ।

**पैलुवहक** त्रि०पीलुवहे भवः वहान्तत्वात् वुञ् । पीलुवह-

**पैलादि** "पैलादिभ्यश्च" पा० युवप्रत्ययलुग्निमित्ते शब्दगणे स च गणः "पैल शालङ्कि सात्यकि सात्यकामि राहवि रावणि औदञ्चि औदव्रजि औदमेघि औदमज्जि औद-भृज्जि दैवस्थानि पैङ्गलोदायनि राहक्षति भौलिङ्गि राणि औदन्यि औद्वाहमानि औज्जिहानि औदशुद्धि (तद्राजाच्चाणः) (आकृतिगणोऽयम्) । तद्राजसंज्ञकात् परस्य युवप्रत्ययस्य लुगित्यर्थः ।

**पैशाच** पु० पिशाचेन निर्वृत्तः अण् । "सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति । स पापिष्ठो विवाहानां पैशाचः" मनूक्ते १विवाहभेदे २पिशाचकर्तृके ३तत्सम्बन्धिनि च त्रि० । स्त्रियां ङीप् "पैशाचीं योनिमापन्नाः" पुरा० । "यत्नाद्य ददाति हृत्वा वा क्रोशति सततं पैशाचमिति" हारीतोक्ते ४दानभेदे स्वार्थे अण् । ५पिशाचशब्दार्थे पु० प्रज्ञा० अण् । ६आयुधजीविसङ्घभेदे । बह्वषु तस्य लुक् ।

**पैशुन(न्य)** न० पिशुनस्य भावः युवा० अण् ब्राह्मणा० ष्यञ् वा । पिशुनत्वे

**पैष्ट** त्रि०पिष्टस्येदम् । अण् १पिष्टसम्बन्धिनि स्त्रियां ङीप् सा च २सुराभेदे । "पैष्टी कटूष्णतीक्ष्णा स्वादीमधुरौष्णगम्भीरा । वातहृत् कफकृत्पीनत्पित्तकोपहनी च सा" राजनि० ।

**पैसुकायन** पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

**पो** त्रि० पवते पुनाति वा पु—पू—वा विच् १पूते २शोधके च ।

**पोगण्ड** पु० पौः शुद्धो गण्ड एकदेशो यस्य । १विकलाङ्गे २न्यूनाधिकाङ्गे । स्वार्थे अण् । "पौगण्डः पञ्चमाद्वर्षाद्दर्शक् च दशमावृतः" इत्युक्तवयस्के बालके पु० हला० ।

**पोट** पु० पुट—श्लेषे घञ् । १संश्लेषे—आधारे घञ् । २गेहभूमौ जटा० ।

**पोटगल** पु० पोटेन संश्लेषमात्रेण गलति गल—अच् । १नले २काशे च अमरः । ३मत्स्यभेदे पुंस्त्री मेदि० स्त्रियां ङीप् ।

**पोटलक** न० पोटेन चीयते ची—ड स्वार्थे कन् । (पुँटलि) ख्याते संश्लिष्टवस्त्रादौ कात्या० श्रौ० ७।८।४। कर्कः । तन्वार्थे स्त्री वापि अत इत्त्वम् पोटलिका । [अमरः ।

**पोटा** स्त्री पु० पुट—अच् । पुरुषलक्षणयुक्तायां स्त्रियाम् ।

**पोट्टलिका** स्त्री पोटलिका+पृषो० (पुँटलि) ख्याते पदार्थे पोट्टलीत्यपि तत्रार्थे "शुद्धत्रयं लिप्तकाकाले गुडूच्याः काथ एव वा । दोलायन्त्रे पुरः पाच्यः पोट्टल्या वस्त्रबद्धया" वैद्यक० ।

**पोट्टिल** पु० अवसर्पिण्यां जिनोत्तमभेदे हेमच० ।

**पोडु** पु० पुड—कु । कपालास्थितके राजनि० ।

**पोत** पुंस्त्री पू—तन् । १बालके २वहित्रे च अमरः । ३गृहस्थानभेदे (पोँता) ४वस्त्रे च मेदि० । ५दशवर्षीयगजे हेमच० । ६जलयाने नौकाभेदे (जाहाज) ततः समूहे पाशा० य । पोत्या पोतसमूहे स्त्री ।

**पोतक** पु०पोत इव कायति कै—क स्वार्थे क वा ।१पोतपदार्थे २नागभेदे भा०उ०१०२अ०। गौरा० ङीष् । ३पूतिकाशाके स्त्री ४श्योनाके च स्त्री राजनि० ।

**पोतज** पु० पोतः सन् जायते जन—ड । शिशुभूततया जायमाने गजाश्वादौ हेमच० । [गौरा० ङीष् ।

**पोतन** त्रि० पू—तन । १पवित्रे २पवित्रताकारके च स्त्रियां

**पोतप्लव** पु० पोतेन प्लवते प्लु—अच् । नौकया तारके बृ० सं० १०।१० । [अमरः ।

**पोतवणिज्** पु० पोते वणिक् । नौकया वाणिज्यकारके

**पोतरक्ष** पु० पोतं रक्षति अण् उप०स० । (हालि) ख्याते पदार्थे कैनिपातके शब्दमा० ।

**पोतनकप्रिय** त्रि० बुद्धभेदे त्रिका० ।

**पोतवाह** पु० पोतं नावं वहति वह—अण् उप०स०। नौकावाहके (दाँडि) अमरः ।

**पोताच्छादन** न० पोतस्येवाच्छादनम् । वस्त्रकुटीरे हारा० ।

पोताधान पु० पोतानां शिशूनामल्पजातमत्स्यानामाधानम्। क्षुद्रमत्स्यसङ्घे (पोनारझाँक) अमरः। [राजनि०।

पोतास पु० पोत इवास्यति अस-दीप्तौ अण्। कर्पूरभेदे

पो(पौ)तिमत्स्यक पु० मत्स्यभेदे भा० व० ३अ०।

पोतिका स्त्री पूतिका+पृषो०। पूतिकायां १शाकभेदे भरतः २शतपुष्पायां ३मूषपोत्यां च राजनि०।

पोतु पु० पु-तन्। मानभाण्डशोधके हेमच०।

पोतृ पु० पुनाति पु-तृन्। ऋत्विग्भेदे अच्छावाकशब्दे ८५ पृ० दृश्यम्। होत्रादिशब्देन द्वन्द्वे ऋत आत्। पोताहोतारौ।

पोत्र न० पू-त्र। १मुखे २शूकरमुखाग्र ३वाहनकाष्ठे, ४वहित्रे च मेदि०। [स्त्रियां जातित्वात् ङीष्।

पोत्रायुध पुंस्त्री पोत्रमायुधमस्य। शूकरे राजनि०।

पोत्रिन् पु० पोत्रमस्त्यस्य इनि। शूकरे अमरः। पोत्रयुक्ते त्रि०। स्त्रियां ङीप्। [यज्ञिभेदे त्रिका०।

पोत्रिरथा स्त्री पोत्री रथ इव गतिसाधनमस्याः। जिन-

पोत्रीय त्रि० पोतुः० कर्म छ। पोतृकर्त्तव्ये कर्मणि। कात्या० श्रौ० २४।४।४२।

पोथकी स्त्री "कण्डूशाखान्विता गुर्व्यो रक्तसर्षपसन्निभाः। पिडकाश्च वर्त्मस्थाः पोथक्य इति संज्ञिताः" सुश्रुतोक्ते पिडकाभेदे। [स्त्री गौरा०ङीष्।

पोल त्रि० पुल-ज्वला०ण। १महत्त्वयुक्ते। २पिष्टकभेदे

पोलिका स्त्री पूरिकाभेदे क्षतावशब्दे २१८१ पृ० दृश्यम्।

पोलिन्द पु० पोतस्यालिन्द इव पृषो०। नौकाङ्गभेदे त्रिका०।

पोषयितृ त्रि० पुष-णिच्-तृच्। १पोषके २काकपोष्ये पिके च उज्ज्वल०।

पोषुक त्रि० पुष-बा० उकञ्। पोषणकरणशीले "तमनुपोषं पोषुको भवति" षड्विंशब्रा०। [पके त्रि० शब्दच०।

पोष्टृ पु० पुष-तृच्। (कोटा बरबटा) १करञ्जभेदे। २पो-

पोष्य त्रि० पुष-कर्मणि यत्। १पोषणीये। आवश्यके यत्। २अवश्यपोष्ये। अवश्यपोष्याश्च दर्शिता यथा "भरणं पोष्यवर्गस्य दृष्टादृष्टफलोदयम्। नरकपातोऽप्यभरणे कर्त्तव्यमतः प्रयत्नतः। माता पिता गुरुः पत्नी अपत्यानि समाश्रिताः। अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्गा अमी नव" कामी०प्र० ४५ अ०। "ज्ञातिर्बन्धुजनः क्षीणस्तथाऽनाथः समाश्रितः। अन्येऽप्यधनयुक्ताश्च पोष्यवर्ग उदाहृतः" दक्षसं०।

पोष्यपुत्र पु० कर्म०। लालनादिना पुत्रत्वमाप्ते "अधुना कृत्तिकादीनां यथा यः पोष्यपुत्रकः। तन्नाम चक्रुर्गोप्यः प्रेम्णा कार्त्तिकश्चेति कौतुकात्" ब्रह्म०वै०गण०ख०१४अ०। अधुना दत्तकपुत्रस्य पोष्यपुत्रत्वं व्यवह्रियते तद्विधानं दत्तकशब्दे ३४२८पृ० दृश्यम्।

पौंश्चलेय पुंस्त्री पुंश्चली+अपत्ये ढक्। पुंश्चल्या अपत्ये

पौंश्चल्य न० पुंश्चल+भावे ष्यञ्। १असतीत्वे परपुरुषगामित्वे २पुंस्त्रियोर्मिथोव्यभिचारे च मनुः ९।१५।

पौंसायन पु० चौलामण्यां याजके दुष्टरीतौ राजभेदे शत०ब्रा० १२।८।४।२

पौंस्न न० पुंसो भावः स्नञ्। पुंस्त्वे।

पौंस्य न० पुंस अभिमर्दने घञ् तत्र साधु वा० यत्। १बले निघ०। २संग्रामे च निघण्टुः ऋ०१।१८०।१०।

पौगण्ड न० पोगण्डस्य भावः। १पञ्चमाब्दादिदशमवर्षान्तावस्थाभेदे पोगण्डशब्दे दृश्यम्। भावे अण्। २तदवस्थायुते त्रि०।

पौञ्जिष्ठ पुंस्त्री अन्त्यजातिभेदे यजु० ३०।१८। वेददी०।

पौटायन पुंस्त्री पुटायनस्यापत्यम् अण्। पूटायनर्षेः गोत्रापत्ये। [गोत्रस्त्रियाम्।

पौणिक्या स्त्री पुणगोत्रस्य स्त्री अण् स्त्रियां ष्यङ्। पुण०

पौण्डरीक न० पुण्डरीकमिव शर्करा० अण्। पुण्डरीकतुल्ये प्रपौण्डरीके राजनि०।

पौण्डर्य्य न० पुण्डर्य्यमेव चाण्। पुण्डर्य्ये भरतः।

पौण्ड्र पु० १देशभेदे स च वृ०सं०१४० पूर्वस्यामुक्तः भा०भी०९अ० सोऽस्य अभिजनः तस्य राजा वा अण्। २तद्देशस्थे ३पितामहादिक्रमेण तद्देशवासिनि च। "पौण्ड्रश्च बलिनां वरः" हरिवं०९१अ०। स च कृष्णेन निहतः "वासुदेवं पौण्ड्रं कलिङ्गञ्च मातुलञ्चैव जनार्दनः। जघान सहितान् सर्वान्" हरिवं० १६१ अ०। "वसुदेवस्य सुतनूपत्नीजाते ४पुत्रभेदे। "सुतनूश्च नराची च शौरेराश्चां परिग्रहः। पौण्ड्रश्च कपिलश्चैव वसुदेवस्य तौ सुतौ। नराच्यां कपिलो जज्ञे पौण्ड्रश्च सुतनूसुतः। तयोर्ज्येष्ठोऽभवत् पौण्ड्रः कपिलश्च वनं ययौ" हरिवं०१६२ अ०। ५भीमसेनशङ्खे ६इक्षुभेदे पु० शब्दमा०। ७क्रियालोपेन वृषलत्वप्राप्ते क्षत्रियभेदे मनुः १०।४४ स्वार्थे क। तत्रार्थे इक्षुभेदे (पुंडि)।

पौण्ड्रनागर पु० पौण्ड्रनगरे भवः अण् तस्य प्राचां देशत्वेऽपि नगरान्तत्वेन उत्तरपदवृद्धिः। पौण्ड्रनगरभवे।

पौण्ड्रमात्स्यक पु० राजभेदे भा० स० २७ अ०।

**पौण्ड्रवर्द्धन** पु०(वेहार) ख्याते देशभेदे शब्दर० तत्र पौण्ड्रेषु प्राचुर्य्यात् तथात्वम् । [२गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

**पौण्ड्रिक** पु० पुण्ड्र+स्वार्थे ठञ् । १इक्षुभेदे शब्दमा० ।

**पौण्य** त्रि० पुण्येषु श्रौतस्मार्तकर्मसु साधु अण् । पूर्णकर्म-कारके कात्या० २२।२।५।

**पौतव** न० यौतव–पृषो० । परिमाणे हेमच० ।

**पौतिक** त्रि० पूतिकेन दुर्गन्धिना निर्वृत्तम् सङ्कला० अण् । पूतिकद्रव्यनिर्वृत्ते ।

**पौतिमाष** पु० स्त्र्य० पूतिमाषस्यर्षेः गोत्रापत्यं गर्गा० यञ् । तस्य छात्राः कण्वा० अण् यलोपः । पौतिमाषच्छात्रेषु ।

**पौत्रक** न० पोतुरिदं ठञ् । ऋत्विग्भेदपोतृसम्बन्धिनि ।

**पौत्तिक** न० पुत्तिकाभिर्मधुमक्षिकाभेदैर्निर्वृत्तम् ठञ् । म-धुनि रत्नमा० ।

**पौत्र** पुंस्त्री० पुत्रस्यापत्यं शिवा० अण् । पुत्रस्य पुत्रे नप्तरि "पौत्रेणानन्त्यमश्नुते" इति श्रुतिः । स्त्रियां ङीप् ।

**पौदन्य** पु० अश्मकनृपनगरे भा० आ० १७७ अ० ।

**पौन:पुनिक** त्रि०पुनःपुनर्भवः ठञ् टिलोपः । पुनःपुनर्भवे ।

**पौन:पुन्य** न० पुनः पुनरेव स्वार्थे चतुर्वर्णा ष्यञ् टिलोपश्च । १पुनःपुनरित्यर्थे भावे ष्यञ् । २आभीक्ष्ण्ये

**पौनरुक्त** न० पुनरुक्तस्य भाव उद्गात्रा० अञ् । पुनर्वादोक्तौ

**पौनरुक्तिक** न० पुनरुक्तमर्थं वेत्ति तत्पदं वाऽधीते उक्था० ठक् । १पुनरुक्तार्थाभिज्ञे २पुनरुक्तपदाध्येतरि च ।

**पौनर्भव** पुंस्त्री पुनर्भू+विदा० अपत्ये अञ् । पुनर्भ्वःपत्ये १द्वादशपुत्रमध्ये पुत्रभेदे "या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया । उत्पादयेत् पुनर्भूत्वा स पौनर्भव उच्यते" मनुः । २तथाविधकन्यायां स्त्री स्वार्थे अण् । तत्रार्थे "सप्त पौनर्भवाः कन्या वर्जनीयाः कुलाधमाः । वाचा-दत्ता मनोदत्ता कृतकौतुकमङ्गला । उदकस्पर्शिता या च या च पाणिगृहीतिका । अग्निं परिगता या च पुनर्भूप्रभवा च । इत्येताः काश्यपेनोक्ता दहन्ति कुल-मग्निवत्" काश्यपोक्ते सप्तविधे ३कन्याभेदे च । स्वार्थ-त्वात् क्लीबभावः । प्रज्ञादेराकृतिगणत्वात् वा ङाप् इत्येके । पुनर्भुवं विन्दति अण् । ४पुनर्भूवेदृत्रे भर्त्तरि । "सा चेदक्षतयोनिः स्यात् गतप्रत्यागताऽपि वा । पौनर्भवेन भर्त्रा सा पुनःसंस्कारमर्हति" मनुः ।

**पौर** त्रि० पुरे वसति शैषिकोऽण् । १पुरवासिनि २रोहिषतृणे न०(रामकर्पूर) अमरः । पूरः पूरक एव स्वार्थे अण् । ३उदरपूरके त्रि०ऋ०२।११।११भा०। पुरोभवः पुरस्+अण् टिलोपः । ४पूर्वदिग्देशकालभवे "पौरा बुधगुरुर-विजा नित्यम्" वृ०सं० १७ अ० ।

**पौरक** न० पौर इव कायति कै–क । गृहबाह्योद्याने हेम० ।

**पौरकुत्सी** स्त्री पुरुकुत्सस्यापत्यं स्त्री इञ् ङीप् । गाधि-राजमातरि हरिवं० २७ अ० । [समीपादौ ।

**पौरगीय** त्रि० पुरग+कृशाश्वा० चतुरर्थ्यां छण् । पुरगत०

**पौरण** पु० "पूरणवारिध्राण्यन्तानां वैश्वामित्रदेवरातपौरणेति आश्व०श्रौ०१२।१४।५ उक्ते गोत्रप्रवरर्षिभेदे । पूरण+स्वार्थे अण् । २पूरणे स्त्रियां ङीप् । "पौरणी भूषणक्रियाम्" हरिवं० ८८अ० ।

**पौरन्दर** त्रि० पुरन्दरस्येदम् पुरन्दरो देवताऽस्य वा अण् । १शक्रसम्बन्धिनि २ज्येष्ठानक्षत्रे च वृ०सं०१५अ० ।

**पौरव** पुंस्त्री० पु(पू)रोर्गोत्रापत्यमण् । १ययातिपुत्रभेदस्य पु(पू)रोरपत्ये २तत्सम्बन्धिनि च । ३उदीच्यदेशभेदे वृ०सं०१४अ०। मार्क०पु०५८ अ० तस्य पूर्वोत्तरदिक्स्थत्वमुक्तं यथा "त्रिनेत्राः पौरवाश्चैव गन्धर्वाश्च द्विजोत्तम ! । पूर्वोत्तरन्तु कूर्मस्य पादमेते व्यवस्थिताः" सोऽभिजनोऽस्य तस्य राजा वा अण् । पित्रादिक्रमेण ४तद्देशवासिनि ५तन्नृपे च । [भक्तियुक्ते सि०कौ० ।

**पौरवीय** त्रि० पौरवो राजा भक्तिरस्य छ । पौरवनृप-

**पौरश्चरणिक** त्रि०पुरश्चरणस्य व्याख्यानस्तत्र भवो वा ठञ् । १पुरश्चरणप्रतिपादकग्रन्थव्याख्यानग्रन्थे २तत्र भवे च ।

**पौरस्त्य** त्रि०पुरस्+भवार्थे त्यक् । १पुरोभवे २प्रथमे च अमरः

**पौरागीव** त्रि० पुराग+कृशाश्वा० चतुरर्थ्यां छण् । पूर्वकाल-गतस्यादूरदेशादौ । [१अ० ।

**पौराण** त्रि० पुराणे पठितः अण् । पुराणपठिते भा० आ०

**पौराणिक** त्रि० पुराणं वेत्त्यधीते वा "आख्यानाख्यायि-केतिहासपुराणेभ्यश्च" वार्त्ति० ठक् । १पुराणार्थाभिज्ञे २तदध्येतरि च । पुराणे पठिता ठक् । ३तत्र पठिते त्रि० स्त्रियां ङीप् ।

**पौरिक** पु० दाक्षिणात्ये देशभेदे मार्कपु० ५७ अ० ।

**पौरुकुत्स** पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

**पौरुष** न० पुरुषस्य भावः कर्म वा युवा० अण् । १पुरुषत्वे २विक्रमे ३उद्यमे च । पुरुषस्येदम् अण् । ४ऊर्द्ध्वविस्तृ-तबाहुपाणिकमनुष्यपरिमाणे अमरः । "अवेऽपि मानेऽपि च पौरुषाधिकम्" नैष० । स्वार्थे अण् । ५पुरु-षपर्य्याये शत०ब्रा० १४।७।१।१२ ।

**पौरुषांशकिन्** पु० स्त्र्य० । पुरुषांशकेन ऋषिणा प्रोक्त-

मधीयते शौनका० णिनि। पुरुषांशकर्षिणा प्रोक्ता-ध्येतृषु।

**पौरुषेय** पु० पुरुषस्य वधादि "पुरुषाद्वधविकारसमूहतेन कृतेषु" पा० ठञ्। पुरुषस्य १वधे २विकारे ३समूहे ४तेन कृते च।

**पौरेय** त्रि० पुरस्यादूरदेशादि सख्या० ढञ्। नगरसमीपादौ

**पौरोगव** पु० पुरोऽग्रे पाचनवस्तुषु गौर्नेत्रं यस्य पुरोगुः ततः स्वार्थे प्रज्ञा० अण्। पाकशालाध्यक्षे अमरः।

**पौरोहित** त्रि० पुरोहितस्य धर्म्यम् महिष्या० अण्। पुरोहितस्य धर्म्ये। [कर्मभेदे आश्व०श्रौ०२।१८।९।

**पौर्णदर्व** न० पूर्णया दर्व्या निर्वाद्यं कर्म अण्। वैदिके

**पौर्णमास** पु० पौर्णमास्यां भवः सन्धिवेला० अण्। १पौर्णमासीविहिते यागे "दर्शपौर्णमासाभ्यां यजेत" श्रुतिः स च द्विविधः यावज्जीवकालिकः पञ्चदशीप्रतिपत्सन्धिकाले कर्त्तव्यश्च। तत्कालादिविधानं कात्या० श्रौ० २।१ कण्डिकादौ दृश्यम्। पूर्णोमाश्चन्द्रमास्तस्येयम् अण् पूर्णो माशो यस्यां वर्त्तते "पूर्णमासादण् वक्तव्यः" वा० अण् वा। २शुक्लपक्षीयपञ्चदशयुक्तक्रियायां तदुपलक्षितकालरूपायां वा १तिथौ स्त्री ३तदुत्तरप्रतिपदि च "द्वे ह वै पौर्णमास्यौ पूर्वा उत्तरा च तत्र पञ्चदशी पूर्वा प्रतिपदुत्तरा" इति श्रुतेः तत्र पञ्चदशी मुख्या प्रतिपद्गौणी इत्यर्थः।

**पौर्णमासिक** त्रि० पूर्णमास्यां भवः कालाट् ठञ्। पौर्णमासभवे यागादौ वा० वत्। पौर्णमास तदर्थे।

**पौर्णमी** स्त्री पूर्णतया चन्द्रो मीयतेऽत्र मा--आधारे घञर्थे क स्वार्थे अण् ङीप्। पूर्णिमातिथौ त्रिका०। [२।१७८

**पौर्त्तिक** त्रि० पूर्त्ताय साधु ठक्। पूर्त्तसाधने कर्मणि मनु०

**पौर्य** पुंस्त्री० पुरस्यापत्यं कुर्वा० ण्य। पुरनामकस्य नृपस्यापत्ये

**पौर्वनगरेय** त्रि० पूर्वनगर्यां भवः नद्या० ढक्। पूर्वनगरीभवे

**पौर्वपदिक** त्रि० पूर्वपदं गृह्णाति ठक्। पूर्वपदग्राहके।

**पौर्वातिथ** पु० गोत्रप्रवरर्षिभेदे आश्व० श्रौ० १२।१४।१।

**पौर्वापर्य्य** न० पूर्वापरयोर्भावः ष्यञ्। पूर्वापरत्वे।

**पौर्वार्द्ध(र्द्धिक)र्द्ध्य** त्रि० पूर्वार्द्धे भवः यत् अण् ठञ् वा पूर्वार्द्धभवे। [च। पूर्वाह्णेतन तदर्थे त्रि०।

**पौर्वाह्णिक** त्रि० पूर्वाह्णे भवः ठञ्। पूर्वाह्णभवे पक्षे ट्यु ट्युट्

**पौर्विक** त्रि० पूर्वस्मिन् काले भवः ठञ्। पूर्वकालभवे स्त्रियां ङीप्। "जातिं चरति पौर्विकीम्" मनुः ४।१४८।

**पौलस्त्य** पुंस्त्री० पुलस्त्यस्यापत्यं गर्गा०यञ्। पुलस्त्यस्यापत्ये १कुबेरे २रावणादौ च मेदि०। स्त्रियां ङीप् यलोपः। पौलस्ती शूर्पणखायाम्। [विकारे।

**पौलाक** त्रि० पुलाकस्य विकारः पलाशा० अञ्। पुलाक-

**पौलि** पुं०पुल--इन् वा० इञ्च। १ईषद्दग्धे आरव्यपक्वायसे कलायादौ अमरः। स्वार्थे क। तदर्थे हेमच०।

**पौलुषि** पु० पुलुषवंश्ये सत्ययज्ञे ऋषिभेदे शत०ब्रा०१०।६।१।१

**पौलोमी** स्त्री पुलोम्नोऽपत्यम् अण् अनोलोपः। पुलोमजायां शच्यां हेमच०।

**पौष** पु० पुष्येण युक्ता पौर्णमासी पुष्य--अण् यलोपः ङीप् पौषी सा यत्र मासे अर्द्धमासे वर्षे वा पुनरण्। १पुष्यनक्षत्रयुक्तपौर्णमासीयुक्ते १मासे २पक्षे ३जैत्रे वर्षभेदे बार्हस्पत्ये १९४९पृ० दृश्यम्। "मीनादिस्थो रविर्येषामारम्भः प्रथमक्षणे" इत्यादिरीत्या धनुःस्थरव्यारब्धः शुक्लप्रतिपदादिदर्शान्तात्मको मुख्यचान्द्रपौषः कृष्णपक्षादिपौर्णमास्यन्तः गौणः पौषः, मकराधिस्थरविकः सौरः पौष इति भेदः तेनान्यत्र भक्तिः।

**पौष्कर** न०पुष्करस्याकारोऽस्त्यस्य मूले प्रज्ञा०अण्। १पुष्करमूले राजनि० पुष्करस्येदम् अण्। २पुष्करसम्बन्धिनि त्रि० विष्णोः पद्मतया प्रादुर्भावयुते ३पाद्मे कल्पे पु०।

**पौष्करमूल** न०स्वार्थे अण्। पुष्करमूले सुगन्धिद्रव्यभेदे भरतः

**पौष्करिणी** स्त्री पुष्कराणां समूहः अण् स्वार्थे अण् वा ततोऽस्त्यर्थे इनि ङीप्। पुष्करिण्यां शब्दच०।

**पौष्करेयक** न० पुष्करे जातादि कत्त्र्या० ढकञ्। पुष्करे जातादौ स्त्रियां ङीप्।

**पौष्कल** त्रि० पुष्कलेन निर्वृत्तम् सङ्कला० अण्। १पुष्कलनिर्वृत्ते २सामभेदे न० "उष्णिहि सामं ककुभि पौष्कलम्" सामसं०भा०धृता श्रुतिः "तत्र गीतं पवस्व मधुमत्तम" इति प्रगाथे (उत्तरा० १प्र०१६) तस्मिन् पूर्वा ककुप् उत्तरा पङ्क्तिः। तत्र (ककुभि) पौष्कलं साम। (तच्च) अच-गा०१म—१६ दर्शितम्।

**पौष्कलावत** पु० दिवोदासधन्वन्तरिं प्रति आयुर्वेदज्ञानार्थं प्रश्नकारके सुश्रुतसहाध्यायिभेदे सुश्रुते १।१अ० दृश्यम्।

**पौष्कलेयक** त्रि० पुष्कले जातादि कत्त्र्या०ढकञ्। पुष्कले-जातादौ स्त्रियां ङीप्।

**पौष्टिक** त्रि० पुष्ट्यै हितम् ठक्। पुष्टिसाधने कर्मभेदे "पुष्टिर्धनजनादीनां इद्धिरित्यभिधीयते। तद्धेतुभूतं यत् कर्म पौष्टिकं तदिहोच्यते" स्मृतिदुर्गभञ्जनः।

**पौष्टी** स्त्री पुरोर्भार्यायां स्त्रीभेदे भा० आ० ९४ अ०।

पौष्ण त्रि० पूषा देवताऽस्य तस्येदं वा अण् अणन्तत्वात् उपधालोपः। १पूषदेवताके चर्वादौ २रेवतीनक्षत्रे न० ३पूषसम्बन्धिनि त्रि० स्त्रियां ङीप्।

पौष्य न० पुष्येण निर्वृत्तः तस्येदं वा अण्। १पुष्यसाध्ये २मद्यभेदे स्त्री। ३पुष्पसम्बन्धिमात्रे त्रि० स्त्रियां ङीप्। ४पाटलिपुत्रनगर्यां स्त्री ङीप् शब्दरत्ना०।

पौष्य पु० करवीरपुराधिपे पूष्णः पुत्रे १नृपभेदे तत्कथा "पुष्पः पुत्रोऽभवत् पौष्यः सर्वशास्त्रार्थपारगः" कालिकापु०। उतङ्कनर्षिणा गुरुदक्षिणार्थं याचिते तस्मै कुण्डलदातरि २नृपभेदे भा०आ०३अ०। तदधिकृत्य कृतो ग्रन्थः अण्। भा० आ० पर्वान्तर्गते ३पर्वभेदे न०।

प्याट् अव्य० प्याय–बा० डाटि। सम्बोधने अमरः।

प्याय वृद्धौ भ्वा०आ०अक०सेट्। प्यायते, अप्यायि–अप्यायिष्ट इदित् ओदित् च पीनः।

प्यायस्थूण पु० गोत्रप्रवरर्षिभेदे।

प्युक्ष न० अपि–उक्ष–बा० नक् अपेरल्लोपः। १वाद्युनि २अजगरचर्मणि च कात्या०श्रौ० १५।३।२१ कर्कः।

प्युष उत्सर्गे चु०उभ०सक०सेट्। प्योषयति ते। अपुप्युषत् त।

प्युष विभागे दाहे च दि० पर० सक० सेट्। प्युष्यति इरित् अप्युषत् अप्योषीत् पुप्योष। [अप्योसीत् पुप्योस।

प्युस विभागे दिवा०पर०सक०सेट्। प्युस्यति इरित् अप्युसत्

प्यै वृद्धौ भ्वा०आ०अक०अनिट्। प्यायते अप्यास्त।

प्र अव्य०प्रथ–ड। १आरम्भे २गतौ ३उत्कर्षे ४प्राधान्ये ५सर्वतोभावे ६उत्पत्तौ, ७ख्यातौ ८व्यवहारे च पुरुषोत्तमः। अस्य क्रियायोगे उपसर्गत्वम्। गतित्वञ्च। अस्यार्थभेदोदाहरणानि गणरत्नटी० उक्तानि यथा

"प्र आदिकर्मदीर्घशब्दसम्भवत्प्रवियोगशुद्धिप्रशक्तीच्छाशान्तिपूजापदर्शनेषु" प्रयातः। प्रवालमूषिकः प्रभुर्देशस्य। प्रवदन्ति दायादाः। हिमवतो गङ्गा प्रभवति। प्रभुक्तमन्नम्। प्रोषितः। प्रशस्तं जलम्। प्रयतः। प्रार्थयते। प्रशान्तोऽग्निः। प्राञ्जलिः। प्रपालम्। प्रलोकयति"।

प्रउग न० प्राञ्चुगम् पृषो०। १प्रागवर्त्तिनि युगे ईषान्तरे कात्या० ७।९।१। कर्कः। तत्र चीयमानस्याग्नेः प्रउगचित्संज्ञा कात्या० १६।५।९। २शस्त्रविशेषे प्रउगमुक्थ्यमव्यथायै" यजु०१५।११। "प्रउगं शंसति निष्केवल्यं शंसति" शा०स०भाष्यधृता श्रुतिः "प्रउगनिष्केवल्यशस्त्रौ शस्त्रविशेषनामनी" इत्युक्ता "अप्रगीतमन्त्रसाध्या स्तुतिः शस्त्रमिति भवये शस्त्रमन्त्रार्थमाह भाष्यकृत्।

प्रकङ्कत पु० १प्रकृष्टविषे २प्रकृष्टगमने सर्पभेदे ऋ० १।१९१।७।

प्रकट त्रि० प्र+कट–अच्। स्फुटे।

प्रकटित त्रि० प्र+कट–क्त। प्रकाशिते हेमच०।

प्रकण्व पु० प्रकृष्टः कण्वः यत्र। ऋषिभिन्नत्वात् न सुट्। देशभेदे सि०कौ०। ऋषौ तु सुट् प्रस्कण्व इत्येव।

प्रकम्पन पु० प्र+कपि–णिच्–युच्। १वायौ "प्रकम्पनेनानुचकम्पिरे सुराः" माघः। २नरकभेदे च शब्दरत्ना०। ३प्रकम्पनकारके त्रि०।

प्रकर पु० प्र+कृ–भावे अप्। १समूहे २अतिक्षेपे च। कर्मणि अप्। ३प्रकीर्णे पुष्पादौ त्रि०। ४अगुरुचन्दने न० मेदि०

प्रकरण न० प्र+कृ–ल्युट्। १प्रस्तावे २अभिनेयनायकादिके दृश्यकाव्यभेदे हेमच०। ३ग्रन्थसन्धौ ४एकार्थप्रतिपादकग्रन्थांशे च त्रिका०। नाटकादिनी दश दृश्यकाव्यरूपकाणि विभज्य सा०द० तल्लक्षणमुक्तं यथा

"भवेत् प्रकरणे वृत्तं लौकिकं कविकल्पितम्। शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथ वा वणिक्। सापाय धर्मकामार्थपरो धीरप्रशान्तकः"। विप्रनायकं यथा मृच्छकटिकम्। अमात्यनायकं मालतीमाधवम्। वणिङ्नायकं पुष्पभूषितम्। "नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित्। तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः। कितवद्यूतकारादिविटचेटकसङ्कुलः"। कुलस्त्री पुष्पभूषिते। वेश्या तरङ्गदत्ते द्वे अपि मृच्छकटिके। अस्य नाटकप्रकृतित्वात् शेषं नाटकवत्"। कर्त्तव्यस्य इतिकर्त्तव्यताकाङ्क्षस्य वचनं प्रकरणम् इति शवरभाष्योक्ते ५ऽर्थे च "श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थविप्रकर्षात्" जै० ३।३।१४। तत्र विनियोगसाधने तस्य श्रुतिलिङ्गवाक्यबाध्यत्वं स्थानसमाख्यायोर्बाधकत्वञ्च स्थितम्"। "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि। सा प्रक्रिया या कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या" पार्थसारथिमिश्रः। शास्त्रसिद्धान्तप्रतिपादके ६ग्रन्थभेदे "अस्य च च वेदान्तप्रकरणत्वात्" वेदान्तसा०।

प्रकरणसम पु० गौतमोक्ते सत्प्रतिपक्षपर्य्याये १हेत्वाभासभेदे "यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः" गौ०सू०। "क्रमप्राप्तं प्रकरणसमं लक्षयति। स हेतुः स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थमपदिष्टः प्रयुक्तः प्रकरणसम उच्यते स क इत्याकाङ्क्षायामाह यस्मात् प्रकरणचिन्तेति करणं "पक्षप्रतिपक्षाविति" भाष्य

साध्यतदभाववत्त्वाविति तदर्थं कथा च निर्णयार्थं हेत्वर्थं त्रिधर्मं वा न विरुद्धसत्प्रतिपक्षतुल्यबलेन परेण प्रतिपक्षात् किन्तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति चिन्तां जिज्ञासां प्रवर्त्तयति स प्रकरणसमः। यद्वा प्रकृष्टं करणं लिङ्गं परामर्शो वा को हेत्वन्तरयोः साधकः एतयोः कः परामर्शः प्रमेति वा यत जिज्ञासा भवतीत्यर्थः। घटादिस्थलादि वस्तुस्थितिमात्रं वस्तुतस्तु तत्त्ववदविरोधिपरामर्शकालीनपक्षधर्मविषयत्वं समानाध्य परामर्शकालीनतुल्यबलविरोधिपरामर्शो वा। विरोधिपरामर्शस्य च हेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन अन्यथा हेतोर्दुष्टत्वं न स्यात्। अयञ्च दशाविशेषे दोषः इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयम्" इत्युक्तः।

२जातिरूपासदुत्तरभेदे गौ० ५।१।१६।८८ सू०। "उभयसाधर्म्यात् प्रक्रियासिद्धेः प्रकरणसमः" सू० "उभयसाधर्म्यात् अन्वयसहचाराद्व्यतिरेकसहचाराद्वा प्रक्रिया प्रकर्षेण क्रिया साधनं विपरीतसाधनमिति फलितार्थः तत्सिद्धेस्तस्य पूर्वमेव सिद्धेः तथा चाधिकबलेनारोपितप्रमाणान्तरेण बाधेन प्रत्यवस्थानं प्रकरणसमः यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते नैतदेवं श्रावणत्वेन नित्यत्वसाधकेन बाधात् बाधादेशनाभासा चेयम्। इ०। "प्रतिपक्षात् प्रकरणसिद्धेः प्रतिषेधानुपपत्तिः प्रतिपक्षोपपत्तेः" सू०। अस्योत्तरमाह प्रतिपक्षाद्विपरीतसाध्यसाधकत्वेनाभिमताच्छ्रावणत्वादितः प्रकरणसिद्धिद्वारा मदीयसाध्यस्य यः प्रतिषेधः त्वया क्रियते तस्यानुपपत्तिः कुतः प्रतिपक्षोपपत्तेः त्वत्पक्षापेक्षया प्रतिपक्षस्य मदीयपक्षस्योपपत्तेः साधनात्। अयमाशयः श्रावणत्वेन पूर्वं नित्यत्वस्य साधनाद्यो बाध उच्यते स नोपपद्यते पूर्वं बाधितस्य बलवत्त्वाभावात् कदाचित् कृतकत्वेनानित्यत्वस्यापि पूर्वं साधनादिति त्वत्पक्षप्रतिषेधोऽपि स्यात्" इत्युक्तः।

**प्रकरणी** स्त्री० नाटिकाभेदे "नाटिकैव प्रकरणी सार्थवाहादिनायका। समानवंशजा नेतुर्भवेद् यत्र च नायिका" सा०द०

**प्रकरी** स्त्री १नाट्याङ्गभेदे २चत्वरभूमौ च शब्दरत्ना०।

**प्रकर्ष** पु० प्र+कृष-घञ्। १उत्कर्षे २प्रकृष्टतया कर्षणे च।

**प्रकर्षण** न० प्र+कृष-ल्युट्। १उत्कर्षे २आकर्षणे च।

**प्रकलविद्** पु० प्रकृष्टां कलां वेत्ति विद-क्विप् पृषो० ह्रस्वः। १वणिग्जने निरु०६।६। २अभ्यासतरि त्रि०ऋ०७।१८।१५भा०

**प्रकाण्ड** पु०प्रकृष्टः काण्डः प्रा०त०। वृक्षस्य मूलादारभ्य शाखान्ते भागे। २प्रशस्ते न०। ३विटपे पु० मेदि०।

**प्रकाण्डर** पु० प्रकाण्ड+अस्त्यर्थे रा० र। वृक्षे शब्दच०।

**प्रकाम** त्रि०प्रगतः कामम् प्रा०स०। १यथेष्टे अमरः। प्रा०ब०। २प्रकृष्टकामके त्रि०। ३देवभेदे पु०यजु० १०।१२।

**प्रकामम्** अव्य०प्र+कम-णमुल्। कामे अनुमतौ च अमरः।

**प्रकामोद्य** पु० देवभेदे यजु०१०।६

**प्रकार** पु० प्र+कृ+घञ्। १भेदे २सादृश्ये च अमरः। ३विशिष्टज्ञाने विशेषणतया भासमाने पदार्थे "व्यधिकरणप्रकारावच्छिन्ना या या विषयता तन्निरूपकत्वस्य सर्वांशे भ्रमभिन्नत्वमिति" गदाधरः।

**प्रकारता** स्त्री प्रकारस्य भावः तल्। १विषयताभेदे न्यायमतविशेषणप्रतियोगिकसंसर्गावच्छिन्नविषयत्वे।

**प्रकालन** त्रि० प्रकालयति प्र+कालि ल्यु। १हिंसके २सर्पभेदे पु० भा०आ०७५ अ०। भावे ल्युट्। ३मारणे न०।

**प्रकाश** पु०प्र+काश-घञ्। १आतपे २विकाशे च। कर्त्तरि अच्। ३विकाशयुक्ते त्रि०अमरः। प्रकाशश्च सत्त्वज्ञानतेजःसाधारणः यथोक्तम् "जडप्रकाशायोगात् प्रकाशः" सां०सू० "वैशेषिका आहुः। ज्ञानप्रकाशरूपस्य जडस्यात्मनो मनःसंयोगाज्ज्ञानाख्यप्रकाशो जायत इति तन्न। लोके जडस्याप्रकाशस्य लोष्टादेः प्रकाशोत्पत्त्यदर्शनेन तत्संयोगात्। अतः सूर्यादिवत् प्रकाशस्वरूप एव पुरुषः इत्यर्थः। तथा च श्रुतिः "यथा प्रकाशतमसोः सम्बन्धो नोपपद्यते। तद्वदैक्यं न संबध्यं प्रपञ्चपरमात्मनोः"। इति। "यथा दीपः प्रकाशात्मा ह्रस्वो वा यदि वा महान्। ज्ञानात्मानं तथा विद्यात् पुरुषं सर्वजन्तुषु" इति च। प्रकाशत्वं च तेजःसत्त्वचैतन्येष्वनुगतमखण्डोपाधिरनुगतव्यवहारादिति। ननु प्रकाशस्वरूपत्वेऽपि तेजोवद्धर्मधर्मिभावोऽस्ति न वा तत्राह सां०प्र०भा० "निर्गुणत्वान्न चिद्धर्मा" सू० "पुरुषस्य प्रकाशरूपत्वे सिद्धे तत्प्रकाशमात्रे धर्मधर्म्युभयारोपपत्तौ प्रकाशात्मकधर्मकल्पनागौरवमित्यपि बोध्यम्। तेजसः प्रकाशाख्यरूपविशेषाश्रयेऽपि स्पर्शपुरस्कारेण ग्रहात् प्रकाशतेजसोर्भेदः सिध्यति। आत्मनस्तु ज्ञानाख्यप्रकाशाश्रयकाले ग्रहणं नास्तीत्यतो लाघवाद्धर्मधर्मिभावमुत्सृज्य प्रकाशरूपमेवात्मद्रव्यं कल्प्यते। तस्य च न गुणत्वम् संयोगादिमत्त्वात् अनाश्रितत्वाच्चेति। तथा च स्मर्यते "ज्ञानं नैवात्मनो धर्मो न गुणो वा कथञ्चन। ज्ञानस्वरूप एवात्मा नित्यः

पूर्वः सदा शिवः” पा०प्रभा०। वैवस्वतमनोः २पुत्रभेदे हरिवं०७अ० ।

प्रकाशक त्रि० प्रकाशयति प्र+काश-णिच् ण्वुल्। १प्रकाशकारके सूर्यादौ सांख्यमतसिद्धे २सत्त्वगुणे च “तत्र सत्त्वं निर्मलत्वात् प्रकाशकमनामयम्” गीता।

प्रकाशकज्ञातृ पु० प्रकाशकस्य पूर्वं ज्ञाता। कुक्कुटे शब्दच०। तस्य प्रथमं प्रकाशकसूर्य्यज्ञातृत्वात्तथात्वम्।

प्रकाशन त्रि० प्रकाशयति प्र+काश--णिच्--ल्यु। १प्रकाशकारके २विष्णौ पु०। “नैकरूपो वृहद्रूपः शिपिविष्टः प्रकाशनः” विष्णुस०।

प्रकाशात्मन् पु०प्रकाश आत्मा स्वरूपमस्य। १विष्णौ “प्रकाशात्मा प्रतापनः” विष्णुस०। २व्यक्तस्वभावे त्रि०।

प्रकाशित त्रि०प्र+काश+णिच्—कर्मणि क्त। १प्रकटिते हेम० प्र+काश--कर्त्तरि क्त। २प्रकाशयुते त्रि०। भावे क्त। ३प्रकाशे न०।

प्रकाश्य त्रि० प्र+काश—कर्मणि यत्। १प्रकाशनीये २प्रावोण्यर्पणशब्दादौ गवये न० काशी० ९० च०। गवमवकाशव्दे ३६८८ पृ० दृश्यम्।

प्रकीर्ण न० प्र+कॄ—कर्मणि क्त। १चामरे जटा०। २अध्यायविच्छेदे त्रिका०। ३विक्षिप्ते ४मिश्रिते विभिन्नजातीये त्रि०। ५पूतिकरञ्जे पु० राजनि०। भावे क्त। भिन्नजातीयानां ६मिश्रणे ७विक्षेपे ८विस्तारे च न०। स्वार्थे क। तत्रार्थे। अनुक्तप्रायश्चित्तविशेषे पातकविशेषे पातकशब्दे ४२८९ पृ० विष्णुवाक्यम् दृश्यम्। “अनुक्तं तत्प्रकीर्णकम्” अनुक्तमनुक्तनिष्कृतिकं पापं प्रकीर्णकमित्यर्थः। “अनुक्तनिष्कृतीनां तु पापानामपनुत्तये। शक्तिञ्चावेक्ष्य पापस्य प्रायश्चित्तं प्रकल्पयेत्” विश्वामित्रः “प्रकीर्णपातके ज्ञात्वा गुरुत्वमथ लाघवम्। प्रायश्चित्तं बुधः कुर्य्याद् ब्राह्मणानुमतः सदा” विष्णुः। “क्रयविक्रयदुष्टभोजनप्रतिग्रहेषु अनादिष्टप्रायश्चित्तेषु चान्द्रायणं प्राजापत्यं वा” शङ्खलिखितौ। भट्टिकाव्ये नानाजातीयपदप्रयोगोदाहरणबोधककाण्डं प्रकीर्णकाण्डम्। संज्ञायां कन्। तद्रूपे पुंस्त्री० स्त्रियां जातित्वात् ङीष्।

प्रकीर्य्य पु० प्रकीर्य्यतेऽसौ प्र+कॄ—क्यप्। (डाटाकरञ्जा) १करञ्जभेदे अमरः। २पूतकरञ्जे (रीठाकरञ्जा) राजनि०। ३विक्षेप्ये ४व्याप्ये च त्रि०।

प्रकुञ्च पु०“प्रकुञ्चः षोडशी विल्वं पलमेवात्र कीर्त्यते”भावप्र० उक्ते पलरूपे मानभेदे। “चूर्णप्रकुञ्चम्” इत्यादि सुश्रुतः

प्रकुल न० प्र+कुल-कर्त्तरि क। प्रशस्तदेहे त्रिकाण्डशेषः।

प्रकूष्माण्डी स्त्री दुर्गायां हेमच०।

प्रकृत त्रि० प्र+कृ—क्त। १अधिकृते २आरब्धे ३प्रकरणप्राप्ते च। ४ऋषिभेदे पु०। प्रकृतस्यर्षेर्गोत्रापत्यम् अश्वा० फञ्। प्राकृतायन तद्गोत्रापत्ये पुंस्त्री०।

प्रकृति स्त्री प्र+कृ—कर्त्तरि क्तिन् भावादौ क्तिन् वा। १स्वभावे २योनौ ३लिङ्गे ४स्वाम्यमात्यादौ राज्याङ्गे अमरः। ५शिल्पिनि हेम०। ६पञ्चौ ७योषिति शब्दर०। ८परमात्मनि भरतः। १०आकाशादिभूतपञ्चके ११करणे १२गुणे १३जन्तौ च १४एकविंशत्यक्षरपादके छन्दोभेदे। १५मातरि १६प्रत्ययनिमित्ते शब्दभेदे तल्लक्षणं शब्द०प्र० उक्तं यथा “स्वोपस्थाप्यस्यार्थस्य बोधने यस्य निश्चयः। तत्त्वेन हेतुरथवा प्रकृतिः सा तदर्थिका। तत्त्वेन यन्निश्चयत्वेन स्वोपस्थाप्ययावदर्थशाब्दबोधं प्रति स्वाश्रयवृत्तीतरत्वसंसर्गेण यादृशशब्दत्वानिश्चयत्वेन हेतुत्वं तादृश एव शब्दस्तथाविधार्थे प्रकृतिरिति तु फलितार्थः। वक्रगुडो द्राघेत्यादौ वक्रजाद्यर्थशाब्दबोधं प्रति गुडादिपदघटितवक्रजादिनिश्चयत्वेन न हेतुत्वमपि तु गुडादिघटितवक्रगुडादिपदनिश्चयत्वेन अन्यथा केवलादपि वक्रगुडादिशब्दात् द्राघादौ वक्रजाद्यर्थशाब्दबोधापत्तेरिति न तत्र प्रसङ्गः”। “निरुक्ता प्रकृतिर्द्वेधा नामधातुप्रभेदतः। यत् प्रातिपदिकं प्रोक्तं तन्नाम्नो नातिरिच्यते। निरुक्ता न तु सांख्यानामिव जगदुपादानभूता। यत् पाणिनिमुख्यमुनिभिः प्रातिपादिकं प्रकृतिरिमुक्तं तदपि नाम्नो नातिरिच्यते नातो विभागन्यूनता”। वैयाकरणमते तल्लक्षणन्तु शब्दार्थरत्नेऽभिहितं यथा “एवं प्रकृतिप्रत्ययादिसमुदायरूपपदस्वरूपे तद्विभागे च दर्शिते इदानीं तदवयवरूपप्रकृतिप्रत्ययस्वरूपविभागौ प्रदर्श्येते। तत्र प्रकृतिर्नाम अर्थावबोधहेतुः प्रत्ययविधानावधिभूतः शब्दविशेषः सर्वेषामेव च प्रत्ययानां प्रकृतिं निमित्तीकृत्यैव विधानात्। प्रत्ययानाञ्च प्रत्ययान्तरूपेणैव निवेशः न तु वक्ष्यमाणप्रत्ययत्वेन तेन नान्योन्याश्रयः। अवधित्वञ्च पूर्वापरत्वरूपं ग्राह्यं तेन वह्न्यादेर्निमित्तप्रवृत्तौ नातिप्रसङ्गः। वस्तुतस्तु विद्वान्सो दृत्तिशब्दानां समुदायशक्तिस्वीकारात् तद्धितादीनां निरर्थकत्वाच्च तत्र प्रकृतिप्रत्ययादिविभागः। अत एव भाष्ये “नावेव प्रकृतौ यो नम्ग परौ सैव प्रकृतिरायेति” वृत्तिकृतामतोरेव प्रत्ययस्थित्यर्थम्।

ततोविधानावधेः यौ परौ तावेव तद्भिन्नौ या च तयोराद्या विधानावधिभूता सैव प्रकृतिरिति तदर्थः। एतदभिप्रायेणैव हरिणा "यः शब्दः स्वेतरस्यार्थे स्वार्थस्यान्वयबोधने। तदपेक्षस्तयोः पूर्वा प्रकृतिः प्रत्ययः परः" इति प्रकृत्यादिलक्षणमुक्तम्। अत्र च पूर्वत्वं बोधकशब्दविधानावधित्वमेव बोध्यं भाष्यकवाक्यत्वात् नत्वेतत्कारिकोपात्तपूर्वापरत्वं तथासति पचतीत्यादौ तिङादेरेव धात्वर्थे स्वार्थप्रकारकान्वयबोधजनकत्वस्वीकारात् तत्रातिव्याप्तिः। एवञ्च निरुक्तपूर्वत्वरूपलक्षणेनैव प्रकृतिप्रत्ययादिसंरक्षणसम्भवे प्रकृतिप्रत्यययोरर्थबोधकत्वसाकाङ्क्षत्वद्योतनायैव यः शब्द इत्यादिकथनं बोध्यमेवञ्च यस्यार्थे इत्यत्र विशेष्यतया विशेषणतया वान्वयबोधने इत्यर्थः तेन तिङन्ते तिङर्थप्रकारकान्वयबोधेऽपि न क्षतिः। तथा च तदर्थान्वितस्वार्थबोधने तदपेक्षत्वे सति तद्विधानावधिभूतत्वं तत्प्रकृतित्वमिति फलितम्। एवञ्चावयवशक्तिस्वीकारेऽपि सङ्कलनादावति-प्रसङ्गादियत्नापि नोदेति सङ्कलनादेः प्रकृतिविधानावधित्वाभावात् अवधित्वस्य पूर्वापरत्वरूपस्य निवेशात्। अत एतत्पक्षे भाष्ये सुप्तिङन्तौ प्रत्ययान्तरस्याप्युपलक्षणाविति द्रष्टव्यम् तथा शेषरकारेणापि प्रत्ययविधानुद्देश्यतावच्छेदकाक्रान्तत्वमेव प्रकृतित्वमित्यभिदधे पूर्वमित्यस्तु न एव उद्देश्यत्वसम्भवात् पूर्वत्वमर्थायातं सङ्कलनादेरपि तुप उद्देश्यत्वाच्च विशिष्टरूपाभावस्तीति। एवञ्च प्रकरोति प्रत्ययं बोधकत्वेनेति व्युत्पत्तिसत्त्वात् प्रकृतिशब्दो योगरूढ इति बोध्यम्"। १७उपादानकारणे "प्रकृतेश्च दृष्टान्तानुपरोधात्" शा०सू० "सती वाऽविद्यमाना वा प्रकृतिः परिणामिनी" हरिका०। १८उपदिष्टकर्माङ्गे यज्ञभेदे। तदेतत् ताण्ड्य०भा०निर्णीतं यथा "ननु का प्रकृतिः का विकृतिरिति चेत् उच्यते यत्र कर्त्तव्यं सर्वं प्रकर्षेण कर्मान्तरनैरपेक्ष्येणोपदिश्यते सा प्रकृतिः यत्र विशेषरूपेणैव कर्त्तव्यं स्वस्योपदिश्यते इतरत् सर्वं कर्मान्तरादतिदिश्यते सा विकृतिः। अथातिदेशः प्रत्यक्षवचनाद्वा साम्याद्वा लिङ्गाद्वाऽवगन्तव्यः। तत् सर्वं सप्तमाष्टमाध्याययोर्वहुधा विचारितम्। प्रकृतिश्च द्विविधा मूलप्रकृतिरनन्तरप्रकृतिश्चेति। कर्मान्तराननपेक्ष्य मूलप्रकृतिः अतिपदेशकर्म तु कर्मान्तरं चापेक्षते अतएव कैश्चित् धर्मैरपेक्षणीया भवति सैवानन्तरप्रकृतिः। तत्र त्रिवृदादिमूलप्रकृतयः ताश्च दशमाध्या-

यस्य प्रथमपादे तृतीयाधिकरणस्य द्वितीयवर्णके विचारिताः। "दर्शपूर्णमासाग्निहोत्रसोमानां मूलप्रकृतिता न हि। अस्ति वा नालौकिकत्वादियत्तानवधारणात्। लोकवत् सन्निपात्यारादुपकारिद्वयश्रुतेः। इयत्तायानिश्चितत्वान्मूलप्रकृतिता स्थिरा। अलौकिकत्वे नैतावद्भिरङ्गैः स्वमूर्ध्व उपकार इति निश्चेतुमशक्यत्वात् दर्शाद्यादीनां नास्ति मूलप्रकृतित्वमिति चेत् नैवं लौकिकसदृशत्वात्। यथा-लोके भुजिक्रियायामोदनः करणं तथा सन्निपत्योपकारिणः शाकसूपादयः, आरादुपकारिणः पीठप्रदीपादयः। तथा भावनायां यागः करणम् अवघातादयः सन्निपातिनः, प्रयाजादयः आरादुपकारिणः। अतो नात्यन्तिकमलौकिकत्वम्। इयत्ता लौकिके यथा प्रत्यक्षेण निश्चीयते तथा श्रौते श्रुत्या निश्चीयतां तस्माद्दिर्शपूर्णमासाग्निहोत्रसोमानां मूलप्रकृतित्वमस्ति"।

१९सत्त्वरजस्तमसां साम्यावस्थायां साम्यावस्थोपलक्षिते सत्त्वादिगुणे। "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम्। साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता। केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः। एतदेव प्रजासृष्टिं करोति विकरोति च" मात्स्ये ४अ०।
"सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः" सा० सू०। "तेषां सत्त्वादिद्रव्याणां या साम्यावस्थाऽन्यूनानतिरिक्तावस्थान्यूनाधिकभावेनासंहतावस्थेति यावत् अकार्य्यावस्थेति निष्कर्षः। अकार्य्यावस्थोपलक्षितं गुणसामान्यं प्रकृतिरित्यर्थः। यथाश्रुते वैषम्यावस्थायां प्रकृतिनाशप्रसङ्गात् "सत्त्वं रजस्तम इति एषैव प्रकृतिः सदा। एषैव संसृतिर्जन्तोरस्याः पारे परं पदम्" इत्यादिस्मृतिभिर्गुणमात्रस्यैव प्रकृतित्ववचनाच्च। सत्त्वादीनामतन्मात्र सामान्येति। पुरुषव्यवर्त्तनाय गुणेति। महदादिव्यावर्त्तनाय चोपलक्षितान्तमिति। महदादयोऽपि हि कार्य्यसत्त्वादिरूपाः पुरुषोपकरणतया गुणाश्च भवन्तीति। तदत्र प्रकृतेः स्वरूपमेवोक्तम्। अस्या विशेषस्तु पश्चाद्वक्ष्यते" प्र०भा०। "मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त। षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः" सां० का०। "संक्षेपतो हि शास्त्रार्थस्य चतस्रो विधाः। कश्चिदर्थः प्रकृतिरेव, कश्चित् विकृतिरेव,कश्चित् प्रकृतिविकृतिः कश्चिदनुभयरूप इति। तत्र का प्रकृतिरेवेत्यत उक्तम् मूलप्रकृतिरविकृतिरिति प्रकरोतीति प्रकृतिः प्रधानं सत्त्वरज-

गुणानां साम्यावस्था सा अविकृतिः। प्रकृतिरेवेत्यर्थः कस्मादित्यत उक्तम् मूलेति मूलञ्चासौ प्रकृतिश्चेति मूलप्रकृतिः विश्वस्य कार्य्यसंघातस्य सा मूलं नत्वस्या मूलान्तरमस्तीति भावः। कतमाः पुनः प्रकृतिविकृतयः कियत्यश्चेत्यत उक्तम् महदाद्याः प्रकृतिविकृतयः सप्तेति प्रकृतयश्च ता विकृतयश्च ता इति। तथा हि महत्तत्त्वमहङ्कारस्य प्रकृतिर्विकृतिश्च मूलप्रकृतेः। एवमहङ्कारतत्त्वं तन्मात्राणामिन्द्रियाणाञ्च प्रकृतिर्विकृतिश्च महतः। एवं पञ्चतन्मात्राणि भूतानामाकाशादीनां प्रकृतयो विकृतयश्चाहङ्कारस्य। अथ विकृतिरेव कियती चेत्यत उक्तं षोडशकस्तु विकार इति। षोडशसंख्यापरिमितो गणः षोडशकः तुशब्दोऽवधारणे भिन्नक्रमश्च पञ्चमहाभूतान्येकादशेन्द्रियाणि चेति षोडशको गणो विकार एव "न प्रकृतिरिति। यद्यपि च पृथिव्यादीनामपि गोघटवृक्षादयो विकाराः एवं-तद्विकारभेदानां दध्यङ्कुरादयस्तथापि गवादयो बीजादयो वा न पृथिव्यादिभ्यस्तत्त्वान्तरं तत्त्वान्तरोपादानत्वञ्च प्रकृतित्वमिहाभिप्रेतमिति न दोषः सर्वेषां गोघटादीनां स्थूलतेन्द्रियग्राह्यता च समेति न तत्त्वान्तरत्वम्। अनुभयरूपमाह तदाह न प्रकृतिर्न विकृतिः पुरुषः" इति त०कौ०। शब्दस्पर्शविहीनं तद्रूपादिभिरसंयुतम्। त्रिगुणं तत् जगद्योनिः" स्मृतिः। तदनुमापकाः कार्य्यभेदाः तद्धर्माश्च सां०सू० भाष्याद्युक्ता यथा "ततः प्रकृतेः" सां० सू० "ततो महत्तत्त्वात् कार्य्यात् कारणतया प्रकृतेरनुमानेन बोध इत्यर्थः। अन्तःकरणसामान्यस्यापि कार्य्यत्वं तावदेकदा पञ्चेन्द्रियग्रामानुत्पत्त्या मध्यमपरिमाणतया देहादिवदेव सिद्धं श्रुतिस्मृतिप्रमाण्याच्च। तस्य च प्रकृतिकार्य्यत्वेऽयं प्रयोगः। सुखदुःखमोहधर्म्मिणी बुद्धिः सुखदुःखमोहधर्म्मकद्रव्यजन्या कार्य्यत्वे सति सुखदुःखमोहात्मकत्वात् कान्तादिवदिति कारणगुणानुसारेणैव कार्य्यगुणौचित्यं न्यायानुकूलतर्कः श्रुतिस्मृतयोऽपीति मन्तव्यम् भा० "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्" सू० कारणानुमापकत्वाल्लयगमनाद्वाऽत्र लिङ्गं कार्य्यजातम् न तु महत्तत्त्वमात्रमत्र विवक्षितं हेतुमत्त्वादीनामखिलकार्य्यसाधारण्यात्। "हेतुमदनित्यमव्यापि सक्रियमनेकमाश्रितं लिङ्गम्। सावयवं परतन्त्रं व्यक्तं विपरीतमव्यक्तम्" इति कारिकायामप्यत एव व्यक्ताख्यं सर्वं कार्य्यमेव लिङ्गमित्युक्तम्। तथा च तल्लिङ्गं हेतुमत्त्वादिधर्म्मकमिति वाक्यार्थः। तत्र हेतुमत्त्वं कारणवत्त्वम् अनित्यत्वं विनाशिता प्रधानस्य या व्यापिता पूर्वोक्ता तद्वैपरीत्यमव्यापित्वम्। सक्रियत्वमध्यवसायादिरूपनियतकार्य्यकारित्वम्। प्रधानस्य तु सर्वक्रियासाधारण्येन कारणत्वान्न कार्य्यैकदेशमात्रकारित्वम्। न च क्रिया कर्म्मैव वक्तुं शक्यते प्रकृतिक्षोभात् सृष्टिश्रवणेन प्रकृतेरपि कर्म्मवत्तया सक्रियत्वापत्तेरिति। अनेकत्वं सर्गभेदेन भिन्नत्वम्। सर्गद्वयासाधारण्यमिति यावत्। न पुनः सजातीयानेकव्यक्तिकत्वम् प्रकृतावतिव्याप्तेः प्रकृतेरपि सत्त्वाद्यनेकरूपत्वात् "सत्त्वादीनामतद्धर्म्मत्वं तद्रूपत्वात्" इत्यागामिसूत्रादिति। आश्रितत्वं स्वावयवेष्विति" सां०प्र०भा०। एतद्विपरीतत्वमेव तद्धर्म्मत्वम्। २ प्रकृत्यंशदेवीपञ्चकरूपशक्तिभेदे "गणेशजननी दुर्गा१ राधा२ लक्ष्मीः३ सरस्वती४। सावित्री५ च सृष्टिविधौ प्रकृतिः पञ्चमी स्मृता"। प्रकृतिशब्दनिरुक्तिर्यथा "प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टौ प्रकृष्टा या देवी प्रकृतिः सा प्रकीर्त्तिता। गुणे प्रकृष्टे सत्त्वे च प्रशब्दो वर्त्तते श्रुतौ। मध्यमे रजसि कृश्च तिशब्दस्तामसः स्मृतः। त्रिगुणात्मस्वरूपा या सर्वशक्तिसमन्विता। प्रधाना सृष्टिकरणे प्रकृतिस्तेन कथ्यते। प्रथमे वर्त्तते प्रश्च कृतिश्च सृष्टिवाचकः। सृष्टेराद्या च या देवी प्रकृतिः सा प्रकीर्त्तिता"। तस्या आविर्भूतिः स्वरूपञ्च यथा "योगेनात्मा सृष्टिविधौ द्विधारूपो बभूव सः। पुमांश्च दक्षिणार्द्धाङ्गात् वामाङ्गात् प्रकृतिः स्मृता। सा च ब्रह्मस्वरूपा च यथा नित्या सनातनी। यथात्मा च यथाशक्तिर्यथाग्नौ दाहिका स्मृता। अत एव हि योगीन्द्रः स्त्रीपुंभेदं न मन्यते। सर्वं ब्रह्ममयं ब्रह्मन्! शश्वत् पश्यति नारद!। स्वेच्छामयं स्वेच्छया च श्रीकृष्णस्य सिसृक्षया। साविर्बभूव सहसा मूलप्रकृतिरीश्वरी। तथा चैषा पञ्चविधा सृष्टिकर्म्मणि भेदतः। सर्वाः प्रकृतिसम्भूता उत्तमाधममध्यमाः। सत्त्वांशाश्चोत्तमा ज्ञेयाः सुशीलाश्च पतिव्रताः। मध्यमा राजसांशाश्च ताश्च भोग्याः प्रकीर्त्तिताः। सुखसम्भोगवश्याश्च स्वकार्य्ये तत्पराः सदा। अधमास्तामसांशाश्च अज्ञातकुलसम्भवाः। दुर्मुखाः कुलटा धूर्त्ताः स्वतन्त्राः कलहप्रियाः। पृथिव्यां कुलटा याश्च स्वर्गे चाप्सरसां गणाः। प्रकृतेस्तामसांशास्ताः पुंश्चल्यः परिकीर्त्तिताः। एवं निगदितं सर्वं प्रकृतेः परिकीर्त्तितम्"।

उत्तरपदस्थः मनु० । उपमायुक्ते यथा वज्रप्रख्यः इत्यादि

**प्रख्यात** त्रि० प्र+ख्या—क्त । विख्याते सुप्रसिद्धे ।

**प्रख्यातवप्तृक** पु० प्रख्यातो वप्ता जनयिता यस्य कप् । विख्यातपितृके अनुपत्रपुत्रे हेमच० ।

**प्रख्यास्** पु० प्र+ख्या० अवि 'बहुलं णिच्' इत्युक्तेर्न णित् तेन न ख्यादेशः । प्रजापतौ उज्ज्वल० ।

**प्रगण्ड** पु० गडि—वदनैकदेशे अच् प्रकृष्टो गण्डः अत्यथः प्रा०स० । १कूर्परोपरिस्कन्धपर्य्यन्तभागे अमरः । दुर्गप्राकारभित्तौ २नूरार्थं निवेशनस्थाने च स्त्री गौरा० ङीष् । "सञ्चारो यत्र लोकानां दूरादेवावबुध्यते । प्रगण्डी सा च विज्ञेया बहिःप्राकारसंश्रिता । प्रविधिस्तत्र यत्नेन कर्त्तव्यो भूतिमिच्छता । स एवाकाशजननीति ह्युच्यते शस्त्रकोविदैः" भा०टी०धृतवाक्यम् । "प्रगण्डीः कारयेत् सम्यगाकाशजननीस्तथा" भा० शा० ६९ अ० । "प्रगण्डीर्दुर्गप्राकारभित्तौ शूराणामुपवेशनस्थानानि । आकाशजननीस्तस्यैवैकस्यायां भित्तौ तत्स्थानां रक्षणभूतायां बाह्यार्थदर्शनार्थानि क्षुद्रच्छिद्राणि बहुद्वारा आग्नेयास्त्रगुलिकाः प्रक्षिप्यन्ते" नीलकण्ठः ।

**प्रगतजानु(क)** त्रि० प्रगते परस्परमसंश्लिष्टे जानुनी यस्य वा कप् । असंहतजानुके प्रज्ञौ यस्य जानुनोर्मध्ये महदन्तरालं तस्मिन् अमरः । युक्ते त्रि० ।

**प्रगन्ध** पु० प्रकृष्टो गन्धोऽस्य । १पर्पटे राजनि० । २प्रकृष्टगन्ध-

**प्रगल्भ** त्रि० प्र+गल्भ—अच् । १प्रत्युत्पन्नमतौ २प्रतिभान्विते च अमरः । ३नायिकाभेदे स्त्री तल्लक्षणादि नायिकाशब्दे ४०४१ पृ० दृश्यम् ।

**प्रगल्भता** स्त्री प्रगल्भस्य भावः तल् । १धौर्त्ये २उत्साहे च हेमच० । "निःसाध्वसता प्रयोगेषु बुधैरुक्ता प्रगल्भता" उज्ज्वलमण्युक्ते प्रयोगेषु ३निःसाध्वसत्वे च ४प्रतिभान्वितत्वे च ।

**प्रगाढ़** त्रि० प्रकर्षेण गाढ़म् गाह—क्त । १अत्यन्तभये २कृच्छ्रे च अमरः । ३दृढ़े भरतः ।

**प्रगातृ** त्रि० प्र+गै तृच् । प्रगानकारके शब्दरत्ना० ।

**प्रगाथ** पु० प्र+ग्रन्थ—बा० आधारे घञ् 'छन्दसः प्रगाथेषु' निर्देशात् नि०नस्योलोपे उपधावृद्धिः । वेदे द्वे ऋचौ यत्र तिस्रः क्रियन्ते १तत्कार्थे विस्तरस्तु सामसंहिताभाष्ये दृश्यः । दिङ्मात्रं ततः समाहृत्योच्यते । "काकुभः प्रगाथः" इत्यत्र प्रगाथशब्दार्थपर्य्यालोचनेनापि ग्रथनं गम्यते प्रकर्षेण ग्रथनं यत्र स प्रगाथः प्रकर्षो नाम आम्नातादृक्पाठादाधिक्यम्, तच्च पूर्वोक्तरीत्या पादाभ्यासपुरःसरस्तृगन्तरसम्पादनेनोपजायते । तथाचोत्पत्तिककुभौ पङ्क्तिमध्ये किन्तर्हि प्रग्रथनेन द्वे उत्तरे ककुभौ सम्पाद्य तासु तिसृषु रथन्तरं गातव्यम् । रौधसनामकं किञ्चित् साम तथा बौधाजययगानकमपरम् तयोः साम्नोर्बृहतीत्यनुष्टुभौ च आश्रय इति उत्तराध्याये तु तस्य सामद्वयस्याश्रय एकः प्रगाथः आम्नातः तस्मिंश्च प्रगाथे पुनानः सोमेत्यसावेव प्रथमा सा च बृहती "दुहान ऊधर्दिव्यमिति" द्वितीया सा तु विष्टारपङ्क्तिः तामेतां विष्टारपङ्क्तिमपनीय तस्याः स्थाने कल्पितबृहत्यौ द्वे ऋचौ आनेतव्ये इति पूर्वपक्षः । बृहतीविष्टारपङ्क्त्योः प्रग्रथनविशेषेण द्वे बृहत्यावुत्तरे सम्पादनीये इति राद्धान्तः । प्रगाथत्वेन ध्येये २सामभेदे च यजु०१९।२४वेददी० ।

**प्रगुण** त्रि० प्रकृतो गुणो यत्र प्रकृष्टो गुणो यस्य वा प्रा०ब० । १ऋजुतावति २दक्षे च अमरः । प्रकृष्टगुणोऽप्यत्र ।

**प्रगृह्य** न० प्र+ग्रह—क्यप् । व्याकरणोक्ते स्वरसन्धिराहित्ययोग्ये १पदभेदे २स्मृतौ ३वाक्ये च अमरः ।

**प्रगे** अव्य० प्रगीयतेऽत्र प्र+गै—के । अतिप्रातःकाले अमरः । तत्र भवः ट्युल् तुट् च । प्रगेतन प्रातर्भवे त्रि० राजनि०

**प्रगेनिशा** त्रि०प्रगे प्रातःकालो निशेव स्वापहेतुर्यस्य । प्रातःकालशायिनि । "उत्तस्थुर्शायिनश्चाथ सर्वे चासन् प्रगेनिशाः" भा०शा० २२८अ० ।

**प्रग्रथन** न० प्रकर्षेण ग्रथने । प्रगाथशब्दे दृश्यम् ।

**प्रग्रह** पु०प्र+ग्रह कर्मकरणादौ यथा० अप् । १तुलासूत्रे २हयादिसंयमनरज्ज्वौ ३रश्मौ च अमरः । ४नियमने ५भुजे ६सुवर्णालुके मेदि० । ७कर्णिकारवृक्षे राजनि० । प्र+ग्रह—कर्त्तरि अच् । ८विष्णौ "प्रग्रहो निग्रहो व्यग्रः" विष्णुस० "भक्तैरुपाहृतं पत्रपुष्पादिकं प्रगृह्णातीति प्रग्रहः" भा० । [२हयादिसंयमनदामनि च अमरः ।

**प्रग्राह** पु० प्र+ग्रह—कर्मकरणादौ वा घञ् । १तुलासूत्रे

**प्रग्रीव** पु०न०प्रकृष्टा ग्रीवा यस्य । १चक्रादौ प्रान्तभागे दारुपङ्क्तौ २वातायने सुभूतिः ३अश्वग्रीवके गोवर्द्धनः । ४प्रकृष्टग्रीवान्विते त्रि० ।

**प्रघटाविद्** पु०प्रकृष्टा घटा आडम्बरः तां वेत्ति विद—क्विप् । शास्त्रगण्डे शास्त्राभिज्ञे त्रिका० ।

**प्रघट्टक** पु० प्र+घट्ट—ण्वुल् । एकार्थप्रतिपादनार्थग्रन्थावयवभेदे सां०प्र०भाष्ये दृश्यम् ।

**प्रघ(घा)ण(न)** पु० प्रविशद्भिर्जनैः पादैः प्रकर्षेण हन्यते

प्रति अव्य० प्रथ-डति । १व्याप्तौ २लक्षणे ३कञ्चित्प्रकार-प्राप्तस्य कथने ४भागे ५प्रतिदाने ६प्रतिनिधीकरणे मेदि० ७स्तोके ८क्षेपे ९निश्चये १०व्यावृत्तौ ११आभिमुख्ये १२अभावे च शब्दर० । अस्य निपातत्वेऽपि क्रिया-योगे उपसर्गत्वम् गतित्वञ्च । अस्यार्थभेदोदाहरणादि गणरत्नमहोदधिटी० उक्तं यथा "प्रति लक्षणा-दानहिंसाङ्गीकृतिप्रतिनिधिव्याध्याभिमुख्यव्याप्तिवारणेषु । प्रतिदेवता । प्रतिगृह्णाति । प्रतिहन्ति प्रतिज्ञानम् । अभिमन्युरर्जुनतः प्रति । प्रतिश्यायः । प्रतिकूल-मतः । प्रतिकीर्णम् पांशुभिः । प्रतिषिद्धः" । तत्र लक्ष-णेत्थम्भूताख्यानभागवीप्सासु अस्य कर्मप्रवचनीयसंज्ञा तद्योगे द्वितीया परिशब्दे उदा० द्रष्टव्यम् । प्रतिनिधि-प्रतिदानयोः कर्मप्रवचनीयसंज्ञा तद्योगे पञ्चमी । प्रद्युम्नः कृष्णात्प्रति प्रतिनिधिरित्यर्थः । तिलेभ्यः प्रतियच्छति माषान्, माषान् गृहीत्वा प्रतिरूपतया तिलान् ददाती-त्यर्थः । मात्रार्थेऽस्याव्ययीभावे परनिपातः । शाकप्रति-शाकस्य लेश इत्यर्थः । कर्मप्रवचनीयत्वे नोपसर्गसंज्ञा तेन षत्वं णत्वं प्रतिषिञ्चतीत्यादौ न षत्वं तथा गतिसंज्ञापि न, तेन गतिर्गताविति निघातो न ।"प्रतेरंश्वादयस्तत्पुरुषे" पा० प्रतेः परस्यांश्वादेः अन्तोदात्तता अंश्वादिशब्दे २७पृ० द्रष्टव्यम् ।

प्रतिक त्रि०कार्षापणेन क्रीतः टिठन् (इकार उच्चारणार्थः) प्र-तिरादेशश्च । कार्षापणेन क्रीते स्त्रियां टित्त्वात् ङीप् । ततः पुरोहिता० भावे यक् । प्रातिक्य तद्भावे न०

प्रतिकण्ठ अव्य० वीप्सार्थे समीपे वा अव्ययीभावः । १कण्ठे कण्ठे इत्याद्यर्थे २कण्ठसामीप्ये च । प्रतिकण्ठं गृह्णाति ठक् । प्रातिकण्ठिक कण्ठसमीपग्राहिणि ।

प्रतिकर पु० प्रति+कृ-विक्षेपे भावे अप् । १विकीर्णतायां २विक्षेपे च । [प्रतीकारकर्त्तरि ।

प्रतिकर्त्तृ त्रि० प्रति+कृ-तृच् । कृतस्यापकारस्य प्रत्यपकारके

प्रतिकर्मन् न० प्रति+कृ-मनिन् । १विद्यमानस्य गुणान्तरा-धाने २कायिकभूषायां प्रसाधने अमरः ।

प्रतिकर्ष पु० प्रति+कृष-भावे घञ् । १समाकर्षणे अन्यार्थं पूर्वोपात्तस्य पदादेरपकर्षणे कात्या० १।८।१० कर्कः ।

प्रतिक(ष्क)श प्रति+कश-गतिशासनयोः अच् सुट् नि०। षड्मध्यः । १सहाये २पुरोगे च सि०कौ० । ३वार्त्ता-हरे मेदि० । प्रतिगतः कशाम् प्रा०स० । प्रतेः न कशिं प्रत्युपसर्गत्वम् किन्तु गमेरेवोपसर्गत्वमतो न सुट् ।

४कशाघातप्राप्तेऽश्वे सि०कौ० । [२तद्वेतौ च ।

प्रतिकष्ट न० प्रतिरूपं कष्टं प्रा०स० । १कष्टानुरूपकष्टे

प्रतिकाम अव्य० कामं कामं प्रति अव्ययी० । प्रत्येककामे

प्रतिकाय पु०प्रति+चि-घञ् कादेशः । १प्रतिरूपके २शरव्ये लक्ष्ये च जटा० ।

प्रति(ती)कार पु० प्रति+कृ-घञ् वा दीर्घः । १वैरनिर्यातने कृतस्यापकारस्य तुल्यरूपापकारकरणेन २शोधने ३रोगा-देश्चिकित्सायाञ्च शब्दरत्ना० ।

प्रति(ती)काश पु० प्रतिरूपः काशः प्र+काश-घञ् वा प्रा०स० दीर्घः । तुल्यत्वे अस्य निभा० निरूप० । अमरटीकायां रमानाथेनायं इन्त्यान्ततया पठितः ।

प्रतिकितव पु०प्रतिकूलः कितवः प्रा०त० । द्यूतकारस्य प्रति-कूले द्यूतकारे येन सह द्यूतप्रवृत्तिस्तस्मिन् ।

प्रतिकूप पु० प्रतिरूपः कूपः प्रा०त० । परिखायां हारा० ।

प्रतिकूल त्रि० प्रतिरूपं कूलं पक्षोऽस्य प्रा०ब० । १अननुकूले विरुद्धपक्षावलम्बिनि प्रतीपे अमरः प्रा०स० । २विप-रीताचरणे न० ।

प्रतिकृति स्त्री प्र+कृ-कर्मादौ क्तिन् । १प्रतिमायां २सादृश्ये ३प्रतिनिधौ अमरः । ४प्रतिकारे मेदि० ।

प्रतिकृष्ट त्रि० प्रति+कृष-क्त । १गर्ह्ये २द्विरावृत्त्या ३कृष्ट-क्षेत्रादौ च मेदि० । [प्रति कोपे च

प्रतिकोप पु०प्रतिरूपः कोपः । १रोगस्यानुरूपे कोपे २विपक्ष

प्रतिक्रिया स्त्री प्रति+कृ-भावे श । प्रति(ती)कारे

प्रतिक्षण अव्य०क्षणं क्षणं व्याप्य व्याप्तौ अव्ययी० । आभीक्ष्ण्ये

प्रतिक्षय पु० प्रति+क्षि-ऐश्वर्ये अच् । रक्षके शब्दर०

प्रतिक्षिप्त त्रि० प्रति+क्षिप-कर्मणि क्त । १प्रेषिते २वारिते मेदि० । ३बाधिते ४तिरस्कृते च अमरः । "आहूय प्रेषितो यस्तु प्रतिक्षिप्तः स उच्यते" इत्युक्ते ५आहूयप्रेषिते [illegible] । [२तिरस्कारे च ।

प्रतिक्षेप पु० प्रति+क्षिप-भावे घञ् । १निरासे मेदि० ।

प्रतिखुर पु० सुश्रुते एकीयमतोक्ते मूढगर्भभेदे "निःसृतहस्त-पादशिराः कायसङ्गी प्रतिखुरः" इति तत्र वर्णितम् ।

प्रतिख्याति स्त्री प्रति+ख्या-भावे क्तिन् । १विख्यातौ २प्र-तिख्याते अमरः ।

प्रतिगत न० प्रति+गम-भावे क्त । "गतागतप्रतिगतसव्या-तान्याश्च पक्षिणाम्" जटाधरोक्ते १खगगतिभेदे २परा-वृत्त्यागमने च । कर्त्तरि क्त । ३परावृत्ते त्रि० ।

प्रतिगर पु०प्रतिगीर्य्यते प्रत्युच्चार्य्यते प्रति+गॄ-भावे अप् । वैदि-

ध्यापनप्रतिग्रहैर्ब्राह्मणो धनमार्जयेदित्यत्र राजसूयेन यजेतेत्यादिवत् याजनाद्यात्मकैर्धनमर्जयेदित्यन्वयात् प्रतिग्रहस्यार्जनरूपता सिद्धा प्रतिग्रहस्य स्वत्वहेतुत्वं च तद्विवक्षितं स्वत्वहेतुव्यापारस्यैवार्जनत्वादत आह याजनेति। अर्जनरूपता अर्जनपदव्यपदेश्यः। अविरोधमुपपादयति याजनाद्यविति तथा च याजनादीनां स्वत्वहेतुत्वेन तदन्वयानुरोधात् अर्जयेदित्यत्रार्जनत्वं न स्वत्वजनकत्वं किन्तु स्वत्वप्रयोजकत्वमेव तत्र प्रतिग्रहेऽप्यस्त्येव दत्ते स्वत्वं प्रतिग्रहीतुरित्यवधारणे एव तदुद्देशेन दातृत्यागात् तत्स्वत्वोदयात् प्रतिग्रहस्यैतत्स्थाने तदप्रतिरेकान्नेति भावः"।

"न च दानस्य स्वत्वहेतुत्वे प्रमाणाभावः "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च" इत्यादिमन्वादिवचनेस्तस्य स्वत्वहेतुत्वाप्रतिपादनादिति वाच्यं ब्राह्मणाय तुभ्यमहं गां ददामीत्यादौ ब्राह्मणस्य न तु ममेत्यादिवाक्यजन्यप्रतीतेरेव तत्र प्रमाणत्वात् प्रदानं स्वाम्यकारणमिति वचनाच्च अत एव विदेशस्थं पालनोद्देश्य स्वकधने स्वीकारमन्तरेणैव पालस्य मरणानन्तरे पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते अन्यथा तैरेव उदासीनैरपि तद्धनस्यारण्य ग्राम्यादेरिवोपादाने यथेष्टनियोगे च प्रत्यवायो न स्यात्। नन्वेवं दानादेव स्वत्वसिद्धेरस्वस्तुमि स्वीकारो व्यर्थ इति चेत् "अयाचिता चाहृताणां फलमित्यादि" श्रुतेः प्रतिग्रहीतरि द्रव्यदानस्य फलविशेषं प्रति हेतुत्वेन तादृशफलसम्पत्त्यर्थमेव प्रतिग्रहस्योपयोगात् याजनाध्यापनप्रतिग्रहैर्द्विजो धनमर्जयेदित्यादिकृत्या प्रातृतत्त्वा च प्रतिग्रहस्यापि स्वत्वहेतुत्वबोधनात्तु स्वत्वजनकव्यापारस्यैवार्जनपदार्थत्वात्" प्रदत्तदीधि०। अधिकं दानशब्दे दृश्यम्।

द्रव्यभेदप्रतिग्रहे दोषस्तु अध्यात्मयनो उक्तस्तत्र

अयाचिततया विषयभेदे प्रतिग्रहे न दोषः यथा

"अयाचितोपपन्ने तु नास्ति दोषः प्रतिग्रहे। अमृतं तं विदुर्देवास्तस्मात्तन्नैव निर्णुदेत्। गुरून्भृत्यांश्चोज्जिहीर्षुरर्चिष्यन् देवतातिथीन्। सर्वतः प्रतिगृह्णीयात् न तु तृप्येत् स्वयं ततः। साधुतः प्रतिगृह्णीयादथ वाऽसाधुतो द्विजः। गुणवानत्र दोषस्तु निर्गुणो हि निमज्जति। एवं तस्करदत्ता वा क्षत्याधरणमात्मनः। कुर्याद्विप्रोऽपि परतः प्रायश्चित्तं द्विजोत्तमः"। मार्क० २१८ अ०। अधिकम् अग्रे दर्शयिष्यमाणे पु०तत्त्वधृत्ये

दृश्यम्। तीर्थप्रतिग्रहनिषेधो यथा "स्वार्थे पितृकार्ये वा देवताभ्यर्चनेऽपि वा। निष्फलं तस्य तत्तीर्थं यावत्तद्धनमश्नुते। अतस्तीर्थे न गृह्णीयात् पुण्येष्वायतनेषु च" कौर्मे २२अ०। राजादितः प्रतिग्रहनिषेधो यथा "न राज्ञः प्रतिगृह्णीयाल्लुब्धस्योच्छास्त्रवर्तिनः। न चान्यस्मादशक्तश्च निन्दितात् वर्जयेद्बुधः" कौर्मे १६अ०। आपदि गर्हितप्रतिग्रहस्यादोषः इत्यत्र "योऽकृत्वा प्रतिग्रहाभावे प्राप्नोत्यर्थं ह्यात्मनापदि। विप्रोऽन्नं प्रतिगृह्णन् वा यतस्ततोऽपि नाप्नुयात्। गुर्वादिपोष्यवर्गार्थं देवाद्यर्थेषु सर्वशः। प्रतिगृह्णाद्द्विजो यस्तु न यचेदात्मनोऽपि च। दधिक्षीराज्यमांसानि गन्धपुष्पाण्यपस्तथा। शय्यासनं शाकं प्रत्याख्येयं न कर्हिचित्। अपि दुष्कृतकर्मभ्यः समादद्यादयाचितम्। पतितेभ्यस्त्वन्येभ्यः प्रतिग्रहमसंशयम्"। प्रतिगृहीतं यत्तस्य तत्त्यागे तस्यैव स्थानान्तरे स्वर्गं उक्तो यथा "यस्तः प्रतिगृहीतं यो वेददस्तः सुसंयतः। अध्यमानं न गृह्णाति स्वर्गस्तस्य सुनिश्चितम्। प्रतिग्रहस्थं वापि याचितं यो न यच्छति। तत्कोटिगुणितप्रयत्नो द्वतो दातव्यमिच्छति। दाता च न परेह्यर्थं प्रतिग्राही न याचते। तावुभौ नरकं यातो दाता चैव प्रतिग्रही। वदन्ति कवयः केचिद्दानप्रतिग्रहौ प्रति। प्रलापं किन्नु येनेह दातृयाचकयोर्वधम्। दातृदत्तो भवेद्दुर्गमधितिष्ठेत प्रतिग्रही। वहनं प्रतिगृह्णीयात् प्रतिग्राही प्रजात्मकः।" तस्य प्रकारमाह पु०त० विष्णुधर्मोत्तरे "भूमेः प्रतिग्रहं कुर्याद्भूमेः कृत्वा प्रदक्षिणम्"। प्रदक्षिणं न सर्वस्या भूमेः किन्तु तत्स्थस्य प्रदक्षिणावर्तनमात्रं भूमेरसन्निधाने तामुद्दिश्य प्रदक्षिणम्। "वरे दत्त्वा तथा कन्यां दासदासौ द्विजोत्तमाः!। करन्तु हृदि विन्यस्य धर्मो ज्ञेयः प्रतिग्रहे" "आरुह्य च गजस्तोक्तः कर्णे चाश्वस्य कीर्त्तितः। तथापैकशफानान्तु सर्वेषामविशेषतः। प्रतिगृह्णीत गां पुच्छे पुच्छे कृष्णाजिनं तथा। आरण्याः पशवश्चान्ये प्राह्याः पुच्छे विचक्षणैः। प्रतिग्रहमपोद्ध्रत्य चारुह्य च तथाऽऽचरेत्। बीजानां मुष्टिमादाय रत्नान्यादाय सर्वशः। वस्त्रं दद्यात्तु आदद्यात् परिधाय तथा पुनः। आरुह्योपानहौ यानमारुह्यैव च पादुके। ईषायान्तु रथं याह्यं छत्रं दण्डं च धारयेत्। आयुधानि समादाय तथाऽऽमुच्य विभूषणम्। वसेद्गृहौ तथा गृहं प्रविशन् च तथा गृहम्। अनतीर्थं च सतीर्थं जला

-यो धूमवान् च निरग्निरित्युदाहरणे निरग्नित्वाद्यभिव्युपनये तत्सत्त्वात् एवं निगमनेऽपि बोध्यम् ।

**प्रतिज्ञासंन्यास** न० "पक्षप्रतिषेधे प्रतिज्ञातार्थापनयनं प्रतिज्ञासंन्यासः" गौ०सू०उक्ते निग्रहस्थानभेदे विवृतमेतद् वृत्तौ "प्रतिज्ञासंन्यासं लक्षयति । पक्षस्य साभिहितस्य परेण प्रतिषेधे कृते सति तत्परिजिहीर्षया प्रतिज्ञातार्थस्यापनयनमपलाप इत्यर्थः यथा शब्दोऽनित्य ऐन्द्रियकत्वादित्युक्ते सामान्ये व्यभिचारेण परेण प्रत्युक्ते क एवमाह शब्दोऽनित्य इति ।

**प्रतिज्ञाहानि** न० "प्रतिदृष्टान्तधर्माभ्यनुज्ञा स्वदृष्टान्ते प्रतिज्ञाहानिः" गौ०सू० उक्ते निग्रहस्थानभेदे विवृतमेतद् वृत्तौ "प्रतिज्ञाहानिं लक्षयति प्रतिकूलो दृष्टान्तो यत्र स प्रतिदृष्टान्तः परपक्षः स्वः स्वीयः दृष्टान्तो यत्र स स्वदृष्टान्तः स्वपक्षः तथा च स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः स्वकं विवक्षिताभिहितपरित्याग इति फलितार्थः अपसिद्धान्तस्तु स्वयं विवक्षितं नाभिधीयते इति नापसिद्धान्तसाङ्कर्यं सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति यथा शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञया बाधितविषयोऽयमित्युद्भाविते अस्तु तर्हि घट एव पक्ष इति, एवं तत्रैव ऐन्द्रियकत्वादिति हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति, एवं पर्वतो वह्निमान् धूमादयोगोलकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति, एवम् अत्रैव सिद्धसाधने च प्रत्युक्ते अस्तु तर्हि द्रव्यवानिति अन्यहानिस्तु विशेषणहान्यादिः यथा तत्रैव नीलधूमादित्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतुरित्यादि ।

**प्रतितन्त्र** न० प्रतिकूलं तन्त्रं शास्त्रम् प्रा०स०। स्वमतविरुद्धे शास्त्रे तन्त्रस्येतरेतराभिमतसम्बद्धस्यार्थस्योपदेशः शास्त्रमिति ·

**प्रतितन्त्रसिद्धान्त** पु० "समानतन्त्रसिद्धः परतन्त्रसिद्धः प्रतितन्त्रसिद्धान्तः" गौ०सू०उक्ते सिद्धान्तभेदे विवृतमेतद् वृत्तौ "प्रतितन्त्रसिद्धान्तं लक्षयति । समानतन्त्रपद एकार्थकं तेनैकतन्त्रसिद्ध इत्यर्थः स्वतन्त्रसिद्ध इति पर्यवसितोऽर्थः तथा च वादिप्रतिवाद्येकतरमात्राभ्युपगमादेकतरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थः । यथा मीमांसकानां शब्दनित्यत्वम् । उदाहृतं च भाष्ये यथा नासत आत्मलाभः न सत आत्महानं निरतिशयाश्चेतनाः देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु च विशेष इति सांख्यानाम् । पुरुषकर्मनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तिश्च स्वगुणविशिष्टाश्चेतनाः असदुत्पद्यते उत्पन्नं निरुध्यते इति योगानाम्" ।

**प्रतितर** पु० प्रतितीर्यतेऽनेन प्रति+तॄ—करणे अप् । तरणसाधने नौकाचालनदण्डादौ [illegible] ।

**प्रतिताल** पु० संगीतदा० उक्ते तालभेदे तल्लक्षणभेदादिकं तत्रोक्तं यथा "कान्तारः समराख्यश्च वैकुण्ठो वाञ्छितस्तथा । कथिताः शङ्करेणैव चत्वारः प्रतितालकाः । कान्तारः प्रतितालस्तु चन्द्रक्रीडे द्रुतद्वयम् । दयाकरपदैर्मार्गं शृङ्गारे वर्त्तते रसे ॥१ लघुद्रुतौ लघुश्चान्त्यौ मदनाख्य उदाहृतः । बहुसंख्याक्षरपदः समरो वीररसे" ।२ "द्रुतद्वयस्तु वैकुण्ठे प्रतिताले समीरिताः । अर्कसंख्याक्षरे पादे हास्ये त्रिपुटतालके" ।३ "वाञ्छितस्तृतीय ताले लघुरेको द्रुतस्तथा । त्रयोदशाक्षरैर्युक्तो रसेऽद्भुते प्रकीर्त्तितः" ।

**प्रतितालो** स्त्री प्रतिगता तालं गौरा० ङीष् । (चावि) तालकोद्घाटके यन्त्रभेदे हेमच० ।

**प्रतितूणी** स्त्री सुश्रुतोक्ते वातरोगभेदे "आहत्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान् । अधस्तात् वेदना याति वर्चोमूत्राशयोत्थिता । भिन्दतीव गुदोपस्थं सा तूणीत्युपदिश्यते । गुदोपस्थोत्थिता चैव प्रतिलोमविसर्पिणी । वेगैः पक्वाशयं याति प्रतितूणी तु सा स्मृता" । तूणीशब्दोऽपि तत्र दर्शितवातरोगभेदे स्त्री ।

**प्रतिदान** न० प्रतिरूपं तुल्यरूपं दानम् प्रा०स० । विनिमये १तुल्यरूपदाने न्यस्तस्य द्रव्यस्य २प्रत्यर्पणे च अमरः ।

**प्रतिदारण** न० प्रति—दॄ+णिच्—आधारे ल्युट् । युद्धे भरतः । भावे ल्युट् । भेदने ।

**प्रतिदिवन्** पु० प्रतिदीव्यति दिव—कनिन् । प्रत्यहं १दीप्यमाने सूर्ये त्रिका० अस्य भत्वेऽल्लोपे दीर्घविधौ पर्निमित्तलोपस्याजादेशस्य स्थानिवत्त्वाभावात् दीर्घः । प्रतिदीव्नः प्रतिदीव्नेत्यादि । शब्दरत्ना० प्रतिदीवन् इति शब्दान्तरं कृतं तत्र प्रमो० तत्रार्थे । [illegible]

**प्रतिदृष्टान्तसम** पु० गौ०सू० उक्ते जात्युत्तरभेदे जातिशब्दे

**प्रतिद्वन्द्व** न० प्रतिरूपं द्वन्द्वम् प्रा०स०। तुल्ययुद्धे मार्क०।[illegible]।

**प्रतिद्वन्द्विन्** त्रि० प्रतिद्वन्द्वमस्त्यस्य इनि । १तुल्यरूपे येन सह द्वन्द्वं युद्धं क्रियते २तस्मिंश्च ।

वरः वरः । तदभावे यवादीनां क्रमात् क्षीरं विधीयते । तदभावे दधि ग्राह्यमलाभे तिल इष्यते । यत्र उक्तं दधि क्षीरं तत्रापि तद्वाभतः । अजादेः क्षीरदध्यादि तदभावेऽपि गोद्धतम् । शुक्लावर्णोऽथ वा ग्राह्यः कार्य्यकारणसन्ततौ" । अत एव घृताभावे पूर्वं दधि ततः पयः । तथा "सर्वत्र गौणकालेषु कर्मचोदितमाचरेत् । प्रायश्चित्तं व्याहृतिभिर्हुत्वा कर्म समाचरेत्" । मनुस्मृत्युक्तं "घृतं न लभ्यते यत्र शुष्कक्षीरेण होमयेत् । क्षीरस्य च दधि ग्रेयं मधुनश्च गुडो भवेत्" । आयुर्वेदेऽपि "मधु यत्र न लभ्येत तत्र जीर्णो गुडो भवेत्" । काष्ठमूलपर्णपुष्पफलप्ररोहरसगन्धादीनां साहचर्येण प्रतिनिधिं कुर्यात् । यवाभावे यवप्रतिनिधिर्भवतीति" कात्यायनः । प्ररोहोऽङ्कुरः । यवालाभे यव इति कल्पतरुः अन्वय इति नारायणोपाध्यायः । शान्तिदीपिकायां नारदीयपञ्चरात्रम् "अभावे चैव धातूनां हरितालं विधीयते । बीजानामप्यभावे तु यव एकः प्रशस्यते । ओषधीनामभावे तु सहदेवी प्रशस्यते । रत्नानामप्यभावे तु शस्तः कनकमुत्तमम् । लौहानामप्यभावे तु हेमपात्रं प्रकल्पयेत्" । लौहानां तैजसपात्राणाम् । न्यायप्राप्तप्रतिनिधिमधिकृत्य जैमिनिः "न देवताग्निशब्दक्रियाणामिति" । अस्यार्थः देवताया अग्नेश्च आहवनीयादेः मन्त्रस्य कर्मणः क्रियायाः प्रयाजाद्यदृष्टार्थकर्मणश्चादृष्टमात्रार्थकत्वेनारादुपकारकत्वान्न प्रतिनिधिः, ब्रीह्यादीनान्तु सन्निपत्योपकारकाणां पुरोडाशस्वरूपं दृष्टमेव प्रयोजनमिति तत्र प्रतिनिधिरुचित इत्युक्तम् । परिशिष्टम् "मुख्यकाले तु मुख्येन साधनं नैव लभ्यते । तत्कालद्रव्ययोः कस्य गौणता मुख्यतापि वा" । तत्र भरद्वाजः "मुख्यकालसमाश्रित्य गौणमप्यस्तु साधनम् । न मुख्यद्रव्यलाभेन गौणकालप्रतीक्षणम् । गौणेषु तेषु कालेषु कर्म चोदितमाचरेत् । प्रायश्चित्तप्रकरणप्रोक्तां निष्कृतिमाचरेत्" । उत्तरमतं सिद्धान्तमिति केचित् । तदभिप्रायकं मीमांसापञ्चाध्यायसूत्रम् । "पौर्वापर्य्येऽपि पूर्वदौर्बल्यं प्रकृतिवदिति" । ज्योतिष्टोमेऽन्योन्यं सम्बद्ध यथाप्रकारतो बहिर्निर्गच्छता ऋत्विजां विच्छेदनिमित्तं प्रायश्चित्तं श्रूयते "यद्युद्गाता विच्छिद्येत अदक्षिणेन यजेत यदि प्रतिहर्त्ता सर्वस्वदक्षिणेनेति" । तत्र उद्गातृप्रतिहर्त्रोः क्रमेण विच्छेदे विरुद्धप्रायश्चित्तयोः समुच्चयासम्भवात् । किं पूर्वं कार्य्यम् उत वा परमिति संशये हि असञ्जातविरोधात् पूर्वमिति पूर्वपक्षे राद्धान्तः पौर्वापर्य्ये सति निमित्तयोः पूर्वस्यैव निमित्तस्य दौर्बल्यम् । उत्तरस्य पूर्वनिरपेक्षस्य तद्बाधकतया उदितत्वात् पूर्वोदयकाले उत्तरस्याप्राप्तत्वेन पूर्वेण बाध्यत्वायोगात् । उक्तं हि "पूर्वं परजातत्वादबाधित्वैव जायते । परस्यानन्यथोत्पादाद्गुणबाधेन सम्भवः" इति प्रकृतिवदिति यथा हि प्रकृतौ क्लृप्तोपकाराः कुशाः प्रथममतिदेशेन विकृतावुपकाराकाङ्क्षिण्यां प्राप्ताः क्लृप्तोपकारतया चरमभाविभिरपि शरैर्निरपेक्षैर्बाध्यन्ते तद्वदिति । अत एव शारीरकभाष्यटीकायां वाचस्पतिमिश्राः "ज्येष्ठत्वस्थानापेक्षितस्य बाध्यत्वे हेतुर्न बाधकत्वे रजतज्ञानस्य व्यावृत्तिः शुक्तिज्ञानेन कनीयसा बाधदर्शनात् तदनपबाधने तद्बाधात्मनस्तस्योत्पत्तेरनुत्पत्तेः तथा च "पूर्वापरबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्मधियां भवेत्" इति । यदि च पूर्ववचनस्य पूर्वपक्षे वैयर्थ्यं स्यात् अत उभयवचनार्थौ विरुध्यमानौ तदा विषयभेदेन व्यवस्थापनीयौ । तथाहि यत्राष्टकाश्राद्धादौ कालान्तराभावस्तत्र तत्कालानुरोधादिष्टद्रव्यालाभेऽपि प्रतिनिहितद्रव्यमादाय मुख्यकाल एव तत्करणं न तु वचनानुपात्तस्य कालान्तरगौणकालप्रतीक्षणम् । तथा च छन्दोगपरिशिष्टम् "स्थालीपाकं पशुस्थाने कुर्य्याद्यद्यानुकल्पिकम् । श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्यनु" इत्यादि । यत्राब्दिकश्राद्धादौ कर्णवेधादिगौणकालोऽस्ति तत्र मृताहादावत्याभावे तदनुरोधेन उपवासादिरूपं प्रायश्चित्तं कृत्वा गौणकाले तत् कर्त्तव्यम् । तथा च लघुहारीतः "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् । अभावे पाकपात्राणां तदह्न्युपोषणम्" । तथा च छन्दोगपरिशिष्टम् "संस्कारा अतिपद्येरन् स्वकालाच्चेत् कथञ्चन । हुत्वैतदेव कुर्वीत ये तूपनयनादधः" । यत्र तु विनिगमकवचनाभावस्तत्र यद्यपि क्रियायाः प्राधान्यात् कालो द्रव्यं द्वयमपि गुणभूतमेव तथाप्युभयोपसंहारासामर्थ्ये द्रव्यादरः कालस्य सूर्य्यादिक्रियाघटितस्य कर्माधीनत्वाभावादनुपादेयत्वसिद्धिः अवच्छेदकत्वान्निमित्तत्वमात्रेण बहिरङ्गत्वात् । कालस्य निमित्तत्वं व्यक्तं भविष्ये "अतः कालं प्रवक्ष्यामि निमित्तं कर्मणामिह" । द्रव्यस्य तु यागस्वरूपनिर्वाहकत्वेनाभ्यर्हितत्वात् कर्मणः स्वरूपेणान्तरङ्गत्वम् । क्रमादिः

संभविष्यन्ति देवताः । अतश्चे प्रतिपच्चाम शिशिरेणा भविष्यति" । ४वर्द्धिष्यमाणस्तोमस्य प्रथमस्तुतौ ताण्ड्य॰ब्रा॰ ४।२।१६ यथा "अनन्ते वाजयातवे सोमाः वज्जपायाय इति वह्णवती प्रतिपद्भवत्याथो" । "प्रतिपद्यते प्रथम्यते वर्द्धिष्यमाणस्तोत्रे एषा प्रतिपत् वा वह्णवती वह्णवत्छोभेता एषा भवत्यो" भा॰ । वा ङाप् तत्रार्थे

**प्रतिपन्न** त्रि॰ प्रति+पद–क्त । १अवगते अमरः २स्वीकृते मेदि॰ "प्रतिपन्नं हि विचेतनैरपि" कुमारः । ३विक्रान्ते च हेमच॰ व्याचिता॰ यथा मतिपूर्वकत्वेऽपि नान्योदात्तता । [राजनि॰ ।

**प्रतिपर्णशिफा** स्त्री प्रतिपर्णं शिफाऽस्याः । द्रवन्तीवृक्षे

**प्रतिपाण** पु॰ प्रति+पण–घञ् । प्रतिरूपदेवने

**प्रतिपादक** त्रि॰ प्रति+पद–णिच्–ण्वुल् । बोधके ।

**प्रतिपादन** न॰ प्रति+पद–णिच् भावे ल्युट् । १दाने २बोधने ३प्रतिपत्तौ च मेदि॰ ।

**प्रतिपाद्य** त्रि॰ प्रति+पद–णिच् कर्मणि यत् । बोधनीये

**प्रतिपूजन** न॰ प्रतिरूपं पूजनं प्रा॰स॰। केनचित् पूजने कृते तदनुरूपे तेन पूजकस्य १पूजने २आभिमुख्येन पूजने च ।

**प्रतिप्रदान** न॰ प्रति+प्र+दा–भावे ल्युट् । १प्रतिदाने २प्रत्यर्पणे च ।

**प्रतिप्रसव** पु॰ प्रति+प्र+सू–अप् । १निषिद्धस्य पुनःप्राप्तिप्रापकावस्थायाम् । वाचस्पत्येऽव्ययी॰ । २प्रसवकालस्य प्रतिकूलगमीत्यर्थे । [भेदे वच्चावायनक्षे ८९पृ॰दृश्यम् ।

**प्रतिप्रस्थातृ** पु॰ प्रति+प्र+स्था–तृच् । सोमयागीये ऋत्विग्॰

**प्रतिप्रस्थान** न॰ प्रतिकूलं प्रस्थानम् प्रा॰स॰। १विरुद्धपक्षायवर्थे प्रतिकूलं प्रस्थानं यस्य प्रा॰ब॰ । २यहति त्रि॰ ३निघाह्रो यजु॰७।८। १९ वेददी॰ ।

**प्रतिप्रहार** पु॰ प्रतिरूपः प्रहारः प्रा॰स॰। १कृतप्रहारानुरूपप्रहारे २प्रतिघातभेदे च ।

**प्रतिप्रैष** पु॰प्रतिरूपः प्रैषः प्रा॰स॰। नियोजितेन नियोक्तारं प्रति पुनःप्रेषणे कात्या॰ २५।१०।२ कर्कः ।

**प्रतिफल** त्रि॰ प्रतिफलति प्रति+फल–अच् । १प्रतिबिम्बे येन यत्कर्म कृतं २तस्यानुरूपप्रतीकारे । वाचस्पत्ये अव्ययी॰। ३फलफलकस्ये अम॰ ।

**प्रतिफलन** न॰प्रति+फल–भावे ल्युट् । प्रतिबिम्बने वाचस्पत्ये

**प्रतिफुल्लक** त्रि॰ प्रति+फुल्ल विकासे ण्वुल् । प्रफुल्ले शब्दच॰

**प्रतिबद्ध** त्रि॰प्रति+बन्ध–कर्मणि क्त । १प्रतिरुद्धे २व्याकरणेन सम्बद्धे व्याप्ये च प्रतिबन्धशब्दे दृश्यम् ।

**प्रतिबन्ध** पु॰प्रति+बन्ध–भावे घञ् । १प्रतिरोधे २व्याकरणेन सम्बन्धे व्याप्तौ च "प्रतिबन्धदृशः प्रतिबद्धज्ञानमनुमानम्" सा॰सू॰ "प्रतिबन्धो व्याप्तिर्व्याप्तिदर्शनाद्व्यापकज्ञानमनुमानम्" प्र॰भा॰ ।

**प्रतिबन्धक** त्रि॰ प्रतिबध्नाति प्रति+बन्ध+ण्वुल् । १प्रतिरोधके । स्त्रियां टाप् कापि अत इत्वम् । "वयवद्दृष्टिदोषमतिः स्यात् प्रतिबन्धिका" भाषा॰। २विघ्ने शब्दच॰ प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम् तच्च मण्याद्यभावत्वेन न तु प्रतिबन्धकाभावत्वेनेति नान्योन्याश्रयः । एवं प्रतिबन्धकाभावकूट एव कारणं तेन मण्युत्तम्भकसमवधाने मण्याद्यभावेऽपि न कार्य्यमिति" अनुमा॰ चि॰ अतिरिक्तशक्तिनिरासे । तच्च पञ्चधा भवति यथा तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयत्वेन प्रतिबन्धकत्वम्१ । तदभावव्याप्यवत्तानिश्चयत्वेन२ तदभावावच्छेदकतया गृहीतधर्मवत्तानिश्चयत्वेन३ । तदसमानाधिकरणधर्मवत्तानिश्चयत्वेन४ । तद्व्यापकतावच्छेदकतया गृहीत धर्मावच्छिन्नाभाववत्तानिश्चयत्वेन५ चेति । तत्राद्य यथा ह्रदो वह्निमानिति बुद्धिं प्रति ह्रदो न वह्निमानिति निश्चयस्य प्रतिबन्धकत्वम् । द्वितीयं ह्रदो वह्न्यभावव्याप्यवानिति निश्चयस्य । तृतीयं जलवान्वह्न्यभाववानिति निश्चयविशिष्टस्य जलवान् ह्रदः इति निश्चयस्य । चतुर्थं वह्न्यसमानाधिकरणजलवान् ह्रद इति निश्चयस्य । पञ्चमं ह्रदो धूमवानिति बुद्धिं प्रति धूमव्यापकतावच्छेदकतया गृहीतं यद्वह्नित्वं तादृशवह्नित्वावच्छिन्नाभाववान् ह्रद इति निश्चयस्येति । कार्य्यमात्रं प्रति तु कामिनीजिज्ञासायाः स्वातन्त्र्येण प्रतिबन्धकत्वम् । क्वचित् मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वम् यथा दाहं प्रति मणेः प्रतिबन्धकत्वम् इति ।

**प्रतिबन्धि(न्धी)** प्रति+बन्ध–इन् वा ङीप् । प्रकृतेऽकस्मात् प्रकृतं पुरुषबुद्धिस्थप्रकृतकस्यान्तरापादने प्रतिवादिमतेऽनिष्टान्तरप्रसञ्जकवाक्ये तत्रार्थे प्रतिबन्धीपक्षोऽपि तन्मूलं बन्धनम् । [मादौ भा॰ व॰ १२०श्लो॰ ।

**प्रतिबन्धु** पु॰ प्रतिरूपो बन्धुः प्रा॰स॰ । बन्धुतुल्ये दीपि॰

**प्रतिबल** पु॰प्रतिकूलं बलं यस्य । १शत्रौ "प्रतिबलजलधेरिति" वेणी॰ । प्रतिरूपं बलं यस्य । २तुल्यबले त्रि॰ "यो मे प्रतिबलो लोके" इति चण्डी । प्रतिगतं बलम् प्रा॰स॰ । २सामर्थ्ये न॰ त्रिका॰ ।

**प्रतिबाहु** पु॰ प्रतिगतो बाहुम् अत्या॰स॰। बाह्वोरग्रे ह॰वं॰

भणं वाक्यं स्यादुत्तरोत्तरम्” । यथा विक्रमोर्वश्याम् उर्वशी “जअदु जअदु महाराओ । राजा । मया नाम जितं यस्य त्वया जय उदीर्य्यते इत्यादि” । “विरोधो व्यसनप्राप्तिः—यथा चण्डकौशिके राजा “नूनमसमीक्ष्यकारिणा मयान्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः”—क्रतस्यानुनयः पुनः” “स्यात्पर्युपासनं—रत्नावल्याम् विदू “भो मा कुप्य एषा हि कदलीघरन्तरं गदेत्यादि”—पुष्पं विशेषवचनं मतम्” । यथा तत्रैव राजा “हस्ते स्पष्टीलाः स्पर्शं नाढवति” विदू “भो वयस्य एषा अवरोऽस्य सिरी तप आदाचादिदा” राजा । वयस्य सत्यम् “श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः । कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः” । “प्रत्यक्षनिष्ठुरं वज्रं—यथा तत्रैव राजा “कथमिह कोऽहं त्वया ज्ञातः” सुसं । न केवलं तुमं चित्तफलएण ता जाव गदुअ देवीए णिवेदइस्सं । —उपन्यासः प्रसादनम्” । यथा तत्रैव सुसं । भट्टा अलं सङ्काए मएवि भट्टिणीए पसादेण कीलिद एव्व एदं हि ता किं कण्णाभरणेण । अदोवि मे अदब्भरो पसादो एसो जं तए अहं एत्थ आलिहिदा ति कुविदा मे पियसही सागरिका एसा एव्व पसादो हुन” । केचित्तु “उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तितः” इति वदन्ति उदाहरन्ति च । तत्रैव “अदिसङ्करा कबु मा गब्भदासीति । “चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते” यथा वीरचरिते तृतीयेऽङ्के “परिषदियमृषीणामेष वीरो युधाजित् सममधिभिरमात्यैर्लोमपादश्च वृद्धः । अयमविरतयज्ञो ब्रह्मवादी पुराणः प्रभुरपि जनकानामद्रुहो याचकास्ते” । [प्रतिमायाम् ।

प्रतिमूर्त्ति स्त्री प्रतिरूपा मूर्त्तिः प्रा०स० । देवादिमूर्त्तिसदृशप्र-

प्रतियत्न पु० प्रति+यत-नङ् । १वाञ्छायाम् २उपग्रहे ३निग्रहादौ ४बन्द्याम अमरटीकायां भरतमुकुटादयः । सतो गुणान्तराधानरूपे ५संस्कारे मेदि० ६पक्षे ७प्रतिपक्षे च त्रिका० । प्रतिरूपो यत्नो यस्य प्राब० । ८प्रतियत्नयुक्ते त्रि० । ९रचनायां जटाधरः ।

प्रतियातना स्त्री प्रति+यात्यतेऽनया चु० यत-युच् । १प्रतिमायाम् प्रा०स० । २तुल्यरूपयातनायाम् अमरः ।

प्रतियायिन् त्रि० प्रति+या-भविष्यति गम्या०णिनि । भावियानयुते भा०उ० ९७७१श्लो० । [सम्बन्धे च ।

प्रतियोग पु० प्रति+युज-भावे घञ् । १विरोधे २विरुद्धस-

प्रतियोगिन् त्रि० प्रतिरूपं युज्यते प्रति+युज-घिनुण् । १प्रतिकूलसम्बन्धवति । यथा अभावस्य प्रतिकूलसम्बन्धवत्त्वात् घटादिस्तस्य प्रतियोगी । २विरुद्धपक्षे विशिष्टबुद्धिनियामकसंसर्गस्य ३सम्बन्धिभेदे यथा संयोगेन घटवद् भूतलमित्यादौ संयोगस्य घटः प्रतियोगी भूतलमनुयोगि । चन्द्रवन्मुखमित्यादौ सादृश्यस्य चन्द्रः प्रतियोगी मुखमनुयोगि । तत्र विशिष्टबुद्धौ प्रकारतया भासमानं संसर्गस्य प्रतियोगि विशेष्यतया भासमानं संसर्गस्यानुयोगीति भेदः । तस्य भावः त्व प्रतियोगित्व न० तल् प्रतियोगिता स्त्री तद्भावे । सा च “अभावविरहात्मत्वं वस्तुनः प्रतियोगिता” इत्याचार्य्योक्ता । स्वरूपसम्बन्धविशेषरूपा दीधितिकारः । यथा घटो नास्तीत्यादौ घटेऽभावप्रतियोगिता । यथा वा घटवद्भूतलमित्यादौ घटे भूतलानुयोगिकसंयोगसम्बन्धप्रतियोगिता । सैवाखण्डोपाधिर्धर्मविशेष इति सम्प्रदायः । विशिष्टवैशिष्ट्यत्वमित्यन्ये यथा चन्द्रवन्मुखमित्यादौ चन्द्रस्य सादृश्यप्रतियोगित्वम् । अन्वयित्वमित्यपरे । यथा चैत्रस्य पुत्र इत्यादौ षष्ठ्यर्थस्य चैत्रे प्रतियोगित्वम् । घटाभावादिबुद्धेर्विशिष्टवैशिष्ट्यावगाहिबुद्धितया अभावबुद्धिः विशेष्यविशेषणसंसर्गावगाहिनी विशिष्टबुद्धित्वात् संयोगेन घटवद्भूतलमित्यादिबुद्धिवत् इत्यनुमानेन अभावे घटादिविशिष्टबुद्धौ सम्बन्धतया अतिरिक्तप्रतियोगितासिद्धिरिति नव्यनैयायिकाः । श्रीहर्षः खण्डनादौ तस्य स्वरूपसम्बन्धविशेषरूपत्वेन प्रतियोगिस्वरूपत्वमनुयोगिस्वरूपत्वं वा स्वीकार्य्यं तेनैवोपपत्तौ नातिरिक्तपदार्थकल्पनेति स्थितम् विस्तरभयान्नोक्तम् ।

प्रतियोगितावच्छेदक त्रि० ६त० । येन रूपेण यस्या भावादौ प्रतियोगिता १तादृशे धर्मे यथा घटाभावे घटस्य घटत्वरूपेण प्रतियोगिता अतस्तत्र घटत्वं प्रतियोगितावच्छेदकं तच्च क्वचित् एकं क्वचिदनेकं तत्र वह्निर्नास्तीत्यत्र वह्नित्वमेकं महानसीयवह्निर्नास्तीत्यादौ महानसीयत्वं वह्नित्वञ्चेत्यादिकमनेकमित्याकरे स्पष्टम् । येन सम्बन्धेन प्रतियोगितायाः अभावांशे भानं २तादृशसम्बन्धे च यथा संयोगेन घटो नास्तीत्यादौ संयोगेन घटस्याभावांशे प्रतियोगिताभानं तत्र संयोगसम्बन्धः प्रतियोगितावच्छेदकसम्बन्ध एवमन्यत्राप्यूह्यम् ।

प्रतिर जठरे चिरकालावस्थाने ऋ० ८।४८।१० ।

प्रतिरथ पु० प्रतिकूलो रथो यस्य प्रा०ब० । १प्रतियोधे च-न्द्रवंश्ये तंसुभ्रातरि नृपभेदे हरिवं०३२अ० । वदु

मुखयोरन्योन्याभिमुखत्वेन भेदोऽनुभूयते, नैवं मदीयमिदं मुखमित्यैक्यप्रत्यभिज्ञया भेदानुभवस्य बाधात्। न च प्रत्यभिज्ञैवेतरेण बाध्येति वाच्यं सति भेदे प्रतिबिम्बासम्भवात् किं प्रतिबिम्बो नाम मुखवाञ्छितमुद्रा ? उत दर्पणावयवा एव बिम्बस्य सन्निधिवशात्तथा परिणमन्ते ? नाद्यः दर्पणस्य मुखस्य चेतरेतरत्वादसत्त्वात् यत्र तु मौढदर्पणे मौढं मुखमुपलभ्यते तत्रापि तस्य न मुद्रात्वम् दर्पणमुखयोः संयोगाभावात्। न द्वितीयः निमित्तकारणस्य बिम्बस्यापायेऽपि तस्यावस्थानप्रसङ्गात् न हि तथाऽवतिष्ठते। तेनैव पुरुषेण दर्पणे तिर्यङ्निरीक्षिते पुरुषान्तरेण सम्यगवलोकिते वा तन्मुखानुपलम्भात्। न चेदं मन्तव्यं क्वचिन्निमित्तापाये कार्यं नापैति हस्तसंयोगजन्यस्य कटप्रसारणस्य हस्तसंयोगापायेऽपायदर्शनात्। न तत्र निमित्तापायात् कार्य्यापायः चिरकालसंवेष्टनाहितेन संस्कारेण संवेष्टनलक्षणविरुद्धकार्य्योत्पादात् अन्यथा चिरकालप्रसारणेन संवेष्टनसंस्कारे विनाशितेऽपि हस्तापाये प्रसारणमपेयात् न चैवमपैति। इह तु चिरकालबिम्बसन्निधानस्याप्युपमर्दे बिम्बापाये प्रतिबिम्बोऽपि गच्छत्येवेति न बिम्बः परिणामस्य निमित्तम्। अथ मन्यसे चिरकालस्थितोऽपि कमलविकाशः सवितृकिरणस्य निमित्तस्यापायेऽप्यपगच्छतीति। तन्न तत्रापि प्राथमिकमुकुलत्वहेतुभिः पार्थिवैः रात्र्यैः कमलावयवैः पुनरपि रात्रौ मुकुलत्वे विरुद्धकार्य्ये जनिते विकाशापायात् अन्यथा तादृशावयवरहिते म्लाने कमलेऽपि रात्रौ विकाशोऽपगच्छेत्। आदर्शे तु मुखाकारपरिणते पुनः केन हेतुना स्वतन्त्राकारपरिणामः स्यात् तदवयवानां कारुकर्मव्यतिरेकेणाकिञ्चित्करत्वात्। अतएव बिम्बसन्निधिमात्रेण नादर्शावयवा मुखाकारेण परिणमेरन् अन्यथा दर्पणद्रव्ये प्रतिमामुखे कर्त्तव्ये सति लौकिका बिम्बमेव सन्निधापयेयुः न तु कांस्यकारमन्वेषेरन्। दर्पणद्रव्यस्याप्याकारपरिणामे कारुकर्मापेक्षायामपि प्रतिबिम्बपरिणामे तु नःस्वरूपपरिणामे वा न तदपेक्षेति चेत् एवमपि न मुखप्रतिबिम्बाकारपरिणामो युक्तियुक्तः चक्षुर्नासिकादिनिम्नोन्नतभागस्य स्पर्शेनानुपलम्भात् समतलमेव हि पाणिनाऽऽमृश्यते। समतलेन व्यवहितं मुखमिति चेत् तर्हि चाक्षुषमपि न स्यात्। अत एतत् सिद्धं विमतः आदर्शोपलब्धमुखव्यक्त्यन्तररहितस्वजन्मकारणशून्यत्वात् यथा विप्राग्रजन्मकारणशून्यं विप्रान्तररहितं प्रतिभासकमिति। ननु तर्हि शुक्तिरजतवन्मिथ्यात्वापत्तेर्न बिम्बैकत्वसिद्धिः प्रत्यभिज्ञा तु व्यभिचारिणी मिथ्यारजतेऽपि मदीयमिदं रजतमिति तद्दर्शनादिति चेत् विषमो दृष्टान्तः नेदं रजतमिति हि तत्र रजतस्वरूपबाधया रजतप्रत्यभिज्ञाया भ्रमत्वे तत्प्रत्यभिज्ञाया अपि भ्रमत्वमुचितम् अत्र न तथा नेदं मुखमिति स्वरूपबाधः किन्तु नात्र मुखमिति देशसम्बन्धमात्रबाधे सति उत्पन्ना मदीयमेव मुखमिति प्रत्यभिज्ञा कथं भ्रमः स्यात्। न च मुखावयवानामचाक्षुषत्वात् कथं प्रत्यभिज्ञानमिति वाच्यं नासाग्रादिकतिपयावयवदर्शनादपि घटादिवदवयविनश्चाक्षुषत्वोपपत्तेः। यः पुनर्दर्पणापगमे प्रतिबिम्बापगमः नासौ स्वरूपबाधः दर्पणेऽपि तत्प्रसङ्गात्। ननु तत्त्वमसिवाक्येन जीवरूपः प्रतिबिम्बो बाध्यते यथा स्थाणुरसौ न पुरुष इति बाधायां सामानाधिकरण्यदर्शनात् संसार्यविनाशे च मोक्षानुपपत्तेः सोऽयं देवदत्त इति वदैक्यपरत्वेनापि सामानाधिकरण्यसम्भवात् विरुद्धांशबाधमात्रेण च मोक्षोपपत्तेः तत्पक्षे जीवस्य बाधे मोक्षस्यापुरुषार्थत्वात्। यस्तु मन्यते प्रतिबिम्ब एव नास्ति दर्पणप्रतिफलिता नेत्ररश्मयः परावृत्य बिम्बमेव दर्पणादविविक्तं गृह्णन्तीति तदेतत् प्रत्यङ्मुखत्वाद्यनुभवेनासौ निराकरणीयः। कथं तर्हि मूर्त्तद्रव्यस्य मुखस्यैकस्य भिन्नदेशद्वये युगपत् कार्त्स्न्येन वृत्तिः, दर्पणदेशस्य मायाकृतत्वादिति ब्रूमः। न हि मायायामसम्भावनीयं नाम शिरश्छेदादिकमपि स्वप्ने माया दर्शयति। नन्वेवमपि जलमध्येऽधोमुखस्य वृक्षप्रतिबिम्बस्य तीरस्थेनैक्ये सति तीरस्थस्याऽधिष्ठानं तत्र च मायया जलगतत्वमधोमुखत्वञ्चाध्यस्तमिति वक्तव्यं न चात्राध्यासहेतुरस्ति अधिष्ठानस्य साकल्येन प्रतीतेः तत्कथमयमध्यासः, उच्यते किमत्रावरणाभावादध्यासाभावः ? किं वा दोषाभावात् ? उतोपादानाभावात् ? आहोस्विदध्यासविरोधिनोऽधिष्ठानतत्त्वज्ञानस्य सद्भावात् ? नाद्यः चैतन्यावरणस्यैवाध्यासोपादानतया जडे वृक्षादावावरणानुपयोगात्। एतेन तृतीयोऽपि निरस्तः। न द्वितीयः सोपाधिकभ्रमे उपाधेरेव दोषत्वात्। न चतुर्थः निरुपाधिकभ्रमस्यैवाधिष्ठानतत्त्वज्ञानविरोधित्वात्। तर्हि सोपाधिकभ्रमस्य कर्तृत्वादेः नात्मतत्त्वज्ञानान्निवृत्तिः किन्तु अहङ्कारोपाध्यपगमादिति चेत् बाढं पारमार्थिकदर्पणाद्युपाधेस्तत्कृतभ्रमस्य च ज्ञानादनिवृत्तावप्यज्ञान-

पराहतौ २रोधे च । तस्य कामप्रतिहत्या जायमानत्वात् तथात्वम् ।

**प्रतिहर्त्तृ** त्रि॰ प्रति+हृ—तृच् । १पुनराहरणकर्त्तरि २ऋत्विग्भेदे पु॰ आश्वलायनशब्दे ८८५ पृ॰ दृश्यम् । स च प्रतिहाराख्यसामभक्तिगाता प्रतिहारशब्दे दृश्यम् ।

**प्रतिहर्षण** न॰ प्रतिरूपं हर्षणम् प्रा॰ स॰ । १हर्षणानुरूपे हर्षे णिच्—ल्युट् । २प्रतिरूपसन्तोषसम्पादने च ।

**प्रतिहस्तक** पु॰ प्रतिरूपः हस्तो यस्य प्रा॰ ब॰ कप् । हस्तसाध्यक्रियाप्रतिरूपक्रियाकारिणि प्रतिनिधौ हेमच॰ ।

**प्रति(ती)हार** पु॰ प्रत्येकं हरति स्वामिपार्श्वमानयति अण् वा दीर्घः । १द्वारपाले अमरः । स्त्रियां ङीप् गौरा॰ ङीष् वा । आधारे घञ् । तदधिष्ठानस्थाने २द्वारे च शब्दर॰ । प्रतिरूपं हरति हृ—अण् उपस॰ । ३मायाकारे भरतः । सामस्तूयमाने उद्गात्रा गेये ४सामावयवभेदे उद्गीथशब्दे ११७॰पृ॰ दृश्यम् । तस्य देवता च यथा यथोक्तं छा॰ उ॰ "अथ हैनं प्रतिहर्त्तोपससाद प्रतिहर्त्तर्या देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रतिहरिष्यसि मूर्द्धा ते विपतिष्यतीति मा भगवानवोचत् कतमा सा देवतेति । अन्नमिति होवाच सर्वाणि ह वा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता तां चेदविद्वान् प्रत्यहरिष्यो मूर्द्धा ते व्यपतिष्यत्तथोक्तस्य मयेति" ।

**प्रतिहारक** पु॰ प्रति+हृ—ण्वुल् । १मायाकारे भरतः २स्थानान्तरप्रापके त्रि॰ ३प्रतिहाररूपसामावयवगातरि पु॰ ।

**प्रति(ती)हास** पु॰ प्रतिरूपः हासः प्रा॰ स॰ वा दीर्घः । १येन हासः कृतः तं प्रति हासे प्रा॰ स॰ । २तत्कारके त्रि॰ । ३करवीरवृक्षे पु॰ अमरः ।

**प्रतिह्वर** पु॰ प्रति+ह्वृ—आधारे अप् । समीपे ऋ॰७।६६।१४

**प्रतीक** पु॰ प्रति+कन् नि॰ दीर्घः । १अवयवे अमरः । २प्रतिरूपे ३विलोमे च मेदि॰ प्रतीकोपासनं च ब्रह्मप्रतीकानामादित्यादीनां ब्रह्मदृष्ट्युपासनं तच्च शा॰ सू॰ भा॰ दर्शितं यथा

"न प्रतीके न हि सः" सू॰ "मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्म" (छा॰ ३।१८) इति, तथा "आदित्यो ब्रह्मेत्यादेशः (छा॰।३।१९) स यो नाम ब्रह्मेत्युपास्ते" (छा॰।७।१) इत्येवमादिषु प्रतीकोपासनेषु संशयः, किं तेष्वात्मग्रहः कर्त्तव्यो न वेति । किं तावत् प्राप्तमेतेष्वात्मग्रह एव युक्तः, कस्मात्, ब्रह्मणः श्रुतिष्वात्मत्वेन प्रसिद्धत्वात् । प्रतीकानामपि ब्रह्मविकारत्वात् ब्रह्मत्वे सत्यात्मत्वोपपत्तेरित्येवं प्राप्ते ब्रूमः । न प्रतीकेष्वात्ममतिं बध्नीयात्, न हि स उपासकः प्रतीकानि व्यस्तान्यात्मत्वेनाकलयेत् । यत्पुनर्ब्रह्मविकारत्वात् प्रतीकानां ब्रह्मत्व ततश्चात्मत्वमिति । तदसत् प्रतीकाभावप्रसङ्गात् । विकारस्वरूपोपमर्देन हि नामादिजातस्य ब्रह्मत्वमेवाश्रितं भवति, स्वरूपोपमर्दे च नामादीनां कुतः प्रतीकत्वमात्मग्रहो वा । न च ब्रह्मण आत्मत्वात् ब्रह्मदृष्ट्युपदेशेष्वात्मदृष्टिः कल्प्या, कर्तृत्वाद्यनिराकरणात्, कर्तृत्वादिसर्वसंसारधर्मनिराकरणेन हि ब्रह्मण आत्मत्वोपदेशस्तदनिराकरणेन चोपासनविधानम्, अतश्चोपासकस्य प्रतीकैः समत्वादात्मग्रहो नोपपद्यते, न हि रुचकस्वस्तिकयोरितरेतरात्मत्वमस्ति, सुवर्णात्मनैव तु ब्रह्मात्मनैकत्वे प्रतीकाभावप्रसङ्गमवोचाम । अतो न प्रतीकेष्वात्मदृष्टिः क्रियते" भा॰ "ब्रह्मदृष्टिरुत्कर्षात्" सू॰ "तेष्वेवोदाहरणेषु अन्यः संशयः, किमादित्यादिदृष्टयो ब्रह्मण्यध्यसितव्याः किं वा ब्रह्मदृष्टिरादित्यादिष्विति । कुतः संशयः, सामानाधिकरण्ये कारणानवधारणात् । अत्र हि ब्रह्मशब्दस्यादित्यादिशब्दैः सामानाधिकरण्यमुपलभ्यते, "आदित्यो ब्रह्म प्राणो ब्रह्म विद्युद्ब्रह्म" इत्यादिसमानविभक्तिनिर्देशात् । न चात्राञ्जसं सामानाधिकरण्यमवकल्पते अर्थान्तरवचनत्वात् ब्रह्मादित्यादिशब्दानां, न हि भवति गौरश्व इति सामानाधिकरण्यम् । ननु प्रकृतिविकारभावात् ब्रह्मादित्यादीनां मृच्छरावादिवत् सामानाधिकरण्यं स्यात्, नेत्युच्यते, विकारप्रविलयो ह्येवं प्रकृतिसामानाधिकरण्यात् स्यात्, ततश्च प्रतीकाभावप्रसङ्गमवोचाम, परमात्मवाक्यं चेदिदानीं स्यात्, ततश्चोपासनाधिकारो बाध्येत, परिमितविकारोपादानं च व्यर्थम् । तस्मात् ब्राह्मणोऽग्निर्वैश्वानर इत्यादिवदन्यतरस्मिन्नन्यतरदृष्ट्यध्यासे सति क्व किंदृष्टिरध्यस्यतामिति संशयः तत्रानियमः, नियमकारिणः शास्त्रस्याभावादित्येवं प्राप्तम् । अथ वाऽऽदित्यादिदृष्टय एव ब्रह्मणि कर्त्तव्या इत्येवं प्राप्तम् । एवं हि आदित्यादिदृष्टिभिर्ब्रह्मोपासनं फलवदिति शास्त्रमर्यादा । तस्मात् न ब्रह्मदृष्टिरादित्यादिष्वित्येवं प्राप्ते ब्रूमः । ब्रह्मदृष्टिरेवादित्यादिषु स्यादिति । कस्मात् उत्कर्षात्, एवमुत्कर्षेणादित्यादयो दृष्टा भवन्त्युत्कृष्टदृष्टेस्तेष्वध्यासात् । तथा च

**प्रतीचीन** त्रि० प्रतीचि भवः प्रत्यच्+ख अल्लोपे दीर्घः। १प्रत्यग्भवे २पश्चिमदिग्भवे च। स्वार्थे ख। ३प्रतीचि पदार्थे हेमच०। शत०ब्रा० ५।२।४।२० प्रतीचीनफलम्।

**प्रतीच्य** त्रि० प्रतीचि भवः प्रत्यच्—भवार्थे यत्। १प्रत्यग्भवे २पुरूरवसमातरि स्त्री भा०क०११६अ०। ३अन्तर्हिते त्रि० निघण्टुः। [मनुः ४।१८।४ श्लो०।

**प्रतीच्छक** त्रि० प्रतिगता इच्छा यस्य प्रा०ब० कप्। ग्राहके

**प्रतीत** त्रि० प्रति+इण—क्त। १ख्याते २ज्ञाते अमरः। ३हृष्टे ४सादरे च राजनि०। ५विश्वदेवगणभेदे पु०भा०अनु०८१अ०

**प्रतीति** स्त्री प्रति—इण—भावे क्तिन्। १ज्ञाने २ख्यातौ ३आदरे ४हर्षे च।

**प्रतीतोद** पु० "अर्ह" शाकरमष्टावरमभ्यासवत् तस्य प्रत्य-रान् पदादीन् प्रतीतोदा इत्याचक्षते" इत्युक्तेऽर्थे।

**प्रतीन्धक** पु० विदेहदेशे रामा० आदि० ७१।८ श्लो०।

**प्रतीप** त्रि० प्रतिगता आपोऽत्र अच्समा० नि० प्रतिप+इत्वो० वा। १प्रतिकूले चन्द्रवंश्ये २नृपभेदे पु० हेमच०। प्रतिपशब्दे दृश्यम्। ३अलङ्कारभेदे अलङ्कारशब्दे ४८८पृ० दृश्यम्। क्रान्ते परेऽन्योदात्तताया वा परनिपातः प्रतीपतः क्षतप्रतीप इति वा। स्वार्थे क। ४तत्रार्थे। ५ऋक्षवत्पुत्रयदोः पुत्रे भाग० ६।२१।२ तत्र प्रतिपक इति पाठान्तरम् तत्रार्थे। ततः सुखा० अस्त्यर्थे इनि। प्रतीपिकन् तद्युते त्रि० स्त्रियां ङीप्। सुखादिपाठात् ततः ठन्मतुपौ न स्तः।

**प्रतीपदर्शिन्** त्रि०प्रतीपं वामं पश्यति दृश—णिनि। १प्रतिकूलदर्शके स्त्रियां ङीप्। सा च २स्त्रियाम् अमरः।

**प्रतीपाश्व** पु० राजभेदे विष्णुपु०।

**प्रतीर** न० प्रतीर्य्यते प्र+तीर—क। १तटे तीरे अमरः। २भौत्यमनुपुत्रभेदे मार्क०पु० १००अ०।

**प्रतीवाप** पु० प्रति+वप—घञ् दीर्घः। १गलितस्वर्णादेरयश्चूर्णे अमरः। २पेयौषधिभेदे औषधविशेषसंयोगभेदे च "तत्र क्षीरतप्तोदिपिष्टं अश्मन्तकादि प्रतीवापं पाययेत्" सुश्रुतः। [भाग० ५।१५।२

**प्रतीह** पु० भरतवंश्ये सुवर्चलायां जाते परमेष्ठिनः पुत्रभेदे

**प्रतुद** पु० प्र+तुद-क। खगभेदे "हारीतो धवलः पाण्डुः चित्रपक्षो हरिद्रुकः। पारावतः खञ्जरीटः पिकाद्याः प्रतुदाः स्मृताः"। "प्रतुद्य भक्षयन्त्येते तुण्डेन प्रतुदास्ततः" "प्रतुदा मधुराः पित्तकफघ्नास्तुवरा हिमाः। लघवो बद्धवर्चस्काः किञ्चिद्वातकराः स्मृताः" भावप्र०।

**प्रतूर्त्त** त्रि० प्र+तूर-वेगे क्त। १प्रकृष्टवेगान्विते भावे क्त। २प्रकृष्टवेगे न०। ततो गोषदादि० मत्वर्थे वुन्। प्रतूर्त्तक तद्युते त्रि०

**प्रतूलिका** स्त्री प्रकृष्टं तूलमत्र कप् कापि अत इत्वम् (तोषक) शय्याभेदे काशी०७अ०। [नदचञ्चु (चातक) अमरः।

**प्रतोद** पु० प्रतुद्यतेऽनेन प्र+तुद—करणे घञ्। अश्वादिताड-

**प्रतोली** स्त्री प्र+तुल-अच् गौरा०ङीष्। १रथ्यायाम् २पुराभ्यन्तरवर्त्मनि अमरः दुर्गादौ निर्मिते ३पथि च भरतः।

**प्रतोष** पु०प्र+तुष—भावे घञ्। १सन्तोषे प्रकृष्टस्तोषोऽस्य प्रा०ब० २सन्तोषयुते त्रि०। ३स्वायम्भुवमनोः पुत्रभेदे पु० भाग० ४।१।७ श्लो०। [पुराणनामसु निघण्टुः।

**प्रत्न** त्रि० पुरार्थे प्र+भवार्थे त्न। १पुरातने अमरः।

**प्रत्यंशु** त्रि०प्रतिगतोऽंशुम् अत्या०स०। १प्राप्तांशुके। तत्पुरुषे अव्या० अन्तोदात्तताया। प्रतिगतोऽंशुर्येन प्रा०ब०। २प्रतिगतांशुके त्रि० तत्पुरुषे इत्युक्तः षड्भीष्टो नान्तोदात्तता।

**प्रत्यक्चेतन** पु०प्रतीपं विपरीतमञ्चति जानाति प्रति+अञ्च-क्विप् कर्म०। १सांख्यमतसिद्धे पुरुषे। "ततः प्रत्यक्चेतनाधिगमः अन्तरायाभावश्च" योगसू० भाष्यम्। प्रत्येकम् अञ्चति अञ्चु ते कर्म०। सर्वस्मिं २अन्तरात्मनि परमेश्वरे तदभिन्ने ३जीवे च प्रत्यक्शब्दे दृश्यम्। [अमरः

**प्रत्यक्पर्णी** स्त्री प्रत्यञ्चि पर्णान्यस्याः ङीप्। १अपामार्गे

**प्रत्यक्पुष्पी** स्त्री प्रत्यक् पुष्पमस्याः ङीप्। अपामार्गे अमरः

**प्रत्यक्श्रेणी** स्त्री प्रतीची श्रेणीव अस्याः समासान्तविधेरनित्यत्वात् न कप्। १दन्तीवृक्षे २मूषिकपर्ण्याञ्च अमरः।

**प्रत्यक्ष** अव्य० अक्ष्णः समीपम् "लक्षणेनाभिप्रती" पा० आभिमुख्ये प्रतिना अव्ययी० शरदा० अच्समा०। अक्षिशब्देन इन्द्रियमात्रम् उच्यते। १इन्द्रियलक्षणे ततोऽस्त्यर्थे अच्। २इन्द्रियार्थसन्निकर्षजन्ये ज्ञाने न०। इन्द्रियाणाञ्च ज्ञानमात्रं प्रत्येव सन्निकर्षद्वारा हेतुत्वात् तथार्थत्वम्। ततः अस्त्यर्थे पुनः अर्श आद्यच्। ३प्रत्यक्षविषये त्रि०। प्रत्यक्षत्वं च ज्ञानत्वव्याप्यजातिविशेषः तल्लक्षणन्तु इन्द्रियार्थसन्निकर्षोत्पन्नज्ञानत्वमिति नैयायिकाः। अधिकमपरोक्षशब्दे २३५ पृ० इष्टशब्दे च १६७२ पृ० दृश्यम्। वेदान्तमते तल्लक्षणन्तु "तत्तदिन्द्रिययोग्यवर्त्तमानविषयावच्छिन्नचैतन्याभिन्नत्वं तत्तदाकारवृत्त्यवच्छिन्नज्ञानस्य तत्तदंशे प्रत्यक्षत्वम्। आकारवृत्त्युपहितप्रमातृचैतन्यसत्तातिरिक्तसत्ताकत्वशून्यत्वे सति वर्त्तमानयोग्यत्वं विषयस्य प्रत्यक्षत्वम्" वेदा०प०। तच्च लौकिकालौकिकभेदात् द्विधा।

प्रत्यक्षदर्शन त्रि० प्रत्यक्षेण पश्यति दृश–ल्यु। साक्षिणि साक्षाद्दर्शिनि शब्दमाला। णिनि। प्रत्यक्षदर्शिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

प्रत्यक्षलवण न० प्रत्यक्षं पृथक्तयोपलभ्यमानं लवणम्। पाकनिष्पन्नोत्तरं व्यञ्जनादौ दीयमानलवणे। तच्च श्राद्धे वर्ज्यतोक्ता यथा श्रा०त० ब्रह्मपु० "भिन्नाः क्षताश्च ते भक्ताः प्रत्यक्षलवणीकृताः" श्राद्धे तच्च वर्ज्यतयोक्तं "भिन्नाः क्षताः विन्दुत्सरकाश्च प्रत्यक्षलवणप्रक्षेपकृताः" श्रा०त० रघु०। तत्रैव विष्णुना श्राद्धवर्ज्येषु "आरनालमेव निर्यासाः प्रत्यक्षलवणानि च" इत्युक्तम्। शु०त० ब्रह्मपु० "सैन्धवं लवणं चैव यच्च मानसकं भवेत्। पवित्रे परमे ह्येते प्रत्यक्षेऽपि च नित्यशः"। "पृथक्तयोपलभ्यमानं लवणं प्रत्यक्षलवणं न तु व्यञ्जनादिसंस्कारकं संस्कारप्रत्यक्षयोर्भेदात्" शु०त०रघु०। वस्तुतः सैन्धवादेरपि प्रत्यक्षलवणत्वेऽभक्ष्यता आर्द्रकादियोगे प्रतिप्रसवः न तु भिन्नविन्दुत्सरकाद्युपक्षेपेऽपि प्रतिप्रसवः। अतः विन्दुत्सरकादं लवणमात्रस्यैव प्रत्यक्षे सर्वत्र भक्षणे दाने च निषेधः इति बोध्यम्।

प्रत्यक्षवादिन् पु० प्रत्यक्षमेव प्रमाणतया वदति वद–णिनि। चार्वाके चार्वाकशब्दे २८२१पृ० दृश्यम्।

प्रत्यक्षिन् त्रि० प्रत्यक्षमस्त्यस्य इनि। १साक्षाद्द्रष्टरि अमरः २दृष्टार्थे त्रिका० स्त्रियां ङीप्।

प्रत्यक्स्रोतस् पु० प्रत्यक् प्रतीचीगामि स्रोतो यस्य। १पश्चिमदिग्गामिनि नदे "प्राक्स्रोतसो नद्यः प्रत्यक्स्रोतसो नदा नर्मदां विना" माघ ४।६६ श्लो० व्याख्यायां मल्लिनाथधृतवाक्यम्। २नर्मदायां स्त्री भा० व० ८८अ०। प्रतीचि प्रत्यगात्मनि स्रोतश्चित्तप्रवाहोऽस्य। प्रत्यगात्मैकपरचित्तवृत्तियुते ३यतिभेदे पु०।

प्रत्यगात्मन् प्रतीचो जीवस्यात्मा स्वरूपम्। १परमेश्वरे प्रत्यक्चैतन्ये भागव०१।२४।४५ श्रीधरः। "कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्" कठो० भाष्ये तु व्याख्योक्तं यथा "प्रत्यक् चासावात्मा चेति प्रत्यगात्मा प्रतीच्येवात्मशब्दो रूढो लोके नान्यस्मिन् व्युत्पत्तिपक्षेऽपि तत्रैवात्मशब्दो वर्त्तते। "यच्चाप्नोति यदादत्ते यच्चात्ति विषयानिह। यच्चास्य सन्ततो भावस्तस्मादात्मेति कीर्त्यते" इत्यात्मशब्दव्युत्पत्तिस्मरणात्। तं प्रत्यगात्मानं स्वभावमैक्षत् पश्यतीत्यर्थः" "स्वभावं स्वस्वरूपमित्यर्थः" आनन्दगिरिः।

प्रत्यगाशापति पु० ६त०। पश्चिमदिक्पाले वरुणे हलायुधः

प्रत्यगुदच् स्त्री प्रतीच्या उदीच्याश्च अन्तराला दिक् ब०व०। पश्चिमोत्तरदिशोरन्तरालायां विदिशि वायुकोणे आश्व० श्रौ० २।६।४।

प्रत्यग्र त्रि० प्रतिगतमग्रमग्रत्वम् अत्या०स०। १नूतने २शोधिते च अमरः। उपरिचरवसुवंश्ये ३कुरुपुत्रे नृपभेदे पु० भाग० ९।२२।४

प्रत्यग्रथ पु० अहिच्छत्रदेशे हेमच०। तत्र भवः तस्य राजा वा "साल्वावयवप्रत्यग्रथकालकूटाश्मकादिञ्" पा० इञ्। प्रात्यग्रथि तत्र भवे तद्राजे च।

प्रत्यग्रह पु० चेदिदेशराजे नृपभेदे भा०आ० ६३अ०।

प्रत्यङ्ग न०प्रतिगतमङ्गम् अत्या०स०। अङ्गानुगताङ्गभेदे अङ्गशब्दे यथा "तत्राङ्गान्यन्तराधिसक्थिबाहुशिरांसि तदवयवाः प्रत्यङ्गानि" सुश्रुतः। अङ्गशब्दे ७०पृ० दृश्यम्। [भेदे हरिवं० ३अ०।

प्रत्यङ्गिरस् पु० चाक्षुषमन्वन्तरे आङ्गिरसे सप्तर्षिरूपे ऋषि-

प्रत्यङ्गिरा स्त्री देवीभेदे "अथ प्रत्यङ्गिरां वक्ष्ये परकृत्यानिवर्हिणीम्" इत्यादिना मन्त्रमहोदधौ २०तरङ्गे तत्प्रयोग उक्तः।

प्रत्यङ्मुख त्रि० प्रत्यक् मुखं यस्य। पश्चिमाभिमुखे "श्रियं प्रत्यङ्मुखो भुङ्क्ते" मनुना तन्मुखभोजने श्रीलाभः फलमुक्तम्। कर्मविशेषे सायंसन्ध्यावन्दने च तन्मुखता विहिता स्मृतौ दृश्या।

प्रत्यच्(ञ्च्) पु० प्रत्यञ्चति अनु च–क्विप् क्विन् वा। १आत्मनि प्रत्यगात्मशब्दे दृश्यम्। २पश्चिमे देशे ३काले च ४पश्चिमायां दिशि स्त्री ङीप् नस्य अल्लोपे दीर्घः प्रतीची। एवं प्रत्यञ्चि प्रतीचः प्रतीचेत्यादि। क्विनि तु नलोपाभावात् न तथा प्रत्यञ्चः प्रत्यञ्चा" इति। ततः सप्तम्यर्थे अस्ति तस्य लोपः। प्रत्यक् पञ्चम्यर्थकसौ पश्चिमदिग्देशकालादौ अव्य०। [सुश्रुतः।

प्रत्यञ्जन न० प्रतिरूपमनुरूपमञ्जनं प्रा०स०। अनुरूपाञ्जने

प्रत्यनन्तर त्रि० प्रतिप्राप्तमनन्तरम् अत्या०स०। प्रत्यासन्ने सन्निकृष्टे मनुः १०.८०।

प्रत्यनीक पु०प्रतिकूलमनीकं यस्य प्रा०ब०। १रिपौ २विघ्ने हेम० उपचारात् ३प्रतिवादिनि ४अर्थालङ्कारभेदे न० अलङ्कारशब्दे ४०१ पृ० दृश्यम्।

प्रत्यनुमान न० प्रतिरूपमनुमानं प्रा०त०। प्रतीपानुमाने यथा पर्वतो वह्निमान् धूमादिति वादिनोक्ते पर्वतो वह्न्यभा-

शास्त्रभेदे तन्मतं च सर्वदर्शनसंग्रहे दर्शितं यथा "अन्यापेक्षाविहीनानां जडानां कारणत्वं दुष्प्रतीतमिति परित्यजन्तो मतान्तरमन्विष्यन्तः परमेश्वरेच्छावशादेव जगन्निर्माणं परिगृह्णन्तः स्वसंवेदनोपपत्त्यागमसिद्धप्रत्यगात्मतादात्म्यो, नानाविधमानमेयादिभेदाभेदशाली परमेश्वरोऽनन्यमुखप्रेक्षित्वलक्षणस्वातन्त्र्यभाक् स्वात्मदर्पणे भावान् प्रतिबिम्बवदवभासयेदिति भणन्तो बाह्याभ्यन्तरचर्य्याप्राणायामादिक्लेशप्रयासकलावैधुर्य्येण सर्वसुलभमभिनवं प्रत्यभिज्ञामात्रं परापरसिद्ध्युपायमभ्युपगच्छन्तः परे माहेश्वराः प्रत्यभिज्ञाशास्त्रमभ्यस्यन्ति। तस्येयत्तापि न्यरूपि परीक्षकैः "सूत्रं वृत्तिर्विवृतिर्लघ्वी बृहतीत्युभे विमर्शिन्यौ। प्रकरणविवरणपञ्चकमिति शास्त्रं प्रत्यभिज्ञायाः" तत्रेदं प्रथमं सूत्रम्। "कथञ्चिदासाद्य महेश्वरस्य दास्यं जनस्याप्युपकारमिच्छन्। समस्तसम्पत्समवाप्तिहेतुं तत्प्रत्यभिज्ञामुपपादयामि" इति। कथञ्चिदिति परमेश्वराभिन्नगुरुचरणारविन्दयुगलसमाराधनेन परमेश्वरघटितेनेत्यर्थः। आसाद्येति आ समन्तात् परिपूर्णतया सादयित्वा स्वात्मोपभोग्यतां निरर्गलां गमयित्वा तदनेन विदितवेद्यत्वेन परार्थशास्त्रकरणेऽधिकारो दर्शितः अन्यथा प्रतारणमेव प्रसजेत्। मायोत्तीर्णा अपि महामायाधिकृता विष्णुविरिञ्च्याद्या यदीयैश्वर्य्यलेशेनेश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः तस्य दास्यं दीयतेऽस्मै स्वामिना सर्वं यथाभिलषितमिति दासः परमेश्वरस्वरूपस्वातन्त्र्यपात्रमित्यर्थः। जनस्येत्यनेनाधिकारिविषयनियमाभावः प्रादर्शि। यस्य यस्य हीदं स्वरूपकथनं तस्य तस्य महाफलं भवति प्रधानस्यैव परमार्थफलत्वात्। तथोपदिष्टं शिवदृष्टौ परमगुरुभिर्भगवत्सोमानन्दनाथपादैः "एकवारं प्रमाणेन शास्त्राद्वा गुरुवाक्यतः। ज्ञाते शिवत्वे सर्वस्थे प्रतिपत्त्या दृढात्मना। करणेन नास्ति कृत्यं क्वापि भावनयापि वा। ज्ञाते सुवर्णे करणं भावनां वा परित्यजेत्" इति। अपिशब्देन स्वात्मनस्तदभिन्नतामाविष्कुर्वता पूर्णत्वेन स्वात्मनि परार्थसम्पत्त्यतिरिक्तप्रयोजनान्तरावकाशश्च पराकृतः। परार्थश्च प्रयोजनं भवत्येव तल्लक्षणयोगात् न चायं देवशापः, स्वार्थ एव प्रयोजनं न परार्थ इति। अत एवोक्तमक्षपादेन "यमर्थमधिकृत्य प्रवर्त्तते तत्प्रयोजनम्" इति। उपशब्दः सामीप्यार्थः तेन जनस्य परमेश्वरसमीपताकरणात्मं फलम् अत एवाह समस्तेति परमेश्वरतालाभे हि सर्वाः सम्पदस्तन्निष्यन्दमय्यः सम्पन्ना एव रोहणाचललाभे रत्नसम्पद इव। एवं परमेश्वरतालाभे किमन्यत् प्रार्थनीयम्। तदुक्तमुत्पलाचार्य्यैः "भक्तिलक्ष्मीसमृद्धानां किमन्यदुपयाचितम्। एतया वा दरिद्राणां किमन्यदुपयाचितम्" इति। इत्थं षष्ठीसमासपक्षे प्रयोजनं निर्दिष्टम्। बहुव्रीहिपक्षे तूपायः समस्तस्य बाह्याभ्यन्तरस्य नित्यसुखादेर्या सम्पत् सिद्धिः तथात्मप्रकाशः तस्याः समवाप्तिर्यस्याः प्रत्यभिज्ञायाः हेतोः सा तथोक्ता तस्य महेश्वरस्य प्रत्यभिज्ञा प्रतिसन्धानाभिमुख्येन ज्ञानम्। लोके हि स एवायं चैत्र इति प्रतिसन्धानेनाभिमुखीभूते वस्तुनि ज्ञानं प्रत्यभिज्ञेति व्यवह्रियते इहापि प्रसिद्धपुराणसिद्धागमानुमानादिज्ञातपरिपूर्णशक्तिके परमेश्वरे सति स्वात्मन्यभिमुखीभूते तच्छक्तिप्रतिसन्धानेन ज्ञानमुदेति नूनं स एवेश्वरोऽहमिति। तामेतां प्रत्यभिज्ञामुपपादयामि उपपद्यः सम्भवतीति तत्समर्थाचरणेन प्रयोजनव्यापारेण सम्पादयामीत्यर्थः। यदीश्वरस्वभाव एवात्मा प्रकाशते तर्हि किमनेन प्रत्यभिज्ञाप्रदर्शनप्रयासेनेति चेत् तत्रायं समाधिः स्वप्रकाशतया सततमवभासमानेऽप्यात्मनि मायावशात् भागेन न प्रकाशते पूर्णतावभाससिद्धये दृक्क्रियात्मकशक्त्याविष्करणेन प्रत्यभिज्ञा प्रदर्श्यते। तथा च प्रयोगः अयमात्मा परमेश्वरो भवितुमर्हति ज्ञानक्रियाशक्तिमत्त्वात् यो यावति ज्ञाता कर्त्ता च स तावतीश्वरः प्रसिद्धेश्वरवत् राजवद्वा आत्मा च विश्वज्ञाता कर्त्ता च तस्मादीश्वरोऽयमिति अवयवपञ्चकस्याश्रयणं मायावादेन नैयायिकमतस्य स्वीकारात्। तदुक्तमुदयकरसूनुना "कर्त्तरि ज्ञातरि स्वात्मन्यादिसिद्धे महेश्वरे। अजडात्मा निषेधं वा सिद्धिं वा विदधीत कः। किन्तु मोहवशादस्मिन् दृष्टेऽप्यनुपलक्षिते। शक्त्याविष्करणेनेयं प्रत्यभिज्ञोपदर्श्यते"। तथा हि "सर्वेषामिह भूतानां प्रतिष्ठा जीवदाश्रया। ज्ञानं क्रिया च भूतानां जीवतां जीवनं मतम्। तत्र ज्ञानं स्वतः सिद्धं क्रिया काऽऽश्रिता सती। परैरप्युपलक्ष्येत तयाऽन्यज्ज्ञानमुच्यते" इति। "या चैषा प्रतिभा तत्तत्पदार्थक्रमरूषिता। अक्रमानन्तचिद्रूपः प्रमाता स महेश्वरः" इति च। सोमानन्दनाथपादैरपि "सदा शिवात्मना वेत्ति सदा वेत्ति मदात्मना" इत्यादि। ज्ञानाधिकारपरिसमाप्तावपि "तदैक्येन विना नास्ति संविदां लोकपद्धतिः। प्रकाशैक्यात्तदेकत्वं

नियमो न त्वेवं मृगश्वादिष्विति"। तत्र ययोरव्यभिचारेणान्वयव्यतिरेकाभ्यां, नियमः अर्थप्रतीतिनियमस्तयोः प्रकृतिप्रत्यययोः शक्तिकल्पनम्। यत्र चैवं न नियमस्तत्र मृगश्वादिषु नैत्यक्षाल्पत्या शक्तिकल्पनं नेतरथः"। १२विष्णौ पु० "प्रत्ययः सर्वदर्शनः" विष्णुस०। तस्य ज्ञानरूपत्वात् तथात्वम् भाष्ये व्याख्यातम्। प्रत्ययश्च बुद्धिरात्मगुण इति नैयायिकाः। महत्तत्त्वधर्म इति सांख्याः। "एष प्रत्ययसर्गो विपर्ययाशक्तितुष्टीनाम्" सां०का०। "प्रतीयतेऽनेनेति प्रत्ययो बुद्धिस्तस्य सर्गः तत्र विपर्ययोऽज्ञानमविद्या च बुद्धिधर्मः अशक्तिरपि करणवैकल्यहेतुका बुद्धिधर्म एव तुष्टिसिद्धी अपि वक्ष्यमाणे बुद्धिधर्मावेव, तत्र विपर्ययाशक्तितुष्टिषु यथायोगं सत्त्वानां धर्मादीनां ज्ञानवर्जमन्तर्भावः सिद्धौ च ज्ञानस्येति" त०कौ०। कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति न्यायात् सर्गपदं सृज्यमानपरं तथा चाविद्यादेर्बुद्धिधर्मत्वात् तत्सृष्टत्वम्।

**प्रत्ययकारिन्** त्रि० प्रत्ययं करोति कृ—णिनि। १विश्वासकारके सततलक्षणके २मुद्राभेदे(मोहर)त्रिका०। [च अमरः

**प्रत्ययित** त्रि० प्रति+अय—क्त। १आप्ते २विश्वस्ते ३प्रतिगते

**प्रत्यरा** स्त्री प्रतिनिहिताः अराः प्रा०स०। अरादाढर्यार्थ उपनिहिते कीलके "शताक्षरं विंशतिप्रत्यराभिः" श्वेताश्व०उ०"पूर्वोक्तानामराणां दाढर्याय ये प्रतिविधीयन्ते कीलकास्ते प्रत्यरा इत्युच्यन्ते" भाष्ये उक्तम्।

**प्रत्यरि** पु० प्रति+ऋ—इन्। १शत्रौ २जन्मताराततः पञ्चमचतुर्दशत्रयोविंशतिताराके "जन्म सम्पद्विपत् क्षेमं प्रत्यरिः साधको वधः। मित्रं परममित्रं च जन्माद्येषु त्रिधा पुनः" ज्यो०त०। "तारा पुनः पापाख्या त्रिविधा पञ्चचतुर्दशविंशतित्रियुता। त्रिविधफला हानिकरी विनाशसंज्ञा क्रमात् कथिता" ज्यो०त०। तेन तृतीयस्यैव विशेषत आवव्यवायादौ निषेधात् त्याज्यता आद्ययोर्द्वयोस्तु प्रतिप्रसवः इति द्रष्टव्यम् "प्रत्यरौ लवणं दद्यादिति" दानमपि तृतीयप्रत्यरावेवेति विवेचनीयम्।

**प्रत्यर्थिन्** त्रि० प्रत्यर्थयते प्रति+अर्थ—योजने णिनि। १शत्रौ अमरः। प्रतिकूलमर्थयते णिनि, प्रतिपक्षः अर्थिनः प्रा०स० वा। व्यवहारे २प्रतिवादिनि मल्हर०। "प्रत्यर्थिनोऽग्रतो लेख्यं प्रतिज्ञातार्थसाधनम्" याज्ञ०।

**प्रत्यर्पण** न० प्रति+ऋ—णिच्-पुक्-ल्युट्। प्रतिदाने गृहीतस्य धनादेः पुनर्दाने प्रतिसमर्पणे।

**प्रत्यवनेजन** न० प्रतिरूपमवनेजनम् प्रा०स०। श्राद्धे प्रथमजलादिदानरूपात् रूपे पिण्डोपरि क्रियमाणे पुनरवनेजने तच्च छन्दोगेतरपरं यथोक्तम् "छन्दोगानान्तु पिण्डपात्रप्रक्षालनेन पूर्वदवनेजनम्। यथा छन्दोगपरिशिष्टं "तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्" अत्राप्यवनेजयेदिति श्रुतेर्हि तीयावनेजनेऽपि अवनेनिक्ष्वेति वक्तव्यं न तु प्रत्यवनेनिक्ष्वेति" श्रा०त० रघु०।

**प्रत्यवमर्ष** पु० प्रति+अव+मृश—भावे घञ्। अनुध्याने "स्मृतिः प्रत्यवमर्षश्च तेषां कालान्तरेऽभवत्" हरिवं०२१अ०

**प्रत्यवमर्ष** पु० प्रति+अव+मृष—क्षान्तौ भावे घञ्। सहने "स्वल्पसङ्करः सपरिहारः सप्रत्यवमर्षः" पञ्चशिखाचार्यः। "स्वल्पसङ्करः ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य स्वल्पेन पशुहिंसादिजन्मनाऽनर्थहेतुना अपूर्वेण सङ्करः, सपरिहारः कियतापि प्रायश्चित्तेन परिहर्त्तुं शक्यः। अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये च पच्यते तथापि यावदसावनर्थं सूते तावत् स प्रत्यवमर्षः प्रत्यवमर्षेण सहिष्णुतया सह वर्त्तत इति स्वल्पो हि पुण्यसम्भारोपनीतस्वर्गसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्" त०कौ०। भावे ल्युट्। प्रत्यवमर्षण तत्रार्थे न०।

**प्रत्यवर** त्रि० प्रतिरूपोऽवरः प्रा०स०। अतिनिकृष्टे "प्रतिग्रहाद्याजनाद्वा तथैवाध्यापनादपि। प्रतिग्रहः प्रत्यवरः प्रेत्य विप्रस्य गर्हितः" मनुः।

**प्रत्यवरोह** पु० प्रति+अव+रुह—घञ्। (नामा) अवरोहे ल्युट्। प्रत्यवरोहण तत्रार्थे न०।

**प्रत्यवसान** न० प्रति+अव+सो—क्त। भोजने हेमच०।

**प्रत्यवसित** त्रि० प्रति+अव+सो—कर्मणि क्त। भुक्ते अमरः।

**प्रत्यवस्कन्द** पु० प्रति+अव+स्कन्द—करणे घञ्। व्यवहारे उत्तरभेदे उत्तरशब्दे १०८९पृ० दृश्यम्। करणे ल्युट्। प्रत्यवस्कन्दन तत्रार्थे न०।

**प्रत्यवस्था** स्त्री प्रति+अव+स्था—भावे अङ्। १प्रतिपक्षतया अवस्थाने। भावे ल्युट्। प्रत्यवस्थान तत्रार्थे न०। "साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानम्" गौ०त०

**प्रत्यवस्थातृ** त्रि० प्रति+अव+स्था—तृच्। १प्रतिपक्षतया अवस्थातरि प्रतिवादिनि। २शत्रौ हेम०।

**प्रत्यवहार** पु० प्रति+अव+हृ—भावे घञ्। १संहारे रघुः ७।४४ २युद्धार्थमुद्युक्तानां सैन्यानां युद्धात् निवारणे मा०व० २८२अ०।

कविता सम्बद्धिता पुनरभ्यवहारिन प्रत्याचक्षते। अतः प्रत्याहारोऽस्माद्गुणतो नामतश्च समानमितरेतर प्राणा-दिभ्यो" भा०। [विषयेभ्यो निवारणे।

**प्रत्याहरण** न० प्रति+आ+हृ–भावे ल्युट्। १चित्तेन्द्रियादेः

**प्रत्याहार** पु० प्रति+आ+हृ–भावे घञ्। चित्तेन्द्रियादेः विषयेभ्यो निवारणे योगाङ्गभेदे तल्लक्षणं च अष्टाङ्गयोग शब्दे ५२४पृ० उक्तं तत्फलञ्चमानन "प्राणायामाहतमनसेन प्रत्याहार उदाहृतः" काशीख०४१अ०उक्तम्। "स्वविषयाऽसम्प्रयोगे चित्तस्य स्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः" पात०सू० "स्वविषयसम्प्रयोगाभावे चित्तस्वरूपानुकार इवेति चित्तनिरोधे चित्तवन्निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवदुपायान्तरमपेक्षन्ते। यथा मधुकरराजं मक्षिका उत्पतन्तमनूत्पतन्ति निविशमानमनुविशन्ति तथेन्द्रियाणि चित्तनिरोधे निरुद्धानीत्येष प्रत्याहारः" भा०। "ततः परमा वश्यतेन्द्रियाणाम्" पात०सू० शब्दादिष्वव्यसनमिन्द्रियजय इति केचित् सक्तिर्व्यसनं व्यस्यत्येनं श्रेयस इति अविरुद्धा प्रतिपत्तिर्न्याय्या शब्दादिसम्प्रयोगः स्वेच्छयेत्यन्ये रागद्वेषाभावे सुखदुःखशून्यं शब्दादिज्ञानमिन्द्रियजय इति केचित् चित्तैकाग्र्यादप्रतिपत्तिरेवेति जैगीषव्यः। ततश्च परमा त्वियं वश्यता यच्चित्तनिरोधे निरुद्धानीन्द्रियाणि नेतरेन्द्रियजयवत् प्रयत्नकृतमुपायान्तरमपेक्षन्ते योगिनः इति" भा०।

अत्र चित्तस्यैव प्रत्याहारेऽन्येन्द्रियस्य प्रत्याहारोऽर्थसिद्ध इति बोध्यम् तत्फलञ्च। मनुना उक्तम् "प्रत्याहारेण संसर्गान् ध्यानेनानीश्वरान् गुणान्"। प्रत्याह्रियन्ते संक्षिप्य गृह्यन्ते वर्णा अनेन प्रति+आ+हृ–करणे घञ्। "आदिरन्त्येन सहेता" पा०सूत्रेण २सञ्ज्ञाभेदे च यथा "अण् इति अ इ उ" इति वर्णानां ग्रहणम् एवं सुप् तिङ्प्रभृतिष्वपि स्वादीनां तिबादीनाञ्च ग्रहणमिति। "प्रत्याहारेष्वितां न ग्रहणमिति" तेन अच् प्रत्याहारे चकारस्य न ग्रहणम् बोध्यम्। भावे घञ्। १उपादाने पु० अमरः। [वाक्येन २निराकृते च।

**प्रत्यक्त** त्रि० प्रति+वच–कर्मणि क्त। १उत्तरिते प्रतिवा-

**प्रत्युक्ति** स्त्री प्रति+वच–भावे क्तिन्। प्रतिवाक्यकथने शब्दर०

**प्रत्युज्जीवन** न० प्रति+उद्+जीव–भावे ल्युट्। पुनर्जीवने मरणोत्तरं पुनर्जीवने। "रघविच्छेदहेतुत्वात् मरणं नैव वर्ण्यते। वर्ण्यनेऽपि यदि प्रत्युज्जीवनं स्याददूरतः" सा०द०। यथा कादम्बरीपत्रे तद्दर्शनम्।

**प्रत्युत** अव्य० प्रति–उत द्व०। १स्वपक्षस्थापनाय परपक्षनिराकरणाय वा उक्तस्य तद्वैपरीत्यभावे २वैपरीत्यमात्रे च "न दोषः पुनरुक्तोऽपि प्रत्युतेयमलङ्क्रिया" काव्याद०।

**प्रत्युत्क्रम** पु० प्रति+उद्+क्रम–घञ् न वृद्धिः। १युद्धार्थोद्योगे २प्रधानप्रयोजनोद्देशेनाप्रधानारम्भे च अमरः। क्तिन्। प्रत्युत्क्रान्ति तत्रार्थे स्त्री क्षीरस्वामी।

**प्रत्युत्तर** न० प्रतिरूपमुत्तरम् प्रा०स०। उत्तरस्योत्तरवाक्ये वादिनोपन्यस्तपक्षस्य तद्विरुद्धपक्षप्रतिपादके वाक्ये।

**प्रत्युत्थान** न० प्रति+उद्+स्था–ल्युट्। अभ्युत्थाने आगतस्य समागमनार्थमासनादुत्थितौ "प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते" मनुः।

**प्रत्युत्पन्नमति** त्रि० प्रत्युत्पन्ना तत्कालोचिता मतिर्यस्य। १तत्कालोचितबुद्धौ हेमच०। २प्रतिभान्विते जटा०। अनागतविधातृशब्दे १५४पृ० दृश्यम्।

**प्रत्युदाहरण** न० प्रतिकूलमुदाहरणं प्रा०स०। उदाहरणस्य वैपरीत्येन उदाहरणे। "अन्तर्वत्पतिवतोर्नुक्" पा० सू० इत्यो अन्तर्वत्नी पतिवत्नीत्युदाहृत्य "प्रत्युदाहरणन्तु अन्तरस्त्यस्यां शालायां घटः। पतिमती पृथिवी" सि०कौ०।

**प्रत्युद्गम** पु० प्रति+उद्+गम–घञ् न वृद्धिः। १प्रत्युत्थाने (आगुवाडया याओया) प्रतिगमने २च भावे ल्युट्। प्रत्युद्गमन तत्रार्थे न०।

**प्रत्युद्गमनीय** न० प्रति+उद्+गम–अनीयर्। १धौतवस्त्रयुग्मे अमरः "स्वपीतप्रत्युद्गमनीयवस्त्रा" इति कुमारे पाठान्तरं प्रत्युद्गमनीयवस्त्रेति न तु स्वम्। २अभ्युत्थानयोग्ये पूजनीये च त्रि०।

**प्रत्युन्नमन** न० प्रतिकूलमुन्नमनं प्रा०स०। उन्नमनप्रतिकूले अवनमने। "अङ्कुल्याऽवपीडिते प्रत्युन्नमनम्" सुश्रुत. व्रणचिकित्साङ्गक्रियोक्तौ।

**प्रत्युपकार** पु० प्रतिरूपः उपकारः प्रा०स०। १कृतोपकारेण कृते उपकारकस्य उपकारानुरूपे हिताचरणे।

**प्रत्युपदेश** पु० प्रतिरूपः उपदेशः प्रा०स०। १उपदेशकस्य प्राप्तोपदेशेन कृते शिक्षाभेदे कुमा० १।२४

**प्रत्युपहार** पु० प्रतिरूप उपहारः प्रा०स०। अनुरूपे उपहारे उपढौकनीये द्रव्ये।

**प्रत्युरस** अव्य० उरसि विभक्त्यर्थेऽव्ययी०। "प्रतेरुरसः सप्तमीस्थात्" पा० अच् समा०। उरसीत्यर्थे। सप्तमीस्थादित्युक्तेः अस्य पाठायां प्रतेः अपि। प्रत्युरस इत्येव।

**प्रत्युलूक** पु० प्रतिरूप उलूकस्य प्रा०स०। १काके भाग०१।

**प्रपतन** न० प्रपतत्यस्मात् प्र+पत–भीमा० अपादाने ल्युट् । १पतनापादाने तटादौ । भावे ल्युट् । प्रकर्षेण २पाते तत्प्रयोजनमस्य छ । प्रपतनीय प्रपातसाधने त्रि० ।

**प्रपथ** पु० प्रकृष्टः पन्थाः प्रकृष्टः पन्था यत्र वा अच्समा० । १प्रकृष्टमार्गे २तद्युक्ते त्रि० ऋ०।१।१६६।८ [स्त्री राजनि०।

**प्रपथ्य** त्रि० प्रकृष्टं पथ्यं प्रा०स० । १अत्यन्तहिते २हरीतक्यां

**प्रपद** न० प्रारब्धं पदम् प्रा०स० । पादस्याग्रभागे अमरः । प्रपदं व्याप्नोति ख । प्रपदीन पादाग्रव्यापके त्रि० आप्रपदीनशब्दे माघः १।१२श्लो०दृश्यम् । [इति भरतः ।

**प्रपन्न** त्रि०प्र+पद-क्त । शरणागते "प्रपन्नास्मि हरे ! देवि !"

**प्रपन्नाड** पु० प्रपन्नान् अलति भूषयति अल-अण् उप०स० लस्य डः । १चक्रमर्दे रत्नमा० । तस्य दद्रुरोगिभिः सेवने तेषां रोगनिवारणेन भूषकत्वात्तथात्वम् ।

**प्रपा** स्त्री प्रपीयतेऽस्यां प्र+पा–अधारे क । पानीयशालायाम् । पानीयशालिकाशब्दे ४२०६ पृ० दृश्यम् ।

**प्रपाठक** पु०प्रकृष्टः पाठोऽत्र कप् । १वेदस्याध्यायांशभेदे २ग्रन्थान्यांशभेदे च । [तले राजनि० ।

**प्रपाणि** पु० प्रकृष्टः पाणिः प्रा०स० । करस्याधोभागे पाणि-

**प्रपात** पु० प्रपतत्यस्मात् पत-अपा०घञ् । १तटरहिते २निरवलम्बे ३पर्वतस्थानभेदे अमरः । ४निर्झरे ५कूले च मेदि० । यस्मात् पतने अवस्थानाय क्रियाभेदो न भवति तादृशे स्थाने । भावे घञ् । ७अकस्मात्पतने हेमच० ।

**प्रपानक** न० प्रकृष्टं पानमस्य कप् । अम्लमरिचादिमिश्रिते पानीयद्रव्यभेदे "प्रपानकरसन्यायाच्चर्व्यमाणो रसो भवेत्" यथा अम्लमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपानकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थः" सा०द० । शताह्वयन्दे २०८४पृ०दृश्यम् ।

**प्रपापूरणीय** त्रि० प्रपापूरणं प्रयोजनमस्य "अप्रकरणे विधिपूरियतिवहिप्रकृतेरनात्" वार्त्ति० छ । प्रपापूरणप्रयोजनके । [शब्दमाला ।

**प्रपावन** न० प्रपेव कामपूरकं वनम् । कामारण्ये वनभेदे

**प्रपितामह** पु० प्रगतः पितामहं कार्यत्वेन अत्या०स० । १पितामहपितरि अमरः । तस्य पत्नी ङीष् २प्रपितामही तत्पत्न्यां स्त्री "येन भर्त्रा यच्च श्राद्धं माता भुङ्क्ते स्वधामयम् । पितामही च तेनैव तेनैव प्रपितामही" दायभागधृतवचनम् । पितामहस्य प्रजापतिजनकस्य चतुर्मुखब्रह्मणः जनके ३परब्रह्मणि "भूर्भुवः स्वःस्वरूपः स पिता प्रपितामहः" विष्णुस० ।

"यो वै ब्रह्माणं विदधाति पूर्वम्" श्रुतेस्तस्य पितामहब्रह्मस्रष्टृत्वात्तथात्वम् । "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" मनुना सर्वपितामहस्यापि तेन स्रष्टत्वात्तस्य तथात्वम् ।

**प्रपित्वे** अव्य० उत्तरायणे निघण्टुः ।

**प्रपुन्नाड(ट)** पु० पुमांसं नाटयति नडयति नड–भ्रंशे नट-अवस्यन्दने वा अण् प्रकृष्टः पुन्नाडः (पुन्नाटः) प्रा०स० । १चक्रमर्दे (चाकुन्दा) ख्याते । तस्य तत्त्वे प्रपुन्नाडोऽप्यत्र । २दद्रुमर्दने अमरः । पृषो० प्रपुनाड (प्रपुन्नड) इत्येतावपि तदर्थे अमरे पाठान्तरम् ।

**प्रपूरिका** स्त्री प्रकर्षेण पूर्य्यते कण्टकैः पूर–कर्मणि ण्वुल् स्वार्थे क टाप् अपि अत इत्त्वम् । १कण्टकार्य्याम् हेमचन्द्रः २प्रकर्षेण पूरके त्रि० ।

**प्रपूर्वग** पु० प्रकृष्टः पूर्वगः पूर्ववर्त्ती प्रा०स० । सृष्टेः प्राग्वर्त्तिनि १परमेश्वरे "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमिति श्रुतेः तस्य तथात्वम् । तद्रूपेण ध्येये २अश्विनीकुमारद्वये द्वि०व० । भा०आ०३अ० अश्विनीकुमारस्तुतिः ।

**प्रपौण्डरीक** पु० पुण्डरीक+स्वार्थेऽण् प्रकृष्टं तदिव पुष्पं यस्य । गजभक्ष्याणां चक्षुर्हितकारके प्रालपर्णीतुल्यपत्रके क्षुपभेदे अमरः ।

**प्रपौण्डरीकाद्य** न० "प्रपौण्डरीकमधुकपिप्पलीचन्दनोत्पलैः । सिद्धं धात्रीरसे तैलं नस्येनाभ्यञ्जनेन वा । सर्वानूर्द्ध्वगदान् हन्ति पलितानि च शीलितम्" चक्रपाणिदत्तोक्ते तैलभेदे ।

**प्रपौत्र** पुंस्त्री०प्रगतः कारणतया पौत्रम् अत्या०स० । पौत्रस्य १पुत्रे तत्कन्यायां स्त्री ङीप् ।

**प्रफर्वी** स्त्री प्रकृष्टं पर्वं नितम्बस्थानं यस्याः स्त्रिया ङीप् पृषो० । प्रशस्तनितम्बायां स्त्रियां ऋ०१०।८५।१२ भा० । फर्वति गतिकर्मा इति वेददीपः । २प्रकृष्टगतियुक्ते त्रि० यजु०१२। ७६ वेददीपः ।

**प्रफुल्त(ल्ल)** त्रि० प्र+फल–क्त आदित्वात् इटोऽभावे अत इत्त्वम् प्र+फुल्ल–विकाशे अच् वा (उदययुक्तः)। विकाशयुते अमरः । "लोध्रद्रुमं सानुमतः प्रफुल्त(ल्ल)म्" रघुटीकायां मल्लिनाथेन द्विधापाठः समर्थितः । [त्रिका० ।

**प्रबन्ध** पु० प्र+बन्ध–भावे घञ् ।१सन्दर्भे ग्रन्थादेः २रचने च

गमने। प्र+बुध–णिच्–भावे ल्युट्। ३प्रकृष्टबोधने ४उद्दीपने ५पूर्वगन्धस्य न्यूनतायां पुनः सौगन्ध्योत्पादनाय व्यापारभेदे अमरः।

**प्रबोधनी** स्त्री प्रबोध्यते हरिरत्र प्र+बुध-णिच् आधारे ल्युट् ङीप्। कार्त्तिकशुक्लैकादश्याम् तत्र शयितस्य हरेरुत्थापनात्तद्व्यापारस्याचरणात्तथात्वम्। उत्थानैकादशीशब्दे तस्याः व्रतभेदश्च प्राशस्त्यता दर्शिता। तन्माहात्म्यं च पद्मपु०उ०ख०१२६अ० उक्तं यथा "ब्रह्मोवाच प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम्। मुक्तिदं तत्त्वबुद्धीनां शृणुष्व मुनिसत्तम!। तावद्गर्जन्ति तीर्थानि पुण्यान्यायतनानि च। यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके। अश्वमेधसहस्राणि राजसूयशतानि च। एकेनैवोपवासेन प्रबोधन्यां भवन्ति हि। मेरुमन्दरतुल्यानि पापानि दहत्यपि। भस्मसात् कुरुते मर्त्यो हरिबोधन्युपोषणात्। पूर्वजन्मसहस्रेषु यत्पापं समुपार्जितम्। जागरणं प्रबोधन्यां दहते तूलराशिवत्। उपवासं प्रबोधन्यां यः करोति समाहितः। विधिवन्मुनिश्रेष्ठ! यथोक्तं लभते फलम्। यानि कानि च तीर्थानि त्रैलोक्ये संभवन्ति वै। तानि तस्य गृहे सम्यक् कृता येन प्रबोधनी। किं तस्य बहुभिः पुण्यैः सुरलोकसुखप्रदैः। अर्के सम्पोषिता येन संपूर्णा हरिबोधनी। बोधनीं समुपोष्यैव मुक्तिभागी भवेन्नरः। प्रबोधन्यां नरश्रेष्ठ! न पुनर्गर्भमाविशेत्। स्नानं दानं जपो होमः समुद्दिश्य जनार्दनम्। नरैर्यत् क्रियते वत्स प्रबोधन्यां तदक्षयम्। येऽर्चयन्ति नरास्तस्यां भक्त्या विष्णुं जगत्पतिम्। उषित्वा बोधनीं ते तु भवेयुर्हि दिवौकसः। महाव्रतमिदं पुत्र! महापापौघनाशनम्। प्रबोधन्यां मुने! विष्णोर्विधिवत् समुपोषणम्। स ज्ञानी च स योगी च स तपस्वी जितेन्द्रियः। भर्गमोक्षौ च तस्यास्तां य उपास्ते प्रबोधनीम्। यत्तु जन्मकृतं पापं स्वल्पं वा यदि वा बहु। करोति भस्मसाद्विष्णुः प्रबोधन्यां प्रपूजितः। हरिपूजा विधातव्या कार्त्तिके बोधवासरे। गीतशास्त्रविनोदेन प्रबोधन्यान्तु जागरात्। चन्द्रसूर्योपरागे च यत् फलं परिकीर्त्तितम्। तस्मात् सहस्रगुणितं प्रबोधन्यां हि जागरात्। स्नानं दानं जपो होमः स्वाध्यायश्चार्चनं हरेः। तत्सर्वं कोटिगुणितं प्रबोधन्यां हि जागरात्"। [illegible] जन्मप्रभृति यत्पुण्यं नरेणोपार्जितं भुवि। वृथा भवति तत्सर्वं न कृत्वा बोधवासरम्"। "प्रबोधन्याश्च माहात्म्यं पापघ्नं पुण्यवर्द्धनम्। मुक्तिदं तत्त्वबुद्धीनां शृणु त्वं मुनिसत्तम!। तावद्गर्जति विप्रेन्द्र! गङ्गाभागीरथी क्षितौ। यावन्नायाति पापघ्नी कार्त्तिके हरिबोधनी। तावद्गर्जन्ति तीर्थानि आसमुद्रसरांसि च। यावत् प्रबोधनी विष्णोस्तिथिर्नायाति कार्त्तिके। वाजपेयसहस्राणि अश्वमेधशतानि च। एकेनैवोपवासेन प्रबोधन्यां लभेन्नरः। दुर्लभञ्चैव दुष्प्राप्यं त्रैलोक्ये सचराचरे। तदपि प्रार्थितं विप्र! ददाति हरिबोधनी। ऐश्वर्यं सन्ततिं प्रज्ञां राज्यञ्च सुखसम्पदः। ददात्युपोषिता विप्र! हेलया हरिबोधनी। मेरुमन्दरतुल्यानि पापान्युपार्जितान्यपि। एकेनैवोपवासेन दहते हरिबोधनी। पृथिव्यां यानि दानानि दत्त्वा यत् फलमाप्नुते। एकेनैवोपवासेन ददाति हरिबोधनी" हरि०वि०।

**प्रभञ्जन** न० प्रभनक्ति वृक्षादीन् प्र+भन्ज–युच्। वायौ अमरः। [लतायां स्त्री राजनि०।

**प्रभद्र** पु० प्रकृष्टं भद्रमस्मात् ५ब०। १निम्बवृक्षे २प्रसारिण्यां

**प्रभद्रक** न० "भवति नजौ भजौ रसहितौ प्रभद्रकम्" वृ०र० उक्ते पञ्चदशाक्षरपादके छन्दोभेदे।

**प्रभर्मन्** पु० भृ–भावे कर्त्तरि वा मनिन् प्रकृष्टं भर्म भरणं प्रकृष्टो भर्त्ता भर्त्ता ऋत्विक् वा यस्मिन्। १यज्ञे ऋ०८।८२।१ भाष्ये दृश्यम्। प्र+भृ-भावे मनिन्। २प्रकर्षेण भरणे सम्पादने न० ऋ० १।७९।७

**प्रभव** पु० प्रभवत्यस्मात् "भुवः प्रभवः" पा० भूकर्त्तृपादाने वाच्ये अप्। १प्रथमप्रकाशस्थाने २जन्यतः पितृस्य प्रथमोपलम्भस्थाने हेमच० ३मूले ४मुनिभेदे ५जन्महेतौ। भावे अप्। ६जन्मनि। करणे अप्। ७पराक्रमे मेदि०। ८षष्टिवत्सरमध्ये वत्सरभेदे तत्फलमुक्तं ज्यो०त० भविष्यपु० "बहुतोयास्तथा मेघा बहुशस्या च मेदिनी। बहुक्षीरास्तथा गावो व्याधिरोगविवर्जिताः। प्रशान्ताः पार्थिवाश्चैव प्रभवे परिकीर्त्तिताः"। ९विष्णौ पु० "संभवो भावनो भर्त्ता प्रभवः प्रभुरीश्वरः" विष्णुस०

**प्रभवादि** पु० प्रभव आदिर्येषाम्। प्रभवप्रभृतिषष्टिसंवत्सरेषु स च गुरुमध्यभोगात् गणनीयः। "ज्योतिर्विद् द्रव्य मध्यात् प्रभवादेश्च लक्षणम्। उपलक्षणं समाद्यादि वर्षाणामपि लक्षणम्" ज्यो०त०। ते च ज्यो०त० फलसहिताः दर्शिता तच्छब्दे तद्वाक्यमुक्तं गम्यते च तदानयनम्

भवनं देवानिमम् । सान्त्वं मनेद्यतिरपि चेद्गुणपक्षैः वा अभिताश्चतरचिरे ! प्रभावती" इति श्रुतबोधः ।

प्रभाव पु॰ प्र+भाव–अच् । १अष्टवसुमध्ये वसुभेदे २प्रकाशकयुक्ते लि॰ अटा॰ धरशब्दे ३८१७पृ॰ दृश्यम् । तत्र पा-न्तरेण पाठः अटाधरवत्मतः ।

प्रभास त्रि॰प्रभासते प्र+भास–अच् । १प्रकृष्टदीप्तियुते २जैन-गणाधिपभेदे पु॰ हेमच॰ । ३कुमारानुचरगणभेदे पु॰भा॰ श॰४६अ॰ । ४ऋषिभेदे पु॰ भा॰शा॰ १६६अ॰ ५वसुभेदे पु॰ हरिवं॰ ३अ॰ सान्तरया पाठः । अष्टममन्वन्तरे ६देवगणभेदे पु॰ मार्क॰पु॰८०अ॰ ७सोमतीर्थभेदे लिका॰ "पुण्यं प्रभासं सम्प्राजगाम यस्मोडुराट् यक्ष्मणा क्लिश्यमानः" इत्युपक्रमे यत्र स तीर्थप्रवरं पृथिव्यां प्रभासनात्तस्य स यः प्रभासः" इत्यादिना तत्तीर्थोत्पत्तिमाहात्म्यादिकथा भा॰श॰३६अ॰ बाहौ दृश्या ।

प्रभासन्त पु॰ प्र+भास–बा॰ क्त । १परमेश्वरे २रुद्रे च हरिवं॰ १३१अ॰ । [त्वात् सरभ्रदे २गजे पु॰ अमरः ।

प्रभिन्न त्रि॰ प्र+भिद–क्त । १प्रकृष्टभेदयुक्ते गलितमदादित्वा-

प्रभु त्रि॰प्र+भू–डु । १स्वामिनि २कार्यसम्पादशक्तियुते "नि-ग्रहानुग्रहे शक्तः प्रभुरित्यभिधीयते" इत्युक्ते ३निग्रहा-नुग्रहसमर्थे ४विष्णौ पु॰ "प्रभवः प्रभुरीश्वरः" विष्णुसं॰ "कामः कामप्रदः प्रभुः" तत्रैव नामान्तरं तत्र पूर्वेण भवनात् प्रभुरितीति भाष्योक्तेः "सर्वासु क्रियासु सामर्थ्यातिशयात् प्रभुः" भाष्योक्तेश्च व्युत्पत्तिभेदात् नामद्वयम् । ५अष्टममन्वन्तरे देवगणभेदे मार्क॰पु॰ ८०अ॰ ।

प्रभुत्वाक्षेप पु॰ अर्थालङ्कारभेदे "धनञ्च बहु लभ्यं ते सुखं क्षेमञ्च वर्त्मनि । न च मे प्राणसन्देहस्तथापि प्रिय ! मा स्म गाः । इत्याचक्षाणया हेतून् प्रियप्रस्थानबन्धिनः । प्रभुत्वेनैव रुद्धत्वात् प्रभुत्वाक्षेप उच्यते" । "हे प्रिय ! ते विदेशगमने इति अध्याहार्यं बहुधनं सुखञ्च तथा वर्त्मनि पथि क्षेमं कुशलञ्च लभ्यम् । मम च मे प्राणसन्देहः न तव गौरप्रस्थानगमनस्य बहुधनलाभस्य च बन्धनादिति भावः । तथापि मास्म गाः मा गच्छ अत्र प्रियबालायाः प्रियस्य विदेशगमनस्य अनुबन्धिनः पोषकान् हेतून् आचक्षाणया कीर्त्तयन्त्या कयाचित् स्वाधीनपतिकयेति शेषः प्रभुत्वेन स्वाधीनतया एव पतिः रुद्धः विदेशगमनात् निवर्त्तितः तस्मात् एषः प्रभुत्वाक्षेप उच्यते" प्रेम॰ टीका ।

प्रभुभक्त त्रि॰ ७तत्॰ १स्वामिभक्ते । "बह्वाशी स्वल्पसन्तुष्टः सुनिद्रः शीघ्रचेतनः । प्रभुभक्तश्च शूरश्च ज्ञातव्याः षड्गुणाः शुनः" चाणक्यः । कुलीने उत्तमे २घोटके पु॰ शब्दच॰।

प्रभूत त्रि॰ प्र+भू-क्त । १प्रचुरे अमरः २उद्गते मेदि॰ ३भूते ४उन्नते च शब्दर॰। ततः मोषदा॰अस्त्यर्थे वुन् । प्रभूतक प्रचुरवत्कादियुक्ते त्रि॰प्रभूतमाह "स्वाहौ प्रभूतमादिभ्यः" वार्त्ति॰ ठक् । प्राभूतिक प्रचुरवक्तरि त्रि॰ । द्विती-यान्तात् प्रभूतशब्दात् स्वाहौ परे धातुनिर्देशे इक ठक् । एवम् आदिपदात् पर्य्याप्तमाह पार्य्याप्तिक तद्वक्तरि त्रि॰।

प्रभूति स्त्री प्र+भू–भावे क्तिन् तिसकारादिप्रत्यये परे पक्ष गतेः प्रकृतिस्वरः । प्रकर्षेण भवने ।

प्रभूवन् त्रि॰ प्र+भू–क्वनिप् । सामर्थ्ययुते स्त्रियां ङीप् "वनोर च" पा॰ नश्च रः । प्रभूवरी यजु॰२३।११

प्रभूष्णु त्रि॰ प्र+भू–गस्नु । १प्रभावशीले २क्षमे समर्थे

प्रभृति अव्य॰ प्र+भृ-क्तिच् । तदारभ्येत्यर्थे । बहु॰समासे उत्तरपदस्थः । तदादिके त्रि॰ अमरः ;

प्रभृथ त्रि॰ प्र+भृ–बा॰ थक् । प्रकृष्टभरणे ऋ॰१।१५२।१२

प्रभेद पु॰ प्रभिद्यतेऽनेन प्र+भिद–घञ् । १प्रकारे विशेषे । भावे घञ् । २भेदे अमरः ।

प्रभेश्वर पु॰ तीर्थभेदे शिवपु॰ ।

प्रभ्रंशथु पु॰ "प्रभ्रश्यते नासिकयैव यत्र सान्द्रो विदग्धो लवणः कफस्तु । प्राक्सञ्चितो मूर्ध्नि च पित्ततप्ते प्रभ्रंशथुं व्याधिमुदाहरन्ति" सुश्रुतोक्ते नासागतरोगभेदे ।

प्रभ्रष्ट त्रि॰ प्र+भ्रंश–क्त । भ्रंशयुक्ते संज्ञायां कन् । शि-खावलम्बिमाल्ये चूडातोलम्बमानमाल्ये अमरः ।

प्रमगन्द पु॰ हे गुण्यादिवस्थकाद्वियुतोर्थो बामेव गमिष्यतीति वृथा परेषामर्थं ददातीति मगन्दो वाद्धुषिकः तिष्ठ॰ प्रगतो मगन्दं कारणतया स्वार्था॰स॰। वार्धुषिकपुत्रे ऋ॰ ३।५३।१४ भा॰ ।

प्रमन(न)स् त्रि॰ प्रकृष्टं मनोऽस्य संज्ञात्वे णत्वम् अन्यत्रा-णत्वम् । १हर्षयुते अमरः । २सुमनस्के च ।

प्रमात पु॰ प्रतीचोश्वर॰अनयन्तपस्य पुरोहिते कश्यपवंश्ये १ऋषिभेदे मार्क॰पु॰१८अ॰। २च्यवनर्षेः पुत्रभेदे भा॰आ॰ ५अ॰ । ३दुवसदर्धिवंश्ये वागिन्द्रवंशे ४पुत्रे ऋषिभेदे भा॰अनु॰२०अ॰। ५नगस्य पुत्रे ६नृपभेदे। तद्वंश्ये वत्सप्रीतेः ५पुत्रे नृपभेदे भाग॰ ८।२।१६। ६प्रकृष्टमतियुक्ते त्रि॰ ।

प्रमत्त त्रि॰ प्र+मद–क्त । १अनवधानतायुक्ते प्रमादयुक्ते कर्त्तव्येऽकर्त्तव्यताज्ञानेन अकर्त्तव्ये वा कर्त्तव्यताधिया तत्रावधानशून्ये "मत्तं प्रमत्तमुन्मत्तं सुप्तं बालं स्त्रियं

जडम्। प्रमत्तं विरथं भीतं न रिपुं हन्ति धर्मवित्" भाग० १।७अ० "मत्तं मद्यादिना, प्रमत्तमनवहितम् उन्मत्तं ग्रहपातादिना जडम् अनुद्यमम्। प्रपन्नं शरणागतम्, विरथं भग्नरथम्" श्रीधरस्वामी। "सुप्तां मत्तां प्रमत्तां वा रहो यत्रोपगच्छति" मनुः। "सन्ध्यापूजाविहीनश्च प्रमत्तः परिकीर्त्तितः" ब्रह्मवै०पु० ७अ० उक्ते २सन्ध्यादिहीने च।

प्रमत्तगीत न० प्रमत्तेन गीतम् तत्र "इत्थम्भूतेन कृतमिति च" पा० ज्ञाप्यमानस्वरपदमकोदात्तम्। प्रमत्तेन गीते।

प्रमथ पु० प्रमथ्नाति प्र+मथ—अच्। १धृतराष्ट्रपुत्रभेदे भा० आ०११७अ०। २घोटके ३शिवपारिषदभेदे च शब्दरत्ना० तत्स्वरूपसंख्यादि यथा

"नानारूपधरा ये वै जटाचन्द्रार्द्धमण्डिताः। ते सर्वेऽष्टकैश्वर्य्ययुक्ता ध्यानपरायणाः। योगिनो मदमात्सर्य्यदम्भाहङ्कारवर्जिताः। क्षीणपापा महाभागाः शम्भोः प्रीतिपराः पराः। न ते परिग्रहं दारां काङ्क्षन्ति च कदाचन। संसारविमुखाः सर्वे सततो योगतत्पराः। ध्यानावस्थं महादेवं परिवार्य्य धृतव्रताः। कृत्वा परिषदं ह्यत्र तिष्ठन्ति विगतक्लमाः। यदैव परमं ज्योतिः चिन्तयन्ति विकाशवत्। तदैव ते पारिषदाः सर्वे सर्वेशयन्ति तम्। ते षोडश समाख्याताः कोटयो वै धृतव्रताः। सिंहव्याघ्रादिवक्त्राश्च अणिमादिसमायुताः। अपरे कामिनः शम्भोः हृतकर्मापिथाः स्मृताः। विचित्रवस्त्राभरणा जटाचन्द्रार्द्धमण्डिताः। हरस्य तस्याः रूपेण विशदा वृषभध्वजाः। कपालखट्वाङ्गपाणिः प्रमदाभिः समागताः। विचित्रमाल्याभरणा दिव्यगन्धानुलेपनाः। कपालहस्तं क्रीडन्तमनुगच्छन्ति भूषिताः। शृङ्गारवेशाभरणा अष्टौ ते कोटयो गणाः। अर्द्धनारीशरीरास्ते यथार्द्धनारीश्वरं हरम्। सततमपि महाभागास्तुल्यरूपा हरस्य ये। कपालपाणी हि यदा रमते च सह हरः। अर्द्धनारीशरीरास्तु द्वारपाला भवन्ति ते। कालाग्निमार्गे गच्छन्तमनुगच्छन्ति नित्यशः। ध्यानस्थं परिचर्य्यन्ति दर्शयाद्भिरीश्वरम्। नानाशस्त्रधराः शम्भोर्मन्त्राश्च प्रमथाः स्मृताः। प्रमथ्नन्ति च युद्धेषु युध्यमानान् महाबलान्। ते च महाबलाः शूराः संख्याता बहुकोटयः। अपरे नानाकारवक्त्ररूपधारिभिः। भक्षन्ति यज्ञं कुर्वन्तो नायन्ति महेश्वरम्। नानारूपधरास्ते वै संख्यया कोटयो मताः। सततं चातुरूपमपि विचरन्तं महेश्वरम्। सर्वे मायाविनः शूराः सर्वे शास्त्रार्थपारगाः। सर्वे सर्वज्ञाः सर्वज्ञाः सर्वे सर्वगमाः सदा। उत्पन्नोऽपि सर्वभुवनं गच्छन्त्यागच्छन्ति पुनःपुनः। अणिमाद्यष्टैश्वर्य्ययुक्तास्ते वै महाबलाः। अपरे रुद्रनामानो जटाचन्द्रार्द्धमण्डिताः। देवेन्द्रस्य नियोगेन वर्त्तन्ते त्रिदिवे सदा। तेषां संख्या षट्कोटिस्ते सर्वे महातपाः। कुर्वन्ति हि सदा रक्षां हरस्य सततं गणाः। विध्वंसयन्ति पापिष्ठान् धर्मिष्ठान् पालयन्ति च। अनुगृह्णन्ति सततं धृतपाशुपतव्रतान्। निघ्नन्ति सततं हन्ति योगिनः पतताख्यताम्। षट्त्रिंशत् कोटयश्चैते हरस्यानुचरा गणाः" कालिकापु० ४९अ०। तेषामुत्पत्ति कथा तत्र वाच्यार्थे दृष्ट्वा। ४हरीतक्यां स्त्री मेदि०।

प्रमथन न० प्र+मथ—भावे ल्युट्। १वधे २आलोडने ३विलोडने च अमरः।

प्रमथाधिप पु० ६त०। शिवे अमरः प्रमथपत्यादयोऽप्यत्र।

प्रमथित न० प्रकर्षेण मथितम्। १निर्जलतक्रे राजनि०। २प्रकर्षेण मथिते त्रि०।

प्रमद पु० प्र+मद—अप्। १हर्षे अमरः। प्रमाद्यत्यनेन करणे अप्। २धुस्तूरफले न० शब्दच०। कर्त्तरि अच्। ३प्रमत्ते त्रि० मेदि०। ४दैत्यभेदे पु० हरिवं० ४अ०। ५तृतीयमन्वन्तरे वासिष्ठे ६सप्तर्षिभेदे पु०।

प्रमदक पु० "प्रमदको योऽयमेव लोकोऽस्ति न परः" इति न पश्यतीति निरु० ६।३२ उक्ते परलोकाभाववादिनि नास्तिकभेदे।

प्रमदकानन न० प्रमद्यतेऽनेन प्र+मद-करणे घञ्। प्रा०स० ६त० "कुप्रापोः संज्ञाच्छन्दसोः" पा० ह्रस्वो वा। प्रमदावने राज्ञामन्तःपुरोचिते उद्याने भरतः प्रमदावनादयोऽप्यत्र अमरः।

प्रमदा स्त्री प्रमाद्यत्यनया प्र+मद—करणे अप्। १उत्तमयोषिति अमरः। "नजभजजा गुरुश्च भवति प्रमदा" वृ०र० उक्ते त्रयोदशाक्षरपादके २वर्णवृत्तभेदे।

प्रमदाकानन न० प्रमदोचित काननं शा०त०। १राज्ञामन्तःपुरोचितवने भरतः। २प्रमदावन तत्रार्थे शब्दरत्ना०।

प्रमद्वरा स्त्री शुनकर्षिमातरि रुरोर्भार्य्यायां भा०आ० ५अ०।

प्रमन्यु पु० भिवमन्युवंश्ये वीरव्रतस्य भोजायां भार्य्यायां जाते पुत्रे नृपभेदे भाग० ५।१५।१५

प्रमय पु० प्र+मी-वधे भावे अच्। वधे हेमच०।

प्रमयु त्रि० प्र+मी—वधे कर्त्तरि उन्। हिंसके ऋच० ८।१।१६।

भेदग्रहे रजते रजतभेदग्रहेऽन्यथाख्यातिभयात्। त्वन्मते रङ्गे रङ्गभेदाग्रहस्य रजते रजतभेदाग्रहस्य च सत्त्वात् किञ्चानुमितिं प्रति भेदाग्रहस्य हेतुत्वे जलह्रदे वह्नि-व्याप्यधूमवद्भेदाग्रहात् अनुमितिर्निर्बाधा। यदि च विशिष्टज्ञानं कारणं तदाऽयोगोलके वह्निव्याप्यधूमज्ञानमनुमित्यनुरोधादापतितम्। इत्थम् अन्यथाख्यातौ प्रमाणमेव प्रमाणम्। रङ्गं रजततया जानामीत्यनुभवादिति सङ्क्षेपः"।

वेदान्तिमते तस्य स्वतोग्राह्यता वेदान्तपरिभाषायां व्यवस्थापिता यथा "एवंभूतानां प्रमाणानां प्रामाण्यं स्वतएवोत्पद्यते ज्ञायते च तथा हि स्मृत्यनुभवसाधारणं संवादिप्रवृत्त्यनुकूलं तद्वति तत्प्रकारकज्ञानत्वं प्रामाण्यं तच्च ज्ञानसामान्यसामग्रीप्रयोज्यं न त्वधिकं गुणमपेक्षते प्रमामात्रेऽनुगतगुणाभावात्। नापि प्रत्यक्षप्रमायां भूयोऽवयवेन्द्रियसन्निकर्षः, रूपादिप्रत्यक्षे आत्मप्रत्यक्षे च तदभावात् सत्यपि तस्मिन् पीतः शङ्ख इति प्रत्यक्षस्य भ्रमत्वाच्च। अतएव न सल्लिङ्गपरामर्शादिकमपि अनुमित्यादिप्रमायां गुणः असल्लिङ्गपरामर्शादिस्थलेऽपि विषयाबाधेनानुमित्यादेः प्रमात्वात्। न चैवमप्रमापि प्रमा स्यात् ज्ञानसामान्यसामग्र्या अविशेषादिति वाच्यं दोषाभावस्यापि हेतुत्वाङ्गीकारात्। न चैवं परतस्त्वम् "आगन्तुकभावकारणापेक्षायामेव परतस्त्वात्" ज्ञायते च प्रामाण्यं स्वतः, स्वतोग्राह्यत्वञ्च दोषाभावे सति यावत्स्वाश्रयग्राहकग्राह्यत्वम्। स्वाश्रयो वृत्तिज्ञानं तद्ग्राहकं साक्षिज्ञानं तेनापि वृत्तिज्ञाने गृह्यमाणे तद्गतं प्रामाण्यमपि गृह्यते। न चैवं प्रामाण्यसंशयानुपपत्तिः तत्र संशयानुरोधेन दोषस्यापि सत्त्वेन दोषाभावघटितस्वाश्रयग्राहकाभावेन तत्र प्रामाण्यस्याग्रहात्। यद्वा यावत्स्वाश्रयग्राहकग्राह्यत्वयोग्यत्वं स्वतस्त्वं संशयस्थले प्रामाण्यस्योक्तयोग्यतासत्त्वेऽपि दोषवशेनाग्रहात् न संशयानुपपत्तिः। अप्रामाण्यन्तु न ज्ञानसामान्यसामग्रीप्रयोज्यं प्रमायामप्यप्रामाण्यापत्तेः किन्तु दोषप्रयोज्यं नाप्यप्रामाण्यं यावत्स्वाश्रयग्राहकग्राह्यम् अप्रामाण्यघटकतदभाववत्त्वादेर्ज्ञानानुपनीतत्वेन साक्षिणा ग्रहीतुमशक्यत्वात् किन्तु विसंवादिप्रवृत्त्यादिलिङ्गकानुमित्यादिविषय इति परत एवाप्रामाण्यमुत्पद्यते ज्ञायते चेति"। अधिकं प्रमाणशब्दे दृश्यम्।

प्रमाण न० प्र+मा—भावे करणे वा ल्युट्। १प्रमाणरूपज्ञाने २विष्णौ "प्रमाणं प्राणनिलयः" विष्णुस०। प्रमाणं "प्रज्ञानं ब्रह्मेति" श्रुतेस्तस्य ज्ञानरूपत्वात् तथात्वम् "प्रमाणं बीजमव्ययम्" विष्णुस० प्रत्यक्षादिप्रमाणरूपत्वात्तस्य तथात्वं व्युत्पत्तिद्वययोगात् नामद्वयम्। ३सत्यवादिनि ४इयत्तायां परिच्छेदे ५हेतौ ६प्रमातरि च मेदि०। ७प्रमितिकरणे चक्षुरादौ "यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता स येनार्थं प्रमिणोति तत्प्रमाणम्" वात्स्या० "तच्च साधनाश्रयाव्यतिरिक्तत्वे सति प्रमाव्याप्तं प्रमाणमिति" सर्वद०अक्षपाददर्शने। "तद्वति तत्प्रकारकत्वरूपप्रकर्षविशिष्टज्ञानकरणत्वम्" गौ०वृ०। "अनुभवत्वव्याप्यजात्यवच्छिन्नप्रमावृत्तिकार्य्यतानिरूपितकारणताशालित्वे सति व्यापारवत्त्वम् तत्त्वम्" तर्कप्रकाशे शितिकण्ठः। प्रमाणत्वं च अनधिगतार्थकानुभवकारणत्वम्। तच्च अगृहीतग्राहीतरानुभवकारणत्वम्। समानाधिकरणस्वाव्यवहितपूर्ववर्त्तिसमानाकारनिश्चयविषयविषयकेतरतद्विशेष्यकतत्प्रकारकानुभवकारणत्वमिति यावत् न्यायकुसुमाञ्जलिटी०। "यज्जातीयविशिष्टज्ञानत्वावच्छेदेन समानाकारनिश्चयोत्तरत्वं तज्जातीयाव्यवहितपूर्वज्ञानस्यैवागृहीतग्राहित्वेन प्रमात्वात् अतएव धारावाहिप्रत्यक्षव्यक्तीनां समानाकारप्रत्यक्षोत्तरवर्त्तित्वेऽपि न तासां प्रमात्वहानिः हानिस्तु समानाकारानुभवपश्चात्तनानां स्मृतीनामिति" शब्द०प्र०। न्यायमते चत्वारि प्रमाणानि। प्रत्यक्षम्। अनुमानम्। उपमानम्। शब्दः गौ०सू०। प्रकारान्तरेण प्रमाणं द्विविधम् "शब्दोपजीवि शब्दानुपजीवि" कुसुमाञ्जलिटी०। प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः स्वीकुर्वन्ति। प्रत्यक्षमनुमानं चेति द्वे प्रमाणे इति वैशेषिका बौद्धा आर्हताश्च। प्रत्यक्षं शब्दश्चेति द्वे प्रमाणे इति श्रीमदानन्दतीर्थभगवत्पादाचार्य्याः। प्रत्यक्षमनुमानमाप्तवचनमिति त्रीणि प्रमाणानीति सांख्या वेदान्तिनश्च। प्रत्यक्षानुमानोपमानानि त्रीणीति नैयायिकैकदेशिनः। प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिश्चेति पञ्च प्रमाणानीति प्राभाकराः। प्रत्यक्षानुमानोपमानशब्दा अर्थापत्तिरनुपलब्धिश्चेति षट्प्रमाणानीत्यपरे भाट्टवेदान्तिभेदाश्च। सम्भवैतिह्ये अतिरिक्ते प्रमाणे इति पौराणिकाः। चेष्टाव्यतिरिक्तं प्रमाणमिति तान्त्रिकाः। तत्र सांख्यपातञ्जलवेदान्तिमते अन्तःकरणवृत्तीनां पौरुषेयचित्तवृत्तिप्रकाशरूपबोधे करणत्वम् अन्तःकरणवृत्तिषु च ज्ञानत्वारोपेण तत्करणत्वमिन्द्रियाणामिति

१८।२ भाष्ये दृश्यम् । तत्र टाख्याने "सुपांसुलोपः" इत्यादिना पा॰ यात् । अतो लोपधालोप इति बोध्यम् ।

**प्रवयण** न॰ प्र+वय–गतौ भावे ल्युट् । १प्रकर्षेण २गमने करणे ल्युट् । ३प्रतोदे हेमच॰ । [२पुराणे निषङ्गः

**प्रवयस्** त्रि॰ प्रकृष्टं वयोऽस्य । १वृद्धे स्थविरे हेमच॰ ।

**प्रवय्या** स्त्री प्र+वि–यत् "भव्यप्रवय्ये छन्दसि" पा॰ निपा॰ । प्रकर्षेण गतियुतायां स्त्रियां स्त्रियामेवास्य निपातः पुंसि कर्मणि तु यत् प्रवेय इति सि॰कौ॰ ।

**प्रवर** पु॰ प्र+वृ–अप् । १सन्ततौ २गोत्रे गोत्रप्रवर्त्तकमुनिव्यावर्त्तके ३मुनिभेदे च । ४श्रेष्ठे त्रि॰ ५अगुरुचन्दने न॰ । मेदि॰ । गोत्रभेदे गोत्रप्रवर्त्तकमुनिगणाश्च आर्षशब्दे ८१४पृ॰ दृश्याः । तदधिकं प्रवराध्यायादौ दृश्यम् ।

**प्रवरललित** न॰ "यमौ नः सौ रौगः प्रवरललितं नाम बोध्यम्" छ॰र॰ टीकोक्ते षोडशाक्षरपादके छन्दोभेदे ।

**प्रवरवाहन** पु॰ द्वि॰व॰ । प्रवरं वाहनं ययोः । अश्विनीकुमारयोः हेमच॰ ।

**प्रवर्ग** पु॰ प्रवृज्यतेऽसौ प्र+वृज–घञ् । १विष्णौ हरिवं॰ ४२ अ॰ । २प्रवर्ग्ये महावीरे हेमच॰ । तत्र प्रवर्ग्य इत्येव पाठो न्याय्यः ।

**प्रवर्ग्य** पु॰ प्र+वृज–कर्मणि ण्यत् कुत्वम् । १महावीरे तत्प्रकारः कात्या॰ श्रौ॰ २६अ॰ प्रवर्ग्याध्याये दृश्यम् । अस्त्यर्थे मतुप् । प्रवर्ग्यवत् । २तद्युते ३यज्ञभेदे पु॰ शत॰ब्रा॰ २ ३ ३ १

**प्रवर्त्तक** त्रि॰ प्रवर्त्तयति प्र+वृत–णिच्–ण्वुल् । प्रवृत्तिजनके "बलवदनिष्टाननुबन्धीष्टसाधनत्वे सति कृतिसाध्यताविषयकं ज्ञानम् इष्टसाधनताविषयकं कृतिसाध्यताज्ञानं वा प्रवर्त्तकमिति तार्किकाः । यथा वा अविशेषवक्तृप्रतिपन्नानन्तर्यं कार्यताज्ञानं प्रवर्त्तकमिति गुरवः । "चोदनेति क्रियायाः प्रवर्त्तकं वचनम्" चोदनासूत्रे शबरभाष्यम् "क्रियाया नियोगस्य ज्ञानद्वारा प्रवर्त्तकं वाक्यं चोदनेत्यर्थः ।

**प्रवर्त्तना** स्त्री प्र+वृत–णिच्–युच् । प्रवृत्तिजनकव्यापारे विध्यादौ "अस्ति प्रवर्त्तनारूपमनुस्यूतं चतुर्ष्वपि" इति भर्त्तृहरिः । भावे ल्युट् तत्रार्थे आरम्भे च न॰ ।

**प्रवलाकिन्** पु॰ १भुजङ्गे २चित्रमेखलके च त्रिका॰ ।

**प्रवसु** पु॰ ईलिनपुत्रे दुष्मन्तभ्रातरि नृपभेदे भा॰आ॰९४अ॰ ।

**प्रवह** पु॰ प्र+वह–अच् । "वहति ज्योतींषि वहति प्रवहस्तेन कीर्त्तितः" उक्ते १वायुभेदे । भावे अप् । २नगराद्बहिर्गमने

**प्रवहण** न॰ प्र+वह–करणे ल्युट् । १यानमात्रे २वस्त्राच्छादिते स्त्रीवाहने कर्णीरथे ( महाफा ) अमरः ।

**प्रवह्लि** स्त्री प्र+वल्ह–इन् पृषो॰ अन्त्यस्यादि॰ वर्णव्यत्ययश्च । प्रहेलिकायां भरतः वा ङीप् तत्रार्थे स्वार्थे क । तत्रार्थे अम॰

**प्रवा** पु॰ प्रकर्षेण वाति गच्छति वा–क्विप् । अश्वे यजु॰ १५।६ वेददी॰ ।

**प्रवाच्** त्रि॰ प्रकृष्टा वाक् यस्य । युक्तियुक्तवाक्यवक्तरि शब्दा॰ ।

**प्रवाणी** स्त्री प्र+वे–ल्युट् ङीप् । १तन्तुवायशलाकायाम् (माकु) निष्क्रान्ता प्रवाणाग्राः निरा॰स॰ गौणत्वे प्रवाणिशब्दस्य ह्रस्वे सम्भवति भरतेन यत् वाणिशब्दस्यापि ह्रस्वान्तत्वं कल्पितं तच्चिन्त्यम् ।

**प्रवात** त्रि॰ प्रकृष्टो वातो यत्र । १सुखसेव्यवातयुक्तदेशादौ प्र+वा–क्त । २निर्वाते प्रवणे च प्रवातेजसशब्दे दृश्यम् ।

**प्रवात्** त्रि॰ प्रकर्षेण वाति प्र+वा–शतृ । १प्रकृष्टगतियुते २प्राणे पु॰ "प्राणो वै प्रवान्" शत॰ब्रा॰ १ ४२ १

**प्रवातेजस्** त्रि॰ प्रवातं प्रवणं तेज ओजो यस्य । प्रवाततेजसि निरु॰ ९।८ [लोकवादे २परस्परकथोपकथने च ।

**प्रवाद** पु॰ प्र+वद–घञ् । १परम्परागतवाक्ये लोकेषु २प्रसिद्धे

**प्रवादिन्** त्रि॰ प्र+वद–ताच्छील्ये णिनि । परस्परकथनकारके स्त्रियां ङीप् ।

**प्रवार** पु॰ प्र+वृ–आच्छादने करणे घञ् । आच्छादने वस्त्रे विभाषेत्यनुवर्त्तमानात् अपि प्रवर तत्रार्थे सि॰कौ॰ ।

**प्रवारण** न॰ प्र+वृ–णिच्–ल्युट् । १काम्ये दाने २काम्यस्य उत्तमवस्तुनो दाने च अमरः । ३प्रकर्षेण वारणे मेदि॰ । ४महादाने त्रिका॰ तस्य उत्तमवस्तुनो दानरूपत्वात्तथात्वम्

**प्रवास** पु॰ प्रस्थितस्य वासः । स्वदेशात् प्रस्थितस्य भिन्नदेशे वासे चिरप्रवासगतस्य पुनरागतस्य वार्त्ताद्यश्रवणे कालविशेषे तस्य प्रेतत्वावधारणमुक्तं नि॰त॰ "सन्देहे त्वाह यमः "गतस्य न भवेत् वार्त्ता यावत् द्वादशवार्षिकी । प्रेतावधारणं तस्य कर्त्तव्यं सुतबान्धवैः । यन्मासि यद्-दृयोतस्तस्मिन्मासि तदहः क्रिया । दिनाज्ञाने कुहूस्तस्य आषाढस्याथ वा कुहूः" । नि॰सि॰ वृद्धमनुः "प्रोषितस्य तथा कालो गतश्चेद्द्वादशाब्दिकः । प्राप्ते त्रयोदशे वर्षे प्रेतकार्याणि कारयेत्" । वृहस्पतिः "यस्य न श्रूयते वार्त्ता यावद्द्वादश वत्सरान् । कुशपुत्तलकदाहेन तस्य स्यादवधारणा" । भविष्ये "पितरि प्रोषिते यस्य न वार्त्ता नैव चागमः । ऊर्द्ध्वं पञ्चदशाद्वर्षात् कृत्वा तत्प्रतिरूपकम् । कुर्य्यात्तस्य तु संस्कारं यथोक्तविधिना

प्रश्नदूती स्त्री प्रश्नस्य दूतीव । प्रहेलिकायाम् त्रिका० ।

प्रश्नविवाक पु० सतान् प्रश्नान् विवक्ति उत्तरयति वि+वच-कर्त्तरि संज्ञायां घञ् । प्रश्नोत्तरदायके ज्योतिर्विद्भेदे “मर्य्यादायै प्रश्नविवाकम्” यजु० ३०।१० वेददी० ।

प्रश्नव्याकरण पु० प्रश्नान् शिष्यकृतप्रश्नान् व्याकरोति उत्तरयति वि+आ+कृ-ल्यु ६त० । १जैनभेदे हेमच० । भावे ल्युट् । २पृष्टार्थोत्तरदापने न० ।

प्रश्नि पु० ।ऋषिभेदे भा०आ०२६अ० । प्रच्छ-बा०नि वा ङीप् । २कृष्णिपाकायां ( पाना ) त्रिका० ।

प्रश्नोपनिषद् प्रश्नाधिकारेण प्रवृत्ता उपनिषत् । आथर्वणोपनिषद्भेदे “भगवन् ! कुतो ह वा इमाः प्रजाः प्रजायन्ते” इत्यादि षट्प्रश्नाधिकारेण तस्याः प्रवृत्तेस्तथात्वम् ।

प्रश्रय पु० प्र+श्रि-करणे अच् । प्रणये अमरः ।

प्रश्रित त्रि० प्र+श्रि-क्त । १विनीते अमरः शान्तिदेवस्य २पुत्रभेदे पु० भाग० ९ २४ २५

प्रश्लथ त्रि० प्रकृष्टः श्लथ प्रा०स० । प्रकृष्टे शिथिले त्रिका० ।

प्रश्लिष्ट त्रि० प्र+श्लिष-क्त । सम्यक्कृते कृशिलष्टे आश्रिता० नाद्याव्लोटास्तत्र ।

प्रश्वास पु० प्र+श्वस-भावे घञ् । कोष्ठस्य वायोर्वहिर्निःसारणे “श्वासप्रश्वासयोर्गतिविच्छेदः प्राणायामः” पा०त० सू० भाष्यम् । कृष्णवत्मर्त्मि २।१४१० दृश्यम् ।

प्रष्ट त्रि० प्रच्छ-तृच् । प्रश्नकारके स्त्रियां ङीप् ।

प्रष्टि पु० प्रच्छ-कर्त्तरि बा० ति । वाहनमध्यवर्तिनि अश्वभेदे ऋ० १।३९।६

प्रष्ठ त्रि० प्र+स्था क “प्रष्ठोऽग्रगामिनि” पा० षत्वम् । १अग्रगामिनि । २श्रेष्ठे च अमरः । तस्य पत्नी ङीप् । ३तत्पत्न्यां स्त्री । गौरा०ङीष् । ४वत्सकोषध्यां स्त्री राजनि० ।

प्रष्ठवाह् त्रि०प्रष्ठं वहति वह-ण्वि । १युगप्रान्ते प्रथमयोजिते दम्ये गवादौ अमरः युगपार्श्वे योजिते गवादिके शिक्षार्थं यं प्रथमं वाहयति तस्मिन् । भत्वे वाह ऊठ् प्रष्ठौहः प्रष्ठौहा इत्यादि । स्त्रियां ङीप् प्रष्ठौही तथाविधस्त्रियाम् २प्रथमगर्भिण्यां गवि धरणिः ।

प्रस प्रसवे भ्वा० आ० सक० शिता० आ० सेट् । प्रसते अप्रसिष्ट । षित् घटादि मित् प्रसयति ते ।

प्रसक्त त्रि० प्र+सञ्ज-क्त । १प्रसङ्गविषये “प्रसक्तं हि प्रतिषिध्यते” मीमांस० । २नित्ये नित्यतायुक्ते त्रि०जटा० ।

प्रसक्ति स्त्री प्र+सञ्ज-भावे क्तिन् । १प्रसङ्गे २आपत्तौ ३अनुमितौ दीधितिः । ४व्याप्तौ च “अतिप्रसक्तिरन्यधर्मत्वे” सा०सू० । अतिव्याप्तिस्तदर्थः । [१०] भाष्ये दृश्यम् ।

प्रसक्तिन् पु० प्र+सञ्ज-बा० घिनुन् । प्रसङ्गनयोके ऋ०८।१९।

प्रसंख्यान न० प्र+सम्+ख्या-भावे ल्युट् । १सम्यग्ज्ञाने “हरः प्रसंख्यानपरो बभूव” कुमा० । प्रा०स० । २प्रकर्षेण संख्यायुते त्रि० भा० व० १२१अ० ।

प्रसङ्ग पु० प्र+सञ्ज-भावे घञ् । १प्रकृष्टसङ्गे २व्याप्तिरूपे सम्बन्धे यथाऽतिप्रसङ्गः अप्रसङ्ग इत्यादौ ३सङ्गतिभेदे “अप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा । निर्वाहकैककार्य्यत्वे षोढा सङ्गतिरिष्यते” । तत्र “प्रसङ्गत्वम् स्मृतत्वे सत्युपेक्षानर्हत्वं तच्च स्मृतिविषयतापन्नत्वे सति द्वेषविषयतानापन्नत्वम्” अनुमितौ गदाधरः । ४अनुरक्तत्वे ५प्रस्तावे ६मैथुनासक्तौ ७प्राप्तौ च “कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम्” व्या०परिभाषा । तत्र प्रसङ्गः प्राप्तिरेव “शब्दान्तरम् प्राप्नुवन् विधिरनित्यो भवति शब्दान्तरात् प्राप्नुवतः शब्दान्तरेऽप्राप्नुवतश्च लक्षणान्तरेण प्राप्नुवन् विधिरनित्यः” नागेशः । कचित् कृताकृतप्रसङ्गमात्रेणापि नित्यता” व्या० परिभाषा । प्रसङ्गशब्देन प्राप्तिरेव प्राहृता । अन्योद्देशेन प्रवृत्तौ अन्यस्यापि इष्टिसौ तत्र यथान्यस्य सिद्धिस्तथा तदुदाहरणादिकञ्च पा०त० उक्तं यथा “अन्योद्देशेन प्रवृत्तावन्यस्यापि सिद्धिः प्रसङ्गः यथा पश्वर्थमनुष्ठितेन प्रयाजादिना पशुतन्त्रमध्यपातिनः पुरोडाशस्यापि उपकारः सिध्यति । यथा वा “तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा भवति वाजिभ्यो वाजिनम्” इत्यामिक्षार्थं प्रवृत्तौ अनुद्देश्यवाजिनस्यापि सिद्धिः” । यथा वा काम्ययागनित्यत्वर्थमनुष्ठितैराग्नेयादिभिर्नित्ययागादिसिद्धिरिति मिताक्षरोक्तम् यथा दण्डनिपातप्रायश्चित्तेनैव गुरुणा तदान्तरीयकावयोरप्यप्रायश्चित्तमपि सम्पद्यत इति प्रायश्चित्तविवेकोक्तम् । तथा ब्राह्मणवधोद्देशेन द्वादशवार्षिके कृते चात्रियवधनिमित्तकत्रैवार्षिकप्रायश्चित्तस्य सिद्धिः । एतच्च तन्त्रप्रसङ्गयोरनाश्रुतेनैव कर्मणा नानादृष्टकत्वसिद्धौ नाधकमेव हेतुः । मन्त्रगोरणक्षत्रियवधप्रायश्चित्तयोः कथं प्रसङ्गेन सिद्धिः सङ्कल्पादेरभावात्, तयोः सङ्कल्पादिः कुत इति चेत् प्रायश्चित्तत्वात् तथात्वेऽपि कथं सङ्कल्प इति चेत् काम्यत्वात्” । “एतच्च काम्यस्य सर्वाङ्गाधिकरणे सर्वाङ्गोपेतस्यैव फलभक्त्वाभिधानात् तस्यापि प्रसङ्गविषयत्वे काम्ये हि काम्याभिलापतहितकृगतिलक्षणत्वागन्तुकः सङ्कल्पः याक्षार्थं प्रति प्रकृष्टास्तक

रणोक्तेन "प्रत्येकं नियतं कालमात्मनो व्रतमादिशेत्। प्रायश्चित्तमुपासीनो व्रतस्थतस्थिपवनं स्मरेत्" इति विधिवचने प्रत्येकं नियतं कालमिति तत्तद्व्रतकालसंख्याम् आत्मनो व्रतम् आत्मनस्त्यन्वितत्वेन आत्मकर्तृत्वेन इति यावत्। तेनात्मकव्रतमकुर्वन्[?] इति चादिशेदुक्तेन कुर्यात् इत्यनेन प्राप्तस्य सङ्कल्पस्य बाधः" इत्याशङ्क्य तत्र समाहितं यथा "प्रायश्चित्तस्य नित्यत्वेनाङ्गवैकल्येऽपि सम्यग्विधिः"। अत्रेदं बोध्यम् प्रसङ्गत्वेन व्याप्तिरेवोच्यते तथा चोद्दिष्टकर्मणा व्याप्तस्य यत्र विहितत्वेनास्य प्रवृत्तिः। उद्दिष्टकर्मणः व्याप्यत्वम् देशकालकर्त्रादीनां प्रयोगानुबन्धिनां वैधहेतुभूतानामैक्ये भवति अतस्तत्सम्बन्धादत्रापि कालदेशाद्यन्तर्भावेनैव व्याप्यता"।

प्रसङ्गसम पु॰ स्थापनाहेतुप्रयोगे प्रतिषेधहेतुरूपजात्युत्तरभेदे "दृष्टान्तस्य कारणानपदेशात् प्रत्यवस्थानाच्च प्रतिदृष्टान्तेन प्रसङ्गप्रतिदृष्टान्तसमौ" गौ॰५।१।९ "साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गे प्रत्यवस्थानं प्रसङ्गसमः प्रतिषेधः क्रियाहेतुगुणयोगी क्रियावाल्लोष्ट इति हेतुर्नोपदिश्यते। न च हेतुमन्तरेण सिद्धिरस्तीति। दृष्टान्तस्य कारणं प्रमाणं तदनपदेशोऽनभिधानम् अभिधानं चागतिप्रयोजनकं तथा च दृष्टान्तस्य साध्यवत्त्वे प्रमाणाभावाभावात् प्रत्यवस्थानमर्थः। यद्यपीदं सदुत्तरमेव तथापि दृष्टान्ते प्रमाणं वाच्यं तत्रापि प्रमाणान्तरमित्यनवस्थया प्रत्यवस्थाने तात्पर्यं तदुक्तमाचार्यैरनवस्थाभासप्रसङ्गः प्रसङ्गसम इति एतन्मते हेतोर्हेत्वन्तरमित्यनवस्थाऽपि प्रसङ्गसम एव पूर्वमते तु हेत्वनवस्थादिकं वक्ष्यमाणाकृतिगणेऽन्तर्भूतमिति विशेषः। अनवस्थादेशनाभासा चेयं प्रतिदृष्टान्तसमः प्रत्येतव्यः" वृत्तिः। अस्योत्तरं तत्रोक्तम्। "प्रदीपादानप्रसङ्गनिवृत्तिवत्तद्विनिवृत्तिः" गौ॰सू॰ "इदं तावदयं पृष्टो वक्तुमर्हति अथ के प्रदीपमुपाददते किमर्थं वेति दिदृक्षमाणाः दृश्यदर्शनार्थमिति। अथ प्रदीपं दिदृक्षमाणाः प्रदीपान्तरं कस्मान्नोपाददते अन्तरेणापि प्रदीपान्तरं दृश्यते प्रदीपः तत्र प्रदीपदर्शनार्थं प्रदीपोपादानं निरर्थकम्। अथ दृष्टान्तः स किमर्थमुच्यत इति। अप्रज्ञातस्य ज्ञापनार्थमिति अथ दृष्टान्ते कारणापदेशः किमर्थं क्रियते यदि प्रज्ञापनार्थम् प्रज्ञातो दृष्टान्तः स खलु लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्त इति तत्प्रज्ञापनार्थः कारणापदेशो निरर्थक इति प्रसङ्गसमस्योत्तरम्"। प्रसङ्गसमे प्रत्युत्तरमाह। दृष्टान्तो हि निदर्शनस्थानत्वेन साध्यनिश्चयार्थमपेक्ष्यते न तु दृष्टान्तदृष्टान्ताद्यनवस्थितपरम्परा लोकसिद्धा युक्तिसिद्धा वा अन्यथा घटादिप्रकाशार्थं प्रदीप इव प्रदीपप्रकाशार्थमनवस्थितप्रदीपपरम्परा प्रसज्येत तदीयसाधनमपि व्याहन्येत" वात्स्या॰।

प्रसज्य पु॰ भीमो भीमसेनवत् प्रसज्यप्रतिषेधस्यान्त्यलोपः। प्रसज्यप्रतिषेधे अत्यन्ताभावे अत्र रोगीति निन्दाश्रयत्वात् प्रसज्यता" मल॰त॰ रघु॰।

प्रसज्यप्रतिषेध पु॰ प्रसज्य प्रसक्तिं सम्पाद्यारोप्येति यावत् प्रतिषेधः। अत्यन्ताभावे "प्रसक्तं हि प्रतिषिध्यते" इति न्यायेन आरोपितप्रसङ्गस्यैव निषेधः तेन वायौ रूपं नास्तीत्यादावपि वायौ रूपारोपं कृत्वैव निषेधो नञा बोध्यते इति विवेकः। कलङ्काचिकरणशब्दे १७७७पृ॰ नञ्शब्दे २११२ पृष्ठादौ मतभेदेन नञः पर्युदासप्रसज्यप्रतिषेधपरता दृश्या। "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता। प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्" शाब्दिकाः। न तवस्तं भवयेदित्यत्र स्तवनिषेधसाधनत्वविशिष्टेष्टसाधनत्वरूपस्य विध्यर्थस्याभावो नञा बोध्यते तेन विधेरप्राधान्यं नञर्थाभावस्य च प्राधान्यं तेन तत्र क्रियापदान्वयिनञ्प्रसज्यप्रतिषेधार्थकः। गुरुमते तु तवस्तभक्षणाभावविषयकं कार्यमिति बोधेन अभावविशेष्यकबोधेऽपि प्रतिषेधस्य प्राधान्यात् तथात्वं तथा च तन्मते क्वचित् विधेरप्राधान्येन क्वचित्तु प्रतिषेधस्य प्राधान्येन इति व्यस्तमेव प्रसज्यप्रतिषेधप्रबोधकप्रयोजकमिति बोध्यम्।

प्रसत्ति स्त्री प्र+सद–क्तिन्। १नैर्मल्ये २प्रसन्नतायाम् जटा॰

प्रसत्वन् पु॰प्र+सद-वनिप्। १धर्मे २प्रजापतौ च सं॰उणा॰। ३प्रतिपत्तौ स्त्री ङीप् वनोर च। [बन्धौ च।

प्रसन्धि पु॰ १मनुपुत्रभेदे भा॰आश्व॰४अ॰। मा॰त॰। २प्रबन्ध-

प्रसन्न त्रि॰ प्र+सद--कर्त्तरि क्त। १निर्मले २सन्तुष्टे ३कतकवृक्षभेदे अमरः। ४सुरायां स्त्री मेदि॰ "प्रसन्ना मुखमत्तातार्थैर्विलम्बात्माह्नायिनी। शूकप्रशान्तिकाटोपककुवातार्थवांहिता" राजवल्लभः। तस्य भावः तल् प्रसन्नता स्त्री त्व प्रसन्नत्व न॰ अनुग्रहे प्रसादे नैर्मल्ये च।

प्रसन्नात्मन् त्रि॰प्रसन्नो निर्मल आत्मा यस्य। १प्रसन्नान्तःकरणे २विष्णौ पु॰ "सुप्रसादः प्रसन्नात्मा" विष्णुस॰। तत्स्वरूपस्य विदोषत्वात्तथात्वम्।

तिभिः” इति। गौणकालेऽप्यसम्भवे यमः “दिवोदितानि कर्माणि प्रमादादकृतानि चेत्। शर्वर्य्याः प्रथमे यामे तावत् कुर्य्याद्यथाक्रमम्”। अत्र मुख्यकालानुरोधात् सायंसन्ध्योपासनं पूर्वं कृत्वा “प्रागन्तु यागन्ते निवेशः” इति न्यायेनातीतकालं कर्म पश्चात् कार्य्यमिति न्यायतः प्राप्तं तस्य निषेधार्थं यथाक्रममिति वचनमिति। “दिवोदितानि कर्माणि प्रागुक्तान्यितराणि च। दिवोदितानि कुर्वीत विदध्यादुत्तराणि तु” मदनपारिजाते वशिष्ठोक्तेः। सूतके विशेषः सूतके इत्युपक्रम्य “अवगाहं च्छायायाः तीरजस्यच्च वर्जयेत्” इति “स्नानं सन्ध्यां जपन् विप्रः अग्राह्याद्दूरतो व्रजेत्। तस्मात् स्नानञ्च सन्ध्याञ्च सूतकेऽपि न सन्त्यजेत्। सूतके मृतके चैव सन्ध्याकर्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः” इत्यनयोरविरोधाय न मानससन्ध्यानिषेध इति कल्पतरुः। किन्तु प्राणायाममन्त्रा मनसापि नोच्चार्य्या इत्यर्थः। पैठिनसिस्तु “सूतके सावित्र्याञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्यात्” इत्यर्घ्यदानान्तां सन्ध्यामाह। अन्ये तु सन्ध्यायां गायत्रीं दद्यादर्घ्याञ्जलिमपि। अष्टविंशतिकृत्वोऽपि गायत्रीं मनसा जपेत्” इति गायत्रीजपमप्याहुः। “सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते” इति यद्यपि सन्ध्यानिवृत्तिः श्रूयते तथाप्यञ्जलिप्रक्षेपादिकं कार्य्यम्। ‘सूतके सावित्र्या चाञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्य्यं ध्यायन्नमस्कुर्यादिति” पैठिनसिस्मरणात् इति मिताक्षरा सन्ध्यादीनामप्यपवादमाह्नाचारार्के पुलस्त्यः “सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत्। न त्यजेत् सूतके वापि त्यजन् गच्छेदधो द्विजः। सूतके मृतके चैव सन्ध्याकर्म समाचरेत्। मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः” ?। यत्तु चन्द्रिकायां जावालः “सन्ध्यां पञ्च महायज्ञान् नैत्यिकं स्मृतिकर्म च। तन्मध्ये हापयेत्तेषां दशाहान्ते पुनः क्रिया” यच्च संवर्त्तः “सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते” यच्च विष्णु पु० “सर्वकामसमृद्धा तु सन्ध्ययोः पार्थिवेश्वरे। अन्यत्र सूतकाशौचविभ्रमातुरभीतितः” इति। तत् संपूर्णसन्ध्यानिषेधपरम्। “सन्ध्योक्ता मानसी सन्ध्या कुशवारिविवर्जिता” इति शुद्धिदीपे व्याघ्रोक्तेः। पैठीनसिः स्मृते मन्त्रोच्चारणमप्याह” सूतके सावित्र्याञ्जलिं प्रक्षिप्य सूर्य्यं ध्यायन्नमस्कुर्यात्”। प्रयोगपारिजाते भरद्वाजोऽपि “सूतके मृतके कुर्य्यात् प्राणायाममन्त्रकम्। तथा मार्जनमन्त्रांस्तु मनसोच्चार्य्य मार्जयेत्। गायत्रीं सम्यगुच्चार्य्य सूर्य्यायार्घ्यं निवेदयेत्। मार्जनं तु न वा कार्य्यमुपस्थानं न चैव हि”। इत्येवं मिताक्षरापरिजातादौ आशौचे सन्ध्याकरणविशेषस्योक्तेः गौडानां तदनाचरणमनाचार एव तस्य शीतत्वेन कृत्वा बाधानुचितत्वादपि मिताक्षराद्युक्तं युक्तमिति सुष्ठम्।

प्रातःसवन न० सवनं यज्ञाङ्गकर्मभेदः सोमाभिषवादि प्रातः कर्त्तव्यम् सवनम्। प्रातःकर्त्तव्ये यज्ञाङ्गकर्मभेदे। अप प्रातःसव तत्रार्थे पु०।

प्रातःस्नान ७त०। प्रातःकर्त्तव्ये जलावगाहनादिरूपे स्नाने तस्य कर्माङ्गतादुक्तं गरुडपु० “उषः काले तु संप्राप्ते कृत्वा चावश्यकं बुधः। स्नायान्नदीषु शुद्धासु शौचं कृत्वा यथाविधि। प्रातःस्नानेन पूयन्ते येऽपि पापकृतो जनाः। तस्मात् सर्वप्रयत्नेन प्रातःस्नानं समाचरेत्। प्रातःस्नानं प्रशंसन्ति दृष्टादृष्टकरं हि तत्। सुखसुप्तस्य सततं लालाद्याः संस्रवन्ति हि। अतो नैवाचरेत् कर्मोण्यकृत्वा स्नानमादितः। अलक्ष्मीः कालकर्णी च दुःस्वप्नं दुर्विचिन्तितम्। प्रातःस्नानेन पापानि धूयन्ते नात्र संशयः। न च स्नानं विना पुंसां प्राशस्त्यं कर्म संस्मृतम्। होमे जप्ये विशेषेण तस्मात् स्नानं समाचरेत्। अशक्तावशिरस्कन्तु स्नानमस्य विधीयते”।

प्रातःस्मरणीय त्रि० ७त०। प्रातःकीर्त्तनीये देवादौ पुण्यचरिते। प्रभातशब्दे ४४७५ पृ० दृश्यम्।

प्रातर् अव्य० प्र+अत–अर। प्रभाते अमरः “प्रातःकाले सुक्षणं स्योनि”ति श्रुतौ सूर्य्योदयावधिमुहूर्तकाले च

प्रातर त्रि० प्रकृष्ट आतरो यत्र। प्रकृष्टातरयुक्ते देशे ततः अश्वा० चतरर्थ्यां फञ्। प्रातरीय तत्सन्निकृष्टदेशादौ त्रि०।

प्रातरह्नक पु० सर्पभेदे भा० आ० ५७अ०।

प्रातरनुवाक पु० प्रातःपाठ्ये अनुवाके वेदांशभेदे यज्ञे “प्रातरनुवाकं उपाकुर्यात्” कात्या० श्रौ० ९।१।१५ “पुरा प्रातरनुवाकस्य” शत० ब्रा० “प्रातरनुवाकस्य प्रारम्भात्” भा० “अप्रगीतमन्त्रसाध्यं शस्त्रं यत् प्रातःकाले पठ्यते प्रातरनुवाकस्तस्येति यावत्” आनन्द०। {त्रिका०

प्रातराश पु० अश+भावे घञ् ७त०। प्रातःकालिके भोजने

प्रातर्गेय पु० प्रातर्गीयते। स्तुतिपाठके त्रिका० २प्रातःकाले गातव्ये सामादौ च त्रि०।

**प्रातर्दिन** न० कर्म० । पूर्ववर्त्तिनि दिवसे शिकाण्डशेषः ।

**प्रातर्भोक्तृ** पु० ७त० । काके शब्दच० ।

**प्रातर्भोजन** न० ७त० । प्रातराशे जटाध० ।

**प्रातस्तरा(मा)म्** अव्य० प्रातर्+तरप् तमप् वा आमु । अत्यन्तप्रातःकाले “प्रातस्तरां पतत्रिभ्यः” भट्टिः ।

**प्रातस्त्रिवर्गा** स्त्री प्रातः प्रातःस्नानेन त्रिवर्गो यस्याः । गङ्गायां भा०अनु० २६अ० ।

**प्राति** स्त्री प्रा+भावे क्तिन् । १पूर्त्तौ २व्याप्तौ च मेदि० ।

**प्रातिकण्ठिक** त्रि० प्रतिकण्ठं गृह्णाति प्रतिकण्ठ+ठक् । प्रतिकण्ठग्राहके ।

**प्रातिका** स्त्री प्र+अत–ण्वुल् टाप् । जवापुष्पे राजनि० ।

**प्रातिकामिन्** दुर्य्योधनस्य दूतभेदे भा०भी० ६५अ० ।

**प्रातिकूलिक** त्रि०प्रतिकूलं वर्त्तते प्रतिकूल+ठञ् । प्रतिकूलं वर्त्तमाने स्त्रियां ङीप् “तां प्रातिकूलिकीं मत्वा” भट्टिः

**प्रातिक्य** न० प्रतिकस्य भावः पुरोहिता० यक् । प्रतिकभावे

**प्रातिजनीन** त्रि० प्रतिजनं साधु प्रतिजना० खञ् । प्रतिजनं साधौ । कात्या०श्रौ०२५।१२।४

**प्रातिनिधिक** पु० प्रतिनिधि+स्वार्थे ठक् । प्रतिनिधौ

**प्रातिपथिक** त्रि०प्रतिपथमेति ठञ् । प्रतिपथं गन्तरि स्त्रियां ङीप् । [तिथौ भवे ।

**प्रातिपद** त्रि० प्रतिपदि भवः सन्धिवेला० अण् । प्रतिपदि-

**प्रातिपदिक** त्रि० प्रतिपदायां तिथौ भवः “कालाट् ठञ्” पा०ठञ् । १प्रतिपदायां तिथौ भवे २तत्राविर्भूते वह्नौ पु० “आदौ प्रतिपदा येन त्वमुत्पन्नोऽसि पावक ! । त्वत्पदात् प्रातिपदिकं संभविष्यन्ति देवताः” वराहपु० । ३नाम्नि शब्दभेदे “यत् प्रातिपदिकं नाम तच्चाख्यो नातिरिच्यते” शब्दच०। तल्लक्षणन्तु “अर्थवदधातुरप्रत्ययः प्रातिपदिकम्” “कृत्तद्धितसमासाश्च” पा०व्याख्याते चैते सरलायामस्माभिः “अधातुरप्रत्यय इति प्रसज्यनिर्देशस्य पर्य्युदासस्य च तत्पुरुषयोरित्यभिधानात् । तत्पुरुषे परपदे चार्थवत्त्वमेतत्सूत्राघटकीभूतविभक्तीतरसमभिव्याहारानपेक्षया लोकेऽर्थबोधजनकत्वम् अन्यथाऽधातुरिति पर्य्युदासेन व्याख्यानाद्धाऽर्थवत्त्वे धातुप्रत्ययान्यत्व सिद्धे उत्तरसूत्रे कृदादीनामनर्थकानामपि प्रातिपदिकत्वप्रसङ्गाद्व्यर्थं स्यात् । अहन्निति धातौ कार्य्ये इत्यादि प्रत्ययान्ते च एतत्कार्य्यविभक्त्यनपेक्षत्वेऽपि तदितरानपेक्षत्वरूपत्वेऽपि अधातुरप्रत्यय इति तत्पर्य्युदासः । एकदेशवर्णेऽर्थबोधजनकत्वाभावान्नातिप्रसङ्गः । अत्र प्रत्ययपदं प्रत्ययप्रत्ययान्तपरं तन्त्रादस्यैवोभयपरत्वादित्याह (प्रत्ययं प्रत्ययान्तञ्चेति) सि०कौ०)। अतएव भाष्ये “न लोके केवलेन प्रत्ययेनार्थोऽवगम्यते केन तर्हि सप्रकृतिकेन” इत्युक्तम् हरिणाप्युक्तम् । “धात्वादीनां विशुद्धानां लौकिकार्थो न विद्यते । कृत्तद्धितानामर्थश्च केवलानामलौकिकः । प्रात्यिभक्तेस्तदन्तस्य तथैवार्थो न विद्यते” इति । भू सत्तायामित्यादौ कर्मण्यणित्यादौ चार्थकथनन्तु अलौकिकार्थकथनमात्रं प्रक्रियादशायामिति वेदितव्यम् “ब्राह्मणार्थो यथा नास्ति कश्चिद् ब्राह्मणकम्बले । देवदत्तादयो वाक्ये तथैव स्युर्निरर्थकाः” इत्युक्तेरवयवशब्दस्यापि बोधकत्वात्तस्यापि प्रातिपदिकत्वापत्त्या तदुत्तरं स्वादिप्रसङ्ग इति तन्निवारणायेदं नियमसूत्रमित्याह “पूर्वसूत्रे चेति” सि०कौ०। प्रत्ययग्रहणे यस्मात् स विहितस्तदादेस्तदन्तस्य ग्रहणमिति न्यायादेव प्रत्ययान्तत्वलाभात् कृत्तद्धितादीनामपि प्रत्ययत्वात् पूर्वसूत्रेण संज्ञासिद्धेरिति भावः । पदमिति स्वान्तत्वेन प्रयोगार्हमर्थवदित्यर्थः । अनुकरणस्य शब्दमात्रपरतया न प्रातिपदिकत्वमनुकरणस्यानितिपरस्य प्रयोगार्हत्वेऽपि इतिपरस्य पृथक् प्रयोगार्हत्वादिति गविलयगाहेत्यादौ न प्रसङ्गः” हरिणाप्युक्तम् । अतएव “गवित्याह भू सत्तायामितीदृशम् । न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम्” । प्रातिपदिकार्थे द्योत्ये प्रथमैव । तदर्थश्च नामार्थाः “स्वार्थो द्रव्यञ्च लिङ्गञ्च संख्या कर्मादिरेव च । अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः” इत्युक्ताः । तत्र अलिङ्गा, नियतलिङ्गाश्च प्रातिपदिकार्थे प्रथमाया उदाहरणम्” सि० कौ० ।

**प्रातिपीय** पु० १नृपभेदे भा०द्रो०१५७अ०। २गोत्रप्रवरर्षिभेदे च प्रवराध्यायः ।

**प्रातिपेय** पु० नृपभेदे भा०स० ६८अ० ।

**प्रातिभ** त्रि० प्रतिभाऽस्त्यस्य प्रज्ञा० अण् । १प्रतिभान्विते योगिनां योगविघ्नकारके २उपसर्गभेदे मार्कण्डेयपु० ४० अ० यथा “प्रातिभः श्रावणो दैवो भ्रमावर्त्तौ तथापरौ । पञ्चैते योगिनां योगविघ्नाय कटुकोदयाः । वेदार्थाः काव्यशास्त्रार्थाः विद्याः शिल्पान्यशेषतः । प्रतिभान्ति यदस्येति प्रातिभः१ स तु योगिनः । शब्दार्थानखिलान् वेत्ति शब्दं गृह्णाति चैव यत् । योजनानां सहस्रेभ्यः श्रावणः२ सोऽभिधीयते । समन्ताद्वीक्षते चाष्टौ स यदा देवतोपमः । उपसर्गन्तमप्याहुर्दैवं३ उन्मत्तवद् बुधाः । भ्राम्यते यन्निरालम्बं मनो दोषेण योगिनः । समस्ता-

त्यारविष्वग्भाद् भ्रमः४ स परिकीर्त्तितः। आवर्त्त इव तोयस्य ज्ञानावर्त्तो वहाशुचः। नाशवेश्चित्तमावर्त्तः५ अप-वर्गः स उच्यते। एतैर्नाश्रितयोगास्तु सकला देवयो-नयः। उपसर्गैर्महाघोरैरावर्त्तन्ते पुनःपुनः"।

**प्रातिभाव्य** न० प्रतिभुवो भावः ष्यञ् द्विपदवृद्धिः। (जा-मिनि) १प्रतिभूभावे प्रतिभूत्वेन देये २धने च मनुः ८।१५। ९८ दर्शनप्रतिभूशब्दे २४७५ पृ० दृश्यम्।

**प्रातिभासिक** त्रि० प्रतिभासादागतः ठक्। प्रतिभासाधीन सत्त्ववति मिथ्यारजतादौ वेदान्तमते हि सत्त्वं त्रिविधं पारमार्थिकं व्यावहारिकं प्रातिभासिकं च तत्र ब्रह्मणः सत्त्वं पारमार्थिकं त्रिकालाबाध्यत्वात्, घटादीनां सत्त्वं व्यावहारिकं व्यवहारकालेऽबाध्यत्वात्, शुक्तौ रजतादेः सत्त्वं प्रातिभासिकम् अधिष्ठानज्ञानबाध्यत्वात् प्रतिभास-कालमात्रसत्त्वाच्चेति वेदान्तपरिभाषायां स्थितम्।

**प्रातिशाख्य** त्रि० प्रतिशाखं भवः परिमुखा० ञ्य। प्रति-शाखं भवे व्याकरणभेदे न०।

**प्रातिश्रुत्क** पु० प्रतिश्रुति तद्ध्वनौ भवः ठञ्। प्रतिश्रवण-वेलायां भवे पुरुषे "यत्र यावं च्यौत्रः प्रातिश्रुत्कः पुरुषः" ह० उ०। [२प्रतिध्वनिभवे च।

**प्रातिस्विक** त्रि०प्रतिस्वं भवः ठक्। १असाधारणधर्मे त्रिका०।

**प्रातिहन्त्र** न० प्रतिहन्तुर्भावः कर्म वा उद्गाता० अञ्। प्रतिहर्त्तृरूपस्य ऋत्विग्भेदस्य कर्मणि १प्रतिहरणे २तद्भावे च।

**प्रातिहारक** पु० प्रतिहारक एव स्वार्थे अण्। प्रति-हारकशब्दार्थे अमरः। [कारके अमरः।

**प्रातिहारिक** त्रि० प्रतिहारः प्रयोजनमस्य ठक्। माया-

**प्रातीतिक** त्रि०प्रतीत्या निर्वृत्तः ठञ्। प्रातिभासिके पदार्थे

**प्रातीप** प्रतीपस्यायम् अण्। प्रतीपस्यापत्ये शान्तनौ नृपे त्रिका०। [कूलाचारिणि।

**प्रातीपिक** त्रि० प्रतीपं वर्त्तते ठञ्। प्रतीपं वर्त्तमाने प्रति-

**प्रात्तृद** पु० ऋषिभेदे शत०ब्रा० १४।८।१४।२

**प्रात्ययिक** त्रि० प्रत्ययाय स्थितः ठक्। प्रतिभूभेदे "दर्शनप्र-तिभूर्यत्र सतः प्रात्ययिकोऽपि वा" याज्ञ०। दर्शनप्रतिभू-शब्दे २४७८ पृ०दृश्यम्।

**प्राथमकल्पिक** त्रि० प्रथमकल्पे भवः ठक्। १प्रथमारम्भोचिते वेदाध्ययनादौ। प्रथमं कल्पमधीते कल्पान्तत्वात् ठक्। २प्रथमकल्पस्थविद्याध्ययनाध्यायिनि अमरः।

**प्राथमिक** त्रि० प्रथमे भवः ठञ्। १प्रथमभवे स्त्रियां ङीप्। प्रथममधीते प्रथम+ठक्। वेदादेः २प्रथमाध्येतरि च।

**प्रादि** पु० उपसर्गसंज्ञार्थं पा०उक्ते शब्दभेदे स च गणः पा० ग०उक्तो यथा "प्र परा अप सम् अनु अव निस् निर् दुस् दुर् वि आङ् नि अधि अपि अति सु उत्(द्) अभि प्रति परि उप" इते प्रादयः। निस् दुस् शब्दौ "निसनिक्षनिन्दाम् सेवने इति (८।४।३३) सूत्रे निस इति निर्देशात् निष्कृतं दुष्कृतमित्युदाहृत्य "इदुदुपधस्य चाप्रत्ययस्य विसर्जनीयः" इति भाष्योक्तेश्च। निरः कुषः इति (७।२।४६) "स-दुरोरधिकरणे" इति च निर्देशात् रान्तावपि सन्तौ०। उदिति दान्तोऽपि "उदोऽनूर्द्ध्वकर्मणीति"।

"उपसर्गाः क्रियायोगे" पा० "गतिश्च" पा० प्रादयः क्रिया योगे उपसर्गसंज्ञा गतिसंज्ञाश्च स्युः" सि०कौ०।

**प्रादुराक्षि** पु० गोत्रप्रवर्त्तकभेदे प्रवराध्यायः।

**प्रादुर्भाव** पु० प्रादुस्+भू—भावे घञ्। आविर्भावे प्रकाशप्रकाशे

**प्रादुस्** अव्य० प्र+अद—उसि। प्राकाश्ये स्वरा० अस्य क्रिया-योगे गतिसंज्ञा प्रादुष्कृत्य प्रादुर्भूय। साते अस न हि० लोपः प्रादुश्च प्रादुर्भावे न० अजञ्जवदतः।

**प्रादेश** पु० प्र+दिश—घञ् दीर्घः। १तर्जनीसहितविस्तृताङ्गुष्ठे अमरः २देशमात्रे मेदि० "अङ्गुष्ठस्य प्रदेशिन्या व्यासः प्रादेश उच्यते" इत्युक्ते ३परिमाणभेदे च देवीपु०।

**प्रादेशन** न० प्र+आ+दिश—ल्युट्। दाने अमरः।

**प्रादेशिक** त्रि० प्रदेशे भवः ठक्। प्रदेशभवे [स्त्रियां ङीप्।

**प्रादोष(षि)क** त्रि० प्रदोषे भवः वा अण्ठञौ। प्रदोषभवे

**प्राद्योतनि** पु०स्त्री प्रद्योतनस्यापत्यम् इञ्। तदपत्ये। ततः यूनि फञ् तौल्व० तस्य न लुक्। प्राद्योतनायनि तदीये यून्यपत्ये पुंस्त्री०। [करणे भाग०१।८।११।

**प्राधनिक** त्रि० प्रधनं संग्रामः प्रयोजनमस्य ठक्। युद्धोप-

**प्राधा** स्त्री प्रधैव स्वार्थे अ। दक्षकन्याभेदे कश्यपकलत्रभेदे हरिवं०२२६अ०। तस्याः अपत्यं ढक्। प्राधेय तदपत्ये पुंस्त्री० तदपत्यानि च देवगन्धर्वादयः भा०आ०६५ अ०। अग्निपुराणे प्राधेया इत्येव पाठः शब्दकल्पद्रुमे प्राधेय शब्दकल्पनं लिपिकरप्रमादकृतपाठदर्शनात् इति बोध्यम्।

**प्राधानिक** त्रि० प्रधान+स्वार्थे ठक् तस्येदं ठक् वा। १प्रधानशब्दार्थे २प्रधानसम्बन्धिनि च "प्राधानिकरहस्य" इत्यादि देवीमाहात्म्यव्याख्यायां गुप्तवत्यां स्थितम्।

**प्राधान्य** न० प्रधानस्य भावः ष्यञ्। च्योतने। भावे त्वप्रधा-नत्व न० तल् प्रधानता स्त्री तत्रार्थे। "अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता" साहित्यकारिका।

**प्राध्व** त्रि० प्रकृष्टोऽध्वा अच्समा० । १दूरपथे २प्रह्वे नम्रे ३बद्धे च हेमच० अ०मी० । ४बद्धदूरगामिनि रथादौ च ।

**प्राध्वम्** अव्य० प्र+आ+ध्वन–डमि. । १आनुकूल्ये २बन्धने ३नम्रतायाञ्च अमरः ।

**प्रान्त** पु० प्रकृष्टोऽन्तः । १शेषसीमायाम् हेमच० । २ऋषिभेदे पु० । ततः गोत्रापत्ये अश्वा० फञ् । प्रान्तायन तदपत्ये पु'स्त्री० । [शब्दार्थचि०।

**प्रान्तदुर्ग** न० प्रान्ते दुर्गं न्पाश्रयस्थानभेदः । दुर्गभेदे

**प्रान्तर** न० प्रकृष्टमन्तरं व्यवधानं यत्र । १दूरगम्ये पथि । २छायादिहीनायाशून्ये पथि ३वने ४कोटरे च मेदि० ।

**प्रान्तशून्य** पु० प्रान्ते शून्यमस्य । छायादिरहिते पथि शब्दर०

**प्रापथिक** पु० प्र+आ+पथ–"प्राक्ति पथिकपः" उणा० किकन् । पण्यविक्रेतरि उज्ज्वलद० ।

**प्राप्त** त्रि०प्र+आप–कर्मणि कर्त्तरि वा क्त । १लब्धे २आसादिते ३भूते अमरः । ४उपस्थिते च ।

**प्राप्तकाल** पु० प्राप्तः कालोऽस्य । करणयोग्ये काले १।१। १२२ पा० सूत्रे दृश्यम् ।

**प्राप्तपञ्चत्व** त्रि० प्राप्तं पञ्चत्वं मरणं येन । मृते अमरः । मरणे देहस्य पञ्चभूतात्मकताप्राप्तेस्तस्य तथात्वम् । प्रेतशब्दे दृश्यम् । [दृष्टादौ शब्दरत्ना० ।

**प्राप्तभार** पु० प्राप्तः भारः तद्वहनकालोऽस्य । भारवह-

**प्राप्तरूप** त्रि० प्राप्तं रूपं येन । १मनोहरे २पण्डिते अमरः । ३उज्ज्वले च ।

**प्राप्ति** स्त्री प्र+आप–भावे क्तिन् । १उदये २धनादिसङ्गौ ३लाभे च अमरः । ४प्रापणे ५संहतौ शब्दरत्ना० अणिमाद्यष्टविधैश्वर्यमध्ये ६ऐश्वर्यभेदे ऐश्वर्यशब्दे दृश्यम् । बार्हद्रथजरासन्धस्य पत्नीभेदे ७कंसकलत्रभेदे भा०स० १४अ० । हरिवं० ८१अ० "अप्राप्तस्यैव या प्राप्तिः सैव संयोग उच्यते" भाषा० उक्ते ८संयोगस्वरूपे द्रव्यगुणभेदे च । सा०द०उक्ते ९सन्ध्यङ्गभेदे "युक्तिः प्राप्तिः समाधानमिति" सन्ध्यङ्गान्युद्दिश्य "संप्रधारणा चार्थानां युक्तिः, प्राप्तिः सुखागमः" लक्षितौ । कामस्य भार्याभेदे मा० आ० २६अ० । नीलक०ता० उक्ते दशरूपभेदे ।

**प्राप्तिसम** न० गौ०उक्ते जात्युत्तरभेदे "प्राप्य साध्यमप्राप्य वा हेतोः प्राप्त्या विशिष्टत्वात् प्राप्तिसमः" सू० । "हेतुः प्राप्य वा साध्यं साधयेदप्राप्य वा ? । न तावत् प्राप्य । प्राप्त्याविशिष्टत्वादसाधकः द्वयोर्विद्यमानयोः प्राप्तौ सत्यां किं कस्य साधकं साध्यं वा ? । अप्राप्यसाधकं न भवति । नाप्राप्तः प्रदीपः प्रकाशयतीति । प्राप्त्या प्रत्यवस्थानं प्राप्तिसमः" वात्स्या० "प्राप्त्या विशेषादनिष्टापादनेन प्रत्यवस्थानम्" गौ०वृ० ५।७ यथा आत्मा च क्रियः क्रियाहेतुगुणवत्त्वादित्यादौ क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते । किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न ? उभयोरविशेषादिति" ।

**प्राप्त्याशा** स्त्री ६त० । १लाभेच्छायाम् २प्रारब्धकार्यस्यावस्थाभेदे "अवस्थाः पञ्च कार्यस्य प्रारब्धस्य फलार्थिभिः । आरम्भो यत्नप्रत्याशा नियताप्तिः फलागमः" इत्युद्दिश्य "उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवा" इति सा०द० लक्षिता ।

**प्राप्य** त्रि० प्र+आप–ण्यत् । १गम्ये २लभ्ये च ३व्याकरणोक्ते "क्रियाकृतविशेषाणां सिद्धिर्यत्र न विद्यते । दर्शनादनुमानाद्वा तत्प्राप्यमिह कथ्यते" इत्युक्ते ४कर्मभेदे कर्मन्शब्दे १७२०पृ० दृश्यम् । प्र+आप–ल्यप् । अप्त्वार्थे अव्य० ।

**प्राप्यकारिन्** त्रि० प्राप्य विषयदेशं गत्वा करोति विषयप्रकाशम् कृ–णिनि । विषयदेशं गत्वा विषयप्रकाशकारके चक्षुरादौ इन्द्रिये । तत्र न्यायमते चक्षुष एव प्राप्यकारिता नान्यस्य । वेदान्तमते श्रवणस्यापीति भेदः ।

**प्राबोधिक** पु० प्रबोधाय हितं ठक् । १उषःकाले शब्दमा० प्रबोधः प्रबोधनं तत्र नियुक्तः तत्प्रयोजनमस्य वा ठञ् । २मागधे प्रातःस्तुतिपाठकभेदे ।

**प्राभञ्जन** न० प्रभञ्जनो देवताऽस्य अण् । स्वातिनक्षत्रे तस्य तद्देवताकत्वात् तथात्वम् । तस्यापत्यम् इञ् । प्राभञ्जनि हनूमति "आयूंषि तस्य निर्भिद्य प्राभञ्जनिरमोचयत्" भट्टि० ।

**प्राभव** न० प्रभोर्भावः अण् । १प्रभुत्वे २श्रेष्ठत्वे च ।

**प्राभवत्य** न० प्रभवतो भावः ष्यञ् । विभुत्वे मनुः ८।४१२

**प्राभाकर** न० प्रभाकरस्य इदम् तन्मतं वेत्ति वा अण् । १मीमांसकभेदप्रभाकरसम्बन्धिनि २तन्मतज्ञे च ।

**प्राभृत** न०प्र+आ+भृ–कर्मणि क्त । उपढौकनद्रव्ये अमरः । स्वार्थे क । २प्राभृतक तत्रार्थे हारा० ।

**प्रामधि** पु० पौरवस्य वप्रर्षिमध्ये ऋषिभेदे हरिवं० ७अ० ।

**प्रामाणिक** त्रि० प्रमाणेन निर्वृत्तः स्थितः ठञ् । १प्रत्यक्षादिप्रमाणसिद्धे २शास्त्रसिद्धे च स्त्रियां ङीप् । ३हेतुके ४मर्य्यादाभिज्ञे ५शास्त्रज्ञे ६परिच्छेदके ७प्रमाणकर्त्तरि च ।

**प्रामाण्य** न० प्रमाणस्य भावः । तद्वति तत्प्रकारकत्वरूपे

शीर्षयोः प्रायश्चित्तभेदो यथा अङ्गिराः "अज्ञानतः कृते पापे प्रायश्चित्तं, न ज्ञानतः। ज्ञानकामकृते वस्तु द्विगुणं बुद्धिपूर्वके"। प्रायश्चित्ताचरणे दोषो यथा "आर्त्तानां मार्गमाणानां प्रायश्चित्तानि ये द्विजाः। जानन्तो न प्रयच्छन्ति तेऽपि तद्दोषभागिनः। अवश्यं तैरनाहूतैरष्टैरेव संवदि। प्रायश्चित्तं न वक्तव्यं जानद्भिरपि जल्पतः। व्यावृत्तो मार्गमाणस्य अभिवादैः प्रयाचितः। अन्तरा ब्राह्मणं कृत्वा व्रतमेतत् समादिशेत्" हारीतः "यथावयो यथाकालं यथाप्राणञ्च ब्राह्मणे। प्रायश्चित्तं प्रदातव्यं ब्राह्मणैर्धर्मपाठकैः। तस्मात् संक्षय-बाष्टर्हं पादं वापि (पादमेव भावी न्यूनम्)विधानतः। ज्ञात्वा वयोवयं कालं प्रायश्चित्तं प्रकल्पयेत्। अशक्तावनुग्रहमाह पराशरः। "दुर्बलेऽनुग्रहः कार्यस्तथा वै बालवृद्धयोः। अतोऽन्यथा भवेद्दोषस्तस्मान्नानुग्रहो भवेत्"। स्नेहादिनानुग्रहे दोषो यथा "स्नेहाद्वा यदि वा लोभाद् भयादज्ञानतोऽपि वा। कुर्वन्त्यनुग्रहं ये तु तत् पापं तेषु गच्छति। शक्तौ प्रायश्चित्तदानाकृतौ पश्चादनुग्रहः कार्य्य इत्याहाङ्गिराः "कृत्वा पूर्वं तदाकारं यथोक्तं धर्मशास्त्रिभिः। पश्चात् कार्य्योपकारेण भक्त्या कुर्य्यादनुग्रहम्"। वयसादिभेदात् प्रायश्चित्तं यथा "अशीतिर्यस्य वर्षाणि बालो वाप्यूनषोडशः। प्रायश्चित्तार्द्धमर्हन्ति स्त्रियो रोगिण एव च"। पापनिवर्त्तकोपायानाह मनुः "ख्यापनेनानुतापेन तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात्तथा दानेन चापदि"। आपदीत्यनेन अध्ययनतपोदानमनुकल्पत उक्तम्। एतद्धिंसाव्यतिरिक्तविषयम्। हिंसायान्तु दानं मुख्यम्। यथा भविष्ये "हिंसात्मकानां सर्वेषां कीर्त्तितानां मनीषिभिः। प्रायश्चित्तकदम्बानां दानं प्रथममुच्यते"। तथा मनुः "दानेन वधनिर्णेकं सर्पादीनामशक्नुवन्। एकैकशश्चरेत् कृच्छ्रं द्विजः पापापनुत्तये"। समाप्तप्रायश्चित्तान्याह संवर्त्तः "हिरण्यदानं गोदानं भूमिदानं तथैव च। नाशयन्त्याशु पापानि महापातकजान्यपि"। यमः "शोषणेन शरीरस्य तपसाऽध्ययनेन च। पापकृन्मुच्यते पापात् दानेन च दमेन च"। मनुः "कृत्वा पापं हि सन्तप्य तस्मात् पापात् प्रमुच्यते। नैवं कुर्य्यां पुनरिति निवृत्त्या पूयते नरः"। विष्णुपुराणम् "प्रायश्चित्तान्यशेषाणां कृष्णानुस्मरणं परम्"। यमः "नवाग्निहं देवपूजा वेदाभ्यासः सरित्प्लवः। नाशयन्त्याशु पापानि महापातकजान्यपि"। गौतमः "हिरण्यं गौर्वासोऽश्वो भूमिस्तिला घृतमन्नमिति देयानि"। समान्येवानादेशे विकल्पेन क्रियेरन् एनःसि लघूनि लघूनि गुरूणि गुरूणि"। विष्णुपुराणम् "एवं विषयभेदाद्धि अवस्थाप्यानि पुत्रक !। प्रायश्चित्तानि सर्वाणि गुरूणि च लघूनि च। अन्यथा हि महाबाहो! लघूनामुपदेशतः। गुरूणामुपदेशो हि निष्प्रयोजनतां व्रजेत्"। महाभारते "महापातकशतं कृत्वा कृतं गङ्गाभिषेचनम्। सर्वं दहति गङ्गाम्भस्तूलराशिमिवानलः"। शुद्धिकारणानि व्रतान्याह विश्वामित्रः "कृच्छ्रचान्द्रायणादीनि शुद्ध्यभ्युदयकारणम्। प्रकाशे वा रहस्ये वा संशयेऽनुक्तके स्मृते। प्राजापत्यं सान्तपनं शिशुकृच्छ्रं पराककः। अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यकृच्छ्रोऽतिकृच्छ्रकः। महासान्तपनः शुद्धो तप्तकृच्छ्रस्तु पावनः। जलोपवास संकृच्छ्र ब्रह्मकूर्च्चस्तु शोधकः। एते समस्ता व्यस्ता वा प्रत्येकमेकशोऽपि वा। पातकादिषु सर्वेषु पापकेषु प्रयत्नतः। कार्य्याश्चान्द्रायणैर्युक्ताः केवला वा विशुद्धये। शिशुचान्द्रायणं प्रोक्तं यतिचान्द्रायणं तथा। यवमध्यं तथा प्रोक्तं तथा पिपीलिकाकृति। उपपातकिनां सर्वं वा पापं यत्र तदर्हकम्। कृच्छ्रद्वादशरात्रादि कार्य्यं शुद्धिमभीप्सिना। उपपातकयुक्तानामनादिष्टेषु चैव हि। प्रकाशे च रहस्ये च अभिगम्याद्यपेक्षया। जातिशक्तिगुणान् दृष्ट्वा सकृद्बुद्धिकृतं तथा। अनुबन्धादिकं दृष्ट्वा सर्वं कार्य्यं यथाक्रमम्"। प्रकाशकृते पापे व्रतानि सूक्ष्माणि रहस्यकृते जपादीनि यथा प्राजापत्यादीन्यभिधाय मनुः "एतैर्द्विजातयः शोध्या व्रतैराविष्कृतैनसः। अनाविष्कृतपापांस्तु मन्त्रैर्होमैश्च शोधयेत्"। देवलः "प्रकाशे कृते यत्किञ्चित् त्रिंशभागो रहस्यके। त्रिंशभागः षड्भागः कल्प्यो ज्ञात्वाद्यपेक्षया" प्रा० वि०। क्वचिद्विषयभेदे प्रायश्चित्ताभावः यथोक्तं प्रा०त०

अथ गोवधाद्यपवादः। पराशरः "धूर्य्येषु वहनेषु दक्षे नाभिहतस्य च। काष्ठेन लोष्टुना वापि पाषाणेन तु ताडितः। मूर्च्छितः पतितश्चैव गतो वा यद्य एव च। एवं गतानां धूर्य्याणां प्रवक्ष्यामि यथाविधि। उत्थितस्तु पदं गच्छेत् पञ्च सप्त दशाथ वा। ग्रासं वा यदि गृह्णाति तोयं वा पिबति स्वयम्। पूर्वव्याधिविनष्टानां प्रायश्चित्तं न विद्यते" यदि व्याधिमयुक्तानां दमायां

ऋतयोजननाशेन अन्यतरदण्डाघातेन वा मूर्च्छया पतनं भवति अनन्तरं गमनं चाशादौ कृते मरणं भवति तदा गमनमात्रप्रहृतिपानैस्तदानीन्तनमरणे हेतुभावं निश्चित्य पूर्वव्याधिविनष्टत्वं ज्ञायते। यदि तु पूर्वव्याधिरहित एव प्रहारजनितव्याधिना ग्रासादि त्यक्त्वापि म्रियते तदा प्रायश्चित्तमस्त्येव। संवर्त्तः "यन्त्रणे गोचिकित्सार्थं मूढगर्भविमोचने। यत्ने कृते विपत्तिः स्यात् प्रायश्चित्तं न विद्यते। औषधं स्नेहमाहारान् दद्याद् गोब्राह्मणेषु च। प्राणिनां प्राणहन्तव्यं प्रायश्चित्तं न विद्यते। दाहच्छेदशिराभेदप्रयत्नैरुपकुर्वताम्। द्विजानां गोहितार्थं वा प्रायश्चित्तं न विद्यते" मूढगर्भः अन्तर्मृतगर्भः मुह वैचित्ये इत्यनेन तथार्थत्वात्। याज्ञवल्क्यः "क्रियमाणोपकारे तु मृते विप्रे न पातकम्। विपाके गोवृषाणाञ्च भेषजाग्निक्रियासु च"। विशेषमाहाङ्गिराः "शृङ्गभङ्गेऽस्थिभङ्गे च चर्मनिर्मोचनेऽपि वा। दशरात्रं चरेत् कृच्छ्रं सुस्था वा यदि गौर्भवेत्"। द्विजानां गवाञ्च हितार्थमित्यर्थः। अत्र प्राणरक्षार्थमाहारादिदानैर्मरणे दोषाभावस्य वाचनिकत्वात् गलबन्धाच्च मरणे नात्मघातादि। एवं "गोपालको गवां गोष्ठे धूमं वह्निं न कारयेत्। मक्षिकादीनमरके मक्षिकाभिः स भक्ष्यते" इति देवीपुराणानुसाराद्वह्निं प्रज्वाल्य तत्रैव स्थितस्य दैवाद्वह्निना मरणे दोषाभावः। तत्रास्थितस्य तु अपालननिमित्तगोवधजन्यदोषः। मिताक्षरायां पराशरः "कूपे खाते च धर्मार्थे गृहदाहे च ये मृताः। ग्रामदाहे तथा घोरे प्रायश्चित्तं न विद्यते" इदन्तु बन्धनरहितस्य पशोः कदाचित् दाहादिना मृतविषयम्। इतरदापस्तम्बोक्तम् "कान्तारेष्वथ वा दुर्गे गृहदाहाश्रयवटादिषु। यदि तत्र विपत्तिः स्यात् पाद एको विधीयते"। इति ज्ञेयम्। एतद्वचनं यमस्येति भवदेवभट्टः। चिकित्सायां पापाभावो यथावदुपचारे बोध्यः। न पुनः अविपाताभिभूतस्योदकपानादिना। अतएव मनुः "चिकित्सकानां सर्वेषां मिथ्याप्रचरतां दमः"। काश्यपोऽप्यत्र प्रायश्चित्तमाह "दोग्ध्री दमनातिदोहावाबाधादामघण्टाभरणयोजनात् तैलपानौषधविनियोगाद्व्यापन्नानां प्रायश्चित्तं ब्राह्मणेभ्यो विनिवेद्य सशिखवपनं कृत्वा प्राजापत्यकृच्छ्रमाचरेत्। चीर्णान्ते गां दक्षिणां ब्राह्मणाय दद्यात् धेनुं तिलधेनुं वेति"।

प्रायश्चित्तपूर्वोक्तकल्पम्। शङ्खलिखितौ "याम बैजनकालात् पूर्वं हतं ग्राम्य बहिर्निधि। प्रत्येकं नियतं वा० यथाक्रमो व्रतमादिशेत्। प्रायश्चित्तसमाप्तौ वाम-यतश्चित्तसवनं चरेत्"। वेदधारणेऽशक्तानां द्विगुणव्रतमादिकमाह हारीतः "राजा वा राजपुत्रो वा ब्राह्मणो वा बहुश्रुतः। केशानां वपनं कृत्वा प्रायश्चित्तं समाचरेत्। केशानां धारणार्थं तु द्विगुणं व्रतमाचरेत्। द्विगुणे तु व्रते चीर्णे द्विगुणा दक्षिणा भवेत्। विद्वद्विप्रान्तपत्नीनां नेष्यते केशवापनम्। ऋते महापातकिनो गोहन्तुश्चावकीर्णिनः"। सधवास्त्रीणां विशेषमाह भवदेवभट्टधृतं वचनम्। "वपनं नैव नारीणां नानुव्रज्या जपादिकम्। न गोष्ठे शयनं तासां न च दद्याद्गवाजिनम्। सर्वान् केशान् समुद्धृत्य छेदयेदङ्गुलिद्वयम्। सर्वत्रैवं हि नारीणां शिरसो मुण्डनं स्मृतम्"। पापभेदेषु प्रायश्चित्तभेदाः प्रायश्चित्तविवेकादौ दृश्याः विस्तरभयान्नोक्ताः। तस्येदं छ। प्रायश्चित्तीय तदाचरणे न०।

**प्रायश्चित्ति** स्त्री प्रायः (अव्ययम्)। तपश्चित्तिः चित–भावे क्तिन् सुट्। प्रायश्चित्तशब्दार्थे

**प्रायश्चित्तिन्** त्रि०प्रायश्चित्तं कर्त्तव्यत्वेनास्त्यस्य इनि। प्रायश्चित्तार्हे स्त्रियां ङीप्। "प्रायश्चित्ती भवेत् पूतस्तत् पापं तेषु गच्छति" प्रा०त०। ठन् प्रायश्चित्तिक तत्रार्थे

**प्रायस्** अव्य० प्र+अय–असि। १बाहुल्ये २तपसि अनशनादौ च "प्रायः पयोधरसमुन्नतिरत्र हेतुः" उद्भटः। "प्रायो नाम तपः प्रोक्तम्" स्मृतिः।

**प्रायाणिक** त्रि० प्रयाणाय हितं ठक्। यात्रिकद्रव्ये छत्र-चामरादौ प्रायाणिकादयोऽप्यत्र।

**प्रायिक** त्रि० प्रायेण भवः ठक्। प्रायभवे। [शब्दच०।

**प्रायुद्धेषिन्** पु०प्रायुधि प्रशस्तयुद्धार्थं हेषते हेष–णिनि। अश्वे

**प्रायोग** पु० प्रयुज्यते शकटादौ प्र+युज–कर्मणि घञ् कुत्वम् दीर्घः। शकटादौ नियोगार्हे वृषे ऋ० १०।१०६।२ भा०।

**प्रायोगिक** त्रि० प्रयोगं नित्यमर्हति छेदा० ठञ्। नित्य-प्रयोगार्हे।

**प्रायोज्य** न० प्र+आ+युज–णिच्–कर्मणि यत्। प्रयोजनीये "प्रायोज्यं न विभज्येत" कात्या०स०। "प्रायोज्यम् प्रयोजनार्हं यथा पण्डितस्य पुस्तकादि न तत्सर्वैर्विभजनीयमिति" दायभागः।

**प्रायोपविष्ट** त्रि० प्रायाय अनशनमरणाय उपविष्टः उप+

यम—क्त। अनशनेन मरणायोद्युक्ते भा॰आश्र॰८॰अ॰।

**प्रायोपवेश** पु॰ प्रायाय अनशनमृत्यवे उपवेशः स्थितिः। सङ्कल्पपूर्वकम् सकलकार्यत्यागेन अनशनमरणार्थमुद्यमे भा॰व॰ २५० श्लो॰। भावे ल्युट्। प्रायोपवेशन तत्रार्थे न॰। भा॰व॰ १५१२८ श्लो॰।

**प्रायोपेत** त्रि॰ जीवो भीमसेन वत् प्रायः प्रायोपवेशः तेन उपेतः। प्रायोपवेशनयुते भा॰शौ॰ १६अ॰।

**प्रारब्ध** न॰ प्र+आ+रभ—आरम्भे क्त प्रकृष्टमारब्धं कार्यं जन्माय कृतारम्भं येन। १देहाद्यारम्भके २अदृष्टभेदे तस्य च भोगेनैव क्षय इति शास्त्रे प्रसिद्धम्। "अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्। नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि" शास्त्रे च प्रारब्धकर्मणो भोगं विना नाशाभावश्रुतेः "ज्ञानाग्निः सर्वकर्माणि भस्मसात् कुरुतेऽर्जुन!" गीतायां ज्ञानस्य सर्वकर्मनाशकत्वोक्तिः प्रारब्धकर्मातिरिक्तविषयेत्याकरे द्रष्टव्यम्। २कृतारम्भे त्रि॰।

**प्रारब्धि** स्त्री प्र+आ+रभ—करणे क्तिच्। १गजबन्धनदामनि त्रिका॰। भावे क्त। २आरम्भे।

**प्रारम्भण** न॰प्र+आ+रभ—ल्युट् नुम्। प्रकर्षेणारम्भे। प्रारम्भणं प्रयोजनमस्य अनुप्र॰छ। प्रारम्भणीय तत्प्रयोजनके त्रि॰। प्र+आ+रभ—भावे घञ् नुम्। प्रारम्भ प्रकर्षेण आरम्भे पु॰ [स्त्रियां टाप्।

**प्रारोह** त्रि॰ प्ररोहः यौवनस्य अच्छा॰ च। प्ररोहपर्याये

**प्रार्ण** न॰प्रकृष्टमृणं वृद्धिः। १प्रकृष्टे ऋणे प्रा॰व॰। २तद्युते त्रि॰

**प्रार्थना** स्त्री प्र+अर्थ—युच्। १याच्ञायां २हिंसायाञ्च। ३गर्भाङ्कभेदे सा॰द॰ "संभवस्यानुमानस्य प्रार्थना क्षिप्तिरेव च" गर्भाङ्गान्युद्दिश्य "रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्" इति लक्षिता। ल्युट्। प्रार्थन याचने हिंसने च न॰। ४छन्दोभेदे "प्रकृताङ्कपिता यस्मी निधःक्षिपौ च यक्तुषे। तुर्यात् अष्टदले पैलं यदा स्यात् प्रार्थनाभिधा" तन्त्रसा॰।

**प्रार्थनीय** त्रि॰ प्र+अर्थ—कर्मणि अनीयर्। १याचनीये अर्थयतेर्याचनार्थत्वेन द्विकर्मकत्वात् गौणे कर्मणि अनीयर्। यतोयाच्यते २तस्मिन् तत्कार्यविषयायां वस्तुप्रार्थनाकर्मणि इति बोध्यम्। ३द्वापरयुगे शब्दर॰।

**प्रार्थित** त्रि॰ प्र+अर्थ+क्त। १याचिते २अभिहिते मेदि॰ ३शत्रुसंरुद्धे च त्रिका॰।

**प्रालम्ब** न॰ प्रकर्षेणालम्बते प्र+आ+लम्ब—अच्। १ऋजुतया कण्ठात् लम्बमाने माल्यादौ अमरः। २प्रकर्षेण लम्बमानमात्रे त्रि॰। लम्बायां ढक् तत इत्वम्। प्रालम्बिका स्वर्णादिरचितकण्ठलम्बिकायां स्वर्णहारभेदे स्त्री अमरः।

**प्रालेय** न॰प्रकर्षेण लीयते प्र+आ—ली—यत्। आत्वे एत्वम्, प्रलयाय हितम् अण् नि॰ एत्वम् वा। हिमे अमरः।

**प्रालेयांशु** पु॰ प्रालेयमंशौ यस्य। १चन्द्रे हला॰। तन्नामनामके २कर्पूरे च। प्रालेयकरादयोऽप्यत्र पु॰।

**प्रावट** पु॰ प्र+अव—अट्। यवे जटा॰।

**प्रावण** न॰ प्र+आ+वन संभक्तौ करणे घ। प्रनिरित्यादि णत्वम्। खनित्रे। प्रकर्षेणावन्यते संक्षिप्यते वदनेन उ॰३।१२१।४भाष्ये इत्युक्तम्। वर्णं समासे अन्तोदात्तताश्च

**प्रावणि** स्त्री प्र+अव—अनि। "हिनुमीनानि लोट्" पा॰८।४।१५।१६। हिनुमीनानीति छित्त्वा लुप्तवदस्तेन पठित्वा तत्र णत्वविधानम्। प्रसादावनौ तत्रायमाशयः "हीनुमीनानि लोट्" सूत्रद्वये अन्त्यग्रहणेन हिनुमानीति ज्ञायते हिनुमीना आनि इत्येषां णत्वम्। योगविभागाश्च आनि लोट् इत्यस्यापीति।

**प्रावर** पु॰ प्र+आ+वृ—करणे अप्। १प्राचीरे शब्दरत्ना॰ २देशभेदे भा॰भी॰ ९अ॰। [२उत्तरीयवस्त्रे हेमच॰।

**प्रावरण** न॰ प्र+आ+वृ—करणे ल्युट्। १आच्छादनवस्त्रे

**प्रावार** पु॰ प्र+आ+वृ—करणे घञ्। १उत्तरीयवस्त्रे अमरः भावे घञ्। २प्रकर्षेण आवरणे पु॰।

**प्रावारकर्ण** पु॰ उलूकभेदे भा॰ व॰ १९८अ॰।

**प्रावारकीट** पु॰ ७त॰। कीटभेदे जटाधरः।

**प्रावास** त्रि॰ प्रवासे दीयते कार्यं वा अणु॰ इति अण्। १प्रवासे दीयमाने २तत्र कार्ये च।

**प्रावासिक** त्रि॰ प्रवासाय प्रभवति सन्तापा॰ ठञ्। १प्रवाससाधने। प्रवासे साधु गुडा॰ ठञ्। प्रवासे साधौ च।

**प्रावृट्काल** पु॰कर्म॰। ६त॰वा। वर्षाकाले प्रावृट्समयादयोऽप्यत्र।

**प्रावृट्कालवहा** स्त्री ७त॰। नदीभेदे मार्कण्डेयपु॰६७अ॰।

**प्रावृडत्यय** पु॰६त॰। १वर्षातिक्रमे वर्षापगमे क॰व॰। २शरत्काले राजनि॰। [प्रकर्षेण २आवृतमात्रे त्रि॰।

**प्रावृत** न॰ प्र+आ+वृ—कर्मणि क्त। १प्रकर्षेण आवृते वस्त्रे

**प्रावृति** स्त्री प्र+आ+वृ—करणे क्तिन्। प्राचीरे शब्दर॰।

**प्रावृषिक** पु॰ प्रावृषि तद्वरणे हितः ठक्। मङ्गलिवादके दूतभेदे हरिवं॰ १०४अ॰।

**प्रावृष्(षा)** स्त्री प्रवर्षतेऽत्र प्र+वृष—आधारे क्विप् दीर्घः हलन्तत्वात् वा टाप्। वर्षाकाले स च श्रावणभाद्रात्मकः

प्रास्थाद्यादौ त्रि॰ प्रस्थेन क्रीतम् ठञ् । ७प्रस्थेन क्रीते त्रि॰ स्त्रियां ङीप् । प्रस्थस्य निमित्तं संयोग उत्पातो वा ठञ् । प्रस्थस्य दनिमित्ते ८संयोगे ९०उत्पाते वा ।

प्राह्व पु॰ प्रकर्षेण आह्वेति यत्कोऽत्र । अत्वोपदेशे मल्लना॰।

प्राह्ण पु॰ प्रारब्धोऽह्नः प्रा॰ स॰ समासान्त॰ अह्नादेशः णत्वम् । दिवाविभक्तदिनस्य पूर्वभागे १पूर्वाह्णे अमरः । प्रकृष्टम- ह्णर्न तिष्ठ॰ अव्ययी॰ । २प्रकृष्टदिनयुते अव्य॰ ।

प्राह्णेतन त्रि॰ प्राह्णे भवः ट्यु तुट् च निपातनात् णत्वम् । पूर्वाह्णभवे स्त्रियां ङीप् ।

प्राह्णेतरा(मा)म् अव्य॰ अतिशयेन प्राह्णे तरप् तमप् वा आमु अकालेत्यादिना सप्तम्या अलुक् । अत्यन्तप्रातःकाले इत्यर्थे ।

प्रिय त्रि॰ प्रीणाति प्री—तर्पणे क । १भर्त्तरि पत्यौ अमरः २भार्य्यायां स्त्री । ३प्रियके मृगभेदे पुंस्त्री जटा॰ ४ऋद्धि-नामौषधौ ५हृद्ये त्रि॰ मेदि॰ ६जीवकौषधौ राजनि॰।

प्रियंवद त्रि॰ प्रियं वदति वद—खच् मुम् । १प्रियवक्तरि मधुरभाषिणि । २खेचरे ३गन्धर्वभेदे पु॰ शब्दमा॰ खेचरः खवादित्वात् प्रियम्वदेति मधुरमल्पवचनं भाषा-दिवचेत् । "भुवि भवेन्नगणैः प्रियंवदा" वृ॰ र॰ उक्ते द्वादशाक्षरपादके ४छन्दोभेदे स्त्री । ५शकुन्तलासखी-भेदे स्त्री शकु॰ दृश्यम् ।

प्रियक पु॰ प्रिय+स्वार्थे क संज्ञायां कन् वा । १पीतसा-लके (पियासाल) २नीपे ३चित्रमृगे ४भ्रमरे ५प्रियङ्गौ ६कुङ्कुमे मेदि॰ ७धाराकदम्बे ८धवलकदम्बे राजनि॰ । ९स्कन्दानुचरभेदे भा॰श॰ ४६अ॰ । स्वार्थे प्रियः विदा॰ अञ् । भेदक चित्रमृगापदे पुंस्त्री॰।

प्रियकृत् त्रि॰ प्रियं करोति कृ क्विप् तुक् । १प्रियकारिणि २विष्णौ पु॰ "प्रियकृत् प्रीतिवर्द्धनः" विष्णुस॰ ।

प्रियङ्कर त्रि॰ प्रियं करोति कृ—खच् मुम् । १प्रियकारिणि २श्वेतकण्टकार्य्यां ३ऋद्ध्योषध्याम् ४असगन्धायाञ्च स्त्री राजनि॰ गौरा॰ ङीप् ।

प्रियङ्करण त्रि॰ अप्रियं प्रियं करोत्यनेन कृ—करणे ख्युन् । अप्रियस्य प्रियतासम्पादने ।

प्रियङ्गु स्त्री प्रिय+गम—डु नि॰ मुम् च । १राजिकायाम् २फलिन्यां च अमरः "प्रियङ्गुः शीतला तिक्ता तुवराऽनिलपित्तहृत् । रक्तातिसारदौर्गन्ध्यस्वेददाहज्वरापहा । गुल्मतृड्-विषमेहघ्नी तद्वत्कालप्रियङ्गुका । तद्वच्च मधुरं स्यन्दं रक्तमाध्वी शीतलप्रदम् । पित्तहृत्पावकोत्कर्षकृत् संग्राहि

कफपित्तजित्" भावप्र॰। "प्रियङ्गुकलिकारम्" इति कुमार॰ प्रमाणवक्ता॰ । २राजिकायां राजनि॰ ३पिप्पल्याम् ४कङ्गौ (काङ्गनी) धान्ये मेदि॰ ५कटुक्यां धरणिः । [शब्दचि॰ ।

प्रियजन पु॰ कर्म॰ । १हृद्ये जने । २प्रौढभावानुविद्धे उक्ष-

प्रियजीव पु॰ प्रियो जीवो यस्मिन् । श्योनाककक्षे राजनि॰।

प्रियतम पु॰ अतिशयेन प्रियः तमप् । १मयूरशिखाख्ये २अतिप्रिये त्रि॰ शब्दच॰ ।

प्रियता स्त्री प्रियस्य भावः तल् । १प्रेम्णि २मैत्र्यां अमरः । त्व । प्रियत्व तत्रार्थे न॰ शब्दर॰।

प्रियतोषण त्रि॰ प्रियं तोषयति तुष—णिच् ल्यु । १प्रियस-न्तोषकारके "नारीपादौ चाङ्कुशेन धारयेत् जघनोपरि। स्तनापीडकरः कामी क्रामयेत् प्रियतोषणः" इतिमञ्जरी-युक्ते २रतिबन्धभेदे ।

प्रियदत्ता स्त्री दीयमानपृथिव्याम् "नामास्याः प्रियदत्तेति गुह्यं देव्याः सनातनम् । दाने चाऽव्यय चाऽऽदाने ना-मास्याः प्रथमं प्रियम् । य एतां विदुषे दद्यात् पृथिवीं पृथिवीपतिः । पृथिव्यामेतदिष्टं स राजा राज्यमितो व्रजेत्" भा॰अनु॰ ६२अ॰ ।

प्रियदर्शन पु॰ प्रियं दर्शनमस्य । १क्षीरिकावृक्षे २शुकखगे च जटा॰ ३सुदर्शे त्रि॰ । [हेमच॰ ।

प्रियप्रायस् न॰ प्रियस्य प्रायः बाहुल्यं यत्र । प्रियवाक्ये

प्रियप्रेप्सु त्रि॰ ७त॰ । दशार्थौद्युक्ते जटा॰ । [प्रिये त्रि॰।

प्रियमधु पु॰ प्रियं मधु मद्यं यस्य । १बलरामे हेमच॰ २मद्य-

प्रियमाल्यानुलेपन त्रि॰ प्रियं माल्यमनुलेपनं च यस्य । १माल्यानुलेपनप्रिये २स्कन्दानुचरभेदे पु॰भा॰श॰ ४६अ॰।

प्रियमेध पु॰ १अजमीढस्य पुत्रभेदे "अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः" भाग॰ ९।२१।१७श्लो॰ । २यज्ञो-पेते ऋषिभेदे ऋ॰ १।४५।४ भा॰ ।

प्रियम्भविष्णु त्रि॰ अप्रियः प्रियो भवति भू—कर्त्तरि खिष्णुच् । अप्रिये प्रिये भवितरि । खुकम् प्रियम्भावुक तत्रार्थे त्रि॰।

प्रियरूप त्रि॰ प्रियं रूपमस्य । १हृद्यरूपे । तस्य भावः मनोज्ञा॰ वुञ् । प्रैयरूपक तस्य भावे न॰। कर्म॰। २हृद्ये रूपे न॰।

प्रियवचन त्रि॰ प्रियं वचनं वैद्यकवचनं वा यस्य । १प्रियवा-दिनि वैद्यकोक्तवाक्ये भक्तिमति २रोगिणि राजनि॰ । कर्म॰। ३हृद्ये वाक्ये न॰ ।

प्रियवर्णी स्त्री प्रियो वर्णो यस्याः गौरा॰ ङीष् । प्रियङ्गौ जटाधरः । [लतायाञ्च ।

प्रियवल्ली स्त्री नित्यकर्म॰ । १प्रियङ्गौ राजनि॰ २फलयावर्त

यस्य वा मृततिथिस्तस्य प्रेतपक्षे तत्सजातीयतिथिः पौर्णमासीमृतस्य तु प्रौष्ठपद्येव पार्वणश्राद्धकालः इति केनाप्युक्तिर्व्यवस्थेति पाश्चात्यदाक्षिणात्यानां तथाचारः। प्रा॰वि॰ तन्मूलक अनावाक्यमूलकत्वमुक्तमतोऽस्मद्देशीयानां न तथाचार इति बोध्यम्। अभिधानपरपर्य्यायशब्दे २११ पृ॰ दृश्यम्। [वाद्यभेदे शिका॰।

प्रेतपटह प्रेतस्य प्रेतत्वसूचकः पटहः। मरणकालवाद्यनीये

प्रेतपति पु॰ ६त॰। यमराजे

प्रेतपर्वत पु॰ प्रेतोद्धारणार्थः पर्वतः। गयातीर्थस्थे स्वनामख्याते पर्वते वायुपु॰ गयाम॰।

प्रेतपिण्ड पु॰प्रेताय देयः पिण्डः। पूरकपिण्डे तस्य प्रेतस्य पिण्डरूपदेहविशेषपूरकत्वात् पूरकसंज्ञा यथोक्तं ब्रह्मपु॰ "शिरस्त्वाद्येन पिण्डेन प्रेतस्य क्रियते सदा। द्वितीयेन तु कर्णाक्षिनासिकास्तु समासतः। गलांसभुजवक्षांसि तृतीयेन तथा क्रमात्। चतुर्थेन तु पिण्डेन नाभिलिङ्गगुदानि च। जानुजङ्घे तथा पादौ पञ्चमेन तु सर्वदा। सर्वमर्माणि षष्ठेन सप्तमेन तु नाड्यः। दन्तलोमाद्यष्टमेन वीर्यं च नवमेन तु। दशमेन तु पूर्णत्वं तृप्तता क्षुद्विपर्य्ययः"।

प्रेतपुर न॰ ६त॰। यमालये "शून्यं प्रेतपुरं भवेत्" ब्रह्मपु॰

प्रेतमेध पु॰ ६त॰। पितृदेवत्ये श्राद्धरूपे यज्ञे।

प्रेतराक्षसी स्त्री प्रेतस्य भूतभेदस्य राक्षसीव दूरतोऽपसर्पणकारित्वात्। तुलस्यां रत्नमाला।

प्रेतराज पु॰ ६त॰ टच्समा॰। यमे तस्य मृतस्य शुभाशुभफलविभजनेन शासनात् तथात्वम्।

प्रेतलोक पु॰ ६त॰। यमलोके "प्रेतलोकं परित्यज्य आगता ये महालये" उद्वाहतत्त्वम्।

प्रेतवन न॰ प्रेतानां मृतानां वननिवाधारत्वात्। श्मशाने हेमच॰। प्रेतकाननादयोऽप्यत्र।

प्रेतवाहित त्रि॰ ३त॰। भूताविष्टे शिका॰।

प्रेतशिला स्त्री गयातीर्थस्थे प्रेतोद्धारणार्थे गृध्रकूटपर्वतादिस्थे शिलाभेदे वायुपु॰गयाम॰। गरुडपु॰८५अ॰ तन्माहात्म्यादि यथा "सेयं प्रेतशिला ख्याता गयायां सा त्रिधा स्थिता। प्रभासे प्रेतकुण्डे च गयासुरशिरस्यपि। धर्मेण धारिता भूमौ सर्वदेवमयी शिला। प्रेतत्वं ते गता ये वा पिशाचा बान्धवादयः। तेषामुद्धरणार्थाय यतः प्रेतशिला ततः। अतोऽत्र मुनयो भूपा राजपत्न्यादयः सदा। तस्यां शिलायां श्राद्धादिकर्त्तारो ब्रह्मलोकगाः। गयासुरस्य यन्मुण्डं तस्य पृष्ठे शिला यतः। मुण्डपृष्ठो गिरिस्तस्मात् सर्वदेवमयो ह्ययम्। मुण्डपृष्ठस्य पादेषु यतो ब्रह्मसरोमुखाः। अरविन्दवनत्वेषु तेन चैवोपलक्षितः। अरविन्दगिरिर्नाम क्रौञ्चपादाङ्कितो यतः। तस्माद्गिरिः क्रौञ्चपादः पितॄणां ब्रह्मलोकदः। गदाधरादयो देवा आद्या पादौ व्यवस्थिताः। शिलारूपेण च व्यक्तास्तस्मादेवमयी शिला। गयाशिरश्छादयित्वा गुरुत्वादास्थिता शिला। स्नात्वा प्रेतशिलादौ तु वरुणाम्बुकृतेन च। पिण्डं दद्यादिमैर्मन्त्रैरावाह्य च पितॄन् परान्"।

प्रेतशुद्धि स्त्री प्रेते सति कालविशेषे शुद्धिः। विप्रादीनां मृतानां मरणनिमित्ताशौचापगमे शुद्धौ "प्रेतशुद्धिं प्रवक्ष्यामि" मनुनोपक्रम्याशौचरूपतद्विरोधिनो दर्शनेन तदपगमे शुद्धिः प्रतिपादिता।

प्रेतशौच न॰ प्रेते सति शौचम् ६त॰। प्रेते सति तन्निमित्ताशौचापगमे। शौचे २प्रेतसंस्कारभेदे च तत्प्रकारः गरुडपु॰ १०६अ॰ उक्तो यथा "प्रेतशौचं प्रवक्ष्यामि तच्छृणुध्वं यतव्रताः!। ऊनद्विवर्षं निखनेन्न कुर्य्यादुदकं ततः। आश्मशानादनुव्रज्य इतरो ज्ञातिभिर्वृतः। यमसूक्तं तथा जप्यं अपह्निलौकिकाग्निना। स दग्धव्य उपेतश्चेदाहिताग्न्यावृतार्थवत्। सप्तमाद्दशमाद्वापि ज्ञातयो ह्युपयन्त्यपः। अप नः शोशुचदघमनेन पितृदिङ्मुखाः। एवं मातामहाचार्य्यप्रेतानाञ्चोदकक्रियाः। कामोदकाः सखिप्रत्तस्वस्त्रीयश्वशुरर्त्विजाः। नामगोत्रेण ह्युदकं सकृत् सिञ्चन्ति वाग्यताः। पाषण्डपतितास्तेभ्यो न कुर्युरुदकक्रियाम्। न ब्रह्मचारिणो व्रात्या योषितः कामगास्तथा। सुरापास्त्वात्मघातिनो नाशौचोदकभाजनाः। अतो न रोदितव्यं हि त्वनित्या जीवसंसृतिः। क्रिया कार्य्या यथाशक्ति ततो गच्छेद् गृहान् प्रति। विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः। आचम्याथाग्निमुदकं गोमयं गौरसर्षपान्। प्रविशेयुः समालभ्य कृत्वाश्मनि पदं शनैः। प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि। इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात्। क्रीतलब्धाशना भूमौ स्वपेयुस्ते पृथक् पृथक्। पिण्डयज्ञावृता देयं प्रेतायान्नं दिनत्रयम्। जलमेकाहमाकाशे स्थाप्यं क्षीरञ्च मृण्मये। वैतानोपासनाः कार्य्याः क्रियाश्च श्रुतिचोदिताः"।

वज्रकूटः शतशृङ्ग इन्द्रसेनो ज्योतिष्मान् सुवर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः। अरुणा नृम्णाऽऽङ्गिरसी सावित्री सुप्रभाता ऋतम्भरा सत्यम्भरेति महानद्यः। यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतङ्गोर्द्ध्वायनसत्याङ्गसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसन्दर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवन्तं त्रयीमयं सूर्यमात्मानं यजन्ते" भाग० ५।२०। "क्षारोदेन यथा द्वीपो जम्बुसंज्ञोऽभिवेष्टितः। संवेष्ट्य क्षारमुदधिं प्लक्षद्वीपस्तथा स्थितः। जम्बुद्वीपस्य विस्तारः शतसाहस्रसम्मितः। स एव द्विगुणो ब्रह्मन्! प्लक्षद्वीपोऽप्युदाहृतः। सप्त मेधातिथेः पुत्राः प्लक्षद्वीपेश्वरस्य वै। ज्येष्ठः शान्तभयो नाम शिशिरस्तदनन्तरः। सुखोदयस्तथानन्दः शिवः क्षेमक एव च। ध्रुवश्च सप्तमस्तेषां प्लक्षद्वीपेश्वरा इमे। पूर्वं शान्तभयं वर्षं शिशिरं सुखदं तथा। आनन्दञ्च शिवञ्चैव क्षेमकं ध्रुवमेव च। मर्यादाकारकास्तेषां तथान्ये वर्षपर्वताः। सप्तैव तेषां नामानि शृणुष्व मुनिसत्तम!। गोमेदश्चैव चन्द्रश्च नारदो दुन्दुभिस्तथा। सोमकः सुमनाः शैलो वैभ्राजश्चैव सप्तमः। वर्षाचलेषु रम्येषु वर्षेष्वेतेषु चानघाः। वसन्ति देवगन्धर्वसहिताः सततं प्रजाः। तेषु पुण्या जनपदाश्चिराच्च म्रियते जनः। नाधयो व्याधयो वापि सर्वकालसुखं हि तत्। तेषां नद्यश्च सप्तैव वर्षाणान्तु समुद्रगाः। नामतस्ताः प्रवक्ष्यामि श्रुताः पापं हरन्ति याः। अनुतप्ता शिखा चैव विपापा त्रिदिवा क्रमुः। अमृता सुकृता चैव सप्तैतास्तत्र निम्नगाः। एते शैलास्तथा नद्यः प्रधानाः कथितास्तव। क्षुद्रनद्यस्तथा शैलास्तत्र सन्ति सहस्रशः। ताः पिबन्ति सदा हृष्टा नदीर्जनपदास्तु ते। अपसर्पिणी न तेषां वै न चैवोत्सर्पिणी प्रजा। न तत्रास्ति युगावस्था तेषु स्थानेषु सप्तसु। त्रेतायुगसमः कालः सर्वदैव महामते!" विष्णुपु०। कल्पभेदात्नामभेदः। तदुत्तरं वनस्य णत्वम् प्लक्षवणम्। प्लक्षस्यादूरदेशादि च नडा० चतुरच्। प्लक्षीय तत्समीपादौ त्रि०।

**प्लक्षजाता** स्त्री प्लक्षात् तत्समीपस्थप्रस्रवणात् जाता। सरस्वत्यां नद्यां भा०आ० १७०अ०।

**प्लक्षतीर्थ** न० प्लक्षसमीपस्थं तीर्थं शाक०त०। तीर्थभेदे हरिवं० [२६अ०।

**प्लक्षप्रस्रवण** न० प्लक्षस्य समीपस्थं प्रस्रवणम्। सरस्वत्युत्पत्तिस्थाने भा०श० ५०अ०।

**प्लक्षराज** पु० ६त०। सोमतीर्थस्थिते प्लक्षवृक्षे भा०श०४४अ०।

**प्लक्षादि** पु० फले अण्प्रत्ययलुग्निमित्ते शब्दगणे स च गणः पा० ग० उक्तो यथा "प्लक्ष न्यग्रोध अश्वत्थ इङ्गुदी शिग्रु रुरु कक्षतु बृहती"।

**प्लक्षावतरण** न० अवतरत्यस्मात् अव–तॄ–अपादाने ल्युट्। प्लक्षः तन्निकटस्थितप्रस्रवणरूपमवतरणम्। सरस्वत्या अवतरणस्थाने प्लक्षप्रस्रवणे भा०व० ८९अ०।

**प्लति** पु० प्लु–बा० डति। ऋषिभेदे ऋ० १०।८४।१७।

**प्लव** न० प्लु–अच्। १कैवर्त्तीमुस्तके २गन्धतृणे मेदि०। प्लु–अच्। ३गन्तरि त्रि०। भावे अप्। ४प्लवने (भासा) कर्त्तरि करणे वा अप्। ५भेके ६भेलके (भेला) ७मेषे ८श्वपचे ९वानरे १०जलकाके ११कुलके १२प्लक्षे १३पर्कटीवृक्षे १४कारण्डवखगे १५शब्दे १६प्रतिगतौ च पु० मेदि०। जातित्वे स्त्रीत्वमपि स्त्रियां ङीप्। १७प्रेरणे १८शब्दे च पु० शब्दरत्ना०। १९जातिभेदे हेमच० २०पलवे (पोलो) मत्स्यधारणयन्त्रभेदे त्रिका०। २१जलकुक्कुटे मिता० २२जलचरपक्षिगणभेदे यथोक्तं भावप्र० "हंससारसकाचाक्षबकक्रौञ्चशरारिकाः। नान्दीमुखी सकादम्बा बलाकाद्याः प्लवाः स्मृताः। प्लवन्ते सलिले यस्मादेते तस्मात् प्लवाः स्मृताः"। एतेषां मांसगुणाः। "प्लवाः पित्तहराः स्निग्धा मधुरा गुरवो हिमाः। वातश्लेष्मप्रदाश्चापि बलशुक्रकराः सराः"।

**प्लवक** त्रि० प्लु–वा० वुन्। १प्लुतगतिकारके २खड्गधारादौ नर्त्तके त्रिका० ३चण्डाले हेमा० ४भेके ५प्लक्षे राजनि०

**प्लवग** पु० प्लवन् सन् गच्छति गम–ड नि०। १वानरे २भेके ३सूर्यसारथौ मेदि० ४प्लवङ्गमखगे शब्दर०। ५शिरीषवृक्षे राजनि०।

**प्लवगति** पु० प्लवेन गतिरस्य। १भेके शब्दच०। ६त०। प्लवानां [भेकानां गतौ स्त्री।

**प्लवङ्ग** पु० प्लवन् सन् गच्छति गम–ड खच् मुम् नि०। १वानरे २मृगे शब्दच०। ३प्लक्षवृक्षे राजनि०।

**प्लवङ्गम** पु० प्लवन् सन् गच्छति गम–खच् मुम् नि०। १भेके। [२वानरे अमरः।

**प्लवन** त्रि० प्लु–ल्युट्। १निम्ने प्रवणे क्रमनिम्नतां गन्तरि "प्रागुदक् प्लवनां भूमिं कारयेत् यत्नतो नरः" ति०त० मत्स्यपु०। भावे ल्युट्। जलोपरि गतौ न० (भासा)।

**प्लविक** त्रि० प्लवेन तरति ठन्। प्लवेन तारिणि।

**प्लाक्ष** न० प्लक्षस्य समूहः, तस्य विकारस्तस्य फलं वा अण् न लुप्। १प्लक्षवृक्षफले २तद्विकारे ३तत्समुदाये च।

**प्लायोगि** पु० प्रयोगनाम्नः राज्ञः पुत्रः इञ् वेदे रस्य लः। प्रयोगनाम्नः राज्ञः पुत्रे ऋ० ८।१।३२

दीर्घायुरपि आश्मीदन्नीन्थिहर । "अनन्त्यस्यापि प्रश्नाख्यानयोः" पा० अनन्त्यस्यान्त्यस्यापि पदस्य टेः स्वरितः प्लुत एतयोः । प्रश्ने । अगमः३ पूर्वा३न् ग्रामा३न् । सर्वपदानामयम् । आख्याने अगमश्म् पूर्वा३न् ग्रामा३न् । "प्लुतावैच इदुतौ" पा० यत्र दूराद्धूतादिषु प्लुतो विहितस्तत्रैव ऐचः प्लुतप्रसङ्गे तदवयवाविदुतौ प्लवेते । ऐ३ तिकायन !। औ३ पगव । अत्र प्लुतावत ऐचौ सम्पद्येते । "एचोऽप्रगृह्यस्यादूराद्धूते पूर्वस्यार्द्धस्यादुत्तरस्येदुतौ" पा० अप्रगृह्यस्य एचोऽदूराद्धूते प्लुतविषये पूर्वस्यार्द्धस्याकारः प्लुतः स्यादुत्तरस्य त्विदुतौ स्तः । प्रश्नान्ताभिपूजितविचार्य्यमाणप्रत्यभिवादयाज्यान्तेष्वेव । प्रश्नान्ते । अगमः३ पूर्वा३न् ग्रामा३न् अग्निभूता३इ । अभिपूजिते । भद्रं करोषि पटा३उ । विचार्य्यमाणे । होतव्यं दीक्षितस्य गृहा३इ । प्रत्यभिवादे । आयुष्मानेधि अग्निभूता३इ । याज्यान्ते । स्तोमैर्विधेमाग्नया३इ । परिगणनं किम् विष्णुभूते३ घातयिष्यामि त्वाम् । अदूराद्धूत इति न वक्तव्यम् । पदान्तग्रहणन्तु कर्त्तव्यम् । इह मा भूत् भद्रं करोषि गौ३रिति । अप्रगृह्यस्य किम् शोभने माले३ । "आमन्त्रिते छन्दसि प्लुतविकारोऽयं वक्तव्यः । अग्ना३इ पत्नीव" सि० कौ०

प्लुति स्त्री प्लु—भावे क्तिन् । प्लवने उत्प्लुत्यगमने । प्लुतिश्च मण्डूकानामिव गतिः (क्वचापि) सम्बन्धात् सूत्रादेर्गतिश्च । त्रिमात्रतयोच्चारणे च ।

प्लुष दाहे भ्वा०पर०सक० सेट् । प्लोषति अप्लोषीत् । पुप्लोष उदित् क्त्वा वेट् । प्लुषित्वा प्लुष्ट्वा ।

प्लुष दाहे दिवा०पर०सक० सेट् । प्लुष्यति इरित् अप्लुषत् ।

प्लुष स्नेहे पूर्त्तौ च सक० स्नेहे अक० क्र्या० पर० सेट् । प्लुष्णाति अप्लोषीत् पुप्लोष ।

प्लुषि पु० प्लुष—बा० कि । १कत्स्यांतकयुक्ते १अग्निभेदे यजु० २४।२९ वेददीपः । २दाहके सर्पभेदे ऋ० १।८१।१भा० । ३अल्पपरिमाणपुत्तिकादेहे शत०ब्रा० १४।४।१।२४ भाष्ये द्रष्टव्यम् । [सदङ्कम्"भाग०

प्लुष्ट त्रि० प्लुष—क्त । दग्धे अमरः । "प्लोषव्यलिप्लुष्टमिदं

प्लुस दाहे विभागे च दिवा०पर०सक० सेट् । प्लुस्यति इरित् अप्लुसत् अप्लोसीत् पुप्लोस । [तैत्ति० ७।५।८।५

प्लेङ्ख पु० प्र+इङ्ख—घञ् वेदे रस्य लः । प्रेङ्खे प्रकटकम्पने

प्लेव सेवने भ्वा०आत्म०सक०सेट् । प्लेवते अप्लेविष्ट । पिप्लेवे ऋदित् चङि न ह्रस्वः ।

प्लोत न० प्र+वे—क्त संप्र०रस्य लः । सुश्रुतोक्ते शस्त्रकर्म्मोपकरणभेदे "अतोऽन्यतमं कर्म चिकीर्षता वैद्येन पूर्वमेवोपकल्पयितव्यानि तद्यथा यन्त्रशस्त्रक्षाराग्निशलाकाशृङ्गजलौकालाबूजाम्ववौष्ठपिचुप्लोतसूत्रपत्रपट्टमधुघृतवसापयस्तैलतर्पणकषायालेपनकल्कव्यजनशीतोष्णोदककटाहादीनि" । [दाहे न०

प्लोष पु० प्लुष—भावे घञ् । दाहे अमरः । भावे ल्युट् । प्लोषण

प्सा भक्षणे अदा०पर०सक० अनिट् । प्साति अप्सासीत् । पप्सौ । गतौ निघण्टुः ।

प्सा स्त्री प्सा—भावे अङ् । भक्षणे त्रिका० ।

प्सात त्रि० प्सा—कर्म्मणि क्त । भक्षिते अमरः ।

प्सान न० प्सा—भावे ल्युट् । भोजने हेमच० ।

प्सु पु० प्सा—बा० कु । रूपे निघण्टुः ।

प्सुर त्रि० प्सु+रा० अन्यार्थे क । रूपवति ऋ० १०।२६।२भाष्ये

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्य संकलिते वाचस्पत्ये पकारादिशब्दार्थसङ्कलनम् ।

---

पकारादिषु शब्देषु केचित् शब्दा न सङ्कलिता केषाञ्चिच्चार्थभेदा भ्रमाणोक्तास्ते इतःपरं परिशिष्टे प्रदर्श्यन्ते ।

अक्षरस्वदृष्टवदुक्तेवः काष्ठजाया विनिश्चयः । कनकं रजतं ताम्रं लिप्तकं सीसकं तथा । लौहं सर्वत्र सर्वार्थमादिष्टादिद्रयामुषाम् । राज्ञामेवोपयुज्येत चावकीर्ति-प्रसाधनी । अन्यासां महिषीणाञ्च स्वर्णजाता प्रसाधनी । गजदन्तसमुत्था राज्ञामेवोपयुज्यते । अत्रापि रत्नविन्यासो ग्रैवेयामरदण्डवत्" ;

४५.०४ पृष्ठस्य प्राकृतशब्दस्य परिशिष्टम्

प्राकृतभाषा च अष्टादशभाषामध्ये भाषाभेदः । तासां भेदास्तु सा०द० उक्ता यथा "पुरुषाणामनीचानां संस्कृता१ स्यात् कृतात्मनाम् । शौरसेनी२ प्रयोक्तव्या तादृशीनाञ्च योषिताम् । आसामेव तु गाथासु महाराष्ट्रीं३ प्रयोजयेत् । अत्रोक्ता मागधी४ भाषा राजान्तःपुरचारिणाम् । चेटानां राजपुत्राणां श्रेष्ठिनां चार्द्धमागधी५ । प्राच्या६ विदूषकादीनां धूर्तानां स्यादवन्तिजा७ । योधनागरिकादीनां दाक्षिणात्या८ हि दीव्यताम् । शकाराणां शकादीनां शाकारीं९ संप्रयोजयेत् । बाह्लीकभाषा१० दिव्यानां द्राविडी११ द्राविडादिषु । आभीरेषु तथाऽऽभीरी१२ चाण्डाली१३ पुक्कसादिषु । आभीरी शाबरी१४ चापि काष्ठपत्रोपजीविषु । तथैवाङ्गारकारादौ पैशाची१५ स्यात् पिशाचवाक् । चेटीनामप्यनीचानामपि स्यात् शौरसेनिका१६ । बालानां षण्डकानाञ्च नीचग्रहविचारिणाम् । उन्मत्तानामातुराणां सैव स्यात् संस्कृता क्वचित् । ऐश्वर्येण प्रमत्तस्य दारिद्र्योपप्लुतस्य च । भिक्षुबन्धधरादीनां प्राकृतं१७ संप्रयोजयेत् । संस्कृतं संप्रयोक्तव्यं लिङ्गिनीषूत्तमासु च । देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् । यद्देशं नीचपात्रन्तु तद्देशं तस्य भाषितम् १८ । कार्यतश्चोत्तमादीनां कार्यो भाषाविपर्ययः । योषित्सखीबालवेश्याकितवाप्सरसां तथा । वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा" । तत्तद्भाषालक्षणानि भाषाशब्दे दृश्यानि ।

४५.२२पृष्ठस्य प्रातर्शब्दस्य परिशिष्टम्

"प्रहरोऽपराह्णसंयुक्तः प्रातरित्यभिधीयते" नि०सि० मा० व्यासोक्ते दक्षिणाञ्चले ४सार्द्धप्रहरात्मके काले ।

---

# फ

फकारः पवर्गस्य द्वितीयवर्णः सर्ववर्णेषु द्वाविंशतितमः । अस्योच्चारणस्य स्थानमोष्ठौ तदुच्चारणे आभ्यन्तरः प्रयत्नः जिह्वाग्रस्य ओष्ठाभ्यां सह स्पर्शः अत एवास्य स्पर्शवर्णता । बाह्याः प्रयत्नाः विवारश्वासाघोषाः महाप्राणश्च । क्वचित् पवर्गस्य स्थाने उपध्मानीयः ः । तन्त्रे वर्णाभिधाने अस्य वाचकशब्दा उक्ता यथा "फः सखी दुर्गिणी धूम्रा वामपार्श्वो जनार्दनः । जया पादशिरा रौद्री फेत्कारः शाखिनी प्रियः । रमा विहङ्गमः कण्ठः भुजङ्गी प्रियपावकौ । प्रलयाग्निर्नीलपादोऽक्षरः पशुपतिः शशी । फुत्कारो यामिनी व्यक्ताकृतिः मोहवर्द्धनः । निष्फलश्चास्य फ-कारः प्रयागो ग्रामणी फलम्" । तदीयदेवताध्यानं यथा "प्रलयाम्बुदवर्णाभां चतुर्भुजां चतुर्भुजाम् । मल्लाभवप्रदां नित्यां नानालङ्कारभूषिताम् । एवं ध्यात्वा फकारन्तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम् । अस्य ध्येयस्वरूपं यथा "फकारं शृणु चार्वङ्गि ! रक्तविद्युल्लतोपमम् । चतुर्वर्गप्रदं वर्णं पञ्चदेवमयं सदा । पञ्चप्राणमयं वर्णं सदा त्रिगुणसंयुतम् । आत्मादितत्त्वसंयुक्तं त्रिबिन्दुसहितं सदा" कामधेनुतन्त्रम् । मातृका-न्यासेऽस्य वामपार्श्वे न्यासः । काव्यादावस्य प्रथम-विन्यासफलं पकारशब्दे उक्तं दृश्यम् ।

फ न० फल–ड । १रूक्षवचने २निष्फलवाक्ये ३फुत्कारे च मेदि० ४अट्टहासे ५वर्द्धने ६जृम्भाविस्फारे ७फल-भागे च पु० विश्वः ।

फकार पु० फ+स्वरूपे कार । फस्वरूपे वर्णे ।

फक्क असद्व्यवहारे मन्दगतौ च भ्वा०पर०सक० सेट् । फक्कति अफक्कीत् पफक्क ।

फक्किका स्त्री फक्क–धात्वनिर्देशे भावे ण्वुल्–टाप् अतइत्त्वम् । १अनुद्धारकारे (फाँकि) २तत्त्वनिर्णयार्थं पूर्वपक्षे च "फणिभाषितभाष्यफक्किका" इति नैषधम् ।

फगुन पु० गोत्रप्रवरर्षिभेदे प्रवराध्यायः ।

फञ्जिका स्त्री भनक्ति रोगान् भञ्ज–मर्दने ण्वुल् पृषो० । (वामनहाटि) १वृक्षे अमरः । २देवताडे ३दूरालभायां शब्दरत्ना० ।

फञ्जिपत्रिका स्त्री भञ्ज–णिनि पृषो० फञ्जि रोगमर्दि-पत्रं यस्याः । आखुकर्णीम् (उन्दुरकानि) रत्नमा० ।

फञ्जि(ञ्जी) स्त्री भञ्ज–इन् पृषो० वा ङीप्। भार्ग्याम् (वामनहाटि) राजनि०।

फट पुंस्त्री० स्फुट–विकाशे अच् पृषो०। १सर्पाणां फणायाम् अमरः स्त्रियां टाप्। सा च २दन्ते मेदि० ३कितवे पु० शब्दच०।

फट् अव्य० स्फुट–क्विप् पृषो०। १योगे तन्त्रोक्ते २अस्त्रनामके मन्त्रभेदे च। ३अनुकरणशब्दे तस्य मन्त्र आदिवत् द्रव्यविशेषस्य त्यागार्थताऽपि। शान्तिकुम्भस्थापने, अर्घ्यपात्रस्थापने, अर्घ्यजलेन पूजोपकरणाभ्युक्षणे, अन्तरीक्षगविघ्नोत्सारणाय विकिरक्षेपणे, गन्धपुष्पाभ्यां करशोधने, अघमर्षणे पापपुरुषताड़ने, कराङ्गन्यासे, नैवेद्यप्रोक्षणे, होमाग्नेः क्रव्यादांशत्यागे, होमाग्न्यावाहने, तर्जनीमोक्षणादौ च इत्यादिषु कर्मसु अस्य प्रयोगः नानातन्त्रेषु दर्शितः। [ख्यातायां भित्तिकायां शब्दच०।

फडिङ्गा स्त्री फडिति इङ्गते इङ्ग–अच्। (फड़िङ्)

फण अनायासेनोत्पत्तौ भ्वा०पर० सक० सेट् फणति अफाणीत्-अफणीत् पफाण। फणा० फेणतुः पफणतुः।

फण गतौ भ्वा०पर०सक० सेट्। फणति अफाणीत् अफणीत् मित् वा घटादि०। णिचि फाणयति फणयति फणादि०।

फण पुंस्त्री० फण–अच्। दर्व्याकारे सङ्कोचविकाशवति सर्पमस्तके अमरः।

फण(णा)कर पु० फणः(णा) कर इव यस्य। सर्पे शब्दरत्ना०।

फणादि न० "फणाञ्च सप्तानाम्" पा० किति लिटि सेटि थलि च परे एत्त्वाभ्याससलोपनिमित्ते धातुवर्गे तत्र धातुपाठे क्रमं यथा "फण राज भ्राज भ्राश भ्लाश स्यम स्वन" सि०कौ० भ्वादौ दृश्यः।

फण(णा)धर पुंस्त्री० फणं(णां) धरति धृ–अच्। सर्पे शब्दरत्ना०। स्त्रियां जातित्वात् ङीष्। फण(णा)भृदादयोऽप्यत्र।

फणाभर पुंस्त्री० फणां बिभर्त्ति भृ–अच्। सर्पे हारा० स्त्रियां जातित्वात् ङीष्। [सङ्कः।

फणिकार पु० देशभेदे स च देशः वृ०सं० १४अ० दक्षिणस्या-

फणिकेसर पु० फणिनामकः केसरः। नागकेसरे राजनि०।

फणिखेल पुंस्त्री० फणिना खेलति खेल–अच्। (भारुइ) खगे त्रिका० स्त्रियां ङीष्।

फणिचक्र न० फणाकारं चक्रम्। विवाहादौ शुभाशुभसूचकनाडीकूटज्ञापनार्थे चक्रभेदे उपयमशब्दे ११९४ पृ० दृश्यम्।

फणिजा स्त्री फणीव जायते जन–ड। (फणिमनसा) इति नैघण्टप्र०। [शतावर्य्याम् २महाशतावर्य्यायाञ्च राजनि०।

फणिजिह्वा स्त्री फणिजिह्वा आकारोऽस्त्यस्य अच्। १महा-

फणिज्झक पु० फणिनमुज्झति उज्झ–ण्वुल् पृषो०। १बर्बरीभेदे २जम्बीरसामान्ये च अमरः।

फणितल्पग पु० फणिरूपे तल्पे गच्छति तिष्ठति गम–ड। शेषशायिनि विष्णौ शब्दार्थकल्प०।

फणिन् पु० फणा अस्त्यस्य इनि। दर्वीकरे सर्पभेदे अमरः। अहिशब्दे ५८१ पृ० तद्भेदाः दृश्याः। २सर्षपीनामकौषधौ स्त्री राजनि०। ३शेषावतारे पतञ्जलिमुनौ पु० स च पाणिनीयभाष्यकारकः योगसूत्रकारश्च तयोर्भेद ऐक्यं वा

फणिप्रिय पु० फणिनां प्राणप्रदत्वात् प्रियः। वायौ शब्दर० सर्पाणां वायुभक्षकत्वेन वायोस्तत्प्रियत्वम्।

फणिफेन न० फणिनां फेन इव। (आफिङ्) अहिफेने रत्नमा०।

फणिभुज् पु० फणिनं भुङ्क्ते भुज–क्विप्। पन्नगाशने गरुड़े

फणिमुख न० फणिन इव मुखमस्य। स्तेयसाधनोपयोगिनि मृत्तिकाक्षेपणार्थे यन्त्रभेदे दशकुमा०।

फणिवल्ली स्त्री फणिसदृशी दीर्घा, फणिप्रोक्तस्या वा वल्ली। नागवल्ल्याम् (पानलता) फणिलतादयोऽप्यत्र हेमच०।

फणिहन्त्री स्त्री फणिनं हन्ति हन–तृच् ङीप्। गन्धनाकुल्याम् राजनि०। [इदुराजभार्यां राजनि०।

फणिहृत् स्त्री फणिनं हरति अपसारयति हृ–क्विप्। वृ-

फणीन्द्र पु० ६त०। सर्पेश्वरे अनन्ते २वासुकौ च।

फणीश्वर पु० ६त०। १अनन्ते २वासुकौ शब्दरत्ना०।

फणीश्वरचक्र न० नक्षत्रभेदे शनिस्थित्या सप्तद्वीपस्य शुभाशुभसूचके चक्रभेदे चक्रशब्दे २८२० पृ० दृश्यम्।

फण्ड पु० फण-गतौ ड तस्य नेत्वम्। जठरे उणादिकोषः।

फत्कारिन् पु० फदित्यव्यक्तं करोति कृ–णिनि। खगमात्रे शब्दच०।

फर न० फल+अच् लस्य रः। फलके भरतः।

फरुवक न० पूगपात्रे हारा०। [अफरी फर्फरायते" चकुटः।

फर्फर त्रि० स्फुर-अच् पृषो०। अत्यन्तचले "गण्डूषजलमात्रेण

फर्फरीक न० स्फुर–ईकन् "फर्फरीकादयश्च" उणा० नि०। १नवपल्लवे उज्ज्वलद०। २चपेटे पु० ३मृदुत्वे न० मेदि०। ४पादुकायां स्त्री संक्षिप्तसारः।

फर्व गतौ भ्वा०पर०सक० सेट्। फर्वति अफर्वीत् पफर्व। "प्रफर्व्य च पीवरी" यजु० १२।७१ वेददी० "फर्वतिः पूरणार्थः" ऋ० १०।१०६।२ भा० दृश्यम्।

चतुरङ्गुलविस्तारं फालमग्नौ स्थापयेत् । तत्र प्राङ्शिराशोधनीयादुग्धादिरूपमानं कर्म कृत्वा दक्षिणां दत्त्वा कल्पकं प्रतिज्ञापकं शोध्यशिरसि निधाय ओम् "त्वमग्ने वेदाश्चत्वारस्त्वञ्च यज्ञेषु हूयसे । त्वं मुखं सर्वदेवानां त्वं मुखं महात्मनाम् । जठरस्थो हि भूतानां ततो वेत्सि शुभाशुभम् । पापं पुनासि वै यस्मात् तस्मात् पावक उच्यसे । पापेषु दर्शयात्मानमर्चिष्मान् भव पावक ! । अथ वा शुद्धभावेषु शीतो भव हुताशन ! । त्वमेव सर्वभूतानामन्तश्चरसि साक्षिवत् । त्वमेव देव ! जानीषे न विदुर्यानि मानवाः । व्यवहाराभिशस्तोऽयं मानुषः शुद्धिमिच्छति । तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि" । इत्येतैः फालमभिमन्त्रयेत् । शोध्यस्तु "त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ! । साक्षिवत् पुण्यपापेभ्यो ब्रूहि सत्यं कवे ! मम" इत्यनेनाभिमन्त्र्याग्निवर्णं फालं जिह्वया लिहेत् विद्यात् । न दह्यते चेत् शुद्धः" ।

**फाल्गुन** पु॰ फल्गुनीयुक्ता पौर्णमासी अस्ति यत्र मासे अब्दे वर्षे अर्द्धमासे वा अण् । चैत्रादितो द्वादशे १चान्द्रमासख्याते मासभेदे २तादृशे पक्षे ३जीवे वर्षभेदे च बार्हस्पत्ये १८९८ पृ॰ दृश्यम् । "अर्द्धोपान्त्यो त्रिभो ज्ञेयो फाल्गुन त्रिभोन्नत" इत्युक्तेः पौर्णमास्यां फाल्गुनीनक्षत्रसम्बन्धयोगात् तथात्वम् । स च मासः त्रिविधः सावनचान्द्रसौरभेदात् तत्र कुम्भस्थरविकारब्ध शुक्लप्रतिपदादिदर्शान्तो मुख्यचान्द्रः । तथाभूतकृष्णप्रतिपदादिपौर्णमास्यन्तो गौणः, कुम्भस्थरविकः सौरः इति । अयञ्च शब्दः दन्त्यान्तो मेदिनिकोषे पठितः । फाल्गुने गगने फेने नान्यमिच्छन्ति बर्बराः" कारिकायाम् अपपाठमितिन्यस्तं मेदिनिविरोधात् प्रामादिकमेव । ४तत्पौर्णमास्यां स्त्री ङीप् । ५अर्जुनाख्ये पाण्डवे तस्य तन्नाम्ने कारणम् भा॰वि॰४४अ॰उक्तं यथा "उत्तराभ्यां फल्गुनीभ्यां नक्षत्राभ्यामहं दिवा । जातो हिमवतः पृष्ठे तेन मां फाल्गुनं विदुः" । ६अर्जुनवृक्षे पु॰ मेदि॰ ।

**फाल्गुनानुज** पु॰ फाल्गुनादनुजायते अनु+जन-ड । १चैत्रे मासि २वसन्तकाले हारा॰ । ३नकुलसहदेवयोः द्वि॰ व॰ ।

**फाल्गुनिक** पु॰ फाल्गुनीनक्षत्रयुक्ता पौर्णमासी अस्मिन् मासे ठञ् । चैत्रादितो द्वादशे मासे । [शब्दर॰

**फि** पु॰ फल-बा॰डि । १निष्फलवाक्ये २पापे च एकाक्ष॰को॰

**फिक्क** पु॰ कपिक्क+पृषो॰ । (फिङ्गा) पक्षिभेदे शब्दमा॰ ।

**फिरङ्ग** पु॰ स्वनामख्याते म्लेच्छदेशे१ रोगविशेषे२ भावप्र॰ तत्र फिरङ्गस्य निदानमाह । "फिरङ्गसंज्ञके देशे बाहुल्येनैव यद्भवेत् । तस्मात् फिरङ्ग इत्युक्तो व्याधिर्व्याधिविशारदैः" । तस्य विप्रकृष्टं निदानमाह गन्धरोगः फिरङ्गोऽयं जायते देहिनां ध्रुवम् । फिरङ्गिणोऽतिसंसर्गात् फिरङ्गिण्याः प्रसङ्गतः । व्याधिरागन्तुजो ह्येष दोषाणामनुसंक्रमः । भवेत्ता लक्षयेत्तेषां लक्षणैर्भिषजां वरः" । फिरङ्गिण्याः प्रसङ्गत इति विशेषार्थम् । रूपमाह "फिरङ्गस्त्रिविधो ज्ञेयो बाह्याभ्यान्तरतस्तथा । बहिरन्तर्भवश्चापि तेषां लिङ्गानि च ध्रुवम् । तत्र बाह्यः फिरङ्गः स्याद्विस्फोटसदृशोऽल्परुक् । स्फुटितो व्रणवद्वेद्यः सुखसाध्योऽपि स च स्मृतः । सन्धिष्वाभ्यन्तरः स स्यादुभयोर्लक्षणैर्युतः । कष्टोऽतिचिरस्थायी कष्टसाध्यतमश्च सः" । उपद्रवानाह "कार्श्यं बलक्षयो नासाभङ्गो वह्नेश्च मन्दता । अस्थिशोषोऽस्थिवक्रत्वं फिरङ्गोपद्रवा अमी । साध्यत्वादिकमाह बहिर्भवो भवेत् साध्यो नूतनो निरुपद्रवः । आभ्यन्तरस्तु कष्टेन साध्यः स्यादयमामयः । बहिरन्तर्भवो जीर्णः क्षीणस्योपद्रवैर्युतः । बोध्यो व्याधिरसाध्योऽयमित्यूचुर्मुनयः पुरा" । ततोऽस्त्यर्थे इनि । फिरङ्गिन् तद्देशवासिजने तद्रोगयुते च त्रि॰ स्त्रियां ङीप् । [विश्वः ।

**फु** पु॰ फल-डु । मन्त्रोच्चारणपूर्वके १फुत्कारे २तुच्छवाक्ये च

**फुक्क** पु॰ खगे शब्दच॰ । [फणायां पु॰हेमच॰।

**फुट** त्रि॰ स्फुट-क पृषो॰। १विकीर्णे २प्रस्फुटिते च । ३सर्प-

**फु(फू)त्** अव्य॰ फल-डुति पृषो॰वा दीर्घः । अनुकरणशब्दे ।

**फुत्कर** पु॰फु इत्यव्यक्तं शब्दं करोति कृ-ट । वह्नौ शब्दच॰

**फुत्कार** पु॰ कृ-भावे घञ् फुदित्यव्यक्तशब्दस्य कारः । फुदित्यव्यक्तशब्दकरणे । फुत्कारयुक्ते वह्नौ आहुतिनिषेधो यथा "अल्पे कक्षे सस्फुलिङ्गे वामावर्ते भयानके । आर्द्रकाष्ठैः ससुतृप्ते फुत्कारवति पावके । कृष्णार्चिषि सदुर्गन्धे तथा लिहति मेदिनीम् । आहुतिं जुहुयाद्यस्तु तस्य नाशो भवेद् ध्रुवम्" ति॰त॰ ।

**फुप्फुस** पु॰सुश्रुतोक्ते हृदयस्य वामपार्श्वस्थिते (फुसफुस) इति ख्याते कोष्ठभेदे "स्थानान्यामाग्निपक्वानां मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुप्फुसश्च कोष्ठ इत्यभिधीयते" व्याचष्टो चेदम् "आमस्य स्थानमामाशयः नाभेरूर्ध्वम् । अग्नेः स्थानं पच्यमानाशयः नाभिमध्यम् । पक्वस्य स्थानं पक्वाशयः नाभेरधः । मूत्रस्य स्थानं वस्तिः । रुधिरस्य स्थानं यकृत्प्लीहानौ । हृत् हृदयम् । उण्डुरुकपाकस्थलं यः

**बर्हिपुष्प** पु० बर्हि बर्हस्यमिव पुष्पमस्य । मयूरपिच्छवर्णे बार्हिकुसुमादयोऽप्यत्र ।

**बर्हिर्मुख** पु० बर्हिर्वह्निर्मुखमस्य । देवे अमरः ।

**बर्हिःशुष्म** पु० बर्हिः कुशः शुष्मस्य । वह्नौ अमरः ।

**बर्हिषद्** पु० स०स० बर्हिषि सीदति सद–क्विप् षत्वम् । पितृगणभेदे पितृशब्दे दृश्यम् ।

**बर्हिष्केश** पु० बर्हिः केश इव यस्य । वह्नौ ।

**बर्हिष्मत्** त्रि० बर्हिरस्त्यस्य मतुप् । कुशयुक्ते स्त्रियां ङीप् ।

**बर्हिष्ठ** त्रि० बर्हिषि दत्तम् यत् । कुशे दत्ते पिण्डादौ ।

**बर्हिष्ठ** त्रि० बर्हिषि कुशे तिष्ठति स्था–क उप० वा विसर्गलोपः षत्वम् । कुशस्थिते ।

**बर्हिस्** न० बर्ह–कर्मणि इसि । कुशे १यज्ञिये कुशे “निषेदथा बर्हिषि” ऋग्वेदिकम् १।१। “उपमूललूनं बर्हिः पितॄणां पर्वसु लूनं देवानाम्” कौ०स० । प्रागाग्निबर्हिषुपदे दृश्यम २दीप्तौ ३वह्नौ च “बर्हिषि दत्तं न देवम्” श्रुतिः ।

**बल** जीवने, धान्यावरोधे च भ्वा०पर०सक०सेट् । बलति । अबालीत् बेलतुः । ज्वलादि०कर्त्तरि ण । बलः बालः ।

**बल** दाने वधे निरूपणे च भ्वा०उभ०सक०सेट् । बलति–ते अबालीत् अबलिष्ट । बेलतुः बेले । [बलयति ।

**बल** जीवने चु०उभ०अक०सेट् मित् घटा० बलयति–ते अबीबलत्

**बल** निरूपणे चु०आत्म०सक०सेट् । बालयते अबीबलत ।

**बल** न० बल-अच् । १सैन्ये २देहजे सामर्थ्ये ३स्थौल्ये ४गन्धरसे ५रूपे मेदि० ६शुक्रे हेमच० ७देहे जटा० ८पद्मे शब्दर० ९रक्ते च शब्दच० । १०बलयुक्ते त्रि० मेदि० ११काके १२बलदेवे अमरः । १३रूपवर्णे शब्दच० । १४दैत्यभेदे पु० मेदि० । तत्र पारिभाषिकबलानि ब्रह्मवै० १५ अ० उक्तानि यथा

“क्षत्रियाणां बलं युद्धं व्यापारश्च बलं विशाम् । भिक्षाबलं भिक्षुकाणां शूद्राणां विप्रसेवनम् । हरौ भक्तिर्हरेर्दास्यं वैष्णवानां बलं हरिः । हिंसा बलं खलानाञ्च तपस्या च तपस्विनाम् । बलं वेशश्च वेश्यानां योषितां यौवनं बलम् । बलं प्रतापो भूपानां बालानां रुदितं बलम् । सतां सत्यं बलं, मिथ्या बलमेवासतां सदा । अज्ञानामज्ञता चैव ज्ञानं ज्ञानवतां बलम् । विद्या बलं पण्डितानां वाणिज्यं वणिजां बलम् । भगवद्धर्मशीलानां माहात्म्यं साहसं बलम् । धनं बलं च धनिनां दुःखीनां शोचनमेव च । बलं विवेकः साधूनां दुःखिनां चपरोक्षता । दुष्टो बलं च दुःखिनां चौराणां चौर्यमेव च । विप्रकल्पस्य पापबलसमर्थानां बलम् । हिंसा च हिंस्रजन्तूनां सतीनां पतिसेवनम् । वरस्यात्रौ पुराणस्य विद्यायां गुरुसेवनम् । बलं धर्मो ज्येष्ठजानां भृत्यानां राजसेवनम् । बलं तपः श्रावकाणां ब्रह्म च ब्रह्मचारिणाम् । यतीनाञ्च सदाचारो न्यासः संन्यासिनां बलम् । पापं बलं पातकिनां धर्मज्ञानां ज्ञानिर्बलम् । पुण्यं बलं पुण्यवतां प्रजानां नृपतिर्बलम् । फलं बलञ्च वृक्षाणां जलधीनां जलं बलम् । जल बलञ्च मत्स्यानां मत्स्यानाञ्च जलं बलम् । शान्तिर्बलञ्च भूपानां विप्राणाञ्च विशेषतः” । “विद्याभिजनमित्राणि बुद्धिसत्त्व धनानि च । तपःसहायवीर्याणि दैवञ्च दशमं बलम्” भा० शा० ।

वैद्यके सप्तोत्तरबलपदार्थानां संज्ञा दर्शिता यथा

“सद्यो बलकरं प्रोक्तं बालाभ्यङ्गः सुभोजनम् । सद्यो बलहरं प्रोक्तं सर्पिषां सांप्रयुक्त” । “धातूनां यत् सदं तैलाभ्यवहारेण बलमित्युच्यते” वैद्य० भावप्र० १५वसुन्धराशुभरभेदे पु० । “बलशालिबलश्चैव बलात्मको बलावतौ” भा० अ० ३५।३६ श्लो० । असुरभेदश्च इन्द्रेण हतः इन्द्रपर्याये बलारातिशब्ददर्शनात्” देवीपु० ४७अ० तु स विष्णुना हत “तदा हता तदुक्तेन दानवेन महात्मना । विष्णुनापि सशस्त्रेण शिरश्छिन्नं हतो बलः । प्राकृतं देहजत्यक्त्वा दिव्यकायस्तभूत्तदा । बलाबलसंज्ञाता बलाख्या रत्नजातयः । बोधने सुर तेजांसि पञ्चरामाणि चाभवन् । विद्युत्पातदानेन कायो रत्नाकरोऽभवत्” । [अमरः । बन्धस्वभावादिरयमिति स्वामी ।

**बलक्ष** पु०बलं क्षायत्यक्षात् क्षै–क ।१शुक्लवर्णे । २तद्वति त्रि० ।

**बलज** न० बलात् जायते जन–ड । १क्षेत्रे २पुरद्वारे ३शस्ये ४युद्धे च । ५बलजाते त्रि० मेदि० । ६वरयोषायां ७शूपिकायां च स्त्री मेदि० ।

**बलद** पु० बलं ददाति दा–क । “पौष्टिके बलदः स्मृतः” १पौष्टिककर्माङ्गे वह्निभेदे । २अश्वगन्धायां स्त्री । राजनि० ३बलदातरि त्रि० । ४जीवके पु० राजनि० ।

**बलहीनता** स्त्री ६त० । ग्लानौ हेमच० ।

**बलदेव** पु० बलेन दीव्यति दिव–अच् बलोद्रिक्तो देवो वा शाक०त० । १बलरामे “बलदेवो बलोद्रेकात्” ब्रह्मवै० अ०ख० ४१ अ० । २त्रायमाणौषधौ स्त्री अमरः । ३वायौ पु० मेदि० ।

बालस्य बलवादेः समयमाह । "बलवः पञ्चमाद्वर्षादष्टमान्तस्य कर्म च । विरेकः षोडशाद्वर्षाद्विंशतेश्चैव मैथुनम्" । ततः पृथ्वा० इमनिच् बालिमन् बालभावे पु० पक्षे ष्यञ् बाल्य तत्रार्थे न० ।

बालक पु० बाल+स्वार्थे क। १शिशौ (बाला) २गन्धद्रव्ये न० राजनि०। ३ह्रीबेरे ४अङ्गुरीयके ५पारिहार्य्ये न०विश्वः । ६अश्वकरिपुच्छयोः ७केशे मेदि० हेमे च पु० विश्वः ।

बालकप्रिया स्त्री बालकं प्रीणाति प्री—क । १इन्द्रवारुण्यां (राखालशशा) २कदल्याञ्च राजनि० ३शिशुप्रियमात्रे त्रि०।

बालकृमि पु० इत० । केशकीटे (उकुन) शब्दा० ।

बालक्रीडनक पु० बालः क्रीड्यतेऽनेन क्रीड—करणे ल्युट् । स्वार्थे क । कपर्दके (कडि) राजनि० २तत्क्रीडासाधनमात्रे त्रि० ।

बाल(लि)खिल्य पु० ब० अङ्गुष्ठपर्वमितेषु षष्टिसहस्रसंख्येषु "क्रतोश्च सन्ततिर्भार्य्या बालखिल्यानसूयत । षष्टियानि सहस्राणि ऋषीणामूर्द्ध्वरेतसाम्" मार्कपु०उक्तेषु १मुनिभेदेषु । तेषां परिमाणञ्च अङ्गुष्ठमात्रं यथाह भा० आ० ३१ अ० । "ददर्शाथ ऋषीन् ह्रस्वान् अङ्गुष्ठोदरवर्ष्मणः । पलाशवल्लिकामेकां सहितान् वहतः पथि । प्रलीनान् स्वेष्विवाङ्गेषु निराहारांस्तपोधनान् । क्लिश्यमानान् मन्दबलान् गोष्पदे सम्प्लुतोदके"।"प्राणा वै बालखिल्याः" श्रुत्युक्तेषु २प्राणेषु च । [अमरः ।

बालगर्भिणी स्त्री बालेव गर्भिणी । प्रथमगर्भवत्यां गवि

बालगोपाल पु० कर्म० । श्रीकृष्णमूर्त्तिभेदे शिशुरूपे गोपाले नारदपञ्चरात्रे दृश्यम् ।

बालग्रह पु०६त०। बालानां पीडके उपग्रहभेदे 'बालग्रहाभिभूतानां बालानां शान्तिकारकमिति" षष्ठी । कुमारभृत्याशब्दे २१०८ पृ० दृश्यम् । [२शिशुचर्य्यायां स्त्री

बालचर्य्य पु० बालस्येव चर्य्याऽस्य । १कार्त्तिकेये त्रिका० इत०।

बालतनय पु० बालास्तनया इव पत्राण्यस्य ।१खदिरे अमरः २शिशुसुतके पु०स्त्री०।

बालतन्त्र न० बालार्थं तद्रक्षार्थं तन्त्रमुपायः ।

गर्भिणीचर्य्यायाम् कुमारभृत्याया त्रिका०२१०८पृ०दृश्यम्

बालतृण न० कर्म० । नवतृणे शष्पे अमरः ।

बालदलक पु०बाल इव सूक्ष्मं दलमस्य कप् । खदिरे भरतः

बालधि पु० बाला धीयन्तेऽत्र धा—आधारे कि। केशयुक्तलाङ्गूले अमरः ।

बालपत्र पु० बाल इव क्षुद्रं पत्रमस्य । १यवासे राजनि० । २खदिरवृक्षे भरतः । ३नवपत्रयुते त्रि० कर्म० । ४नवीने पत्रे न० वा कप् । बालपत्रक खदिरे त्रिका० ।

बालपाश्या स्त्री बालस्य केशस्य समीपस्था पाश्या । सीमन्तालिकस्थस्वर्णादिरचितपट्टिकारूपे भूषाभेदे (सिँती) अमरः ।

बालपुष्पी स्त्री० बालानि क्षुद्राणि पुष्पाण्यस्याः ङीप् । यूथिकायाम् राजनि०। कप् बालपुष्पिका तत्रार्थे जटाधरः ।

बालभद्रक पु० बालेऽपि भद्र इव कायति कै—क । विषभेदे शब्दच० । [पथ्ये च ।

बालभैषज्य न० इत० । १रसाञ्जने राजनि० २शिशूनामौ-

बालभोज्य पु० इत०।१चणके राजनि० २बालकभक्षणीये त्रि०

बालमूषिका स्त्री० कर्म० । क्षुद्रमूषिकायां गिरिकायाम् अमरः ।

बालयज्ञोपवीतक न०बालस्य यज्ञोपवीतमिव कायति कै-क । उरस्कटे (दुकबाछाडि) त्रिका० । [शब्दर० ।

बालराज न०बालः स्वल्पोऽपि राजते राज—अच् । वैदूर्य्यमणौ

बालरोग पु० भावप्र० उक्ते बालस्य रोगभेदे तन्निदानादि तत्रोक्तं यथा

"अथ बालरोगाणां निदानानि लक्षणानि चाह । "धात्र्यास्तु गुरुभिर्भोज्यैर्विषमैर्दोषलैस्तथा । दोषा देहे प्रकुप्यन्ति ततः स्तन्यं प्रदुष्यति । मिथ्याहारविहारिण्या दुष्टा वातादयस्त्रियः । दूषयन्ति पयस्तेन जायन्ते व्याधयः शिशोः । ह्रीवेरं शर्करा लोध्रं बीजं तृष्णाहरं परम् ।" इति तृष्णायाम् । "वातदुष्टं शिशुः स्तन्यं पिबन् वातगदातुरः । क्षामस्वरः कृशाङ्गः स्याद्बद्धविण्मूत्रमारुतः । स्विन्नो भिन्नमलो बालः कामलापित्तरोगवान् । तृष्णालुरुष्णसर्वाङ्गः पित्तदुष्टं पयः पिबन् । कफदुष्टं पिबन् क्षीरं लालालुः श्लेष्मरोगवान् । निद्रान्वितो जडः शूनो वक्राक्षश्छर्दनः शिशुः । ज्वराद्या व्याधयः सर्वे महान्तो ये भवन्ति ते । बालानामपि ते तद्वद्बोद्धव्या भिषगुत्तमैः । बालानामेव ये रोगा भवन्ति महतां न च । तालुकण्टकमुख्यांस्ताननवधारय यत्नतः।" तत्रादौ तालुकण्टकमाह । "तालुमांसे कफः क्रुद्धः कुरुते तालुकण्टकम् । तेन तालुप्रदेशस्य निम्नता मूर्ध्नि जायते । तालुपातात् स्तनद्वेषः कृच्छ्रात् पानं शकृद्द्रवम् । तृडक्षिकण्ठास्यरुजा ग्रीवादुर्धरता वमिः ।" पानं स्तनस्य, शकृद्द्रवं द्रवरूपम् । महापद्ममाह । "विसर्पस्तु शिशोः प्राणनाशनः शीर्षवस्तिजः । पद्मवर्णो महापद्मरोगो दोषत्रयोद्भवः । शङ्खाभ्यां

लुक न॰ बालु+स्वार्थे क। १तत्रैव अमरः। पु॰ बाल-उक। २पानीयामलके पु॰ राजनि॰। ३सिकतासु स्त्री। ४कर्कट्यां जटा॰ ५कर्पूरे ६यन्त्रभेदे शब्दच॰।

लुकायन्त्र न॰ ६त॰। १औषधपाकार्थे यन्त्रभेदे। "भाण्डे वितस्तिगम्भीरे मध्ये निहितकूपिके। कूपिका कण्ठपर्य्यन्तं बालुकाभिश्च पूरिते। भेषजं कूपिकासंस्थं वह्निना यत्र पच्यते। बालुकायन्त्रमेतद्धि यन्त्रतन्त्रविदुधैः स्मृतम्" भावप्र॰। २काचस्थापने रघुना॰ प्रदर्शिते यन्त्रभेदे "बहुलरेणुगर्भैव सम्यक् कार्य्यं प्रसाधयेत्" स्मृ॰ति॰ व्याख्यायां "छत्राकारेण रेणवः सिकतायागर्भे उदरे यस्यैतादृशं यन्त्रं बालुकायन्त्रं प्रसिद्धम्" रघुनाथः।

लुकास्वेद पु॰ ३त॰। भावप्र॰ उक्ते तप्तबालुकाभिः स्वेदने। "वातश्लेष्मतते स्वेदान् कारयेद्रूक्षनिर्मितान्। स्निग्धः स्वेदो निषिद्धोऽत्र विना केवलवातजान्। खर्परभृष्टपटस्थितकाञ्जिकसिक्तबालुकास्वेदः। शमयति वातकफामयमस्तकशूलाङ्गभङ्गादीन्। शीतवां मार्दवं कृत्वा नीत्वा पावकमाशयम्। हत्वा वातकफस्तम्भं स्वेदो ज्वरमपोहति"। [पृषो॰ हुक। बालुक्रीत्यप्यत्र सिका॰

लुकी स्त्री॰ पु॰ बल-उक गौरा॰ ङीष्। कर्कटीभेदे राजनि॰

लूक पु॰ पु॰ बाल-उक। विषभेदे हेमच॰।

लेय पु॰ बलेरपत्यं, बलये हितं वा ढक्। १रासभे, अमरः २दैत्यभेदे, धरणिः ३अङ्गारवल्ल्यां त्रिकाः। ४चाणक्यमूलके पु॰ ५बालहिते च त्रि॰ मेदि॰। [अमरः।

लेयशाक पु॰ बलये हितं ढक् कर्म॰ (शामनहाटि) शाकभेदे

लेष्ट पु॰ बालानामिष्टः १ब(व)दरे राजनि॰। २बालकानामभीष्टे त्रि॰।

लोपवीत न॰ ६त॰ उरस्कटे बालयज्ञोपवीतशब्दार्थे हारा॰

ल्वजभारिक त्रि॰ बल्वजानां भारं वहति वंशा॰ ठक्। उलपतृणभारवाहके।

ल्य न॰ बालस्य भावः, कर्म वा, वयोवचनत्वात् ष्यञ्। 'बाल्योऽषोडशाद्वयेदुबाल्य' इत्युक्ते अवस्थाभेदे।

ल्हिक न॰ बल्हिदेशे भवः वा॰ वुञ्। कुङ्कुमे अमरः पाठान्तरम्। [हिङ्गुनि न॰।

ल्हायन त्रि॰ बल्हौ जातम् फक्। १बल्हिदेशोद्भवे

ल्हि(ह्री)क पु॰ बल्हि+स्वार्थे ठञ्। ईक वा। १कुङ्कुमे हिङ्गुनि च न॰ मेदि॰ २देशभेदे ३तद्देशीये च पु॰ मेदि॰। ५तद्देशस्थे हरिवं॰ ६ अ॰। दीर्घमध्यः गन्धर्वभेदे पु॰ शब्दर॰

ष्कल पु॰ ऋषिभेदे आश्व॰ श्रौ॰ २४.४।

बाष्प(स्प) पु॰ बाध-पृषो॰ सत्वं षत्वं वा। १नेत्रजले, २ऊष्मणि च अमरः लौहे च मेदि॰ तत्र आद्यमन्त्यस्थवादितयोक्तः।

बास्कल पु॰ दैत्यभेदे हरिवं॰ ४अ॰।

बा(वा)ह प्रयत्ने भ्वादि॰ आत्म॰ अक॰ सेट्। बा(वा)हते अबा(वा)हिष्ट। ऋदित् चङि न ह्रस्वः अबबाहत् त।

बाह पुं स्त्री बाहु+पृषो॰। बाहुशब्दार्थे रमानाथः।

बाहा(हू)बाहवि अव्य॰ बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्तम् युद्धम् इच्समा॰ पूर्वपदे आदु दीर्घो वा। बाहुभ्यां बाहुभ्यां प्रहृत्य प्रवृत्ते युद्धे। [अमरः।

बाहु पु॰ बाध-कु धस्य हः। भुजे कक्षावध्यङ्गुलिपर्य्यन्तेऽवयवे

बाहुक पु॰ ऋतुपर्णनृपस्य अश्वपालत्वादिरूपेण स्थिते नलरूपे तत्कथा भा॰व॰६७अ॰ दृश्या। २नागभेदे भा॰ आ॰ ५७ अ॰।

बाहुकुण्ठ त्रि॰ ३त॰। कुण्ठितबाहुके (कोपा) जटा॰।

बाहुकुन्थ पु॰ बाहुरिव कुन्थति कुन्थ-अच्। विहगानां बाहुस्थानीये पक्षे शब्दच॰। [जाते।

बाहुकुलेयक त्रि॰ बहुकुले जातादि ढकञ्। बहुकुल-

बाहुज पु॰ बाहुभ्यां प्र(प्र)सूबाहुभ्यां जायते जन-ड।१क्षत्रिये अमरः। 'बाहू राजन्यः कृत' इति श्रुतिः। २कीरे ३स्वयं जाततिले च मेदि॰ ४बाहुजातमात्रे त्रि॰।

बाहुत्र पु॰ न॰ बाहुं त्रायते त्रै-क। अस्त्राघातवारणार्थं हस्तबद्धे लौहवर्मादौ हेमच॰।

बाहुत्राण न॰ बाहुः त्रायते अनेन त्रै-करणे ल्युट्। अस्त्राघात वारणार्थे बाहुबद्धवर्मणि हेमच॰।

बाहुदन्तक पु॰ बहवश्चत्वारो दन्ता यस्य कप् ऐरावतः तदुपचारात् इन्द्रः तेन प्रोक्तमण्। पुरन्दरप्रोक्ते पञ्चसहस्राध्याये नीतिशास्त्रभेदे भा॰शा॰५९अ॰। [इन्द्रे हेमच॰।

बाहुदन्तेय पु॰ बहुदन्तश्चतुर्दन्त ऐरावतस्तमर्हति वा॰ ढ।

बाहुदा स्त्री स्वनामख्याते १नदीभेदे। सा च प्रसेनजिद्भार्य्या गौरी नाम, भर्त्रा शप्ता नदीरूपा जाता हरिवं॰१२अ॰। सा हि शङ्खस्य भ्रातः फलहरणे प्रद्युम्नदण्डेन छिन्नं लिखितस्य मुनेः हस्तम् अवगाहनात् पुनर्ददाविति कथा भा॰शा॰ २३ अ॰ यथा "स गत्वा बाहुदां शीघ्रं तर्पयस्व यथाविधि। देवानृषीन् पितॄंश्चैव मा चाधर्मे मनः कृथाः। तस्य तद्वचनं श्रुत्वा शङ्खस्य लिखितस्तदा। अवगाह्यापगां पुण्यामुदकार्थं प्रचक्रमे। प्रादुरास्तां ततस्तस्य करौ जलजसन्निभौ। ततः स विस्मितो भ्रातुर्दर्शयामास तौ करौ"।

यो तत्पत्रैर्यः प्रपूजयेत् । तत्काष्ठचन्दनैर्वापि स मे भक्तः स मे प्रियः ॥ तत्काष्ठचन्दनं भाले यो धारयति सम्भ्रमात् । तत्तनुं शिवबुद्ध्या सा नमेद्देवी सदान्विता ॥ अतस्तच्चन्दनं देवि ! न धारयति कश्चन । तत्पत्रं तत्प्रसूनं वा कदापि धारयेन्न हि । तन्मूले मच्छ्मशाने ! प्राणांस्त्यजति यो नरः । रुद्रदेहो भवेत् सत्यं पापकोटियुतोऽपि सन्” योगिनीतन्त्रे पटले ।

“बिल्ववृक्षं तथा देवि ! भगवान् शङ्करः स्वयम् । बिल्ववृक्षतले स्थित्वा यदि प्राणांस्त्यजेत् सुधीः ॥ तत्-क्षणात् मोक्षमाप्नोति किन्तस्य तीर्थकोटिभिः । यत्र ब्रह्मादयो देवास्तिष्ठन्ति मुक्तिहेतवे ॥ बिल्ववृक्षतले स्थानं यदि बिल्वादिपूरितम् । तदेव शाङ्करं क्षेत्रं सर्वतीर्थमयं सदा ॥ सर्वपीठमयं तत्तु सर्वदेवमयं सदा । न त्यजेत् शाङ्करं क्षेत्रं न च गङ्गां त्यजेत् प्रिये ॥ समीपे स च चार्वङ्गि ! बिल्ववृक्षो यदि प्रिये ! । काशीपुरसमं तत्तु तत्र प्राणान् त्यजेद् यदि । किन्तस्य कोटितीर्थेन काशीवासेन किं प्रिये ! ॥ मुण्डमालातन्त्रे १० पटले । तद्दानविधिर्यथा

“पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् । यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् ।” मातृकातन्त्रे ५५ पटले । “शिव उवाच । शृणु देवि ! प्रवक्ष्यामि रहस्यं त्रिजटात्मकम् । पत्रं ब्रह्ममयं देवि ! शृणु त वरवर्णिनि ! ॥ श्रीशैलशिखरे जातः श्रीफलः श्रीनिकेतनः । विष्णुप्रीतिकरश्चैव मम प्रीतिकरः सदा ॥ ब्रह्मविष्णुशिवाः पत्रे हन्तस्य शक्तिरूपकम् । हन्तमूले तु वसाम पत्रे ब्रह्मपदं प्रिये ॥ त्रिजटापत्रकेनैव हरं वा हरिमर्चयेत् । केवलं तस्य तेनैव शक्तिपूजा विशेषतः ॥ पत्रं पुष्पं फलं तोयं नैवेद्यं धूपदीपकम् । दत्त्वा यद्यत् फलं प्राप्तं तस्मात् कोटिगुणं भवेत् ॥ सर्वैरर्चनतो देवि ! त्रिजटात्मकमर्पणम् । कैवल्यदो हरिश्चैव दासोऽहं त्वत्-स्वरूपताम् । त्वयि कैवल्यदं स्थानं धर्मकामार्थदं प्रिये ! ॥ वज्रहीनमिदं देवि ! प्राप्नुयाद्वाञ्छितं फलम् । सवज्रं शिवते न्यूनं वज्राघातेन पार्वति ! ॥ तस्माच्च साधकेन्द्रेण वज्रहीनं प्रदीयते” । ‘धात्रं स्पृहीत्वा यो गच्छेत् सर्वसिद्धिमवाप्नुयात् । ऊर्द्ध्वं षड्गं रक्षेदधः पशुपतिस्तथा । पुरो माहेश्वरी रक्षेत् पृष्ठे च शूलधारिणी ॥ दक्षपार्श्वे च श्रीनाथो वामपार्श्वे प्रजापतिः । चन्द्रसूर्यौ स्तौ सततं संवादकरौ सदा” । ज्ञानभैरवतन्त्रे ६ पटले । बिल्वफलस्य कर्कटीपथत्वेऽपि शुद्रा-

चारे तादृशस्यभावात् अन्त्यस्य बोपधत्वं पूजितं · सर्वत्र तस्याशुद्धत्वं बोध्यम् । [भा० २५ अ० ।

**बिल्वक** न० १तीर्थभेदे भा०अनु० २५ अ० २नागभेदे भा०

**बिल्वकादि** पु० “बिल्वादिभ्यश्छस्य लुक्” पा०छ स्तो कमत्व लुग्निमित्ते शब्दगणे स च पा० ग० उक्तो यथा
“बिल्व वेणु वेत्र वेतस इक्षु काष्ठ कपोत तृण क्रुञ्चा (क्षुद्रकाञ्चा) । तक्षन् (नलोपश्च)”बैल्वकीयायां भूमौ भवाः बैल्वकाः तस्य लुक् न लुको निवृत्तिः ।

**बिल्वकीय** त्रि० बिल्वाः सन्ति यस्यां नडा० छ कुक् च । बिल्वयुक्तभूमौ ततो वहुत्वे बिल्वका० कमात्वस्य लुक् ।

**बिल्वज** त्रि०बिल्वात् जायते जन–ड । मालूरजाते । बिल्वस्य विषयः राजन्या० वुञ् । बैल्वजक तद्विषये ।

**बिल्वतेजस्** पु० नागभेदे भा० आ० ५७ अ० ।

**बिल्वपत्र** पु०१नागभेदे भा०भी० १०२ । ६त०२मालूरस्य पत्रे न० “बिल्वपत्रकृता पीठे दुर्गोत्सवपद्धतिः ।

**बिल्वपाण्डर** पु० नागभेदे भा०आ० ३५अ० ।

**बिल्वपेषिका** स्त्री बिल्वस्य पेषः साधनत्वेन अस्त्यस्याः ठन् । (बेलशुँठ) शुष्कबिल्वखण्डे राजनि० ।

**बिल्ववन** न० ६त० । मालूरसमुदाये तस्य विषयः राजन्या० वुञ् । बैल्ववनक तद्विषये ।

**बिल्वा** स्त्री० बिल–भेदने उल्वा०नि०। हिङ्गुपत्र्यां राजनि ।

**बिल्वोदकेश्वर** पु० । शिवमूर्त्तिभेदे तस्याविर्भावकथा हरिवं० १२६ अ० । [अवेसीत् विवेश ।

**बिस** क्षेपे दि० पर०सक०सेट् । बिस्यति । इरित् अबिसत्-

**बिस** न० बिस–क । मृणाले अमरः । [अमरः ।

**बिसकण्ठिका** स्त्री बिसमिव कण्ठोऽस्याः कप् । बलाकायाम्

**बिसकण्ठिन्** पु०बिसमिव कण्ठोऽस्यस्य इनि । बके राजनि०

**बिसकुसुम** न० बिसस्थितं कुसुमम् शा०त०। कमले राजनि०। बिसप्रसून तत्रार्थे अमरः । [जननकर्त्तरि ।

**बिसखा** त्रि० बिसं मृणालं खनति खन–विट् ङा । मृणाल

**बिसग्रन्थि** पु० ६त० । मृणालग्रन्थौ । तस्य जलकालुष्यनिवारकता सुश्रुते उक्ता यथा
“सप्त कलुषस्य प्रसादनानि भवन्ति । तद्यथा कतकगोमेदकबिसग्रन्थिशैवालमूलवस्त्राणि मुक्तामणिश्चेति” ।

**बिसनाभि** स्त्री बिसं नाभिरिवास्याः । पद्मिन्यां त्रिका०

**बिसनालिका** स्त्री बिसस्य नालिकेव । मृणाले शब्दार्थकल्प० । तस्य सच्छिद्रकनालत्वात् तथात्वम् ।

**बिसल** न०बिस–कलच् । किसलये त्रिका०।

तु साधने भूयःसहभावोपलम्भेऽपि व्यभिचारशङ्कायाः को निवारयिता। शिंशपावृक्षयोश्च तादात्म्यनिश्चये वृक्षोऽयं शिंशपेति सामानाधिकरण्यबलादुपपद्यते। न ह्यत्यन्ताभेदे तत् सम्भवति पर्यायत्वेन युगपदपि प्रयोगायोगात् नाप्यत्यन्तभेदे गवाश्वयोरिवानुपलम्भात्। तस्मात् कार्य्यात्मानौ कारणमात्मानमनुमापयत इति सिद्धम्। यदि कश्चित् प्रामाण्यमनुमानस्य नाङ्गीकुर्य्यात् तं प्रतिब्रूयात् अनुमानं न भवतीत्येतावन्मात्रं प्रमाणं तस्य न किञ्चन साधनमुपन्यस्यते उपन्यस्यते वा। न प्रथमः एकाकिनी प्रतिज्ञा हि प्रतिज्ञातं न साधयेदिति न्यायात्। नापि चरमः अनुमानं प्रमाणं न भवतीति ब्रुवाणेन त्वया अविरुद्धवचनस्योपन्यासे मम माता बन्ध्येतिवद् व्याघातापातात्। किञ्च प्रमाणतदाभासव्यवस्थापनं तत्समानजातीयत्वादिति वदता भवतैव स्वीकृतं स्वभावानुमानम्। परगता विप्रतिपत्तिस्तु वचनलिङ्गेनेति ब्रुवता कार्य्यलिङ्गकमनुमानम्। अनुपलब्ध्या कञ्चिदर्थं प्रतिषेधयतानुपलब्धिलिङ्गकमनुमानम्। तथाचोक्तं तथागतैः "प्रमाणान्तरसामान्यस्थितेरन्यधियो गतेः। प्रमाणान्तरसद्भावः प्रतिषेधाच्च कस्यचिदिति" पराक्रान्तञ्चात्र सूरिभिरिति ग्रन्थभूयस्त्वभयादुपरम्यते। ते च बौद्धाश्चतुर्विधया भावनया परमपुरुषार्थं कथयन्ति। ते च माध्यमिकयोगाचारसौत्रान्तिकवैभाषिकसंज्ञाभिः प्रसिद्धा बौद्धा यथाक्रमं सर्वशून्यत्व-बाह्यशून्यत्व-बाह्यार्थानुमेयत्व-बाह्यार्थप्रत्यक्षत्ववादानातिष्ठन्ते। यद्यपि भगवान् बुद्ध एक एव बोधयिता तथापि बोद्धव्यानां बुद्धिभेदाच्चातुर्विध्यं यथा गतोऽस्तमर्क इत्युक्ते जारचौरानूचानादयः स्वेष्टानुसारेणाभिसरणपरस्वहरणसदाचरणादिसमयं बुध्यन्ते। सर्वं क्षणिकं क्षणिकम्, दुःखं दुःखं, स्वलक्षणं स्वलक्षणं, शून्यं शून्यमिति भावनाचतुष्टयमुपदिष्टं द्रष्टव्यम्। तत्र क्षणिकत्वं नीलादिक्षणानां सत्त्वेनानुमातव्यं यत् सत् तत् क्षणिकं यथा जलधरपटलं सन्तश्चामी भावा इति। न चायमसिद्धो हेतुः अर्थक्रियाकारित्वलक्षणस्य सत्त्वस्य नीलादिक्षणानां प्रत्यक्षसिद्धत्वात् व्यापकव्यावृत्त्या व्याप्यव्यावृत्तिरिति न्यायेन व्यापकक्रमाक्रमव्यावृत्तावक्षणिकात् सत्त्वव्यावृत्तेः सिद्धत्वाच्च। तच्चार्थक्रियाकारित्वं क्रमाक्रमाभ्यां व्याप्तं न च क्रमाक्रमाभ्यामन्यः प्रकारः समस्ति "परस्परविरोधे हि न प्रकारान्तरस्थितिः। नैकतापि विरुद्धानामुक्तिमात्रविरोधतः"

इति न्यायेन व्याघातस्योद्भटत्वात्। तौ च क्रमाक्रमौ स्थायिनः पक्षाद् व्यावर्त्तमानौ अर्थक्रियामपि व्यावर्त्तयन्तौ क्षणिकत्वपक्ष एव सत्त्वं व्यवस्थापयत इति सिद्धम्। नन्वक्षणिकस्यार्थक्रियाकारित्वं किं न स्यादिति चेत् तदयुक्तं विकल्पासहत्वात् तथा हि वर्त्तमानार्थक्रियाकरणकाले अतीतानागतयोः किमर्थक्रिययोः स्थायिनः सामर्थ्यमस्ति ? नो वा ? आद्ये तयोरनिराकरणप्रसङ्गः समर्थस्य क्षेपायोगात् यत् यदा यत्करणसमर्थं तत् तदा तत्करोत्येव यथा सामग्री स्वकार्यं समर्थश्चायं भावः इति प्रसङ्गानुमानाच्च। द्वितीयेऽपि कदाचिदपि न कुर्य्यात् सामर्थ्यमात्रानुबन्धित्वादर्थक्रियाकारित्वस्य यत् यदा यन्न करोति तत् तदा तत्रासमर्थं यथा हि शिलाशकलमङ्कुरे, न चैष वर्त्तमानार्थक्रियाकरणकाले वृत्तवर्त्तिष्यमाणे अर्थक्रिये करोतीति तद्विपर्ययाच्च। ननु क्रमवत्सहकारिणः स्थायिनः अतीतानागतयोः क्रमेण करणमुपपद्यते इति चेत् तत्रेदं भवान् पृष्टो व्याचष्टां सहकारिणः किं भावस्योपकुर्वन्ति ? न वा ? न चेत् नापेक्षणीयास्ते अकिञ्चित्कुर्वतां तेषां तादर्थ्यायोगात्। उपकारकत्वपक्षे सोऽयमुपकारः किं भावाद्भिद्यते ? न वा ? भेदपक्षे आगन्तुकस्यैव तस्य कारणत्वं स्यात् न भावस्याक्षणिकस्य, आगन्तुकातिशयान्वयव्यतिरेकानुविधायित्वात् कार्य्यस्य। तदुक्तम् "वर्षातपाभ्यां किं व्योम्नश्चर्म्मण्यस्ति तयोः फलम् ?। चर्म्मोपमश्चेत् सोऽनित्यः खतुल्यश्चेदसत्फल इति"। अथ भावस्तैः सहकारिभिः सहैव कार्य्यं करोतीति स्वभाव इति चेत् अङ्ग तर्हि सहकारिणो न जह्यात् प्रत्युत पलायमानानपि गले बद्ध्वा स्वकार्य्यं कुर्य्यात् स्वभावस्यानपायात्। किञ्च सहकारिजन्योऽतिशयः किमतिशयान्तरमारभते न वा ? उभयथापि प्रागुक्तदूषणपाषाणवर्षणप्रसङ्गः। अतिशयान्तरारम्भपक्षे बहुमुखानवस्थादौस्थ्यमपि स्यात् अतिशये जनयितव्ये सहकार्य्यन्तरापेक्षायां तत्परम्परापात इत्येकानवस्थाऽऽस्थेया, तथाहि सहकारिभिः सलिलपवनादिभिः पदार्थसार्थैराधीयमाने बीजस्यातिशये बीजमुत्पादकमभ्युपेयम् अपरथा तदभावेऽप्यतिशयः प्रादुर्भवेत् बीजञ्चातिशयमादधानं सहकारिसापेक्षमेवाधत्ते अन्यथा सर्वदोपकारापत्तौ अङ्कुरस्यापि सदोदयः प्रसज्येत। तस्मादतिशयार्थमपेक्षमाणैः सहकारिभिरति-

वाच कल्प्यतामिति कल्प्यते। तस्मादध्यक्षाधिष्ठानतदुपन्यस्तदर्शनद्वन्द्वानां मध्ये एकस्यानेकस्य वा सत्त्वे निषेधविषयत्वेन सर्वस्यासत्त्वं बलादापतेदिति।

(माध्यमिकाः) भगवतोपदिष्टे माध्यमिकास्तावदुत्तमप्रज्ञा इत्थमचीकथन् भिक्षुपादप्रसारणन्यायेन क्षणभङ्गाद्यभिधानमुखेन स्थायित्वानुकूलवेदनीयत्वानुगतसर्वसत्यत्वभ्रमव्यावर्त्तनेन सर्वशून्यतायामेव पर्य्यवसानम्। अतस्तत्त्वं सदसदुभयानुभयात्मकचतुष्कोटिविनिर्मुक्तं शून्यमेव। तथा हि यदि घटादेः सत्त्वं स्वभावस्तर्हि कारकव्यापारवैयर्थ्यम्। असत्त्वं स्वभाव इति पक्षे प्राचीन एव दोषः प्रादुःष्यात्। यथोक्तम् "न सतः कारणापेक्षा व्योमादेरिव युज्यते। कार्य्यस्यासम्भवो हेतुः खपुष्पादेरिवासतः" इति विरोधादितरौ पक्षावनुपपन्नौ तदुक्तं भगवता लङ्कावतारे "बुद्ध्या विविच्यमानानां स्वभावो नावधार्य्यते। अतो निरभिलप्यास्ते निःस्वभावाश्च दर्शिताः" इति। "इदं वस्तुबलायातं यद्वदन्ति विपश्चितः। यथा यथार्थाश्चिन्त्यन्ते विशीर्य्यन्ते तथा तथेति" च। न क्वचिदपि पक्षे व्यवतिष्ठत इत्यर्थः। इष्टार्थव्यवहारश्च न स्वप्नव्यवहारवत् संवृत्त्या सङ्गच्छते। अतएवोक्तम् "परिव्राट्कामुकशुनामेकस्यां प्रमदातनौ। कुणपः कामिनी भक्ष्य इति तिस्रो विकल्पना इति।" तदेवं भावनाचतुष्टयवशान्निखिलवासनानिवृत्तौ निर्वाणं शून्यरूपं सेत्स्यतीति वयं कृतार्था नास्माकमुपदेश्यं किञ्चिदस्तीति। शिष्यैश्चावद्योगश्चाचारश्चेति द्वयं करणीयम्। तत्राप्राप्तस्यार्थस्य प्राप्तये पर्य्यनुयोगो योगः गुरूक्तस्यार्थस्याङ्गीकरणमाचारः गुरूक्तस्याङ्गीकरणादुत्तमाः पर्य्यनुयोगस्याकरणादधमाश्च अतस्तेषां माध्यमिका इति प्रसिद्धिः।

(योगाचाराः) गुरूक्तभावनाचतुष्टयं बाह्यार्थस्य शून्यत्वं चाङ्गीकृत्याऽऽन्तरस्य शून्यत्वमङ्गीकृतं कथमिति? पर्य्यनुयोगस्य करणात् केषाञ्चिद् योगाचारप्रथा। एषा हि तेषां परिभाषा स्वयंवेदनं तावदङ्गीकार्य्यम् अन्यथा जगदान्ध्यं प्रसज्येत। तत्कीर्त्तितं धर्म्मकीर्त्तिना "अप्रत्यक्षोपलम्भस्य नार्थदृष्टिः प्रसिध्यतीति।" बाह्यं ग्राह्यं नोपपद्यत एव विकल्पानुपपत्तेः। अर्थो ज्ञानग्राह्यो भवादुत्पन्नो भवति अनुत्पन्नो वा, न पूर्वः उत्पन्नस्य स्थित्यभावात् नापरः अनुत्पन्नस्यासत्त्वात्। अथ मन्येथाः अतीत एवार्थो ज्ञानग्राह्यः तज्जनकत्वादिति तदपि बालभाषितं वर्त्तमानतावभासविरोधात् इन्द्रियादेरपि ग्राह्यत्वप्रसङ्गाच्च। किञ्च ग्राह्यः किं परमाणुरूपोऽर्थः अवयविरूपो वा। न चरमः कृत्स्नैकदेशविकल्पादिना तन्निराकरणात्। न प्रथमः अतीन्द्रियत्वात् षट्केन युगपद्योगस्य बाधकत्वाच्च। यथोक्तम् "षट्केन युगपद् योगात् परमाणोः षडंशता। तेषामप्येकदेशत्वे पिण्डः स्यादणुमात्रकः" इति। तस्मात् स्वव्यतिरिक्तग्राह्यविरहात्तदात्मिका बुद्धिः स्वयमेव स्वात्मरूपप्रकाशिका प्रकाशवदिति सिद्धम्। तदुक्तम् "नान्योऽनुभाव्यो बुद्ध्यास्ति तस्या नानुभवोऽपरः। ग्राह्यग्राहकवैधुर्य्यात् स्वयं सैव प्रकाशते इति।" ग्राह्यग्राहकयोरभेदश्चानुमातव्यः यद्वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानेनात्मा, वेद्यन्ते तेन नीलादयः। भेदे हि सत्यधुना अनेनार्थस्य सम्बन्धित्वं न स्यात् तादात्म्यस्य नियमहेतोरभावात् तदुत्पत्तेरनियामकत्वात् यश्चायं ग्राह्यग्राहकसंवित्तीनां पृथगवभासः स एकस्मिन् चन्द्रमसि द्वित्वावभास इव भ्रमः अस्याप्यनादिरविच्छिन्नप्रवाहा भेदवासनैव निमित्तम्। यथोक्तम् "सहोपलम्भनियमादभेदो नीलतद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये" इति। "अविभागोऽपि बुद्ध्यात्मा विपर्य्यासितदर्शनैः। ग्राह्यग्राहकसंवित्तिभेदवानिव लक्ष्यते" इति च। न च रसवीर्य्यविपाकादि समानमाशामोदकोपार्ज्जितमोदकानां स्यादिति वेदितव्यं वस्तुतो वेद्यवेदकाकारविधुराया अपि बुद्धेर्व्यवहर्त्तृपरिज्ञानानुरोधेन विभिन्नग्राह्यग्राहकाकाररूपवत्तया तिमिराद्युपहताक्षाणां केशेन्द्रनाडीज्ञानाभेदवदनाद्युपप्लववासनासामर्थ्याद् व्यवस्थोपपत्तेः पर्य्यनुयोगायोगात्। यथोक्तम् "अवेद्यवेदकाकारा यथा भ्रान्तैर्निरीक्ष्यते। विभक्तलक्षणग्राह्यग्राहकाकारविप्लवा। तथा कृतव्यवस्थेयं केशादिज्ञानभेदवत्। यदा तदा न सञ्चोद्या ग्राह्यग्राहकलक्षणेति" तस्माद् बुद्धिरेवानादिवासनावशादनेकाकारावभासत इति सिद्धम्। ततश्च प्रागुक्तभावनाप्रचयबलान्निखिलवासनोच्छेदविगलितविविधविषयाकारोपप्लवविशुद्धविज्ञानोदयो महोदय इति।

(सौत्रान्तिकाः) अन्ये तु मन्यन्ते यदुक्तं बाह्यं वस्तुजातं नास्तीति तदयुक्तं प्रमाणाभावात्। न च सहोपलम्भनियमः प्रमाणमिति वक्तव्यं वेद्यवेदकयोरभेदसाधकत्वेनाभिमतस्य तस्याप्रयोजकत्वेन सन्दिग्धविपक्षव्यावृत्तिकत्वात्। ननु भेदे सहोपलम्भनियमात्मकं

बाध्येत न स्यादिति चेन्न ज्ञानस्यान्तर्मुखतया भेदेन प्रतिभासमानतया एकदेशस्यैककालत्वस्य च सहत्वनियमाभावाच्च नीलार्थस्य ज्ञानाकारत्वे अहमिति प्रतिभासः स्यात् न त्विदमिति प्रतिपत्तिः प्रत्ययव्यतिरेकात्। अथोच्यते ज्ञानस्वरूपोऽपि नीलाकारो भ्रान्त्या बहिर्वद्भेदेन प्रतिभासत इति न च तस्मादहं सुखं च इति यथोक्तम् "परिच्छेदान्तराद् योऽयं भागो बहिरिव स्थितः। ज्ञानस्याभेदिनो भेदप्रतिभासोऽप्युपप्लवः" इति। "यदन्तर्ज्ञेयतत्त्वं तद् बहिर्वदवभासत इति च"—तदयुक्तं बाह्यार्थाभावे तदुत्पत्तिरहिततया बहिर्वदित्युपमानोक्तेरयुक्तेः न हि वसुमित्रो वन्ध्यापुत्रवदवभासत इति प्रेक्षावानाचक्षीत। भेदप्रतिभासस्य भ्रान्तत्वे अभेदप्रतिभासस्य प्रामाण्यं, तत्प्रामाण्ये च भेदप्रतिभासस्य भ्रान्तत्वमिति परस्पराश्रयप्रसङ्गाच्च। अविसंवादान्नीलतादिकमेव संविदाना बाह्यमेवोपाददते जिहासन्ति चान्तरमिति व्यवस्थादर्शनाच्च। एवञ्चायमभेदसाधको हेतुर्गोमयपायसीयन्यायवदाभासतां भजेत् अतो बहिर्वदिति वदता बाह्यं ग्राह्यमेवेति भावनीयमिति भवदीय एव बाणो भवन्तं प्रहरेत्। ननु ज्ञानाभिन्नकालस्यार्थस्य ग्राह्यत्वमनुपपन्नमिति चेत् तदनुपपन्नम् इन्द्रियसन्निकृष्टस्य विषयस्योत्पाद्ये ज्ञाने स्वाकारसमर्पकतया समर्पितेन चाकारेण तस्यार्थस्यानुमेयतोपपत्तेः अतएव पर्य्यनुयोगपरिहारौ समगादिषाताम्। "भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः। हेतुत्वमेव च युक्तिज्ञा ज्ञानाकारार्पणक्षममिति" तथा च यथा पुष्ट्या भोजनमनुमीयते यथा च भाषया देशः यथा वा सम्भ्रमेण स्नेहः तथा ज्ञानाकारेण ज्ञेयमनुमेयम्। तदुक्तम् "अर्थेन घटयत्येनां न हि मुक्त्वाऽर्थरूपताम्। तस्मात् प्रमेयाधिगतेः प्रमाणं मेयरूपतेति" न हि वित्तिसत्तैव तद्वेदना युक्ता तस्याः सर्वत्राविशेषात् तान्तु सारूप्यमाविशत् सरूपयितुं घटयेदिति च। तथा च बाह्यार्थसद्भावे प्रयोगः ये यस्मिन् सत्यपि कादाचित्काः ते सर्वे तदतिरिक्तापेक्षाः यथा अविवक्षति, अजिगमिषति मयि वचनगमनप्रतिभासा विवक्षुजिगमिषुपुरुषान्तरसन्तानसापेक्षाः तथा च विवादाध्यासिताः प्रवृत्तिप्रत्ययाः सत्यप्यालयविज्ञाने कदाचिदेव नीलाद्युल्लेखना इति। तत्रालयविज्ञानं नामाहमास्पदं विज्ञानं, नीलाद्युल्लेखि च प्रवृत्तिविज्ञानम्। यथोक्तम् "तत् स्यादालयविज्ञानं यद्भवेदहमास्पदम्। तत् स्यात् प्रवृत्तिविज्ञानं यन्नीलादिकमुल्लिखेदिति" तस्मादालयविज्ञानसन्तानातिरिक्तः कादाचित्कः प्रवृत्तिविज्ञानहेतुर्बाह्योऽर्थो ग्राह्य एव न वासनापरिपाकप्रत्ययः कादाचित्कत्वात् कदाचिदुत्पाद इति वेदितव्यम्। विज्ञानवादिनये हि वासनानामेकसन्तानवर्त्तिनामालयविज्ञानानां तत्तत्प्रवृत्तिजननशक्तिः तस्याश्च स्वकार्य्योत्पादं प्रत्याभिमुख्यं परिपाकः तस्य च प्रत्ययः कारणं स्वसन्तानवर्त्तिपूर्वक्षणः अङ्गीक्रियते सन्तानान्तरनिबन्धनत्वानङ्गीकारात्। ततश्च प्रवृत्तिज्ञानजननालयविज्ञानवर्त्तिवासनापरिपाकं प्रति सर्वेऽप्यालयविज्ञानवर्त्तिनः क्षणाः समर्था एवेति वक्तव्यम्। न चेदेव कोऽपि न समर्थः स्यादालयविज्ञानसन्तानवर्त्तित्वाविशेषात्। सर्वे समर्था इति पक्षे कार्य्याक्षेपानुपपत्तिः ततश्च कादाचित्कत्वनिर्वाहाय शब्दस्पर्शरूपरसगन्धविषयाः सुखादिविषयाः षडपि प्रत्ययाश्चतुरः प्रत्ययान् प्रतीत्योत्पद्यन्ते इति चतुरेवानिच्छताप्यच्छमतिना स्वानुभवमनाच्छाद्य परिच्छेत्तव्यम्। ते चत्वारः प्रत्ययाः आलम्बनसमनन्तरसहकार्य्यधिपतिरूपाः। तत्र ज्ञानपदवेदनीयस्य चित्तस्य नीलालम्बनप्रत्ययात् नीलाकारता भवति, समनन्तरप्रत्ययात् प्राचीनज्ञानाद् बोधरूपता, सहकारिप्रत्ययादालोकात्, चक्षुषोऽधिपतिप्रत्ययाद्विषयग्रहणप्रतिनियमः विदितस्य ज्ञानस्य रसादिसाधारण्यप्राप्तौ नियामकं चक्षुरधिपतिर्भवितुमर्हति लोके नियामकस्याधिपतित्वोपलम्भात्। एवं चित्तचैत्तात्मकानां सुखादीनां चत्वारि कारणानि द्रष्टव्यानि। एष चित्तचैत्तात्मकस्कन्धः पञ्चविधः रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकः। तत्र रूप्यन्ते एभिर्विषया इति च व्युत्पत्त्या सविषयाणीन्द्रियाणि रूपस्कन्धः। आलयविज्ञानप्रवृत्तिविज्ञानप्रवाहो विज्ञानस्कन्धः। प्रागुक्तस्कन्धद्वयसम्बन्धजन्यः सुखदुःखादिप्रत्ययप्रवाहो वेदनास्कन्धः। गौरित्यादिशब्दोल्लेखिसविज्ञानप्रवाहः संज्ञास्कन्धः। वेदनास्कन्धनिबन्धना रागद्वेषादयः क्लेशा उपक्लेशाश्च मदमानादयो धर्माधर्मौ च संस्कारस्कन्धः। तदिदं सर्वं दुःखं दुःखायतनं दुःखसाधनञ्चेति भावयित्वा तन्निरोधोपायं तत्त्वज्ञानं सम्पादयेत्। अत एवोक्तं "दुःखसमुदायनिरोधमार्गाश्चत्वारः बुद्धाभिमतानि तत्त्वानि"। तत्र दुःखं प्रसिद्धं, समुदायो दुःखकारणं,

तद् द्विविधं प्रत्ययोपनिबन्धनो हेतूपनिबन्धनश्च। तत्र प्रत्ययोपनिबन्धनस्य संग्राहकं सूत्रम् "इदं कार्य्यं ये अन्ये हेतवः प्रत्ययन्ति" गच्छन्ति तेषामयमायानां हेतूनां भावः प्रत्ययत्वं, कारणसमवायः तन्मात्रस्य फलं, न चेतनस्य कस्यचिदिति सूत्रार्थः। यथा बीजहेतुरङ्कुरो धातूनां षण्णां समवायाज्जायते। तत्र पृथिवीधातुरङ्कुरस्य काठिन्यं गन्धञ्च जनयति, अब्धातुः स्नेहं रसञ्च जनयति, तेजोधातु रूपमौष्ण्यञ्च, वायुधातुः स्पर्शं चलनञ्च, आकाशधातुरवकाशं शब्दञ्च ऋतुधातुर्यथायोगं पृथिव्यादिकम्। हेतूपनिबन्धनस्य च संग्राहकं सूत्रम् "उत्पादाद्वा तथागतानामनुत्पादाद्वा स्थितैवैषां धर्म्माणां धर्म्मता धर्म्मस्थितिता धर्म्मनियामकता च प्रतीत्य समुत्पादानुलोमतेति"। तथागतानां बुद्धानां मते धर्म्माणां कार्य्यकारणरूपाणां या धर्म्मता कार्य्यकारणभावरूपा एषोत्पादादनुत्पादाद्वा स्थिता, यस्मिन् सति यदुत्पद्यते तत् तस्य कारणस्य कार्य्यमिति धर्म्मतेत्यस्य विवरणं, धर्म्मस्य कार्य्यस्य कारणानतिक्रमेण स्थितिः कार्य्यस्थितत्वमतः। धर्म्मस्य कारणस्य कार्य्यं प्रति नियामकता। ननु कार्य्यकारणभावश्चेतनमन्तरेण न सम्भवतीति अत उक्तं कारणे सति प्रतीत्य प्राप्य समुत्पादे अनुलोमता अनुसारिता या सैव धर्म्मता उत्पादादनुत्पादाद्वा धर्म्माणां स्थिता। न चात्र कश्चिच्चेतनोऽधिष्ठातोपलभ्यत इति सूत्रार्थः। यथा प्रतीत्य समुत्पादस्य हेतूपनिबन्धः बीजादङ्कुरोऽङ्कुरात् काण्डं काण्डान्नालो नालाद्गर्भस्ततः शूकं ततः पुष्पं ततः फलम्। न चात्र वाह्ये समुदाये कारणं बीजादि कार्य्यमङ्कुरादि चेतयते अहमङ्कुरं निर्व्वर्त्तयामि अहं बीजेन निर्व्वर्त्तित इति। एवमाध्यात्मिकेष्वपि कारणद्वयमवगन्तव्यम्। पुरःस्थिते प्रमेयाब्धौ ग्रन्थविस्तरभियोपरम्यते। तदुक्तम् निरोधः तदनन्तरं विमलज्ञानोदयो वा मुक्तिः तन्निरोधोपायो मार्गः स च तत्त्वज्ञानं तच्च प्राचीनभावनाबलाद् भवतीति परमं रहस्यम्। सूत्रान्तं पृच्छतां कथितं भगवता सूत्रान्तं पृच्छन्तः सौत्रान्तिका भवन्त्विति भगवताभिहिततया सौत्रान्तिकसंज्ञाः सञ्जाताः।

(वैभाषिकाः) केचन बौद्धा वाह्येषु गन्धादिषु आन्तरेषु सुखादिषु स्कन्धेषु सत्स्वपि तत्रानास्थामुत्पादयितुं सर्वं शून्यमिति, प्राथमिकान् विनेयानचीकथत् भगवान्, द्वितीयांस्तु विज्ञानमात्रग्रहाविष्टान् विज्ञानमेवैकं सदिति, तृतीयानुभयं सत्यमित्यास्थितान् विज्ञेयमनुमेयमिति, सेयं विरुद्धा भाषेति वर्णयन्तो वैभाषिकाख्यया ख्याताः। एषा हि तेषां परिभाषा समुन्मिषति। विज्ञेयानुमेयत्ववादे प्रात्यक्षिकस्य कस्यचिदप्यर्थस्याऽभावेन व्याप्तिसंवेदनस्थानाभावेनानुमानप्रवृत्त्यनुपपत्तिः सकललोकानुभवविरोधश्च। ततश्चार्थो द्विविधः ग्राह्योऽध्यवसेयश्च तत्र ग्रहणं निर्विकल्पकरूपं प्रमाणं कल्पनापोढत्वात्, अध्यवसायः सविकल्पकरूपोऽप्रमाणं कल्पनाज्ञानत्वात्। तदुक्तम् "कल्पनापोढमभ्रान्तं प्रत्यक्षं निर्विकल्पकम्। विकल्पो वस्तुनिर्भासादसंवादादुपप्लवः" इति। "ग्राह्यं वस्तु प्रमाणं हि ग्रहणं यदितोऽन्यथा। न तद्वस्तु न तन्मानं शब्दलिङ्गेन्द्रियादिजमिति च" ननु सविकल्पकस्याप्रामाण्ये कथं ततः प्रवृत्तस्यार्थप्राप्तिः संवादश्चोपपद्येयातामिति चेन्न तद्भद्रं मणिप्रभाविषयमणिविकल्पन्यायेन पारम्पर्य्येणार्थप्रतिबन्धेन तदुपपत्तेः। अवशिष्टं सौत्रान्तिकप्रस्तावे प्रपञ्चितमिति नेह प्रतन्यते। न च विनेयाशयानुरोधेनोपदेशभेदः साम्प्रदायिको न भवतीति भणितव्यं यतो भणितं बोधचित्तविवरणे "देशना लोकनाथानां सत्त्वाशयवशानुगाः। भिद्यन्ते बहुधा लोके उपायैर्बहुभिः किल। गम्भीरोत्तानभेदेन क्वचिच्चोभयलक्षणाः। भिन्ना हि देशनाऽभिन्ना शून्यताऽद्वयलक्षणेति।"

द्वादशायतनपूजा श्रेयस्करीति बौद्धमते प्रसिद्धम्। "अर्थानुपार्ज्य बहुशो द्वादशायतनानि वै। परितः पूजनीयानि किमन्यैरिह पूजितैः। ज्ञानेन्द्रियाणि पञ्चैव तथा कर्म्मेन्द्रियाणि च। मनोबुद्धिरिति प्रोक्तं द्वादशायतनं बुधैरिति"। विवेकविलासे बौद्धमतमित्थमभ्यधायि। "बौद्धानां सुगतो देवो विश्वञ्च क्षणभङ्गुरम्। आर्य्यसत्त्वाख्यया तत्त्वचतुष्टयमिदं क्रमात्। दुःखमायतनञ्चैव ततः समुदयो मतः। मार्गश्चेत्यस्य च व्याख्या क्रमेण श्रूयतामतः। दुःखं संसारिणः स्कन्धास्ते च पञ्च प्रकीर्त्तिताः। विज्ञानं वेदना संज्ञा संस्कारो रूपमेव च। पञ्चेन्द्रियाणि शब्दाद्या विषयाः पञ्च मानसम्। धर्म्मायतनमेतानि द्वादशायतनानि तु। रागादीनां गणोऽयं स्यात् समुदेति नृणां हृदि। आत्मात्मीयस्वभावाख्यः स स्यात् समुदयः पुनः। क्षणिकाः

इति चेन्न योगजधर्मसहकारिणा मनसैव तदुपपत्तेस्तदुपपन्नचक्षुरादिना वा। अचिन्त्यप्रभावो हि योगजो धर्मो न सहकार्य्यन्तरमपेक्षते। विवादाध्यासितः पुरुषो न सर्वज्ञः पुरुषत्वादहमिवेत्यादि तु प्राभाकरो न मीमांसाभिज्ञः पुरुषत्वादहमिवेत्यादिवद्विपक्षबाधकतर्कशून्यत्वादप्रयोजकम्। अपरे तु बौद्धास्तु प्रत्यक्षं द्विविधं सविकल्पकं निर्विकल्पकञ्च सविकल्पकं ज्ञानं न प्रमाणमिति कीर्त्तिदिङ्नागादयः तथा हि अभिलापसंसर्गयोग्यप्रतिभासं हि तत् यद्यभिलापेन नाम्ना सम्बन्धमर्थस्य सम्बन्धो येन घट इति पट इति वा नामानुरञ्जितः प्रत्ययः स्यात् नच आत्मादि परमार्थसत् येन तद्वैशिष्ट्यं विषयेषु इन्द्रियगोचरः तस्मादिन्द्रियेणालोचनं जन्यते आलोचनमहिम्ना च सविकल्पकमुत्पद्यमानं तमर्थं प्रवर्त्तयत् प्रत्यक्षमिति प्रोच्यते इति। तन्न तदनुपपन्नमभिलापसंसर्गयोग्यप्रतिभासत्वं भवेत् प्रमाणमिन्द्रियार्थसन्निकर्षजन्यं स्यादिति सन्दिग्धव्यतिरेकित्वं नामवैशिष्ट्यस्य चाक्षुषज्ञाने सम्भवत्येव सुरभि चन्दनमितिवदुपनीतभानसम्भवात्। यद्वा संज्ञावैशिष्ट्यं प्रत्यक्षज्ञाने न भासते संज्ञादेः स्मरणमात्रमपेक्षितं सार्थव्यावर्त्तिका अभावज्ञाने प्रतियोगिस्मरणवत् आत्मादिकञ्च वस्तुभूतं साधितमेवातः सविकल्पकमपीन्द्रियार्थसन्निकर्षजत्वात् प्रत्यक्षम् प्रमाणम्। ननु निर्विकल्पकं न व्यवहारप्रवर्त्तकं न वा व्यवहारविषय इति किन्तत्प्रमाणमिति चेत् सविकल्पकमेव तद्धि विशिष्टज्ञानम् न च विशेषणज्ञानमन्तरेण तदुत्पद्यते विशिष्टज्ञाने हि विशेषणज्ञानविशेष्येन्द्रियसन्निकर्षतदुभयासंसर्गाग्रहस्य कारणत्वावधारणात्” सर्वदर्शनसं°।

“सा च सात्त्विकराजसतामसभेदेन त्रिविधा। तत्र सात्त्विकी यथा“प्रवृत्तिञ्च निवृत्तिञ्च कार्य्याकार्य्ये भयाभये। बन्धं मोक्षञ्च या वेत्ति बुद्धिः सा पार्थ! सात्त्विकी”। राजसी यथा “यया धर्ममधर्मञ्च कार्य्यञ्चाकार्य्यमेव च। अयथावत् प्रजानाति बुद्धिः सा पार्थ! राजसी”। तामसी यथा “अधर्मं धर्ममिति या मन्यते तमसावृता। सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी” गीता°। तस्याः पञ्चगुणा यथा। “इष्टानिष्टविपत्तिश्च व्यवसायः समाधिता। संशयप्रतिपत्तिश्च बुद्धेः पञ्च गुणान् विदुः” महाभारते मोक्षधर्मः “इष्टानिष्टविपत्तिः इष्टानिष्टानां वृत्तिविशेषाणां विपत्तिर्नाशः निद्रारूपा वृत्तिरित्यर्थः। व्यवसायः उद्ग्राहः। समाधिता चित्तस्थैर्य्यं चित्तवृत्तिनिरोध इत्यर्थः संशयः उभयस्पृक् ज्ञानम्। प्रतिपत्तिः प्रत्यक्षादिप्रमाणवृत्तिः” तट्टीका। तस्याः सप्त गुणा यथा। “शुश्रूषा श्रवणञ्चैव ग्रहणं धारणन्तथा। ऊहापोहोऽर्थविज्ञानं तत्त्वज्ञानञ्च धीगुणाः” हेमच°। तस्या वृत्तिः पञ्चधा यथा। “प्रमाणविपर्य्ययविकल्पनिद्रास्मृतयः” पात°सू°। तल्लक्षणं च तत्तच्छब्दे दृश्यम्।

बुद्धिक्षयकरा यथा “शोकः क्रोधश्च लोभश्च कामो मोहः परासुता। ईर्ष्या मानो विचिकित्सा हिंसाऽसूया जुगुप्सता। द्वादशैते बुद्धिनाशहेतवो मानसा मलाः”। कालिकापु° १८अ°। “बुद्धिक्षयकरा एते सावकाशारब्धिकाः”। बुद्धिवृद्धिकरा यथा “निम्बाटरूपहन्ताच बुद्धिवृद्धिकरा मताः। बुद्धिक्षयकरांश्चैव त्यजेद्राजा च भोजने। भोजयेदन्वहं बुद्धिवृद्धिहेतोः सपोत्तमः। कालिकापु° ८९ अ°।

बुद्धिकामा स्त्री कुमारानुचरमातृभेदे भा° श° ४७ अ°।

बुद्धिजीविन् त्रि° बुद्ध्या जीवति जीव–णिनि। बुद्धिरूपोपायेन जीविनि। “भूतानां प्राणिनः श्रेष्ठा प्राणिनां बुद्धिजीविनः” मनुः।

बुद्धिसहाय पु° ७त°। धीसचिवे अमात्यभेदे हारा°।

बुद्धीन्द्रिय न°६°त°। “मनः कर्णौ तथा नेत्रे रसना त्वक् च नासिके। बुद्धीन्द्रियमिति प्रोक्तम्” इत्युक्तेषु इन्द्रियेषु उभयोः ज्ञानकर्मेन्द्रिययोरुपकारकत्वात् मनसो ज्ञानमात्रसहकारित्वविवक्षया बाह्यान्तरज्ञानकरणतया च तथात्वम् “चक्षुः श्रोत्रे स्पर्शनञ्च रसनाघ्राणमेव च। बुद्धीन्द्रियाणि जानीयात्” इत्यत्र बाह्यग्रामेच्छया पञ्चत्वमुक्तम्।

बुद्बुद न°बुद्-क पृषो° द्वित्वम्। जलस्य गोलाकारे विकारभेदे अमरः। “यथराले वा कललं बुद्बुदाकारतां व्रजेत्”। सुश्रुतो° उक्ते २गर्भावस्थाभेदे च।

बुध ज्ञापने भ्वा°प°सक°अनिट्। बोधति अभौत्सीत् शिष्यं गुरुः। बोद्धा बुधः।

बुध ज्ञाने भ्वा°उभ°सक°सेट्। बोधति ते। इरित् अबुधत्° अबोधीत् अबोधि अबोधिष्ट। ज्वला° णो वा पचे च। बोधः बुधः।

बुध ज्ञाने दि° आ°सक° अनिट्। बुध्यते अबोधि अबोधिष्ट। बुबुधे। उद्+बुध–जागरणे विषयस्फुरणाभिमुखीभावरूपे संस्कारनिष्ठे व्यापारभेदे उद्बुद्धसंस्कारादेव स्मृतिर्भवतीति न्याये स्थितम्।

ब्र(ब्र)ह्मचर्य्य न० ब्रह्मणे वेदाध्ययनार्थं चर्य्यम्। द्विजानां वेदाध्ययनार्थव्रतभेदे। "प्रतिवेदं ब्रह्मचर्य्यं द्वादशाब्दानि पञ्च वा। ग्रहणान्तिकमित्येके" गरुड़पु० ९४अ०। तत्प्रकारो मनुनोक्तो यथा

"कृतोपनयनस्यास्य व्रतादेशनमिष्यते। ब्रह्मणो ग्रहणं चैव क्रमेण विधिपूर्वकम्। यद् यस्य विहितञ्चर्म यत् सूत्रं या च मेखला। यो दण्डो यच्च वसनन्तत्तदस्य व्रतेष्वपि। सेवेतेमांस्तु नियमान् ब्रह्मचारी गुरौ वसन्। सन्नियम्येन्द्रियग्रामन्तपोवृद्ध्यर्थमात्मनः। नित्यं स्नात्वा शुचिः कुर्य्याद्देवर्षिपितृतर्पणम्। देवताभ्यर्चनञ्चैव समिदाधानमेव च। वर्जयेन्मधुमांसञ्च गन्धं माल्यं रसान् स्त्रियः। शुक्तानि यानि सर्वाणि प्राणिनाञ्चैव हिंसनम्। अभ्यङ्गमञ्जनञ्चाक्ष्णोरुपानच्छत्रधारणम्। कामं क्रोधञ्च लोभञ्च नर्त्तनं गीतवादनम्। द्यूतञ्च जनवादञ्च परिवादन्तथाऽनृतम्। स्त्रीणाञ्च प्रेक्षणालम्भमुपघातम्परस्य च। एकः शयीत सर्वत्र न रेतः स्कन्दयेत् क्वचित्। कामाद्धि स्कन्दयन् रेतो हिनस्ति व्रतमात्मनः। स्वप्ने सिक्त्वा ब्रह्मचारी द्विजः शुक्रमकामतः। स्नात्वार्कमर्चयित्वा त्रिः पुनर्मामित्यृचं जपेत्। उदकुम्भं सुमनसो गोशकृन्मृत्तिकाकुशान्। आहरेद्यावदर्थानि भैक्षञ्चाहरहश्चरेत्। वेदयज्ञैरहीनानां प्रशस्तानां स्वकर्मसु। ब्रह्मचार्य्याहरेद्भैक्षं गृहेभ्यः प्रयतोऽन्वहम्। गुरोः कुले न भिक्षेत न ज्ञातिकुलबन्धुषु। अलाभे त्वन्यगेहानां पूर्वं पूर्वं विवर्जयेत्। सर्वं वापि चरेद् ग्रामं पूर्वोक्तानामसम्भवे। नियम्य प्रयतो वाचमभिशस्तांस्तु वर्जयेत्। दूरादाहृत्य समिधः संनिदध्याद्विहायसि। सायंप्रातश्च जुहुयात्ताभिरग्निमतन्द्रितः। अकृत्वा भैक्षचरणमसमिध्य च पावकम्। अनातुरः सप्तरात्रमवकीर्णिव्रतं चरेत्। भैक्षेण वर्त्तयेन्नित्यं नैकान्नादी भवेद् व्रती। भैक्षेण व्रतिनो वृत्तिरुपवाससमा स्मृता। व्रतवद्देवदैवत्ये पित्र्ये कर्मण्यथर्षिवत्। काममभ्यर्थितोऽश्नीयाद् व्रतमस्य न लुप्यते। ब्राह्मणस्यैव कर्मैतदुपदिष्टं मनीषिभिः। राजन्यवैश्ययोस्त्वेवं नैतत् कर्म विधीयते"। अतः गुरुवृत्तिरुक्ता या च गुरुशब्दे २६९९ पृ० दर्शिता। २योगाङ्गयमभेदे च "अहिंसासत्यास्तेय ब्र(ब्र)ह्मचर्य्याऽपरिग्रहा यमाः" पात०। तत्र ब्र(ब्र)ह्मचर्य्यं व्याकृतं भाष्यविवरणाभ्यां यथा "ब्र(ब्र)ह्मचर्य्यं गुप्तेन्द्रियस्योपस्थस्य संयमः" भा०। "संयतोपस्थोऽपि हि स्त्रीप्रेक्षणतदालापकन्दर्पोद्दीपनतदङ्गस्पर्शनसक्तो न ब्र(ब्र)ह्मचर्य्यवान् तन्निरासायोक्तं गुप्तेन्द्रियस्येति इन्द्रियान्तराण्यपि तत्र लोलुपानि रक्षणीयानि" विव०। तत्र अष्टाङ्गमैथुनशब्दे ५२४ पृ० दर्शितवाक्येन मैथुनस्य स्मरणाद्यष्टाङ्गतया तदुपयोगीन्द्रियाणि संयम्यानीत्यर्थः। तत्फलञ्च तत्रोक्तं यथा "ब्र(ब्र)ह्मचर्य्यप्रतिष्ठायां वीर्य्यलाभः" पात०। "यस्य लाभादप्रतिघान् गुणानुत्कर्षयति सिद्धश्च विनेयेषु ज्ञानमाधातुं समर्थो भवति" भा०। "वीर्य्यं सामर्थ्यं यस्य लाभादप्रतिघान् गुणानणिमादीन् विनेयेषु शिष्येषु ज्ञानं योगतदङ्गविषयमाधातुं समर्थो भवति" विव०। तथाच अष्टाङ्गमैथुनवर्जनमेव ब्र(ब्र)ह्मचर्य्यं तत्र स्त्रीपुंसयोः साधारण्यं पुंसः स्त्रीस्मरणाद्यष्टाङ्गराहित्यस्येव स्त्रीणां पुंस्मरणादिशून्यत्वस्यापि तथात्वम् "अतएव ब्र(ब्र)ह्मचर्य्यं तदन्वारोहणं वा" विष्णुसू०। विधवानामपि ब्र(ब्र)ह्मचर्य्यं विहितम् "मृते भर्त्तरि साध्वी स्त्री ब्र(ब्र)ह्मचर्य्ये व्यवस्थिता। स्वर्गं गच्छत्यपुत्रापि यथा ते ब्र(ब्र)ह्मचारिणः" मनुव्याख्यायां ब्र(ब्र)ह्मचर्य्ये व्यवस्थिता अष्टाङ्गमैथुनवर्जनपरा" कुल्लू०भट्टः। भावे क्यप् ब्रह्मचर्य्या तत्रार्थे स्त्री।

ब्र(ब्र)ह्मचारिन् पु० ब्र(ब्र)ह्म वेदस्तदध्ययनार्थं चरति व्रतभेदम् चर+णिनि। १उपनयनानन्तरमाद्याश्रमयुते द्विजातौ उपचारात् २तदाश्रमे च। तस्य कर्त्तव्यादिकं मनूक्तं ब्र(ब्र)ह्मचर्य्यशब्दे दर्शितम्।

ब्र(ब्र)ह्मचारिणी स्त्री "वेदेषु चरते यस्मात् तेन सा ब्रह्मचारिणी" देवीपु०४५ अ० निरुक्तियुक्तायां वेदमातृरूपायां चिच्छक्तिरूपायां १दुर्गायां २ब्रह्मचर्य्ययुतायां स्त्रियाञ्च "आशीतामरणात् यास्या नियमं ब्र(ब्र)ह्मचारिणी" मनुः। ३करुणीवृक्षे राजनि०।४ब्राह्मीशाके रत्नमाला।

ब्र(ब्र)ह्मज पु० ब्रह्मणो जायते जन–ड। १हिरण्यगर्भे "यो वै ब्र(ब्र)ह्माणं विदधाति पूर्वं यश्चास्मै प्रहिणोति वेदम्" श्रुतेः "सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः" इत्युपक्रमे "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम्। तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनूक्तेश्च तस्य तथात्वम्। २ब्रह्मजातमात्रे पञ्चभूतादौ च "यतो वा इमानि भूतानि जायन्ते" इत्युपक्रमे "तद् विजिज्ञासस्व तद्ब्रह्मेति" श्रुतौ ब्रह्मतः सर्वभूतोत्पत्तिश्रवणात्।

वैयासिकन्यायमालायामुक्तं यथा "शास्त्रं ब्रह्मविचा-राख्यमध्यायाः स्युश्चतुर्विधाः । समन्वयाविरोधौ २द्वौ साधनं३ फलं४ तथा । समन्वये स्पष्टलिङ्गम्१अस्पष्टत्वे२ऽ-स्फुटाख्यगम्३ । ज्ञेयगं४ पदमात्रञ्च चिन्त्यं पादेष्वनुक्र-मात् । द्वितीये स्मृतितर्काभ्यामविरोधो१ऽन्यदुष्टता२। भूत-भोक्तृश्रुतेर्लिङ्गश्रुतेरप्यविरुद्धता । तृतीये विरतिस्तत्त्व-म्पदार्थपरिशोधनम्२। गुणोपसंहृतिर्ज्ञाने३ बहिरङ्गादि-साधनम्४। चतुर्थे जीवतो मुक्तिरुत्क्रान्तिर्गतिरुत्तरा३ । ब्रह्मप्राप्तिब्रह्मलोकाविति४पादार्थसंग्रहः" । तेन तत्र प्रत्येकं चतुष्टयपादयुताः चत्वारोऽध्यायाः । तच्च शास्त्रं बहुभिः स्वस्वमतानुसारेण व्याख्यातम् तत्र गौड़पादा-चार्यशङ्कराचार्यादिभिरद्वैतपरतया व्याख्यातं रामा-नुजादिभिश्च विशिष्टाद्वैतपरतया, वल्लभाचार्यादिभिश्च विशुद्धाद्वैतपरतया माध्वाचार्यादिश्च द्वैतपरतया व्या-ख्यातं तत्तन्मतञ्च प्रायेण तत्तच्छब्दे दृश्यम् ।

ब्र(ब्र)ह्मयज्ञ पु० ब्रह्मनिमित्तकस्तदध्ययनतदध्यापनाभिनिमित्तको यज्ञः । वेदाध्ययनाध्यापनादौ अमरः । "अध्यापनं ब्रह्मयज्ञः" मनुः । "स्वाध्यायो ब्रह्मयज्ञः" विष्णुसू० । तेन वेदाध्ययनाध्यापनयोर्ब्रह्मयज्ञता ।

ब्र(ब्र)ह्मयष्टि स्त्री ब्रह्मणो यष्टिरिवावलम्बनत्वात् । (वामन-हाटि) ख्याते भार्ग्यां रत्नमा० ।

ब्र(ब्र)ह्मयुग न० ब्रह्मा विप्रस्तदुपलक्षितं युगम् । हिरण्य-गर्भस्य विप्रर्षिप्रधाने कालभेदे । तच्च हरिवं०२०८।२०९ अध्याये ततः समादिकस्तूपलक्षितं तद्युगं २१०अ०उक्तम्

ब्र(ब्र)ह्मयोग पु० ब्रह्मणस्तत्साक्षात्कारस्य योगः समाधिः । ब्रह्म साक्षात्कारसाधने १समाधिभेदे हरिवं०२१० अ० "एष ब्रह्ममयो यज्ञो योगः सांख्यश्च तत्त्वतः । विज्ञानञ्च स्व-भावश्च कालं कर्मच एव च । एकत्वञ्च पृथक्त्वञ्च सत्त्वं निधनं तथा । कालः कालवयश्चैव ध्येयो वि-ज्ञानमेव" च विष्ण्वादिषु पञ्चविंशे२ योगे च ।

ब्र(ब्र)ह्मयोनि पु० ब्रह्मणो योनिरुत्पत्तिरस्य । १ब्रह्मगिरौ मन्दरे । २ब्रह्मप्राप्त्युपायप्राणनिष्ठायाञ्च "ब्राह्मणा ब्रह्मयोनिस्थाः" मनुः ३ब्रह्मोत्पन्ने त्रि० । ४सरस्वत्यां स्त्री ङीप् । "सरस्वत्यास्तु तीरे सः संन्यपीदाश्रमस्तुतम् । पृथूदकं जपपरो नैनं श्वोमरणं वदेत् । तत्रैव ब्रह्मयोन्यस्ति ब्रह्मणा यत्र निर्मिता । पृथूदकं समाश्रित्य सर-स्वत्यास्तटे स्थितः । चातुर्वर्ण्यस्य सृष्ट्यर्थमात्मज्ञानपरो-ऽभवत् । ब्रह्माभिध्यायतः सृष्टिं ब्रह्मणोऽव्यक्तजन्मनः । मुखतो ब्राह्मणा जाता बाहुभ्यां क्षत्रियास्तथा । ऊरु-भ्यां वैश्यजातीयाः पद्भ्यां शूद्रास्ततोऽभवन् । चातु-र्वर्ण्यं ततो दृष्ट्वा आश्रमस्थान् ततस्ततः । एवं प्रति-ष्ठितं तीर्थं ब्रह्मयोनीति संज्ञितम् । तत्र स्नात्वा मुक्ति-कामः पुनर्योनिं न पश्यति" वामनपु० ३८अ० उक्ते ५तीर्थभेदे स्त्री वा ङीप् ।

ब्र(ब्र)ह्मरन्ध्र न० उत्तमाङ्गस्य रन्ध्रभेदे । "तयोर्ध्वमायन्नमृत-त्वमेति" श्रुत्या तद्रन्ध्रेण प्राणोत्क्रमणे ब्रह्मलोकप्राप्ति-रुक्तत्वात् तथात्वम् ।

ब्रह्मराक्षस पु० ब्र(ब्र)ह्मा विप्रोऽपि कुकर्मभिः राक्षसः । कुकर्मणा विप्रयोनितो राक्षसरूपतां प्राप्ते भूतभेदे "संयोगं पतितैर्गत्वा परस्य योषितं तथा । अपहृत्य च विप्रस्वं भवति ब्रह्मराक्षसः" इति मनुः । पतितप्रति-ग्रहेऽपि तद्योनिप्राप्तिः भा० आनु० ११अ० दर्शिता । तच्च वाक्यं अधर्मशब्दे १२१ पृ० दर्शितं तच्च न हरि-वंशवाक्यं किन्तु अनुशासनपर्वीयमिति बोध्यम् । पारिभाषिकब्रह्मराक्षसा यथा "मूर्खः स्त्री बालकश्चैव बालो बधिर एव च । गृहीतार्थं न मुञ्चन्ति पञ्चैते ब्रह्मराक्षसाः" व्यवहारप्रदीपः । २विवाहसुचरभेदे भाग० १०।६२अ० ।

ब्र(ब्र)ह्मरात न० ब्रह्म तज्ज्ञानं रातं यस्मै । १शुकदेवे "ब्रह्म-रातो भृशं प्रीतो विष्णुरातेन संसदि" भाग०२।८।२७। २याज्ञवल्क्ये मुनौ हेमच० ब्रह्मरातिरिति वा पाठः । तेन हि जनकाय ब्रह्मविद्याया दानात् तथात्वम् बृहदा-रण्यकोपनिषदि तत्कथा दृश्या ।

ब्र(ब्र)ह्मरात्र पु० रात्रेरयम् अण् कर्म० ब्रह्मसम्बन्धिनि रात्रि शेषभागे मुहूर्ते "उपावृत्ते ब्रह्मरात्रे" भा० १०।२२।२९ । व्याख्यायां श्रीधरः ।

ब्र(ब्र)ह्मरीति ब्रह्मणो रीतिः । पित्तलभेदे हेमच० ।

ब्र(ब्र)ह्मर्षि पु० ब्र(ब्र)ह्मा विप्रः चतुर्वेदज्ञो वा ऋषिः वेदस्य वा ऋषिः कर्त्ता । ब्रह्मतत्त्वेषु वशिष्ठादिषु १वेदप्र-वर्त्तकेषु २ऋषिषु हेमच० ।

ब्र(ब्र)ह्मर्षिदेश कर्म० "कुरुक्षेत्रञ्च मत्स्याश्च पाञ्चालाः शूर-सेनकाः । एष ब्रह्मर्षिदेशो वै ब्रह्मावर्त्तादनन्तरम्" मनूक्ते कुरुक्षेत्रादिदेशचतुष्टये । [ब्रह्मनृशब्दे दृश्यम् ।

ब्र(ब्र)ह्मलक्षण न० कर्म० । ब्रह्मणः स्वरूपतटस्थलक्षणे

ब्र(ब्र)ह्मलोक पु० कर्म० । १ब्रह्माधिष्ठाने भुवने सत्य-लोके "सत्यस्तु सप्तमो लोको ह्यपुनर्भववासिनाम् ।

भवति” भा०। तस्य यागजन्यमाने । ६त०।१४व०दर्शितम् ।

ब्र(व्र)ह्मसायुज्य न० सह युनक्ति युज—क्विप् तस्य भावः सायुज्यं ६त०। ब्र(व्र)ह्मभावे ।

ब्र(व्र)ह्मसार्ष्टिता स्त्री ६त०। ब्रह्मतुल्यगतित्वे मनुः ४।२३२।

ब्र(व्र)ह्मसावर्णि पु० दशमे मनुभेदे “दशमो ब्रह्मसावर्णि रुपश्लोकसुतो महान् । तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः । हविष्मान् सुकृतः सत्यो जयो मूर्त्तिस्तदा द्विजाः । सुवासनविरुद्धाद्या देवाः शम्भुः सुरेश्वरः । विष्वक्सेनो विषूच्यान्तु शम्भोः सख्यं करिष्यति । जातः स्वांशेन भगवान् गृहे विश्वसृजो प्रभुः” भाग० ८।१३।१०

[सविशाद्दौ च ।

ब्र(व्र)ह्मसम्भव पु०६त० । १जैनभेदे हेम० २ब्रह्मणो जाते

ब्र(व्र)ह्मसिद्धान्त ६त०। पैतामहे ज्योतिषसिद्धान्तभेदे “पौलिशरोम(रोमक)वासिष्ठसौरपैतामहेषु पञ्चस्वेतेषु सिद्धान्तेषु” ह०स०१अ०। [हयग्रम् । २मरीच्यादौ च

ब्र(व्र)ह्मसुत पु० ६त०। १केतुभेदे ह०स० ११ अ० केतुशब्दे

ब्र(व्र)ह्मसुवर्चला स्त्री ओषधिभेदे तत्स्थानलक्षणादिकमुक्तं सुश्रुते “देवसुन्दे सुदरे तथा सिन्धौ महानदे । हयग्रते च जलान्तेषु मध्ये ब्रह्मसुवर्चला”। “कनकाभा जलान्तेषु सर्वतः परिसर्पति । सक्षीरा पद्मिनीप्रख्या देवी ब्रह्मसुवर्चला” । तत्कथिते २क्वाथे च “पिबेत् ब्रह्मसुवर्चलाम्” मनुः ।

ब्र(व्र)ह्मसू पु० ब्रह्माणं सूतवान् सू—क्विप् । चतुर्व्यूहात्मकस्य विष्णोर्मूर्त्तिभेदे अनिरुद्धे तस्यावतारभेदे २उषापतौ च अमरः । “अनिरुद्धात्ततो ब्रह्मा तन्नाभिकमलोद्भवः” ब्रह्मपु०। ब्रह्मणि तपसि सुवति प्रेरयति षू—प्रेरणे क्विप् । तपःप्रवर्त्तके ३कामे च कामेनैव सर्वतपस्सु प्रेरणात्तस्य तथात्वम् । तदभिमानिदेवे ४कन्दर्पे च अमरः ।

ब्र(व्र)ह्मसूत्र न० ब्रह्मणि वेदपठनकाले धारितं सूत्रम् । १यज्ञोपवीते त्रिका०। २ब्रह्मप्रतिपादके शारीरकसूत्रे च । “ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितम्” गीता ।

ब्र(व्र)ह्मसूनु पु० ६त० । इक्ष्वाकुवंशोद्भवे १राजभेदे ब्रह्मदत्ते हेमच० २वसिष्ठादौ च ।

ब्र(व्र)ह्मस्तेय ६त०। स्वार्थमधीयानात् तस्योऽननुज्ञामप्राप्य तदाध्ययनस्थेन वेदाध्येतरि । “ब्रह्म यस्त्वननुज्ञातमधीयानादवाप्नुयात् । स ब्रह्मस्तेयसंयुक्तो नरकं प्रतिपद्यते” मनुः

ब्र(व्र)ह्मस्थान न० ६त० । तीर्थभेदे भा० व० ८३ अ० ।

ब्र(व्र)ह्मस्व ६त० । ब्राह्मणसम्बन्धिनि धने । “ब्रह्मस्वं वा गुरुस्वं वा देवस्वं वापि यो हरेत् । स ज्ञातव्य इति श्रेयो महापापी च भारत ! । अवटोर्द्दे वसेत् सोऽपि यावदिन्द्रा शतं शतम् । ततो भवेत् सुरापीति ततः शूद्रस्ततः शुचिः” । ब्रह्मवै० प्रक० ४६अ० ।

ब्र(व्र)ह्महत्या स्त्री० हन—क्यप् ६त०। विप्रहनने । तस्य महापातकत्वमुक्तं मनुना “ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । महान्ति पातकान्याहुः संसर्गश्चापि तैः सह” तदधिष्ठातृस्वरूपमुक्तं ब्रह्मवै० पु० जन्म० ४७ अ० यथा “रक्तवस्त्रपरीधाना वृद्धा स्त्रीवेशधारिणी । सप्ततालप्रमाणा सा शुष्ककण्ठोष्ठतालुका । ईषाप्रमाणदशना महाभीतस्य कातरम् । धावन्तं परिधावन्ती बलिष्ठाहतचेतनम् । चकार ब्रह्महत्या सा तां दयाहीना च मूर्च्छितम् । इन्द्रो दृष्ट्वा च तां घोरां चकार चकार गुरोः पदम् । विवेश मानसपरो कृपाकलशात्मनः । तत्र गन्तुं न शक्ता सा ब्रह्मणः शापकारणात्” । इत्थं सुरवधनिमित्तकब्रह्महत्यापनोदनार्थं शक्रेणाश्वमेधकृते तस्या विभज्य स्थानविशेषे संक्रामणकथा भा० शा० ३० १२अ० यथा “तत्राश्वमेधः सुमहान् महेन्द्रस्य महात्मनः । वहते पावनार्थं वै ब्रह्महत्यापहो नृप ! । विभज्य ब्रह्महत्यां तु वृक्षेषु च नदीषु च । पर्वतेषु पृथिव्याञ्च स्त्रीषु चैव युधिष्ठिरः !” आतिदेशिकब्रह्महत्याः कतिचित् ब्रह्मवै० प्रक०२७अ० उक्ता यथा

“श्रीकृष्णे च तदर्चायां तन्मय्यां प्रकृतौ तथा । शिवे च शिवलिङ्गे वा सूर्ये सूर्यतनौ तथा । गणेशे वा तदर्चायामेवं सर्वत्र सुन्दरि ! । यः करोति भेदबुद्धिं ब्रह्महत्यां लभेत् तु सः । स्वगुरौ स्वेष्टदेवेषु जन्मदातरि मातरि । करोति भेदबुद्धिं यो ब्रह्महत्यां लभेत् तु सः । वैष्णवेष्वन्यभक्तेषु, ब्राह्मणेष्वितरेषु च । करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः । हरेः पादोदकेष्वन्यदेवपादोदके तथा । करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः । विष्णोर्विष्णुनैवेद्ये चान्यनैवेद्यके तथा । करोति समतां यो हि ब्रह्महत्यां लभेत् तु सः । सर्वेश्वरेश्वरे कृष्णे सर्वकारणकारणे । सर्वाद्ये सर्वदेवानां सेव्ये सर्वान्तरात्मनि । मायया नैकरूपे वाप्येकस्मिन्नेव हि निर्गुणे । करोत्यनेन समतां ब्रह्महत्यां लभेत् तु सः । पितृदेवार्च्चनं पौर्वापर्यं वेदविनिर्मितम् । यः करोति तद्विद्वेषं ब्रह्महत्यां स विन्दति । ये निन्दन्ति हृषीकेशं तन्मन्त्रोपासकं तथा ।

पवित्राणां पवित्रञ्च ब्रह्महत्यां लभन्ति ते । ये निन्दन्ति विष्णुमायां विष्णुभक्तिप्रदां सतीम् । सर्वशक्तिस्वरूपाञ्च प्रकृतिं सर्वमातरम् । सर्वदेवस्वरूपाञ्च सर्वाद्यां सर्ववन्दिताम् । सर्वकारणरूपाञ्च ब्रह्महत्यां लभन्ति ते । कृष्णजन्माष्टमीं रामनवमीं पुण्यदां पराम् । शिवरात्रिं तथा चैकादशीं वारं रवेस्तथा । पञ्च पर्वाणि पुण्यानि ये न कुर्वन्ति मानवाः । लभन्ते ब्रह्महत्यां ते चाण्डालाधिकपापिनः । अम्बुवाच्यां भूखननं जले शौचादिकञ्च ये । कुर्वन्ति भारते वर्षे ब्रह्महत्यां लभन्ति ते । गुरुञ्च मातरं तातं साध्वीं भार्य्यां सुतं सुताम् । अनाथां यो न पुष्णाति ब्रह्महत्यां लभेत् तु सः । विवाहो यस्य न भवेत् न पश्यति सुतन्तु यः । हरिभक्तिविहीनो यो ब्रह्महत्यां लभेत् तु सः । हरेरनैवेद्यभोजी नित्यं विष्णुं न पूजयेत् । पुण्यं पार्थिवलिङ्गं वा ब्रह्महत्यां लभेत् तु सः" । आतिदेशिकब्रह्महत्या विनाशनं हरिस्मरणगङ्गास्नानादि ।

ब्र(व्र)ह्महत्यासम न० "अनृतञ्च समुत्कर्षे राजगामि च पैशुनम् । गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया" मनूक्ते अनुपातकभेदरूपे मिथ्याभेदकथनादौ ।

ब्र(व्र)ह्महन् त्रि० ब्र(व्र)ह्माणं हतवान् हन–क्विप् । १विप्रहत्याकारिणि । "ब्र(व्र)ह्महा न भवत्यन्यो ब्र(व्र)ह्महा वृषलीपतिः । यस्तस्याः शाहितो गर्भः स तेन ब्रा(व्रा)ह्मणो हतः" इत्युक्ते २वृषलीपतौ च । "श्रुतोत्पन्नजिह्वाञ्च जीवेत्सिवाक्कुलिध्वनिः । गुरोरपि च कर्त्तव्यमन्यथा ब्रह्महा भवेत्" इत्यादिषूक्तातिदेशिकब्र(व्र)ह्महत्यापापयुक्ते च । तत्प्रायश्चित्तं मनुनोक्तं यथा

"ब्रह्महा द्वादश समाः कुटीं कृत्वा वने वसेत् । भैक्षाश्यात्मविशुद्ध्यर्थं कृत्वा शवशिरोध्वजम्१ । लक्ष्यं शस्त्रभृतां वा स्याद्विदुषामिच्छयात्मनः२ । प्रास्येदात्मानमग्नौ वा समिद्धे त्रिरवाक्शिराः३ । यजेत वाश्वमेधेन४ स्वर्जिता५ गोसवेन वा६ । अभिजिद्विश्वजिद्भ्यां७ । दत्त्वा त्रिवृताग्निष्टुतापि८ वा । जपन् वान्यतमं१० वेदं योजनानां शतं व्रजेत्११ । ब्रह्महत्यापनोदाय मितभुङ् नियतेन्द्रियः । सर्वस्वं वेदविदुषे ब्राह्मणायोपपादयेत्१२ । धनं वा जीवनायालं गृहं वा सपरिच्छदम्१३ । हविष्यभुग्वाऽनुसरेत् प्रतिस्रोतः सरस्वतीम्१४ । जपेद्वा नियताहारस्त्रिर्वै वेदस्य संहिताम्१५ । कृतवापनो निवसेद् ग्रामान्ते गोव्रजेऽपि वा । आश्रमे वृक्षमूले वा गोब्राह्मणहिते रतः । ब्राह्मणार्थे गवार्थे वा सद्यः प्राणान् परित्यजन्१६ । मुच्यते ब्रह्महत्याया गोप्ता गोब्राह्मणस्य च । त्र्यवरं प्रतिरोद्धा वा१७ सर्वस्वमवजित्य वा । विप्रस्य तन्निमित्ते वा प्राणालाभे विमुच्यते" ।

ब्र(व्र)ह्माङ्गभू पु० ब्रह्मणोऽङ्गात् भवति भू–क्विप् । घोटके हारा० । ब्रह्मात्मभूशब्दे दृश्यम् ।

ब्र(व्र)ह्माञ्जलि पु० ब्र(व्र)ह्मणे वेदपाठाय अञ्जलिः गुरौ कृतो विनयाञ्जलिः, स्वरविशेषज्ञापनार्थं वा कृतोऽञ्जलिः संकुचितपाणिः । वेदपाठार्थं गुरुनिकटे कार्य्ये १विनयाञ्जलौ स्वरविशेषार्थज्ञापनाय कृतसङ्कोचे २पाणिद्वये च अमरः ।

ब्र(व्र)ह्माणी पु० ब्र(व्र)ह्माणम् आनयति जीवयति अन–णिच्–अण् पूर्व०णत्वम् । ब्रह्मपत्नी "हंसयुक्ते विमानस्था साक्षसूत्रकमण्डलुः । आयाता ब्रह्मणः शक्तिः ब्रह्माणी साऽभिधीयते" इति देवीमा० । "ब्रह्माणी ब्रह्मजननात्" देवीपु० । ब्रह्मशब्दात् ङीष् आनुक् चेति त्वपाणिनीयम् । २रेणुकानामगन्धद्रव्ये रत्नमा० । २राजरीतौ राजनि० । ३ब्रह्मणोऽर्द्धशरीरादुत्पन्नायां शतरूपायाम् । "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् । स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् । शतरूपा च सा ख्याता सावित्री च निगद्यते । सरस्वत्यथ गायत्री ब्रह्माणीत्युच्यते च सा" मत्स्यपु० ३अ० ।

ब्र(व्र)ह्माण्ड न० ६त० । "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः" इति मनूक्ते ब्रह्मण उत्पादके अण्डाकारे १भुवनकोषे "ब्रह्माण्डभाण्डोदरभ्राम्यत्पिण्डितचण्डिमेति" वीरचरितम् ।

ब्रह्माण्डसंस्था सू०सि० दर्शिता यथा

"वासुदेवः परं ब्रह्म तन्मूर्त्तिः पुरुषः परः । अव्यक्तो निर्गुणः शान्तः पञ्चविंशात् परोऽव्ययः । प्रकृत्यन्तर्गतो देवो बहिरन्तश्च सर्वगः । सङ्कर्षणोऽपः सृष्ट्वादौ तासु बीजमवासृजत् । तदण्डमभवद्धैमं सर्वत्र तमसावृतम् । तत्रानिरुद्धः प्रथमं व्यक्तीभूतः सनातनः । हिरण्यगर्भो भगवानेष छन्दसि पठ्यते । आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य्य उच्यते । परं ज्योतिस्तमःपारे सूर्य्योऽयं सवितेति च । पर्य्येति भुवनान्येष भावयन् भूतभावनः" इत्युपक्रमे "गुणकर्म्मविभागेन सृष्ट्वा प्राग्वदनुक्रमात् । विभागं कल्पयामास यथास्वं वेददर्शनात् । ग्रहनक्षत्रताराणां भूमेर्विश्वस्य वा विभुः । देवा-

सुरमनुष्याणां सिद्धानां च यथाक्रमम्। ब्रह्माण्डमेतत् सुषिरं तत्रेदं भूर्भुवादिकम्। कटाहद्वितयस्यैव सम्पुटं गोलकाकृति(१)। ब्रह्माण्डमध्ये परिधिर्व्योमकक्षाऽभिधीयते। तन्मध्ये भ्रमणं भानामधोऽधः क्रमशस्तथा। मन्दामरेज्यभूपुत्रसूर्यशुक्रेन्दुजेन्दवः। परिभ्रमन्त्यधोऽधस्थाः सिद्धविद्याधरा घनाः। उपरिष्टात् स्थितास्तस्य सेन्द्रा देवा महर्षयः। अधस्तादसुरास्तद्वद्विषन्तोऽन्योन्यमाश्रिताः। ततः समन्तात् परिधिः क्रमेणायं महार्णवः। मेखलेव स्थितो धात्र्या देवासुरविभागकृत्। समन्तान्मेरुमध्यात् तु तुल्यभागेषु तोयधेः। द्वीपेषु दिक्षु पूर्वादिनगर्य्यो देवनिर्मिताः। भूवृत्तपादे पूर्वस्यां यमकोटीति विश्रुता। भद्राश्ववर्षे नगरी स्वर्णप्राकारतोरणा। याम्यायां भारते वर्षे लङ्का तद्वन्महापुरी। पश्चिमे केतुमालाख्ये रोमकाख्या प्रकीर्त्तिता। उदक् सिद्धपुरी नाम कुरुवर्षे प्रकीर्त्तिता। तस्यां सिद्धा महात्मानो निवसन्ति गतव्यथाः" सू० सि०।

(१) "एतत् प्रागुक्तं ब्रह्मणाधिष्ठितं सुवर्णाण्डं सुषिरमवकाशात्मकं तदवकाशे इदं जगत् भूर्भुवादिकं भूर्भुवःस्वर्गोलकमवस्थितं न बहिः। नन्वण्डस्य गोलाकारत्वेनान्तरवकाशात्मकत्वमसम्भवतः। अत आह कटाहद्वितयस्येति। कटाहोऽर्द्धगोलाकारं सावकाशं पात्रं तस्य द्वितयं द्वयं सम्पुटं तद्। एवकारो न्यूनाधिकव्यवच्छेदार्थः। सम्पुटमाभिमुख्येन मिलितं गोलकाकृतिर्गोलाकारः स्यात्। तथाच न क्षतिः" रङ्गना०।

"भूभूधरत्रिदशदानवमानवाद्या येऽयाश्च धिष्ण्यग्रगणेचरचक्रकक्षाः। लोकव्यवस्थितिरुपर्युपरि प्रदिष्टा ब्रह्माण्डभाण्डजठरे तदिदं समस्तम्" सि० शि०। इदानीमुक्तोदितं ब्रह्माण्डमानं पूर्वं कथितमपि प्रसङ्गादनुवदति स्म" प्रमिता०। "कोटिघ्नैर्नखनन्दषट्कनखभूभृद्भुजङ्गेन्दुभिः १८७१२०६९२०००००००० ज्योतिः शास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः। तद्ब्रह्माण्डकटाहसम्पुटतटे केचिज्जगुर्वेष्टनं केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः। करतलकलितामलकवदमलं सकलं विदन्ति ये गोलम्। दिनकरकरनिकरनिहततमसो नभसः स परिधिरुदितस्तैः। ब्रह्माण्डमेतन्मितमस्तु नो वा कल्पे ग्रहः क्रामति योजनानि। यावन्ति पूर्वैरिह तत्प्रमाणं प्रोक्तं खकक्षाख्यमिदं मतं नः"। प्रमाणशून्यत्वात् प्रयोजनाभावाच्चाचार्य्यैर्ब्रह्माण्डमानं न कथितमित्यर्थः" प्रमि०।

दानार्थकल्पिते महादानान्तर्गते ब्रह्माण्डात्मकस्वर्णनिर्मिते २ पदार्थे तत्स्वरूपादि हेमा० दा० ख० मत्स्यपु० उक्तं यथा "अथातः संप्रवक्ष्यामि ब्रह्माण्डं विधिपूर्वकम्। यच्छ्रेष्ठं सर्वभूतानां महापातकनाशनम्। पुण्यं दिनमथासाद्य तुलापुरुषदानवत्। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। लोकेशावाहनं तद्वदधिवासनकं तथा" तुलापुरुषदानवदिति, कालदेशर्त्विग्जावाहादिपूजाब्राह्मणवाचनगुरुर्त्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिकासम्भारलोकेशावाहनाधिवासनादि सर्वं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यमित्यर्थः। "कुर्य्याद्विंशत्पलादूर्द्ध्वमासहस्राच्च शक्तितः। सकलद्वयसंयुक्तं ब्रह्माण्डं काञ्चनं बुधः"। सकलद्वयं, कटाहद्वयम्। तल्लक्षणन्तु ब्रह्माण्डपुराणे "कुम्भच्छाया भवेद्राहुः प्रतीच्यां दिशि चन्द्रमाः। अदितः शुक्लपक्षादौ वपुरण्डस्य तादृशमिति" कुम्भच्छाया रश्मि, कुम्भच्छाया ग्रीवाहीनकुम्भादिलेखावच्छेदम्। "दिग्गजाष्टकसंयुक्तं षड्वेदाङ्गसमन्वितम्। लोकपालाष्टकोपेतं मध्यस्थितचतुर्मुखम्। शिवाच्युतार्कशिखरसुमावश्रीसमन्वितम्। वस्वादित्यमरुद्गर्भं महारत्नसमन्वितम्"। अथैतेषां दिग्गजप्रभृतीनां क्रमेण लक्षणान्युच्यन्ते आदित्यपुराणे "शुभ्राभश्च चतुर्दंष्ट्रः श्रीमानैरावतो गजः। पुष्पदन्तो हरिद्वर्णः षड्दन्तः पुष्पदन्तवान्। सामान्यगजरूपेण शेषा दिक्करिणः स्मृताः"। तन्नामानि शास्त्रान्तरे "ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजाः"। वेदाङ्गानि स्कन्दपुराणे "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां स्थितिः। छन्दश्चेति षडेतानि वेदाङ्गानि प्रचक्षते। मूर्त्तानि ब्रह्मणो लोके शास्त्रसङ्गानि तानि तु। द्विजाकृतिभिः शुभाक्षाणि पाणे दधति पुस्तकाम्"। तानि च पश्चिमदिशि वेदसन्निधौ निवेशनीयानि दिक्षु शेषाणामावाहात् प्रधानं नीयमानं हि तदङ्गान्यपकर्षतीतिन्यायात्, वक्ष्यते च, "पश्चिमे चतुरो वेदानिति"। लोकपालरूपाण्याह विश्वकर्मा "चतुर्दन्तो गजारूढो वज्रपाणिः पुरन्दरः। प्राचीपतिः प्रकर्त्तव्यो नानाभरणभूषितः। पिङ्गभ्रूश्मश्रुकेशाक्षः पीनाङ्गजठरोऽरुणः। छागस्थः साक्षसूत्रश्च सप्तार्च्चिः शक्तिधारकः। दंष्ट्रापीनो यमः कार्य्यो दण्डहस्तो विभाननता। रक्तदृक् पाशहस्तः क्रूरो निर्ऋतिर्विकटाननः। पुंस्थितः

षड्गजस्तथ भूतवान् राक्षसाहतः। वरुणः पाशभृत् सौम्यः प्रतीच्यां मकराश्रयः। धावद्धरिणपृष्ठस्थो ध्वजधारी समीरणः। दक्षादरक्षगः सोमो गदापाणिर्वरप्रदः"। "शशकवाहनः" इत्यागमान्तरम्। "पूर्वोत्तरे त्रिनेत्रश्च वृषभस्थस्त्रिशूलभृत्। कपालपाणिश्चन्द्रार्द्धभूषणः परमेश्वरः"। चतुर्मुखरूपन्तु विष्णुधर्मोत्तरात् "पद्मपत्रासनस्थश्च ब्रह्मा कार्य्यश्चतुर्मुखः। अक्षमालाञ्च बिभ्रत् पुस्तकञ्च कमण्डलुम्। वासः कृष्णाजिनं तस्य पार्श्वे हंसस्तथैव च"। शिवलक्षणमुक्तं वायुपुराणे "पञ्चवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः। कपालशूलखट्वाङ्गी चन्द्रमौलिः सदाशिवः"। विष्णुलक्षणमुक्तं तुलापुरुषदाने। सूर्य्यलक्षणमुक्तं विष्णुधर्मोत्तरे "रविः कार्य्यः शुभश्मश्रुः सिन्दूरारुणसुप्रभः। पद्मासनः पद्मकरो भूषितो रशनाधरः"। उमालक्ष्मीसमन्वितमित्यत्र, शिवाच्युतयोः सन्निहिते उमालक्ष्म्यौ विधेये। उमालक्षणमुक्तं देवीपुराणे "गौरीं शङ्खेन्दुवर्णाभां सर्वरीशनिषेविताम्। हंसपद्मासनासीनां साक्षसूत्रकमण्डलुम्। वरदोद्यतहस्ताभ्यां सर्वमाल्यफलप्रियाम्"। वरदोद्यतहस्ताभ्यां, वरदाभयपाणिकामित्यर्थः। लक्ष्मीलक्षणमुक्तं पञ्चरात्रे "पद्मासनस्थां कुर्वीत श्रियं त्रैलोक्यमातरम्। गौरवर्णां सुरूपाञ्च सर्वालङ्कारभूषिताम्। रौक्मपद्मकरव्यग्रां वरदां दक्षिणेन तु"। वस्वादित्यरूपाणि, नारदीये, "प्रसन्नवदनाः सौम्या वरदाः शक्तिपाणयः। पद्मासनस्था द्विभुजाः कर्त्तव्या वसवः सदा। पद्मासनस्था द्विभुजाः पद्मगर्भान्तकान्तयः। करादिस्तनपर्य्यन्तनालपङ्कजधारिणः। अधःसंस्थितमेषादिराशयः प्रावृताङ्गकाः। इन्द्राद्या द्वादशादित्यास्तेजोमण्डलमध्यगाः" तथा। वायुतुल्येन रूपेण मरुतो नाम देवताः"। कर्त्तव्या इति शेषः, वस्वादिमानानि, तुलापुरुषोक्तानि वेदितव्यानि। महारत्नसमन्वितमिति, महारत्नानि परिभाषायामुक्तानि, च अनन्तमिथुनान्वितमिति क्वचित्पाठः। "कश्यपश्चान्वितोऽनन्तः पृथ्वी स्त्रीरूपधारिणीत्यनन्तमिथुनम्। अथ प्रकृतमुच्यते "वितस्तेरङ्गुलशतं यावदायामविस्तरम्। कौशेयवस्त्रसंवीतं तिलद्रोणोपरि न्यसेत्। तथाष्टादश धान्यानि समन्तात्परिकल्पयेत्"। वितस्तेरङ्गुलशतमिति, द्वादशाङ्गुलमारभ्याङ्गुलशतं यावच्छक्त्यनुसारेण कार्य्यमित्यर्थः। द्रोणमानमष्टादश धान्यानि च परिभाषायां द्रष्टव्यानि। स च तिलद्रोणो वेदिकायां लिखितचक्रस्योपरि स्थापनीयः। "पूर्वेणानन्तशयनं प्रद्युम्नं पूर्वदक्षिणे। प्रकृतिर्दक्षिणे देशे संकर्षणमतः परम्। पश्चिमे चतुरो वेदाननिरुद्धमतः परम्। अग्निमुत्तरतो हैमं वासुदेवमतः परम्। समन्तादुपपीठस्थानर्चयेत् काञ्चनान् बुधः। स्थापयेद्वस्त्रसंवीतान् पूर्णकुम्भान् दशैव तु"। पूर्वेणेत्यादि, ब्रह्माण्डात् पूर्वदेशे अनन्तशयनं शेषशायिनं हु (पद्मादि)पीठे स्थापयेत्, तन्मूर्त्तिलक्षणं विष्णुधर्मोत्तरात् "देवदेवश्च कर्त्तव्यः शेषसुप्तश्चतुर्भुजः। एकपादोऽस्य कर्त्तव्यो लक्ष्म्युत्सङ्गगतः प्रभोः। तथाऽपरश्च कर्त्तव्यः शेषभोगाङ्कसंस्थितः। एको भुजोऽस्य कर्त्तव्यस्तथा जानौ प्रसारितः। कर्त्तव्यो नाभिदेशस्थस्तथा तस्यापरः करः। तथैवान्यः करः कार्य्यो देवस्य तु शिरोधरः। सन्तानमञ्जरीधारी तथाचास्य करः परः। नाभिसम्भूतकमले सुखासीनः पितामहः। नालसक्तौ तु कर्त्तव्यौ पद्मस्थौ मधुकैटभौ। शङ्खचक्रगदादीनि मूर्त्तानि परितो न्यसेदिति"। प्रद्युम्नलक्षणं पञ्चरात्रादिषु "दक्षिणोर्द्ध्वकरे पद्मं दद्याच्छङ्खमधः करे। चक्रमूर्द्ध्वे ततो वामे गदां दद्यात् तथा द्विज!। चापेषुभृत् प्रद्युम्नो रूपवान् विश्वमोहनः" इति। अत्र यद्यपि प्रकृतेरव्यक्तरूपतया विधानमशक्यं तथापि सत्त्वाद्यादिशब्दव्यपदेश्यं सुकरमस्ति तद्रूपमित्यतस्तदन्यतमरूपनिर्माणमेव न्याय्यम्। तदुक्तं मार्कण्डेयपुराणे "सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी। मातुलुङ्गं गदां खेटं पानपात्रञ्च बिभ्रती। नागं योनिञ्च लिङ्गञ्च बिभ्रती नृप! मूर्द्धनि"। संकर्षणरूपञ्च विष्णुधर्मोत्तरे "वासुदेवस्य रूपेण कार्य्यः संकर्षणः प्रभुः। स तु शुक्लवपुः कार्य्यो नीलवासा यदूत्तम!। गदास्थाने च मुषलं चक्रस्थाने च लाङ्गलमिति"। वेदमूर्त्तयो भूतघटे वक्ष्यन्ते। अनिरुद्धरूपं नारदीये। "कृष्णं चतुर्भुजं दक्षे शरं खड्गं तदुत्तरे। धनुःखेटधरं वीरमनिरुद्धं प्रचक्षते"। अग्निलक्षणमुक्तम्। वासुदेवरूपमपि नारदीये "वासुदेवः शिवः शान्तः सिताभश्चतुर्भुजः। योगमूर्त्तिर्द्धशङ्खञ्च हृद्यर्पितहस्तकः। धारयेदुत्तरे चक्रं करे वै दक्षिणे गदामिति"। एते च देवताविशेषा ब्रह्माण्डनिर्माणक्रमवशात् पृथक् सुवर्णेनैव घटनीयाः ब्रह्माण्डस्य किन्तु विंशतिपलादूर्द्ध्वमिति पलसंख्यावधिरिह नियमः, पुराणेषु दृश्यते ततोऽवमध्य-

पादकाञ्चने तस्मिन् न्यूनसंख्यत्वाद्यथावद्विहितत्वमापद्यते। न च दिग्गजाष्टकसंयुक्तं लोकपालोपेतमित्यादिना एक एव तावद्विरञ्चिरुक्तो निष्पाद्यत इति ब्रह्माण्डवत्प्रत्यवर्णनेनैव दिग्गजादिप्रतिमानिर्मितौ न कश्चिद्बाध इति वाच्यं, "काञ्चनात् कारयेदिति" पुनः काञ्चनोपदेशानर्थक्यापत्तेः। अत्र यथायपरिमाणानां प्रतिमानामङ्गुलपर्वप्रभृतिवितस्तिपर्य्यन्तं यथाशक्ति परिमाणं कल्पनीयम्। "पूर्णकुम्भान् स्थापयेदित्यत्र समन्तादिति योज्यम्। "दशैव धेनवो देया सहेमाम्बरदोहनाः। पादुकोपानहच्छत्रचामरासनदर्पणैः। भक्ष्यभोज्यान्नदीपेक्षुफलमाल्यानुलेपनैः। होमाधिवासनान्ते च स्नापितो वेदपुङ्गवैः। इत्युच्चारयेन्मन्त्रं त्रिःकृत्वाथ प्रदक्षिणम्"। सहेमाम्बरदोहना इति, हेमशृङ्ग्यः ताम्रदोहनाः सवस्त्राः पार्श्वतो दक्षिणार्थमुपकल्पनीयाः। तत्राचार्य्याय द्वे, ऋत्विग्भ्योऽष्टौ संप्रदेया, जापकादीनां पश्चैव यथाशक्ति दक्षिणेति,। भविष्योत्तरे तु "धेयं निष्कशतं पादेनेत्यादिना सुवर्णमेव दक्षिणार्थमुपकल्पनीयमित्युक्तं, स्नानाधिवासनदिनादन्ये द्युरग्निकुण्डेषु ऋत्विगुपवेशनादिकर्मशेषसमाप्तौ तुलापुरुषदानवद्विहितायां, पूर्ववदेव स्नापितः शुक्लमाल्याम्बरधरो गृहीतकुसुमाञ्जलिर्यजमानो ब्रह्माण्डं त्रिःप्रदक्षिणीकृत्य मन्त्रमुच्चारयेत्। मन्त्रः। "नमोऽस्तु विश्वेश्वर! विश्वधामन्! जगत्सवित्रे भगवन्नमस्ते। सप्ताधिलोकामरभूतलेन गर्भेण सार्द्धं वितराभिरक्षाम्। ये दुःखितास्ते सुखिनो भवन्तु प्रयान्तु पापानि चराचराणाम्। त्वद्दानशस्त्राहतपातकानां ब्रह्माण्डदोषाः प्रलयं व्रजन्तु। एवं प्रणम्यामरविश्वगर्भं दद्याद् द्विजेभ्यो दशधा विभज्य। भागद्वयं तत्र गुरोः प्रकल्प्य समम्भजेच्छेषमतः क्रमेण"। दानवाक्यं तुलापुरुषवद्बोद्धव्यं तच्च दशधा विभज्य गुरोर्भागद्वयं प्रकल्प्य अवशिष्टाष्टभागानामेकैकं भागं त्रिधा विभज्य चतुर्विंशतिसंख्येभ्य ऋत्विगादिभ्यः समं दद्यात्, तदनुज्ञयान्येभ्योऽपि ब्राह्मणेभ्यो दद्यात्। "स्वल्पं होमं गुरुरेक एव कुर्य्यादथैकाग्निविधानयुक्त्या। स एव संपूज्यतमोऽल्पवित्तैर्यथोक्तवस्त्राभरणादिकेन"। विंशतिपलादारभ्य पलसहस्रावधिद्रव्ये ब्रह्माण्डे सहस्रतदर्द्धादित्युत्तममध्यमादित्रैविध्यकल्पनायां कनीयोभागस्याल्पत्वमवधेयं, विंशतिपलनिर्मितस्यैवाल्पत्वमित्यन्ये उक्तविंशतिपलादर्वाक् यथाशक्तिविधानं स्वल्पत्वमवगन्तव्यमिति केचित्। एकाग्निविधानम् एकस्मिन्नेव कुण्डे होमकरणम्, कुण्डमपि मध्यदिग्भागस्थितं हस्ताकारञ्च कार्य्यं तदेतत्परिभाषायामुपपादितम्। अथ पुण्याहवाचने कृते देवतावेदीसमीपं गत्वा पूर्ववद्यजमानेन देवतापूजायां विहितायामाचार्य्यो विसर्जनं विदध्यात्। "इत्थं य एतदखिलं पुरुषोऽत्र कुर्य्याद्ब्रह्माण्डदानमधिगम्य महद्विमानम्। निर्धूतकल्मषविशुद्धतनुर्मुरारेरानन्दकृत् पदमुपैति सहाप्सरोभिः। सन्तारयेत् पितृपितामहपुत्रपौत्रबन्धुप्रियातिथिकलत्रशताष्टकं सः। ब्रह्माण्डदानशकलीकृतपातकौघमानन्दयेच्च जननीकुलमप्यशेषम्। इति पठति शृणोति वा य एतत् सुरभवनेषु गृहेषु धार्म्मिकाणाम्। मतिमपि च ददाति मोदते सोऽमरपतिभवने सहाप्सरोभिः"। "राजोवाच विधिं ब्रह्माण्डदानस्य कृत्वा यं मोक्षभाग्भवेत्। कालं देशं द्विजं तीर्थं सर्व्वमेतद्वदस्व मे। कृतेन येन सर्व्वस्य फलभागी भवाम्यहम्। कुत्सितस्यास्य भावस्य मोक्षः स्यादचिराच्च मे। वशिष्ठ उवाच "एवं श्रुत्वा ततो राजन्! पुरोधास्तस्य तं द्विजः। ब्रह्माण्डं कारयामास सौवर्णं सर्व्वधातुभिः। पीठं निष्कसहस्रेण पद्मं तत्र प्रकल्पयेत्। तत्र ब्रह्मा तस्य मध्ये पद्मरागैरलङ्कृतः। सावित्र्या चैव गायत्र्या ऋषिभिस्त्रिभिः सह। नारदाद्यैः सुतैः सर्व्वैरिन्द्राद्यैश्च सुरैस्तथा। सौवर्णविग्रहाः सर्व्वे ब्रह्मणस्तु पुरःसराः। वाराहरूपो भगवान् लक्ष्म्या सह सनातनः। नीलाम्बरकृताश्चैव भूषायास्तस्य कारयेत्। रजतस्य विशुद्धस्य देहं रुद्रस्य कारयेत्। गोमेदकैस्तस्य शोभाङ्कारयेद्बुद्धिमान्। मौक्तिकैश्चापि सोमस्य शोभां वज्रैर्दिवाकरैः"। सावित्रीगायत्र्यौ तु, ब्रह्मणः पार्श्वभागे स्थापनीयौ। तदाह नारदः "सावित्री दक्षिणे पार्श्वे गायत्री नाम वामतः। विलोकयन्त्यौ ब्रह्माणं साक्षसूत्रकमण्डलुम्"। ऋषयः सप्त गोतमाद्याः तदुक्तमादित्यपुराणे "गोतमश्च भरद्वाजो विश्वामित्रश्च काश्यपः। जमदग्निर्वशिष्ठोऽत्रिः सप्त वैवस्वतेऽन्तरे"। सप्तर्षिलक्षणमाह यमः "सप्तर्षयस्तु जटिलाः कमण्डल्वक्षसूत्रिणः। ध्याननिष्ठा वशिष्ठस्तु कार्य्यो भार्य्यासमन्वितः"। मुनयो वानप्रस्थाः, नारदाद्यैरिति तेषां विशेषणम्"। तानाह मनुः "अहं प्रजाः सिसृक्षुस्तु तपस्तप्त्वा सुदुश्चरम्। पतीन् प्रजानामसृजं महर्षीनादितो दश। मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्। प्रचेतसं वशिष्ठञ्च

प्रवरवर्णनम्। वेदानां व्यसनाख्यानं स्वायम्भुवनिरूपणम्। शेषमन्वन्तराख्यानं पृथिवीदोहनन्ततः। चाक्षुषेऽद्यतने सर्गौ द्वितीयोऽङ्घ्रिः पुरोदिते"। मध्यभागे चोपोद्घातपादे "अथोपोद्घातपादे तु सप्तर्षिपरिकीर्त्तनम्। प्राजापत्यान्वयस्ततो देवादीनां समुद्भवः। ततो जयाभिव्याहारौ मरुदुत्पत्तिकीर्त्तनम्। काश्यपेयानुकथनम् ऋषिवंशनिरूपणम्। पितृकल्पानुकथनं श्राद्धकल्पस्ततः परम्। वैवस्वतसमुत्पत्तिः सृष्टिस्तस्य ततः परम्। मनुपुत्रान्वयश्चातो गान्धर्वस्य निरूपणम्। इक्ष्वाकुवंशकथनं वंशोऽत्रेः सुमहात्मनः। अमावसोरान्वयश्च रजेश्चरितमद्भुतम्। ययातिचरितञ्चाथ यदुवंशनिरूपणम्। कार्त्तवीर्य्यस्य चरितं जामदग्न्यं ततः परम्। वृष्णिवंशानुकथनं सगरस्याथ सम्भवः। भार्गवस्यानुचरितं तथा कार्त्तवधाश्रयम्। सगरस्याथ चरितं भार्गवस्य कथा पुनः। देवासुराहवकथा कृष्णाविर्भाववर्णनम्। इनस्य च स्तवः पुण्यः शुक्रेण परिकीर्त्तितः। विष्णुमाहात्म्यकथनं बलिवंशनिरूपणम्। भविष्यराजचरितं सम्प्राप्तेऽथ कलौ युगे। एवमुपोद्घातपादोऽयं तृतीयो मध्यमे दले"। उत्तरभागे उपसंहारपादे "चतुर्थ उपसंहारं वक्ष्ये खण्डे तथोत्तरे। वैवस्वतान्तराख्यानं विस्तरेण यथातथम्। पूर्वमेव समुद्दिष्टं संक्षेपादिह कथ्यते। भविष्याणां मनूनाञ्च चरितं हि ततः परम्। कल्पप्रलयनिर्देशः कालमानं ततः परम्। लोकाश्चतुर्दश ततः कथिता मानलक्षणैः। वर्णनं नरकाणाञ्च विकर्माचरणैस्ततः। मनोमयपुराख्यानं लयः प्राकृतिकस्ततः। शैवस्याथ पुरस्यापि वर्णनञ्च ततः परम्। त्रिविधाद्गुणसम्बन्धाज्जन्तूनां कीर्त्तिता गतिः। अनिर्देश्याप्रतर्क्यस्य ब्रह्मणः परमात्मनः। अन्वयव्यतिरेकाभ्यां वर्णनं हि ततः परम्। इत्येष उपसंहारः पादो वृत्तः स चोत्तरः। चतुष्पादं पुराणं ते ब्रह्माण्डं समुदाहृतम्। अष्टादशमनौपम्यं सारात् सारतरं द्विज!। ब्रह्माण्डञ्च चतुर्लक्षं पुराणत्वेन पठ्यते। तदेव व्यस्य गदितमत्राष्टादशधा पृथक्। पाराशर्येण मुनिना सर्वेषामपि मानद!। वस्तुदृष्ट्वाथ तेनैव मुनीनां भावितात्मनाम्। मत्तः श्रुत्वा पुराणानि लोकेभ्यः प्रचकाशिरे। मुनयो धर्मशीलास्ते दीनानुग्रहकारिणः। मया चेदं पुराणन्तु वशिष्ठाय पुरोदितम्। तेन शक्तिसुतायोक्तं जातूकर्ण्याय तेन च। व्यासो लब्ध्वा ततश्चैतत् प्रभञ्जनमुखोद्गतम्। प्रमाणीकृत्य लोके-ऽस्मिन् प्रावर्त्तयदुत्तमम्"। तत्फलश्रुतिः "य इदं कीर्त्तयेद्वत्स! शृणोति च समाहितः। स विधूयेह पापानि याति लोकमनामयम्। लिखित्वैतत् पुराणन्तु स्वर्णसिंहासनस्थितम्। पात्रेणाच्छादितं यस्तु ब्राह्मणाय प्रयच्छति। स याति ब्रह्मणो लोकं नात्र कार्या विचारणा। मरीचे! ऽष्टादशैतानि मया प्रोक्तानि यानि ते। पुराणानि तु संक्षेपाच्छ्रोतव्यानि च विस्तरात्। अष्टादश पुराणानि यः शृणोति नरोत्तमः। कथयेद्वा विधानेन नेह भूयः स जायते। सूत्रमेतत् पुराणानां यन्मयोक्तं तवाधुना। तन्नित्यं शीलनीयं हि पुराणफलमिच्छता। न दाम्भिकाय पापाय देवगुर्वनुसूयवे। देयं कदापि साधूनां द्वेषिणे न शठाय च। शान्ताय शमचित्ताय शुश्रूषाभिरताय च। निर्मत्सराय शुचये देयं सद्वैष्णवाय च" नारदीयपु० ४पा० १०८अ०।

ब्र(ब्र)ह्मात्मभू पु० ब्रह्मणः आत्मनः देहात् भवति भू—क्विप्। अश्वे शब्दमाला तस्य ब्रह्मदेहजातत्वं शत०ब्रा० यथा "प्राणा वै यशोवीर्य्यं तत् प्राणेषूत्क्रान्तेषु शरीरं श्वयितुमध्रियत तस्य शरीर एव मन आसीत्। सोऽकामयत मेध्यं म इदं स्यादात्मन्व्यनेन स्यामिति। ततोऽश्वः समभवद्यदश्वत्तन्मेध्यमभूदिति तदेवाश्वमेधस्याश्वमेधत्वम्" सू०। "तदेव यशोवीर्य्यभूतेषु प्राणेषूत्क्रान्तेषु शरीराद्विनिष्क्रान्तेषु तच्छरीरमप्रजापतेः श्वयितुमुच्छूनभावमुत्प्राप्य मृततामेध्यमभवत्। तस्य प्रजापतेः शरीरान्निर्गतस्यापि तस्मिन्नेव शरीरे मन आसीत्। यथा कस्यचित् प्रिये विषये दूरङ्गतस्यापि मनो भवति तद्वत्। स तस्मिन्नेव शरीरे गतमनाः सन् किमकरोदिति। उच्यते सोऽकामयत कथं मेध्यं मेधार्हं यज्ञियं मे ममेदं शरीरं स्यात्। किञ्चात्मन्वी आत्मवांश्चानेन शरीरेण शरीरवान् स्यामिति प्रविवेश। यस्मात्तच्छरीरं मद्वियोगात् गतयशोवीर्य्यं सदश्वयत् ततश्चाद्यश्वः समभवत्। ततोऽश्वनामा प्रजापतिरेव साक्षादत्र स्तूयते। यस्मात् पुनस्तत् प्रवेशात् गतयशोवीर्य्यत्वादमेध्यं सन्मेध्यमभूत्तदेव तस्मादेवाश्वमेधस्याश्वमेधनाम्नः क्रतोरश्वमेधत्वमश्वमेधनामलाभः" भा०भा०।

ब्र(ब्र)ह्मादनी स्त्री ब्रह्मा ब्रह्मवाहनं हंस तस्येवादनं पादरूपं यस्याः गौरा० ङीष्। हंसपद्यां राजनि०।

ब्र(ब्र)ह्माभिजाता स्त्री गोदावर्य्यां राजनि०।

ब्र(ब्र)ह्मानन्द पु० ब्रह्मस्वरूपानन्दे तस्य मनुष्यादी-

नामानन्देभ्यः श्रेष्ठत्वम् शत० ब्रा० १४।७।१।३१ वा क्याद्रौ चक्तं यथा

"एषोऽस्य परमो लोक एषोऽस्य परम आनन्द एतस्यै-वानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति । स यो मनुष्याणां राद्धः समृद्धो भवति । अन्येषामधिपतिः सर्वैर्मानुष्यकैः कामैः सम्पन्नतमः स मनुष्याणां परम आनन्दः । अथ ये शतं मनुष्याणामानन्दाः । स एकः पितॄणां जितलोकानामानन्दः । अथ ये शतं पितॄणां जितलोकानामानन्दाः । स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसम्पद्यन्ते । अथ ये शतं कर्मदेवानामानन्दाः । स एक आजानदेवानामानन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः । अथ ये शतमाजान-देवानामानन्दाः । स एको देवलोक आनन्दो यश्च श्रो-त्रियोऽवृजिनोऽकामहतः । अथ ये शतं लोक आ-नन्दाः । स एको गन्धर्वलोक आनन्दो यश्च श्रोत्रि-योऽवृजिनोऽकामहतः । अथ ये शतं गन्धर्वलोक आ-नन्दाः । स एकः प्रजापतिलोक आनन्दः अथ ये शतं प्रजापतिलोक आनन्दाः स एको ब्रह्मलोक आ-नन्दो यश्च श्रोत्रियोऽवृजिनोऽकामहतः एष ब्रह्मलोकः सम्राडिति" बृ० । "परमो लोकस्तत्त्वो लोकः स्वयं-ज्योतिःस्वभावो लोकस्तस्य सुखवृत्तिविषयः-स्वाभाविकः । परमः स्वरूपानुभवलक्षणो मुख्यो निर-तिशय आनन्दः पूर्णानन्दः । किं च वस्तुतो नास्त्ये-तावत्स्वातिरिक्तं वैषयिकमपि सुखमित्याह एतस्यैव ब्रह्मानन्दस्य मात्रां कलाम् अन्यानि अविद्यया ब्रह्मणो-ऽन्यत्वेन परिकल्पितानि ब्रह्मादिस्तम्बपर्यन्तानि भूता-न्युपजीवन्ति उपभुञ्जते तावन्मात्रेणैवानन्दीनि भव-न्तीत्यर्थः । मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तमुत्तरो-त्तरशतगुणितातिशयशालिनां परब्रह्मानन्दावयववानां प्रतिपादनद्वारेणावयविनं निरस्तगणितभेदमतिशयं ब्रह्मानन्दं दर्शयितुमुत्तरा श्रुतिः प्रवर्त्तते" भा० ।

ब्र(व्र)ह्मापित पु० सूर्यमण्डलस्थराक्षसभेदे "त्वष्टा च यम-दग्निश्च कम्बलोऽथ तिलोत्तमा । ब्रह्मापेतोऽथ ऋत-जिद्धृतराष्ट्रश्च सप्तमः । माघमासे वसन्त्येते सप्त मैत्रेय भास्करे" विष्णुपु० २अंशे १०अ० ।

ब्र(व्र)ह्मारण्य न० ब्रह्मणो वेदस्यारण्यमिव । वेदपाठभूमौ त्रिका० ।

ब्र(व्र)ह्मार्पण न० १सर्वकर्मणामीश्वरार्पणतया ब्रह्मचिन्तने ब्रह्मणि परमात्मनि ईश्वरे २सर्वकर्मफलानां समर्पणे च तत-प्रकारः कूर्मपु०४अ०दर्शितो यथा "ब्रह्मणा दीयते देयं ब्रह्मणे संप्रदीयते । ब्रह्मैव दीयते चेति ब्रह्मार्पणमिदं परम् । नाहं कर्त्ता सर्वमेतद्ब्रह्मैव कुरुते तथा । एतद् ब्रह्मार्पणं प्रोक्तं ऋषिभिस्तत्त्वदर्शिभिः । प्रीणातु भगवानीशः कर्मणा-ऽनेन शाश्वतः । करोति सततं बुद्ध्या ब्रह्मार्पणमिदं परम् । यद्वा फलानां सन्न्यासं प्रकुर्यात् परमेश्वरे । कर्मणामेत-दप्याहुर्ब्रह्मार्पणमनुत्तमम्" ।

ब्र(व्र)ह्मावर्त्त पु० "सरस्वतीदृषद्वत्योर्देवनद्योर्यदन्तरम् । तं देवनिर्मितं देशं ब्रह्मावर्त्तं प्रचक्षते" मनूक्ते १देशभेदे २तत्रस्थे तीर्थभेदे च भा०व० ८३अ० ।

ब्र(व्र)ह्मासन न० ६त० । ब्रह्मण ऋत्विग्भेदस्य १आसने ब्रह्मोच्चारणादयोऽप्यत्र । ब्रह्म वस्तदुपासनाङ्गमासनम् । २पद्मस्वस्तिकादौ आसने । "ब्रह्मासनं तदावस्थे नत्वा ब्राह्मणो भवेत् । एकपादमूरौ दत्त्वा तिष्ठेद्ध्यना-न्तर्भवेत्" रुद्रया० उक्ते देवपूजाङ्गे ३आसनभेदे च ।

ब्र(व्र)ह्मास्त्र न० ६त० । अस्त्रभेदे भा० आ० १६६ अ० ।

ब्र(व्र)ह्माहुति न०ब्रह्मणे आहुतिः । वेदाध्ययने "ब्रह्माहुतिहुत पुण्यमन्नमश्नाति षट्कृतम्" मनुः ।

ब्र(व्र)ह्मिन् पु० ब्रह्म वेदस्तपो वाऽस्त्यस्य शेषत्वेन ब्रीह्या० इनि टिलोपः । वेदतपसोः शेषीभूते १परमेश्वरे । तदाराधनार्थमेव तयोरनुष्ठानात् तस्य तच्छेषित्वम् । "ब्रह्मविद् ब्राह्मणो ब्रह्मी" विष्णुस० । ब्रह्म वेदो वेदितव्यत्वेनास्त्यस्य इनि । २वेदतदर्थाभिज्ञे ।

ब्र(व्र)ह्मिष्ठ त्रि०अतिशयेन ब्रह्मी इष्ठन् टिलोपः । अतिशयेन ब्रह्मज्ञे । "ब्राह्मणा भगवन्तो यो ब्रह्मिष्ठः स एता (गाः) उदजताम्" वृ०उ० "ब्राह्मणाः श्रुताध्ययनाभिजनादर्थ-निष्ठाः सर्वे यूयं ब्रह्मणोऽतिशयेन ब्रह्मिष्ठाः" भा० । "ब्रह्मिष्ठमाधाय निजेऽधिकारे ब्रह्मिष्ठमेव स्वतनुप्रसूतम्" रघुः । २दुर्गायां स्त्री "ब्रह्मिष्ठा वेदमातृत्वात् गायत्री परमात्मता । वेदेषु चरते यस्मात् सा ब्रह्मचारिणी" देवीपु० ४५अ० ।

ब्र(व्र)ह्मी स्त्री ब्रह्मणे हिता मेधाजनकतया अच् टिलोपः वा० ङ हविः ङीप् । (ब्राह्मणयष्टि) ख्यातायाम् लताभेदे त्रिका० ।

ब्र(व्र)ह्मीघृत न० सारस्वतघृतमिति ख्याते औषधविशेषे यथा "समूलपत्रशाखाद्यां ब्रह्मीं प्रक्षाल्य वारिणा । उदूखले क्षोदयित्वा रसं वस्त्रेण गालयेत् । रसे प्रस्थद्वये तस्मिन् घृतप्रस्थं विपाचयेत् । हरिद्रा

**ब्रा(ब्रा)ह्मणक** पु॰कुत्सितार्थे कन्। कुत्सितब्राह्मणे। ब्राह्मणकर्माणकृत्ये। "एवमुक्तो ब्राह्मणः स्यादन्यो ब्राह्मणको भवेत्" भा॰शा॰२७।अ॰उक्तेः। ब्राह्मणेन जातिमात्रेण चार्यते कै–क। २ब्राह्मणकत्वरहिते विप्रवंश्ये। संज्ञायाम् कन्। आयुधजीविब्राह्मणप्रधाने २देशे सि॰ कौ॰ ततः कोपधत्वात् अ। ब्राह्मणकीय तत्सम्बन्धिनि त्रि॰।

**ब्रा(ब्रा)ह्मणकाम्या** स्त्री ६त॰। १विप्रेच्छायाम् उपचारात् २तद्विषये च "अतो तान्यन्नपानानि चापो मूलं फलं पयः। हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम्" प्रा॰त॰।

**ब्रा(ब्रा)ह्मणचक्षुस्** न॰ ब्राह्मणस्य सर्वार्थप्रकाशकत्वात् चक्षुरिव। "श्रुतिस्मृती च विप्राणां चक्षुषी देवनिर्मिते। काणस्तत्रैकया हीनो द्वाभ्यामन्धः प्रकीर्त्तितः" इत्युक्तेः सर्वार्थप्रकाशकत्वेन विप्रस्य चक्षुस्तुल्ये वेदस्मृतिरूपे पदार्थे।

**ब्रा(ब्रा)ह्मणचाण्डाल** पु॰ ब्राह्मणचाण्डाल इव। शास्त्रनिषिद्धकर्मकारिणि पापकृद्ब्राह्मणे मनुः ९ ८७।

**ब्रा(ब्रा)ह्मणजातीय** पु॰ ब्राह्मणजाति+स्वार्थे छ्स्य जातीयादेशः प्रकृतिलिङ्गस्यातिक्रमः। ब्राह्मजातियुक्ते

**ब्रा(ब्रा)ह्मणजीविका** स्त्री ६त॰। याजनाध्यापनप्रतिग्रहरूपायां ब्राह्मणवृत्तौ "ब्राह्मणा ब्रह्मयोनिस्था ये स्वकर्मण्यवस्थिताः। ते सम्यगुपजीवेयुः षट् कर्माणि यथाक्रमम्। अध्यापनमध्ययनं यजनं याजनन्तथा। दानं प्रतिग्रहश्चैव षटकर्माण्यग्रजन्मनः। षण्णान्तु कर्मणामस्य त्रीणि कर्माणि जीविका। याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" मनुः। ब्राह्मणवृत्तिरप्यत्र स्त्री।

**ब्राह्मणता** अव्य॰ब्राह्मणाय देयम् तल्। विप्राय देयमित्यर्थे

**ब्रा(ब्रा)ह्मणप्रिय** ६त॰। १विष्णौ "ब्रह्मण्यो ब्राह्मणप्रियः" विष्णु स॰। २विप्रप्रिये त्रि॰।

**ब्रा(ब्रा)ह्मणब्रुव** पु॰ ब्राह्मणं विप्रजातिमात्रतया आत्मानं ब्रवीति ब्रू–क वा॰ब वच्यादेशः। वेदतत्कर्महीने जातिमात्रोपजीविनि विप्रे "गर्भाधानादिमन्त्रैर्यो वेदोपनयनेन च। नाध्यापयति नाधीते स भवेद्ब्राह्मणब्रुवः" व्यासस॰। "जातिमात्रोपजीवी च कामं स्याद् ब्राह्मणब्रुवः। धर्मप्रवक्ता नृपतेर्न तु शूद्रः कथञ्चन" मनुः "समम ब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे" मनुः।

**ब्रा(ब्रा)ह्मणयज्ञ** पु॰ब्राह्मणमात्रकर्त्तव्यो यज्ञः शा॰त॰। विप्रमात्रकर्त्तव्ये सौत्रामणीयज्ञे "ब्राह्मणयज्ञः सौत्रामण्यभिचारिकाश्च" कात्या॰श्रौ॰ १९ १ १ "ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम् अभिचारस्य ब्राह्मणस्य नेतरयोर्वर्णयोरिति सौत्रामणीति कर्मनामधेयम्" कर्क॰। "तस्मादेव ब्राह्मणयज्ञो यत् सौत्रामणी" शत॰ब्रा॰ १२ ९ १ १।

**ब्रा(ब्रा)ह्मणयष्टि** स्त्री ६त॰वा ङीप्। (वामनहाटी) १वृक्षभेदे २विप्रदण्डे च स्वार्थे क। अत्रैव अमरः।

**ब्रा(ब्रा)ह्मणलक्षण** न॰६त॰। विप्रस्यासाधारणे धर्मभेदे तच्च वशिष्ठेनोक्तं यथा "योगस्तपो दमो दानं सत्यं शौचं दया श्रुतम्। विद्या विज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणम्। सर्वत्र दान्ताः श्रुतपूर्णकर्णा जितेन्द्रियाः प्राणिवधे निवृत्ताः। प्रतिग्रहे सङ्कुचिताग्रहस्तास्ते ब्राह्मणास्तारयितुं समर्थाः"।

**ब्रा(ब्रा)ह्मणशस्त्र** न॰ ब्राह्मणस्य शस्त्रमिव तत्कार्यकारित्वात्। अभिचारादिमन्त्रोच्चारणात्मके विप्रवाक्ये "वाक् शस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन् द्विजः" मनुः। "यस्मादभिचारमन्त्रोच्चारणात्मिका ब्राह्मणस्य वागेव शस्त्रं शस्त्रसाध्यकार्यकारि" कुल्लू॰।

**ब्रा(ब्रा)ह्मणसम** पु॰ ६त॰। "ब्रह्मबीजसमुत्पन्नो मन्त्रसंस्कारवर्जितः। जातिमात्रोपजीवी च स भवेद् ब्राह्मणः समः" इत्युक्ते क्रियारहिते विप्रे

**ब्रा(ब्रा)ह्मणाच्छंसिन्** पु॰ब्राह्मणे मन्त्रेतरवेदभागे विहितानि शस्त्राणि उपचारात् ब्राह्मणानि तानि शंसति द्वितीयायार्थे पञ्चम्युपसंख्यानम् तस्याः "ब्राह्मणाच्छंसिन उपसंख्यानम्" वार्त्ति॰ अलुक्। ब्रह्मरूपस्य ऋत्विजः सहकारिणि ऋत्विग्भेदे स्वाध्यायवाक्ये ९।५ पृ॰दृश्यम्। अत्र कश्चिद्विशेषोऽभिधीयते। षोडशर्त्विजां मध्ये प्रधानभूतान् चतुर उक्त्वा कात्या॰श्रौ॰७ १ ८ १०। उक्तं यथा "तत्पुरुषा इतरे यथावेदम्" सू॰ "इतरे द्वादशर्त्विजो वेदचतुष्टयानां ब्रह्मादीनां चतुर्णां पुरुषाः आदेशकारिणोऽनुचराः सेवकाः यथावेदमिति ये यद्वेदविहितस्य कर्मणः कर्त्तारस्ते तत्पुरुषाः यथावेदमिति ते ब्रह्मपुरुषा न भवन्ति इति तान् स्वयमेवाह" कर्कः "ब्राह्मणाच्छंस्यग्नीध्रपोतारो ब्रह्मणः" सू॰। प्रधानपुरुषवरणेन तदधवर्त्तित्वात्तेऽपि वृता एव भवन्ति प्रधानपुरुषे कार्यान्तरासक्ते ऽन्यत्र गते वा तदीयं कर्म तत्पुरुषैरेव कर्त्तव्यम् नान्यपुरुषैरिति पुरुषाणामपि पूर्वपूर्वेण वरणमभावे नोत्तरेण"। तस्य भावः कर्म वा "होत्राभ्यश्छः" पा॰ छ। ब्राह्मणाच्छंसीय तद्भावादौ

**ब्रा(ब्रा)ह्मणादि** पु॰ भावे कर्मणि चार्थे ष्यञ्प्रत्ययनिमित्ते शब्दगणे स च गणः "ब्राह्मण वाडव माणव (अर्हतोनुम्

रागादिवच्चित्ताराध्यत्वज्ञानमिति चेत् अनुराग एवास्तु अतएव गी०।अ०१०। श्लो०९) । "मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च। तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इत्यादौ मद्गतचित्तप्राणादीनां भजनस्यैव नाराध्यत्वज्ञानवत्ताम्। अतएव च कमनीयाकृतिदर्शनेनानुरक्तानां गोपवधूनामपि भक्तिफलं मुक्तिः श्रूयते। अनुरक्तिस्तु न ज्ञानान्तर्गतः किन्तु भगवन्महिमादिज्ञानादनुपश्चाज्जायमानत्वादनुरक्तिरित्युक्तम्। ननु पित्रादिगोचरानुरागस्यापि प्रसक्तभक्तित्वं प्रसज्येत नन्व एव परमेश्वरात्मकत्वात्। अथ विकाराविशिष्ट एव तथात्वं वाच्यं तथापि गोपीप्रभृतीनां प्रादुर्भावविच्छेदेश्वरभक्तावव्यापकम्। उच्यते जीवोपाध्यवच्छिन्नचेतनविषयिणी अनुरक्तिरेव सेति। एवञ्च प्रादुर्भाववच्छेदे परिपूर्णे च भक्तिः संकीर्णा भवति" टीका। "तत्संस्थस्यामृतत्वोपदेशात्" ३सू० "तस्मिन्नीश्वरे संस्था भक्तिरेव न तथोक्तः। तस्यामृतत्वं फलमुपदिश्यते (छा०।प्र० १२७) "ब्रह्मसंस्थोऽमृतत्वमेतीति"। तस्मादिच्छात्वगोचरफलत्वनिबन्धना तदभिलाषा परिहृता भवतीति" टी०। "ज्ञानमिति चेन्न द्विषतोऽपि ज्ञानस्य तदसंस्थितेः" ४सू० "ननु ब्रह्मसंस्थाशब्देन ब्रह्मज्ञानमेवोच्यते न तु तद्भक्तिः। तथाचामृतत्वफलं तस्यैवेति चेद्ब्रूषे। नैष दोषः। संस्था भक्तिरेव न ज्ञानं द्विषतश्च ज्ञानवतोऽपि तत्संस्थत्वव्यवहाराभावात्। राजाद्यनुरक्ताः स्वल्पमात्यमित्रादयस्तत्संस्था इति व्यपदिश्यन्ते न पुनः प्रतिपक्षभूपालाः। मन्त्रार्थनिर्णयो हि लोकवदेव वेदेऽपीति। अतएव चिरकारिकोपाख्याने "विश्वसन्ते न कालेन यस्यां संस्था व्यतिक्रमः। सोऽश्नीत भयं तप्तो दुःखेनाप्नुयात् वर्त्तयन्" । (महाभा० शा० अ० २६७ श्लो० ९९२६) इत्यनेन पतिभक्त्यतिक्रम उक्तः। तस्मात् संस्था भक्तिरिति एवञ्च (ब्रह्मसू०।अ०१।पृ०७)"तन्निष्ठस्य मोक्षोपदेशादिति"बादरायणीयसूत्रस्याप्ययमेवार्थोऽध्यवसेयः"टी० 'तयोपक्षयाच्च'५सू०। "तथा भक्त्या ज्ञानं प्रति ज्ञानस्योपक्षीणं यथाह्यकार उक्तयुक्तिसहस्रार्थैः (गी०।अ०७।श्लो० १९)। "यदा ते निश्चलं चेतो मयि भक्तिसमन्वितम्। तदा त्वं मत्प्रसादेन निर्वाणमपि यास्यसि" इति स्मितम्। नह (श्वे०।उ०।७१) "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यत्र वेदनफलं मुक्तिः श्रुता तद्विरोधेन अतोऽनन्यार्थत्वं स्यादिति चेन्न अत्रापि तस्यैवोपक्षयात्। तथा हि अतिमृत्युपदं न मुक्तौ रूढं किन्तु यस्यां यस्यां मृत्योरतिक्रम इति व्युत्पत्त्या तदपेक्षया यतो भक्तेर्मृत्य्वतिक्रम इति व्युत्पाद्य मुक्तिमेवातिमृत्युपदेनाभिधत्ताम् उपपदविभक्त्यपेक्षया कारकविभक्तेर्बलवत्त्वात्। (गी०।अ०१२श्लो०७)। "तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम्"। इत्यादिना भक्तितो मृत्योरतिक्रमोक्तेः। मन्त्रश्च भवति (तैत्तिरीयमन्त्रभागे) "त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्द्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतादिति"। अत्र यजनं भक्तिः तयैव तत्फलव्याख्यानात् नचाद्यां श्रुतौ भक्तेरसन्निधानं युक्तावपि तुल्यत्वात्। तस्मादनयापि श्रुत्या ज्ञानस्योपक्षय एव प्रतीयत इति। नन्व तथापि भक्ते रागरूपत्वे किं कारणमित्यपेक्षायामाह" टी०। "द्वेषप्रतिपक्षभावाद्रसशब्दाच्च रागः"६सू०। "भक्तिः खलु राग एव भवितुमर्हति कुतः द्वेषविरोधित्वात्। लोके हि द्वेषायं भक्तोऽयमिति मिथोविरुद्धधर्मवत्ति व्यवह्रियते तत्र द्वेषविरोधी च राग एव प्रसिद्धो न ज्ञानादिः। एवञ्च भगवति शिशुपालस्य द्वेषानुबन्धमभिधाय विष्णु पु० अ० ४ १५ गद्येन १० "एवं हि भगवान् कीर्त्तितः संस्मृतश्च द्वेषानुबन्धेनापि अखिलसुरासुरदुर्लभं फलं प्रयच्छति किमुत सम्यग्भक्तिमताम्" इत्युक्तम्। तथा चादिस्मृतौ "विद्वेषादपि गोविन्दं दमघोषात्मजः स्मरन्। शिशुपालो गतः स्वर्गं किं पुनस्तत्परायणः" इति अत्रापि द्वेषविरोधित्वेन भक्तेरभिधानात्। तथा च गीतासु (गी०अ०१६।श्लो०१८)। "ममात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। तानहं द्विषतः क्रूरान् संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु। आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय! ततो यान्त्यधमां गतिम्। इति। तद्विरोधिनी च भक्तिरीश्वरविषयैवानुरक्तिरिति युज्यते। किञ्च (तैत्ति०। पृ०१००) "रसं ह्येवायं लब्ध्वानन्दीभवतीति"शब्दात् ब्रह्मानन्दाविर्भावस्य भक्तिगोचरत्व रसस्य हेतुतावगम्यते। रसश्च रागः (गी०। अ०२। श्लो०५९)। "रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्त्तते" इत्यादौ प्रसिद्धः। अत्र

गुरुत्वेभ्यो बाहुल्यात्" ४४ सू०। "यथार्जुनस्य सख्यानः । "सख्युस्त्वाम तु तस्याश्च पार्थास्त्यो धनञ्जयः । न वञ्चयति धर्मात्मा भक्त्या प्रेम्णा च सर्वदा"। वत्सलानः यथा दुःशलायोः (कल्किपु० अ० २५ श्लो० २२) "पक्षपातेन तन्मास्ति भगे पद्मे च तादृशि । बभार येते तदर्थं वत्सलात्वमति श्रयः"। प्रीतिर्यथा विदुरस्य । (महाभारते । उद्यो० अ० ८८ श्लो० ३११४) 'या प्रीतिः पुण्डरीकाक्ष ! तवागमनकारणात् । सा किमाख्यायते तुभ्यमन्तरात्मासि देहिनाम्"। विरहो यथा गोपीनाम् (विष्णुपु० । अंशे ५ । अ० १८ । श्लो० १७) "गुरूणामग्रतो वक्तुं किं ब्रवीषि न नः क्षमम् । गुरवः किं करिष्यन्ति दग्धानां विरहाग्निना" । इतरविचिकित्सा यथा श्वेतद्वीपनिवासिनाम् । नारददर्शनेऽपि विस्तृतिः यथाचोपमन्योः (महाभरते । अनुशा० अ० १४ । श्लो० ७०७७) । "अपि कीटपतङ्गो वा भवेयं शङ्कराज्ञया । न तु शक्र ! त्वया दत्तं त्रैलोक्यमपि कामये" । महिमख्यातो यथा यमस्य । (कल्किपुरा० अ० ८ श्लो० १) "नरके पच्यमानस्तु यमेन परिभाषितः । किं त्वया नार्चितो देवः केशवः क्लेशनाशनः" । (विष्णुपु० । अंशे ३ । अ० ७ । श्लो० १०) । "अपुरुषमभिवीक्ष्य पाशहस्तम् । वदति यमः किल तस्य कर्णमूले । परिहर मधुसूदनप्रपन्नान् प्रभुरहमन्यनृणां न वैष्णवानाम्" तदर्पणप्राणस्थितिर्यथा हनूमतः । तेनैवोक्तम् (वाल्मीकीये उत्तरकाण्डे । स० १०७ श्लो० २१२१) । "यावत् तव कथा लोके विचरिष्यति पावनी । तावत् स्थास्यामि मेदिन्यां तवाज्ञामनुपालयन्" । अथ वा तत्तत्स्थानामपि नारदादीनां तदेकाराधनार्थं प्राणधारणम् । अतएव श्रुतिः । (कलिंहतापिनी । खं० ६) "यं सर्वे देवा नमन्ति मुमुक्षवो ब्रह्मवादिनश्चेति" । तदीयताभावस्तु यथोपरिचरस्य (महाभारते । शा० । अ० ३३७ । श्लो० १२७१८) "आत्मराज्यं धनं चैव कलत्रं वाहनं तथा । एतद्भागवतं सर्वमिति तत् प्रेक्षते सदा" इति । सर्वभूतेषु तद्भावो यथा प्रह्लादस्य प्रसिद्धः । उक्तञ्च तेनैव । (विष्णुपु० । अंशे १ । अ० १९ । श्लो० ९) "एवं सर्वेषु भूतेषु भक्तिरव्यभिचारिणी । कर्तव्या पण्डितैर्ज्ञात्वा सर्वभूतमयं हरिम्" । तत्प्रतिकूलत्वं यथा जन्मान्तरेऽपि भगवति भीष्मस्य । तेनैवोक्तम् । (महाभारते भीष्मप० । अ० ५९ श्लो० २६४) "एह्येहि देवेश ! जगन्निवास ! नमोऽस्तु ते शार्ङ्गगदासिपाणे ! । प्रसह्य मां पातय लोकनाथ । रथादुदयाद्भुतलोक्यं शरण्ये"। आदिपद्यादुग्रवाक्रूरादिवेष्टितान्यपि द्रष्टव्यानि । यद्यपि द्वेषविषयाभावाद्भवमेदस्तत्तं तथापि तत्र रागविरुद्धत्वेनाल च बहुभक्तिपरिपुष्टिविरुद्धत्वेनेति विशेष इति । ननु आनिन्द्यानुरागिणां तदनुपकारतस्त्ववद्द्वेषादयो भवन्ति तेऽपि किं लिङ्गानि नेत्याह" टी०।

"द्वेषादयस्तु नैवम्" ४५ सू०। "तदनन्यादेव । यथोक्तं भगवता द्वैपायनेन महाभारते अनुशा० । अ० १४९ पृ० १४६ । श्लो० ७६८) "न क्रोधो न च मात्सर्यं न लोभो नाशुभा मतिः । भवन्ति कृतपुण्यानां भक्तानां पुरुषोत्तमे" इति । शिशुपालस्य तु द्वेषात् स्मरणं ततः परा भक्तिस्ततो मुक्तिरित्येव क्रमः इति" टी०।

अत्र इदमवधेयम् शाण्डिल्यसूत्रादौ "भक्तेर्ध्यानाङ्गत्वं यदुक्तं तद् भक्तेः प्रशंसार्थं तत्त्वज्ञानेनाज्ञाननिवृत्तौ अज्ञानकार्यानुरागविशेषान्तःकरणवृत्तिरूपाया भक्तेः कुतस्तरां सम्भवोऽतो ज्ञानस्यैव भक्तिरङ्गम् । अतएव पात०सू० ईश्वरप्रणिधानात् योगसिद्धिरुक्ता "तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" क्रियायोगरूपेश्वरप्रणिधानस्य योगाङ्गत्वमुक्तम् अतएव भक्तिर्ध्यानाय कल्पते इति मुक्ताफलकर्त्ता बोपदेव उदाजहार । इयांस्तु भक्तौ रसास्वादयुक्तौ सुखस्वरूपतेति ।

तेन च मुक्ताफलग्रन्थे भक्तिलक्षणं तद्भेदाश्चाप्युक्तं यथा "तत्र विष्णुभक्तिलक्षणं भेदाश्च । "यस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत्" सू० "यस्मात् कृष्ण एव कैवल्यप्रदः अतः तस्मात् उपायविशेषस्याविवक्षितत्वात् । केनापि विहितेन अविहितेन वा उपायेन साध्यसिद्ध्यङ्गभूतयाभक्त्यैव, न तु ज्ञानादिना कृष्णे सर्वोपाधौ ब्रह्मणि निवेशयेत् स्थिरीकुर्यात् लिङ्निर्देशस्याविवक्षितत्वात् उपायपूर्वं भगवति मनःस्थिरीकरणं भक्तिरिति लक्षणार्थः । न तावदस्याप्यव्याप्तिः प्रह्लादादौ सुप्रसिद्धत्वात् । न च कर्मब्रह्मार्थविधिविषययोः भक्त्योरव्याप्तिः तयोरन्तःकरणशुद्धिहेतुत्वेन मनोनिवेशहेतुत्वात् । नाप्युन्मादादावभक्तिभूतेऽतिव्याप्तिः तस्यानुपायत्वेन निरस्तत्वात् । नापि मुद्रायां भक्तौ उपायानिर्देशादुपायेनेति वचनेऽनन्तर्भूतमिति वाच्यम् । भीतावावेऽप्यनुमानिकस्य सम्भवात् । सा द्वेधा विहिता अविहिता च । तत्र विहिता "देवानां गुणलिङ्गानामानुश्रविककर्मणाम् । सत्त्व एवैकमनसो वृत्तिः स्वाभाविकी तु या ।

सप्तवर्गः "अनिमित्तनिमित्तेन स्वधर्मेणामलात्मना। तीव्रया मयि भक्त्या च श्रुतसम्भृतया चिरम्। ज्ञानेन दृष्टतत्त्वेन वैराग्येण बलीयसा। तपोयुक्तेन योगेन तीव्रेणात्मसमाधिना। प्रकृतिः पुरुषस्येह दह्यमाना त्वहर्निशम्। तिरोभवित्री शनकैरग्नेर्योनिरिवारणिः" भाग०३।२७अ०।

षड्वर्गः "वाणी गुणानुकथने, श्रवणौ कथायां, हस्तौ च कर्मसु,मनस्तव पादयोर्नः। स्मृत्यां, शिरस्तव निवासजगत्प्रणामे, दृष्टिः सतां दर्शनेऽस्तु भवत्तनूनाम्" भाग० १०।११ अ०।

पञ्चवर्गः "शृण्वतां गदतां शश्वदर्चतां त्वाभिवन्दताम्। नृणां संवदतामन्तर्हृदि भास्यमलात्मनाम्" भाग०१०।८६अ०।

चतुर्वर्गः "तस्मादेकेन मनसा भगवान् सात्वतांपतिः। श्रोतव्यः कीर्त्तितव्यश्च ध्येयः पूज्यश्च नित्यदा" भाग० १।२ अ०।

त्रिवर्गः "तस्माद्भारत! सर्वात्मा भगवान् हरिरीश्वरः। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यश्चेच्छताऽभयम्" भाग०२।१अ० "तस्मात् सर्वात्मना राजन्! हरिः सर्वत्र सर्वदा। श्रोतव्यः कीर्त्तितव्यश्च स्मर्त्तव्यो भगवान्नृणाम्" भाग०२।२अ० पुनर्वचनं त्रिवर्गस्यान्तरङ्गत्वख्यापनार्थम्"।

"भज इत्येष वै धातुः सेवायां परिकीर्त्तितः। तस्मात् सेवा बुधैः प्रोक्ता भक्तिः साधनभूयसी" गारुडे २२१अ०। अथ विशेषलक्षणानि। गौतमीयतन्त्रे "देवतायाञ्च मन्त्रे च तथा मन्त्रप्रदे गुरौ। भक्तिरष्टविधा यस्य तस्य कृष्णः प्रसीदति। तद्भक्तजनवात्सल्यं१ पूजायाञ्चानुमोदनम्२। सुमना अर्चयेन्नित्यं३ तदर्थे दम्भवर्जनम्४। तत्कथाश्रवणे राग५स्तदर्थे चाङ्गविक्रिया६। तदनुस्मरणं७ नित्यं यस्तन्नाम्नोपजीवति८। भक्तिरष्टविधा ह्येषा यस्मिन् म्लेच्छेऽपि वर्त्तते। स मुनिः सत्यवादी च कीर्त्तिमान् स भवेन्नरः"। पाद्मे कार्त्तिकमाहात्म्ये यमधूम्रकेशसंवादे। "श्रवणं कीर्त्तनं पूजा सर्वकर्मार्पणं स्तुतिः। परिचर्य्या नमस्कारः प्रेम चात्मार्पणं हरौ"। तत्रैवोत्तरे शिवपार्वतीसंवादे "आद्यन्तु वैष्णवं प्रोक्तं शङ्खचक्राङ्कनं हरेः। धारणञ्चोर्द्ध्वपुण्ड्राणां तन्मन्त्राणां परिग्रहः। अर्चनञ्च जपो ध्यानं तन्नामस्मरणं तथा। कीर्त्तनं श्रवणञ्चैव वन्दनं पादसेवनम्। तत्पादोदकसेवा च तन्निवेदितभोजनम्। तदीयानाञ्च संसेवा द्वादशीव्रतनिष्ठता। तुलसीरोपणं विष्णोर्देवदेवस्य शार्ङ्गिणः। भक्तिः षोडशधा प्रोक्ता भवबन्धविमुक्तये"। किञ्च। "दर्शनं भगवन्मूर्त्तेः स्पर्शनं क्षेत्रसेवनम्। आघ्राणं धूपशेषादेर्निर्माल्यस्य च धारणम्। नृत्यं भगवदग्रे च तथा-वीणादिवादनम्। कृष्णलीलाद्यभिनयः श्रीभागवतसेवनम्। पञ्चाशमासादिष्वतिरेकादश्यादिजागरः। प्रासादरचनाद्यन्यज्ज्ञेयं शास्त्रानुसारतः। लिङ्गानि भगवद्धर्मा भक्तानां लक्षणानि च। तानि ज्ञेयानि सर्वाणि भक्तैर्लक्षणानि च। तेषु ज्ञेयानि गौणानि मुख्यानि च विवेकिभिः। बहिरङ्गान्तरङ्गाणि प्रेमसिद्धौ च तानि यत्। भेदास्तु विविधा भक्तेर्भक्तभावादिभेदतः। शान्तदास्यादिपञ्चभ्यो ज्ञेयास्तल्लिखनैरलम्" "प्रेमभक्तौ च सिद्धायां सर्वेऽर्थाः सेवकाः स्वयम्। भगवांश्चातिवश्यः स्याल्लिख्यतेऽस्याः सुलक्षणम्। अथ प्रेमभक्तिलक्षणम्। नारदपञ्चरात्रे "अनन्यममता विष्णौ ममता प्रेमसङ्गता। भक्तिरित्युच्यते भीष्मप्रह्लादोद्धवनारदैः। प्रेमभक्तेश्च माहात्म्यं भक्तमाहात्म्यकं परम्। सिद्धमेव यतो भक्तेः फलं प्रेमैव निश्चितम्। चिह्नानि प्रेमसम्पत्तेर्बाह्यान्याभ्यन्तराणि च। अथ प्रेमसम्पत्तिचिह्नानि ७स्कन्धे प्रह्लादस्य बालनुशासने। "निशम्य कर्माणि गुणानतुल्यान् वीर्य्याणि लीलातनुभिः कृतानि" इत्यादि ४६२६ पृ० दर्शितम्।

एकादशे च कवियोगेश्वरोक्तौ "शृण्वन् सुभद्राणि रथाङ्गपाणेर्जन्मानि कर्माणि च यानि लोके। गीतानि नामानि तदर्थकानि गायन् विलज्जो विचरेदसङ्गः। एवंव्रतः स्वप्रियनामकीर्त्त्या जातानुरागो द्रुतचित्त उच्चैः। हसत्यथो रोदिति रौति गायत्युन्मादवन्नृत्यति लोकबाह्यः"। श्रीभगवदुद्धवसंवादे च "कथं विना रोमहर्षं द्रवता चेतसा विना। विनानन्दाश्रुकलया शुध्येद्भक्त्या विनाऽऽशयः। वाग्गद्गदा द्रवते यस्य चित्तं रोदित्यभीक्ष्णं हसति क्वचिच्च। विलज्ज उद्गायति नृत्यते च मद्भक्तियुक्तो भुवनं पुनाति। अथोक्तभक्त्यशक्तौ तु भगवच्छरणाश्रयम्। शरणागतभावेन तद्भक्तिं तत्समाश्रयेत्" हरिभक्तिविलासे ११विलासः। उत्तमभक्तेर्लक्षणं यथा "अन्याभिलाषिताशून्यं ज्ञानकर्माद्यनावृतम्। आनुकूल्येन कृष्णानुशीलनं भक्तिरुत्तमा"। तथा नारदपञ्चरात्रे। "सर्वोपाधिविनिर्मुक्तं तत्परत्वेन निर्मलम्। हृषीकेण हृषीकेशसेवनं भक्तिरुच्यते" भाग०३स्क० च। सा उत्तमा भक्तिः षड्विधा यथा "क्लेशघ्नी

"संनियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः। ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः" गी०। "संनियम्येति। संनियम्य सम्यक् नियम्य संहृत्य इन्द्रियग्रामं इन्द्रियसमुदायं सर्वत्र सर्वस्मिन् काले समबुद्धयः समा तुल्या बुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयः ते समबुद्धयः ते ये एवंविधाः ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः न तेषां वक्तव्यं किञ्चित् मां ते प्राप्नुवन्ति इति ज्ञानी त्वात्मैव मे मतमित्युक्तत्वात् न हि भगवत्स्वरूपाणां सतां युक्ततमत्वमयुक्ततमत्वं वा वाच्यम्" भा०।

"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्। अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते" गी०। "किन्तु क्लेशोऽधिकतरो यद्यपि मत्कर्मादिपराणां क्लेशोऽधिकस्तथापि अधिकतरस्तेषामक्षरात्मनाम्। परमार्थदर्शिनां देहाभिमानपरित्यागनिमित्तः अव्यक्तासक्तचेतसामव्यक्ते आसक्तं चित्तं येषां ते अव्यक्तासक्तचेतसाम् अव्यक्ता हि यस्मादव्या गतिरक्षरात्मिका दुःखं देहवद्भिर्देहाभिमानवद्भिरवाप्यते अतः क्लेशोऽधिकतरः" भा०। "ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते" गी०। "अक्षरोपासकानां यद्वर्त्तनं तदुपरिष्टाद् वक्ष्यामः ये त्विति। ये तु सर्वाणि कर्माणि मयीश्वरे संन्यस्य मत्परा अहं परो येषां ते मत्पराः सन्तः अनन्येनैव अविद्यमानमन्यदालम्बनं विश्वरूपं देवमात्मानं मुक्त्वा यस्य सोऽनन्यस्तेनानन्येनैव केवलेन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते" भा०।

"तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्। भवामि न चिरात् पार्थ! मय्यावेशितचेतसाम्"। "तेषां किमित्याह तेषामिति। तेषां मदुपासनैकपराणाम् अहमीश्वरः समुद्धर्त्ता कुत इत्याह मृत्युसंसारसागरात् मृत्युयुक्तः संसारो मृत्युसंसारः स एव सागरवत् सागरो दुस्तरत्वात् तस्मान्मृत्युसंसारसागरादहं तेषां समुद्धर्त्ता भवामि न चिरात् किं तर्हि क्षिप्रमेव हे पार्थ! मय्यावेशितचेतसां मयि विश्वरूपे आवेशितं समाहितं चेतो येषां ते मय्यावेशितचेतसस्तेषाम्" भा०।

"मय्येव मन आधत्स्व मयि बुद्धिं निवेशय। निवसिष्यसि मय्येव अत ऊर्द्ध्वं न संशयः। अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम्। अभ्यासयोगेन ततो मामिच्छाप्तुं धनञ्जय!। अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव। मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि। अथैतदप्यशक्तोऽसि कर्त्तुं मद्योगमाश्रितः। सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्। श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते। ध्यानात् कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम्। अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च। निर्ममो निरहङ्कारः समदुःखसुखः क्षमी। सन्तुष्टः सततं योगी यतात्मा दृढ़निश्चयः। मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः। यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः। हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः। अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः। सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः। यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति। शुभाशुभपरित्यागी भक्तिमान् यः स मे प्रियः। समः शत्रौ च मित्रे च तथा मानापमानयोः। शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः। तुल्यनिन्दास्तुतिर्मौनी सन्तुष्टो येन केनचित्। अनिकेतः स्थिरमतिर्भक्तिमान् मे प्रियो नरः। ये तु धर्म्यामृतमिदं यथोक्तं पर्य्युपासते। श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः" गी० गीता० १२अ०।

**भक्तिरस** पु० भक्तिः ईश्वरविषया रतिरेव रसः। तत्स्थायिभावके रसभेदे "विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः। स्वाद्यत्वं हृदि भक्तानामानीता श्रवणादिभिः। एषः कृष्णरतिस्थायिभावो भक्तिरसो भवेत्" इति भक्तिरसामृतसिन्धुः। मुक्ताफले तट्टीकायाञ्च भक्तेरसत्वम् व्यवस्थापितं यथा "भक्तिरसस्यैव हास्यशृङ्गारकरुणरौद्रभयानकबीभत्सशान्ताद्भुतवीररूपेणानुभवात् व्यासादिभिः वर्णितस्य विष्णोर्विष्णुभक्तानां वा चरितस्य नवरसात्मकस्य श्रवणादिना जनितचमत्कारो हि भक्तिरसः" मुक्ता०। "भक्तिर्विहिताऽविहिता च सैव परां प्रकर्षरेखामापन्ना रसः। यदाहुः। "भावा एवातिसम्पन्नाः प्रयान्ति रसतामभी" इति। भक्तिरसानुभावाश्च भक्ताः यथा तत्र तत्रानुभवात् तत्र इत्युच्यते स चानुभवो नवधा हास्यादिभक्तिभेदेन हास्यादय एव हि भगवति प्रयुज्यमानाः "तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेदिति" भक्तिलक्षणाक्रान्तत्वात् भक्तिरसपदवीमासादयन्तीति भावः। हास्यादिलक्षणं तु वक्ष्यते। ते चामी नवापि शुद्धाः स्वमोहात्मकत्रैगुण्यव्यतिकरोद्भवाः तथा हि। प्रथमे त्रयो रजोभूताः, मध्यास्तु तमोभूताः, चरमे सत्त्वभूताः। रतिहासादयो हि रजःप्रभृतीनां विकारा इत्युक्तमेकादशस्य पञ्चविंशाध्याये। तत्रापि प्रथमे त्रिषु-

ऽग्निकः । तथैवाग्नीसखी भल्ली वीरवृक्षश्च शोफकृत् । भल्लातकफलं पक्वं स्वादुपाकरसं लघु । कषायं पाचनं स्निग्धं तीक्ष्णोष्णं छेदि भेदनम् । मेध्यं वह्निकरं हन्ति कफवातव्रणोदरम् । कुष्ठार्शोग्रहणीगुल्मशोफानाह-ज्वरक्रिमीन् । तन्मज्जा मधुरो वृष्यो बृंहणो वातपित्तहा । वृन्तमायुष्करं स्वादु पित्तघ्नं केश्य-मग्निकृत् । भल्लातकः कषायोष्णः शुक्रलो मधुरो लघुः । वातश्लेष्मोदरानाहकुष्ठार्शोग्रहणीगदान् । हन्ति गुल्म-ज्वरं श्वित्रवह्निमान्द्यक्रिमिव्रणान्" भावप्र० । गुडभल्लातक-शब्दे भल्लातकीगुडपाकविधिर्दृश्यः ।

**भल्लातकतैल** सुश्रुतोक्ते भल्लातकफलच्यवनजाते तैलभेदे "दुर्लभत्वात्तु शुक्लानां कृष्णकर्म हितं भवेत् । भल्ला-तकान्याशयेत्तु क्षीरे गोमूत्रभावितान् । ततो द्विधा छेदयित्वा लौहे कुम्भे निधापयेत् । कुम्भेऽन्यस्मि-न्निखाते तु तं कुम्भमथ योजयेत् । सुसं सुखेन च-ल्वाय गोमयैर्दाहयेत् ततः । यः स्नेहश्च्यवते तस्मा-द्गृह्णीयात् तं शनैर्भिषक् । ग्राम्यानूपौदकान् गव्यान् श्लक्ष्णचूर्णानि कारयेत् । तैलेनानेन संसृष्टं शुक्लमालेप-येद् व्रणम् । भल्लातकविधानेन सारस्नेहांस्तु कार-येत् । ये च केचित्फलस्नेहा विधानं तेषु कीर्त्तितम् । दुर्लभत्वात्तु कृष्णानां पाण्डुकर्म हितं भवेत् । सप्तरात्रं स्थितं क्षीरे छागले रोहिणीफलम् । तेनैव पिष्टं शुक्लानां सवर्णकरणं हितम्" । [औषधभेदे

**भल्लातकलौह** न० चक्रदत्तोक्ते भल्लातकादियुक्ते लौहरूपे "चित्रकं त्रिफला मुस्तं ग्रन्थिकं चविकाऽमृता । हस्ति-पिप्पल्यपामार्गदण्डोत्पलकुठेरकाः । एषां चतुष्पलान् भागान् जलद्रोणे विपाचयेत् । भल्लातकसहस्रे द्वे छित्त्वा तत्रैव दापयेत् । तेन पादावशेषेण लौहपात्रे पचेद्भिषक् । तुलार्द्धं तीक्ष्णलौहस्य घृतस्य कुडवद्वयम् । त्र्यूषणं त्रिफलावह्निसैन्धवं बिडमौद्भिदम् । सौवर्च-लविडङ्गानि पालिकानि कल्पयेत् । कुडवं वृद्धदारस्य तालमूल्यास्तथैव च । शूरणस्य पलान्यष्टौ चूर्णं कृत्वा विनिः क्षिपेत् । सिद्धे शीते प्रदातव्यं मधुनः कुडवद्वयम् । प्रातर्भोजनकाले च ततः खादेद् यथाबलम् । अर्शांसि ग्रहणीदोषं पाण्डुरोगमरोचकम् । क्रिमिगुल्मा-श्मरीमेहान् शूलञ्चाशु व्यपोहति । करोति शुक्रोप-चयं वलीपलितनाशनम् । रसायनमिदं श्रेष्ठं सर्व-रोगहरं परम्" ।

**भल्लातकविधान** सुश्रुतोक्ते भल्लातकफलसेवनप्रकारभेदे "अत ऊर्द्ध्वं भल्लातकविधानमुपदेक्ष्यामः । भल्लातकानि परिपक्वान्यनुपहतान्याहृत्यैकमादाय द्विधा त्रिधा चतुर्द्धा वा छेदयित्वा कषायकल्केन विपाच्य कषायस्य शुक्तिमन्तर्मुखीं घृताभ्यक्तताल्वोष्ठजिह्वः प्रातः प्रातरुपसेवेत ततोऽपराह्णे क्षीरं सर्पिरोदनमित्याहार एवमेकैकं वर्द्धयेत् तावद्-यावत्पञ्चेति ततः पञ्च पञ्चाभिवर्द्धयेद्यावत् सप्ततिरिति प्राप्य च सप्ततिमपकर्षयेद्भूयः पञ्च पञ्च यावत्पञ्चेति पञ्चभ्यश्चैकैकं यावदेकमिति । एवं भल्लातकसहस्र-मुपयुज्य सर्वकुष्ठार्शोभिर्विमुक्तो बलवानरोगः शतायु-र्भवति । द्वितीयोक्तेन विधानेन भल्लातकनिष्प-तितं स्नेहमादाय प्रातः प्रातः शुक्तिमात्रमुपयुञ्जीत जीर्णे पूर्ववदाहारः फलप्रकर्षश्च । भल्लातकमज्जभ्यो वा स्नेहमादायापकृष्टदोषः प्रतिसंसृष्टभक्तो निवातमा-गारं प्रविश्य यथाबलं प्रकृतिं प्रकृष्टं चोपयुञ्जीत । तस्मिन् जीर्णे क्षीरं सर्पिरोदन इत्याहारः" ।

**भल्ली** स्त्री भल्ल हिंसे अच् गौरा० ङीष् । भल्लातके शब्द-रत्ना० तत्फलस्य स्पर्शिनां व्रणकारितया हिंसकत्वा-त्तथात्वम् । स्वार्थे क भल्लिका तत्रार्थे शब्दच० ।

**भल(ल्लु)क** पु०स्त्री भल्ल-उ(ऊ)क । (भालुक) १जन्तुभेदे अमरः स्त्रियां ङीष् । २श्योनाकभेदे राजनि० । स च वीरभद्रादिगणे सुश्रुते उक्तः । वृक्षगणशब्दे दृश्यम् । ३कोषस्थे जलजन्तुभेदे "शङ्खशङ्खनखशुक्तिशम्बूकभल्लूक-प्रभृतयः कोषस्थाः" सुश्रुतः ।

**भव** पु० भवत्यस्मात् भू-अपादाने अप् । १महादेवे तस्य तन्नामनिरुक्तिः शत० ब्रा० ६।१।३।१५ । "तमब्रवीद्भवो-ऽसीति । तद्यदस्य तन्नामाकरोत्पर्जन्यस्तद्रूपमभवत् पर्जन्यो वै भवः पर्जन्याद्धीदं सर्वं भवति सोऽब्रवीज्ज्याया-न्वा अतोऽस्मि धेह्येव मे नामेति" अतस्य पर्जन्यहेतु-कत्वात् तस्य भवमूर्त्तित्वम् । अतएवाष्टमूर्त्तिमध्ये जलरूपेण भवनाम्ना तस्याख्या । भावे अप् । २जन्मनि ३उत्पत्तौ ४प्राप्तौ ५संसारे मेदि० । कर्त्तरि अच् (चालता) ६फले न० राजनि० ।

**भवक** त्रि० भू-वुन् । १उत्पन्ने २आशीर्वादके संक्षिप्तसा० ।

**भवकेतु** पु० केतुभेदे वृ०स० ११अ० केतुशब्दे दृश्यम् ।

**भवघस्मर** पु० ६त० । दावानले शब्दमा० ।

**भवत्** त्रि० भा-डवतु । १युष्मदर्थे, सर्वनामता चास्य । भवान् भवत्याः पुत्रः भवत्पुत्रः । भू-शतृ । २वर्त्तमानकालाव-

मैतः माहात्म्यसर्वस्वरूपकः । पुस्तकलेखकानां च लक्षणञ्च ततः परम् । संस्काराणाञ्च सर्वेषां लक्षणञ्चात्र कीर्त्तितम् । पक्षत्यादितिथीनाञ्च कल्पाः सप्त च कीर्त्तिताः । अष्टम्याद्याः शेषकल्पाः वैष्णवे पर्वणि स्मृताः । शैवे च कामतो भिन्नाः सौरे चान्त्यकथाचयः । प्रतिसर्गाह्वयं पश्चान्नानाख्यानसमाचितम् । पुराणस्योपसंहारसहितं पर्व पञ्चमम् । एषु पञ्चसु पूर्वस्मिन् ब्रह्मणो महिमाधिकः" । द्वितीयतृतीयचतुर्थपञ्चमपर्वसु "धर्मे कामे च मोक्षे तु विष्णोश्चापि शिवस्य च । द्वितीये च तृतीये च सौरो वर्गचतुष्टये । । प्रतिसर्गाह्वयं त्वन्त्यं प्रोक्तं सर्वकथाचितम् । एतत् भविष्यं निर्दिष्टं पर्व व्यासेन धीमता । चतुर्दशसहस्रन्तु पुराणं परिकीर्त्तितम् । भविष्यं सर्वदेवानां साम्यं यत्र प्रकीर्त्तितम् । गुणानां तारतम्येन समं ब्रह्मेति हि श्रुतिः" । तद्दानफलश्रुतिः । "तल्लिखित्वा तु यो दद्यात् पौष्यां विद्वान् विमत्सरः । गुडधेनुयुतं हेमवस्त्रमाल्यविभूषणैः । वाचकं पुस्तकञ्चापि पूजयित्वा विधानतः । गन्धाद्यैर्भक्ष्यभक्ष्यैश्च कृत्वा नीराजनादिकम् । यो वै जितेन्द्रियो भूत्वा सोपवासः समाहितः । अथ वा यो नरो भक्त्या कीर्त्तयेच्छृणुयादपि । स मुक्तः पातकैर्घोरैः प्रयाति ब्रह्मणः पदम् । योऽप्यनुक्रमणीमेतां भविष्यस्य निरूपिताम् । पठेद्वा शृणुयाद्वा तौ भुक्तिमुक्ती च विन्दतः" । ४(चालता) फलभेदे राजनि० । तान्तं ५जले निघण्टुः । भविष्यत्त्वञ्च वर्त्तमानप्रागभावप्रतियोगित्वमिति नैयायिकाः पदार्थस्य अनागतावस्थाभेद इति सांख्यादयः । ६हरिवंशपर्वभेदे न०।

भविष्यदाक्षेप पु० "सत्यं ब्रवीमि न त्वं मां द्रष्टुं वल्लभ ! लप्स्यसे । अन्यचुम्बनसंक्रान्तलाक्षारक्तेन चक्षुषा । सोऽयं भविष्यदाक्षेपः प्रागेवातिमनस्विनी । कदाचिदपराधोऽस्य भावीत्येवमरुद्ध यत्" । साहित्यदर्पणोक्ते अर्थालङ्कारभेदे ।

भवीयस् त्रि० अतिशयेन बहुः बहु+ईयसुन् "बहोर्लोपो भू च बहोः" पा० भूरादेशः वेदे न ईलोपः । बहुतरे ऋ० १।८१।१ लोके तु ईयसुन ईकारलोपः भूय इत्येव ।

भव्य त्रि० भू—कर्त्तरि नि० यत् । १भाविनि "अवश्यभव्येष्वनवग्रहग्रहेति" नैषधम् । (चालता)२फलभेदे राजनि० "भव्यं स्वादु कषायाम्लं गुरुग्राहि विशोधनम् । तदेव पक्वं दोषघ्नं गुरु ग्राहि विषापहम्" राजनि० । ३अस्थ्नि मेदि० ४शुभे ५सत्ये ६योग्ये च न० । ७तद्वति त्रि० । ८कर्मरङ्गे पु० ९गजपिप्पल्यां १०उमायां च स्त्री मेदि० । ११रत्नभेदे शब्दर० ।

भष कुक्कुरशब्दे भ्वा० पर० सक० सेट् । भषति अभषीत्-अभाषीत्

भष पुंस्त्री० भष—अच् । १कुक्कुरे शब्दरत्ना० स्त्रियां जातित्वात् ङीष् । २स्वर्णक्षीर्य्यां स्त्री रत्नमा० टाप् ।

भषक पु० स्त्री० भष—क्वुन् । कुक्कुरे अमरः । स्त्रियां ङीष् ।

भषण न० भष—भावे ल्युट् । कुक्कुरशब्दे हेमच० ।

भस दीप्तौ अक० भर्त्सने सक० जु० पर० सेट् । बभस्ति । अभासीत् अभसीत् बभास । वैदिकोऽयम् । [बभाष ।

भस भर्त्सने भ्वा० सक० सेट् निघण्टुः । भसति अभा(भ)सीत्

भसद् न० भस—अदि । १जघने उज्ज्वल० । २भास्करे ३मांसे च ४जघने स्त्री मेदि० ५कारण्डवखगे ६प्लवे पु० उणादिको० ७काले पु० त्रिका० । [पाठः ।

भसन्त पु० भस—बा० झच् । काले त्रिका० तत्र भवन्त इत्येव

भसन्धि पु० ६त० । नक्षत्रभेदानां सन्ध्यात्मके कालभेदे यथोक्तम् "सार्पैन्द्रपौष्णधिष्ण्यानामन्त्याः पादाः भसन्धयः । तदग्रभेष्वाद्यपादो गण्डान्तं नाम कीर्त्त्यते" ज्यो० ति० । "अश्लेषाज्येष्ठारेवतीनक्षत्राणामन्त्यचतुर्थचरणाः नक्षत्रसन्धयो भवन्ति । तदग्रभेषु तेषामश्लेषाज्येष्ठारेवतीनक्षत्राणामग्रतरेषु मघामूलाश्विनीनक्षत्रेष्विति यः प्रथमचरणो गण्डान्तं नाम प्रसिद्धमुच्यते । यद्यप्यश्लेषाज्येष्ठारेवतीनक्षत्राणामन्तिमं घटिकाद्वयं मघामूलाश्विनीनक्षत्राणामादिमं घटिकाद्वयमिति चतस्रोऽन्तरघटिका गण्डान्तम् । एतद्व्यतिरिक्तो नक्षत्रसन्धिः पूर्वनक्षत्रान्तघटिकोत्तरनक्षत्रादिमघटिकेत्यन्तरालघटिकाद्वयं चन्द्रमण्डलसम्बन्धेन घटिकाः सार्द्धद्वयमिति संहिताविरुद्धं तथापि ज्योतिषस्य स्वतः प्रामाण्यान्न क्षतिः । अथवैकवाक्यतार्थं पादशब्दः चरणेत्यादिवत् द्विघटीपरः । घटिका इत्यध्याहार्य्य । तथा च द्विघट्यात्मिका चान्त्यघटिकानक्षत्रसन्धिः" रघु० । २नक्षत्रयोः सन्धिकाले च तदानयनं सि० शि० दर्शितं तच्च तिथिसन्धिशब्दे ११०० पृ० दर्शितम् ।

भसित न० भस—क्त । भस्मनि हेम० । [दैवज्ञे शब्दर० ।

भसूचक पु० भानि नक्षत्राणि सूचयति सूचि-ण्वुल् ।

भस्त्रा स्त्री भस—ष्ट्रन् । १चर्मप्रसेविकायाम् अग्निसन्धुक्षणे चर्मनिर्मिते यन्त्रभेदे । (याँता) अमरः । षित्त्वात् ङीष् । अत्रैव शब्दरत्ना० स्वार्थे क टाप न इत्त्वम् । भस्त्रकाप्यत्रैव । ततः उत्करा० चतुरर्थ्यां छ । भस्त्रीय दूरदेशादौ त्रि० ।

**भस्मफला** स्त्री भस्मेव फलमस्याः ङीप् । (टेपारि) क्षुपभेदे

**भस्मक** न० भस्म करोति कृ—ड । (भस्मकीट) बहुभोजनकारके १रोगभेदे । “कट्वादिरूक्षान्नभुजां नराणां क्षीणे कफे मारुतपित्तवृद्धौ । अतिप्रवृद्धः पवनान्वितोऽग्निर्भुक्तं क्षणाद्भस्म करोति यस्मात् । तस्मादसौ भस्मकसंज्ञकोऽभूदुपेक्षितोऽयं पचते च धातून्” । भस्मकस्योपद्रवमरिष्टमाह “तृट्स्वेददाहमूर्च्छादीन् कृत्वैवाल्पग्निसम्भवान् । पक्वाशयाद्धात्वादीन् स शिघ्रं नाशयेद्भृशम्” भावप्र० । भस्मेव दवार्थे कन् । २कलधौते रूप्ये ३विड़ङ्गे च मेदि० ।

**भस्मकूट** पु० भस्मरूपे पर्वतभेदे कालि० ८१.९० ।

**भस्मगन्धा** स्त्री भस्मन इव गन्धोऽस्याः । रेणुकाख्यगन्धद्रव्ये भावप्र० । स्वार्थे क अत इत्वम् । तत्रैव जटा० ।

**भस्मगन्धिनी** स्त्री भस्मन इव गन्धोऽस्त्यस्या प्राशस्त्येन इनि ङीप् । रेणुकाख्ये गन्धद्रव्ये अमरः ।

**भस्मगर्भ** पु० भस्म गर्भे यस्य । १तिनिशवृक्षे राजनि० २कपिलशिंशपायाम् अमरः । ३रेणुकाख्यगन्धद्रव्ये स्त्री जटाधरः टाप् ।

**भस्मजाबाल** पु० उपनिषद्भेदे उपनिषच्छब्दे दृश्यम् ।

**भस्मतूल** न० भस्म तूलयति तूल—णिच् अण् मे क । १ग्रामकूटे २पांशुवर्षणे ३हिमे च मेदि० ।

**भस्मन्** न० भस—मनिन् । (छाइ) दग्धगोमयादिविकारे अमरः अस्य त्रिपुण्ड्रलेपने कारणं कालिकापु० ४१ अ० उक्तं यथा “महादेवोऽपि तद्भस्म मनोभवशरीरजम् । आदाय सर्वगात्रेषु भूतिलेपं तदाकरोत् । लेपशेषाणि भस्मानि समादाय तदा हरः । समयोऽन्तर्दधे कार्ये विज्ञाय विधिसम्मतः” । तद्धारणविधिर्यथा “भस्मोपरि चन्दनादिकं न धार्यं तदुक्तं कौर्मे “वैदिकैर्मन्त्रैः रहितं चन्दनागुरुकुङ्कुमम् । तिर्यक्पुण्ड्रात्मना धार्यं कालिकोक्ताग्निकार्यभिः । पुण्ड्रोद्धृतचन्दनाद्यैरपि भस्म संलेपेत् । दह्येत भस्मसंत्यागी सर्वोपक्रोधसङ्कुलः । चन्दनाद्युपरि भस्म धारयेद्भस्म वैदिकम् । लौकिकं चन्दनाद्यं तु भस्मोपरि न धारयेत् । भस्मचन्दनादीनां त्यागेनार्थो न विद्यते । चन्दनादीन्यतो लौकिकान्येवाल न संशयः । उपरिष्टाच्चन्दनादेर्यतोऽस्मि पितृमर्माणि । चन्दनाद्युपभूषाया प्रक्षालैः को निवारकः” । त्रिपुण्ड्रधारणं मन्त्ररहितं तूष्णीं च कार्यम्” तदुक्तं विद्येश्वरसंहितायां “जाबालोक्तादिभिर्मन्त्रैर्धार्यं भस्मत्रिपुण्ड्रकम् । अन्यथा स्नेच्छतं यावद्भस्मधारक तद्गोदिति” । शिवधर्मे “तेन भस्मोक्तमार्गेण न धृतं सुनिपुङ्गव । तस्य सिद्धिः मुने ! जन्म निःफलं सूकरो यथा” । मन्त्रधारसुधानिधौ” त्रिपुण्ड्रकं सदा कुर्यात् मन्त्रपूतेन भस्मना । भस्मेन होनं यः कुर्यात् परभागी भवेन्नरः” । शिवपूजा तद्धारणं च सिध्यति “विना भस्मत्रिपुण्ड्रेण विना रुद्राक्षमालया । महादेवोऽर्चितो येन न च तस्य फलप्रदः” लिङ्गपु० ।

**भस्मरोहा** स्त्री भस्मनि रोहति रुह—अच् । दग्धिकायाम् राजनि० ।

**भस्मवेधक** पु० भस्मन इव वेधो वेधनं यस्य कप् । कर्पूरे शब्द०

**भस्मसा** अव्य० डाजन्तः । सर्वथा समन्तात् भस्मरूपताकारके शब्दाकारे ङञ्चु० ११।८० वेददी० । [शाति । साकल्येन भस्मरूपताकरणे ।

**भस्मसात्** अव्य० भस्म कात्स्न्र्येन सम्पद्यं करोति भस्मन्+

**भस्माचल** पु० कामरूपस्थे गिरिभेदे कालिकापु० ८१ अ० ।

**भस्मासुर** पु० असुरभेदे । इति ख्याते हकासुरे शिववरेण स यस्य शीर्षं करेण स्पृशति स भस्म भवतीति कथा भाग० १०।८८ अ० । [वा० ६ । कर्पूरे त्रिका० ।

**भस्माह्वय** पु० भस्म आह्वयते स्पर्धते आ+ह्वे

**भा** दीप्तौ अदा०पर०अक०अनिट् । भाति अभासीत् बभौ । प्रति+बुद्धिप्रकाशने । वि+अति+विशेषोभासने–आ०।दीप्तिश्च तैजसपदार्थावयवभेदः प्रकाशश्च । स च ज्ञाने विषयतया प्रकाशः चित् । भावे अङ् । भा

**भा** स्त्री भा—अङ् टाप् । दीप्तौ अमरः । [१।४४।१भा० ।

**भाऋजीक** पु० भाम ऋजीकः । भासः प्रार्जके प्रसिद्धे ऋ०

**भाकुट** पु० भया दीप्त्या कुटति कुट—क । (भेटकी) मत्स्यभेदे राजव० । [ऋ०६.४ १.६ भा० ।

**भाकुरि** पु० भां कुर्चति कुर्च—कि पृषो० । दीप्तिकारके यत०

**भाकूट** पु० । १पर्वतभेदे २मत्स्यभेदे च (भेटकी)मेदि० ।

**भाकोष** पु० भासां दीप्तीनां कोष इव । सूर्ये त्रिका० ।

**भाक्त** त्रि० भक्तेः गौण्याद्वृत्तेरागतः अण् । १औपचारिके गौणया वृत्त्या बोधितेऽर्थे । भक्तस्यायमिदम् अण् ।२भक्तसम्बन्धिनि त्रि० । भक्तमत्रमस्मै नियतं दीयते वा अण् । ३नियतभक्तदानसम्प्रदाने त्रि० । भक्ताय हितम् अण् । ४भक्तसम्पादनसाधने तण्डुले । [सम्प्रदाने ।

**भाक्तिक** त्रि० भक्तमस्मै नियतं दीयते ठक् । नियतभक्तदाना

**भाम** त्रि० भक्ता शीलमस्य छत्रा० अण् । भक्तशीले ।

**भाग** पु० भज—भावे घञ् ।भजने कर्मणि घञ् । १अंशे अमरः

-द्रव्यवस्तुनोऽंशे ३एकदेशे४भाग्ये "त्रिंशांशकस्तथा राशेर्भाग इत्यभिधीयते" इति ज्योतिषोक्ते राशेः ५त्रिंशांशके च शब्दर०। भगो देवताऽस्य अण्। ६पूर्वफल्गुनीनक्षत्रे तद्धनसङ्ख्यायाम् ७एकादशसंख्यायां ८भागहारे केनचित् अङ्केन कस्यचित् भजनरूपे अङ्कशास्त्रोक्ते व्यापारभेदे।

**भागजाति** स्त्री। भागस्य विभजनस्य प्रकारभेदे सा च चतुर्विधा भागजातिः प्रभागजातिः भागानुबन्धो भागापवाहश्च तत्र अंशानां समच्छेदकरणं भागजातिः इत्युच्यते। यथा "अन्योऽन्यहाराभिहतौ हरांशौ राश्योः समच्छेदविधानमेवम्। मिथो हराभ्यामपवर्त्तिताभ्यां यद्वा हरांशौ सुधियात्र गुण्यौ" लीला०। भागस्य भागः प्रभागो यथा "लवालवघ्नाश्च हराहरघ्नाः भागप्रभागेषु सवर्णनं स्यात्"। लीला०। भागस्यानुबन्धो योजनं भागानुबन्धो भागापवाहश्च तद्वियोजनम् यथा। "छेदघ्नरूपेषु लवा धनर्णमेकस्य भागा अधिकोनकाश्चेत्। स्वांशाधिकोनाः खलु यत्र तत्र भागानुबन्धे च लवापवाहे। तलस्थहारेण हरं निहन्यात् स्वांशाधिकोनेन तु तेन भागान्" लीला०

**भागधेय** न०। भाग+स्वार्थे धेय अभिधानात् नपुंसकत्वम्। १भाग्ये। भागेन धीयतेऽसौ धा-कर्मणि यत्। २राजदेये करे पु० अमरः। भागो धीयतेऽस्मै धा-सम्प्रदाने यत्। ३दायादे त्रिलिङ्गे अजयपालः।

**भागलक्षणा** स्त्री भागे लक्षणा। शक्यार्थांशभेदपरित्यागेन इतरांशबोधकलक्षणाभेदे जहदजहत्स्वार्थलक्षणायाम्। अजहत्स्वलक्षणाशब्दे २०८१ पृ० दृश्यम्।

**भागवत** त्रि०। भगवतः भगवत्या वा इदम् सोऽस्य देवता वा अण्। भगवतः भगवत्या वा १भक्ते, २तयोः सम्बन्धिनि च "भक्ताः सर्वे भागवता भवन्ति" उद्भटः। तयोः सम्बन्धिगुणवर्णने ३महापुराणे ४उपपुराणे च न० "येन श्रुतं भागवतं पुराणम्" भाग०। भागवतस्य महापुराणभेदः उपपुराणभेदो वा उपपुराणशब्दे विस्तरेण दर्शितः। नारदीयपु० महापुराणप्रतिपाद्यविषयोक्तौ ये विषया उक्तास्ते नान्यत्रेति विष्णुभागवतस्यैव महापुराणत्वमिति के उपपुराणशब्दे अन्यमतं दृश्यम्।

विष्णुभागवतप्रतिपाद्यविषयाश्च नार०पु०४अ०९६उक्ता यथा "मरीचे! शृणु वक्ष्यामि वेदव्यासेन यत् कृतम्। श्रीमद्भागवतं नाम पुराणं ब्रह्मसम्मितम्। तदष्टादशसाहस्रं कीर्त्तितं पापनाशनम्। सुरपादपरूपोऽयं स्कन्धैर्द्वादशभिर्युतः। भगवानेव विप्रेन्द्र! विश्वरूपी समीरितः" तत्र प्रथमस्कन्धे। "तत्र तु प्रथमे स्कन्धे सूतर्षीणां समागमः। व्यासस्य चरितं पुण्यं पाण्डवानां तथैव च। पारीक्षितमुपाख्यानमितीदं समुदाहृतम्"। द्वितीयस्कन्धे "परीक्षिच्छुकसंवादे सृतिद्वयनिरूपणम्। ब्रह्मनारदसंवादेऽवतारचरितामृतम्। पुराणलक्षणञ्चैव सृष्टिकारणसम्भवः। द्वितीयोऽयं समुदितः स्कन्धो व्यासेन धीमता"। तृतीयस्कन्धे "चरितं विदुरस्याथ मैत्रेयेणास्य सङ्गमः। सृष्टिप्रकरणं पश्चाद् ब्रह्मणः परमात्मनः। कापिलं साङ्ख्यमप्यत्र तृतीयोऽयमुदाहृतः"। चतुर्थस्कन्धे "सत्याचरितमादौ तु ध्रुवस्य चरितं ततः। पृथोः पुण्यसमाख्यानं ततः प्राचीनबर्हिषः। इत्येष तुर्यो गदितो विसर्गे स्कन्ध उत्तमः"। पञ्चमस्कन्धे "प्रियव्रतस्य चरितं तद्वंश्यानाञ्च पुण्यदम्। ब्रह्माण्डान्तर्गतानाञ्च लोकानां वर्णनन्ततः। नरकस्थितिरित्येष संस्थाने पञ्चमो मतः"। षष्ठस्कन्धे "अजामिलस्य चरितं दक्षसृष्टिनिरूपणम्। वृत्राख्यानं ततः पश्चान्मरुतां जन्म पुण्यदम्। षष्ठोऽयमुदितः स्कन्धो व्यासेन परिपोषणे"। सप्तमस्कन्धे "प्रह्लादचरितं पुण्यं वर्णाश्रमनिरूपणम्। सप्तमो गदितो वत्स! वासनाकर्मकीर्त्तने"। अष्टमस्कन्धे। "गजेन्द्रमोक्षणाख्यानं मन्वन्तरनिरूपणम्। समुद्रमथनञ्चैव बलिवैभवबन्धनम्। मत्स्यावतारचरितमष्टमोऽयं प्रकीर्त्तितः"। नवमस्कन्धे "सूर्यवंशसमाख्यानं सोमवंशनिरूपणम्। वंश्यानुचरिते प्रोक्तो नवमोऽयं महामते!"। दशमस्कन्धे "कृष्णस्य बालचरितं कौमारञ्च व्रजस्थितिः। कैशोरं मथुरास्थानं यौवनं द्वारकास्थितिः। भूभारहरणञ्चात्र निरोधे दशमः स्मृतः"। एकादशस्कन्धे "नारदेन तु संवादो वसुदेवस्य कीर्त्तितः। यदोश्च दत्तात्रेयेण श्रीकृष्णेनोद्धवस्य च। यादवानां मिथोऽन्तश्च मुक्तावेकादशः स्मृतः। द्वादशस्कन्धे "भविष्यत्कलिनिर्देशो मोक्षो राज्ञः परीक्षितः। वेदशाखाप्रणयनं मार्कण्डेयतपः स्मृतम्। सौरी विभूतिरुदिता सात्त्वती च ततः परम्। पुराणसंख्याकथनमाश्रये द्वादशो ह्ययम्। इत्येवं कथितं वत्स! श्रीमद्भागवतं तव"। तत्फलश्रुतिः "वक्तुः श्रोतुश्चोपदेष्टुरनुमोदितुरेव च। साहाय्यकर्तुर्गदितं भक्तिभुक्तिविमुक्तिदम्। प्रोष्ठपद्यां पूर्णिमायां हेमसिंहसमान्वितम्। देयं भागवतायेदं द्विजाय

भागुरि पु॰ स्मृतिव्याकरणादिकर्त्तरि मुनिभेदे । "वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः" सि॰ कौ॰ ।

भाग्य न॰ भज-ण्यत् कुत्वम् । १शुभाशुभसूचके कर्मजन्येऽदृष्टे अमरः । भागः प्रयोजनमस्य यत् । २भागार्थे त्रि॰ । भागमर्हति यत् । ३भागार्हे त्रि॰ ।

भाङ्गीन न॰ भङ्गायाः विजयायाः भवनं क्षेत्रं खञ् । (भाङ्) भङ्गाभवनयोग्ये क्षेत्रे । खञ् । भाङ्गमप्यत्र । हेमच ।
[अवभाजत् त ।

भाज पृथक्करणे, अद॰ चु॰ उभ॰ सक॰ सेट् । भाजयति ते

भाजक त्रि॰ भज-ण्वुल् । भागकारके अङ्कभेदे विभाजके

भाजन न॰भज्यतेऽनेन भाज-ल्युट् । १पात्रे अमरः । २आधारे ३योग्ये च मेदि॰ । ४आढकपरिमाणभेदे वैद्यकम् ।

भाजिन् त्रि॰ भज-सेवार्थे णिनि । सेवके कामन्दकीय॰ ।

भाजित त्रि॰ भाजि-कर्मणि क्त । १पृथक्कृते । २भक्ते च ।

भाजी स्त्री॰ भाज-कर्मणि घञ् नि॰ ङीप् । व्यञ्जनभेदे । अन्यत्र भाजा । सि॰ कौ॰ ।

भाज्य त्रि॰ भज्यते विभज्यते भज-कर्मणि ण्यत् । विभजनीये "भाज्यो हरः शुध्यति यद्गुणः स्यादि"ति लीलावती ।

भाटक पु॰न॰ भट-पोषणे ण्वुल् । परस्वगृहयानादेरुपभोगार्थं तत्स्वामिने दीयमाने धने । (भाडा) शब्दा॰ ।
"परभूमौ गृहं कृत्वा भाटयित्वा वसेत् तु यः । स तद्गृहीत्वा निर्गच्छेत् तृणकाष्ठेष्टकादिकम् । स्तोमं विना वसित्वा तु परभूमावनिच्छतः । निर्गच्छंस्तृणकाष्ठानि न गृह्णीयात् कथञ्चन" कात्यायनः । "गृहवाप्यापणादीनि गृहीत्वा भाटकेन यः । स्वामिनोऽनर्पयेद्यावत्तावद्दाप्यः स भाटकम् । वापी परकृता अप्रतिष्ठितेति विवेचितम् । "हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः । स्वामिनोऽनर्पयेद्यावत्तावद्दाप्यः स भाटकम्" । बृहस्पतिः "यो भाटयित्वा शकटं नीत्वा नान्यत्र गच्छति । भाटं न दद्याद्दाप्योऽसाववूढस्यापि भाटकम्" । शकटं तृणनौकादेरप्युपलक्षणम् । अनूढस्यावाहितस्यापि शकटादेः" इति विवादचिन्तामणिः ।

भाण पु॰ सा॰ द॰ उक्तलक्षणे दशरूपकान्तर्गते दृश्यकाव्यभेदे तल्लक्षणं यथा
"भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः । एकाङ्क एक एवात्र निपुणः पण्डितो विटः । रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा । सम्बोधनोक्तिप्रत्युक्ती कुर्यादाकाशभाषितैः । सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः । तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती । मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च" । आकाशभाषितरूप॰ परवचनमपि स्वयमेवानुवदन् उत्तरप्रत्युत्तरे कुर्यात् । शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनेन सूचयेत् । प्रायग्रहणात् कौशिक्यपि वृत्तिर्भवति । उदाहरणं लीलामधुकरः" सा॰ द॰ ।

भाण्ड न॰ भाण्ड-अच् भण-ड-स्वार्थे अण् वा । पात्रे १तैलाद्याधारे २भाजने (भाँड) "अराजदैविकं नष्टं भाण्डं दाप्यस्तु वाहकः" नारदः । ३तूर्य्यभेदे (भाँड़ार) "भ्रमाण्डभाण्डोदरेत्यादि" वीरचरितम् । ४वणिजां मूलधने ५अश्वभूषायां मेदि॰ । ६नदीकूलद्वयमध्ये पात्रे च हेमच॰ । ७नटभाण्डे हास्ये पु॰ शब्दच॰ । भाण्डस्य भावः ष्यञ् । ८भाण्डचरित्रे न॰ (भाड़ामि) भरतः ।

भाण्डपुट पु॰ नापिते जटाधरः ।

भाण्डपुष्प पु॰ सर्पभेदे त्रिका॰ ।

भाण्डल त्रि॰ भाण्डं लाति ला-क । भाण्डग्राहके स्त्रियां गौरा॰ ङीष् ।
[शमीपादौ ।

भाण्डव त्रि॰ भण्डोरदूरादि सुवास्त्वा॰ अण् । भण्ड-

भाण्डागार क्लीं॰ । (भाँड़ार) गृहभेदे हेमच॰ । तत्र नियुक्तः ठन् । भाण्डागारिक तत्र नियुक्ते त्रि॰ ।

भाण्डार न॰ भाण्डं तदाकारमृच्छति ऋ-अण् उप॰स॰ । गृहभेदे (भाँड़ार) ।

भाण्डारिन् पु॰ भाण्डमृच्छति ऋ-णिनि । धनादिद्रव्यगृहेषु कृताधिकारे । "क्षुधितस्तृषितः कामी विद्यार्थी अधिकारकः । भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत्" इति व्यवहारप्रदीपः । [(भाँड़ि)

भाण्डि स्त्री भण्डस्येदम् । नापितस्य क्षुराद्याधारपात्रभेदे

भाण्डिवाह पु॰भाण्डिं क्षुराद्याधारं (भाँडि) वहति वहअच् उप॰स॰ नापिते भाण्डि+वहार्थे अण् । भाण्डिकब तत्रार्थे शब्दमा॰ ।

भाण्डीर पु॰ भण्ड-ईरन् पृषो॰ । १वटवृक्षे २वृन्दावनस्थे ३वटवृक्षभेदे च जटा॰ । "प्रलम्बो नाम मूलाथो वटं भाण्डीरमाश्रितः" हरिवं॰ ५५अ॰ ।

भाति स्त्री भा-क्तिन् । शोभायाम् राजनि॰ ।

भानु पु॰भा-तन् । १सूर्य्ये त्रिका॰ । २दीप्ते त्रि॰संक्षिप्त॰ ।

भाद्र पु॰ भद्राभियुक्ता पौर्णमासी भाद्री सा अस्मिन् मासे अण् । चैत्रादितः षष्ठे मासे १मासे अमरः । २तस्मा-

प्रोष्ठपौर्णमास्यां स्त्री ङीप्। भद्रैव स्वार्थे अण्। ३पूर्वोत्तरभाद्रपदाख्यनक्षत्रे न०। "भाद्रद्वये सागरे" ज्योतिषम्। ४भाद्र्या पौर्णमास्यायुक्ते पक्षे तथाविधे ५मुहूर्त्ते च कार्त्तिकशब्दे दृश्यम्।

**भाद्रपदा** स्त्री व०स०। भद्रस्येदं अण् भाद्रमिव पदमास्याम्। अश्विन्यवधिके प्रथविंशपञ्चविंशयोर्नक्षत्रयोः। १तद्युक्ता पौर्णमासी अण् ङीप्। २भाद्रमासस्य पौर्णमास्याम् साऽत्र मासे अण्। ३चान्द्रे भाद्रे मासि पु०। माहमे ४पक्षे ५मुहूर्त्तभेदे च कार्त्तिकशब्दे दृश्यम्।

**भाद्रमातुर** पु० भद्रायाः सत्याः मातुः अपत्यम् अण् मातुरत्। सतीपुत्रे हेमच०।

**भान** न०भा—भावे ल्युट्। १प्रकाशे २दीप्तौ ३ज्ञाने प्रकाशे च।

**भानु** पु० भा—नु। १सूर्य्ये २अर्कवृक्षे ३किरणे ४राजनि च अमरः ५प्रभौ भरतः। ६भूतजैनभेदे हेमच०। उत्तममन्वन्तरे ७देवे क०द० हरिवं०८अ०। ८धर्मपत्नीभेदे स्त्री हरिवं० ३अ०। १०गन्धर्वभेदे पु० भा०आ०६५अ०। ११यदुवंश्यक्षत्रियभेदे भानुमत्याः पितरि पु० हरिवं० १४८अ०। १२विष्णौ पु० "अमृतांशूद्भवो भानुः" विष्णु स० "तमेव भान्तमनुभाति सर्वम्" श्रुतेस्तस्य तथात्वम्।

**भानुफला** स्त्री भानुरिव दीप्तिमत् फलं यस्याः। कदल्याम् जटाधरः। तस्याः मोचकस्य सूर्य्यतुल्यवर्णत्वात्तथात्वम्। [१४८ अ०।

**भानुमती** स्त्री भानोर्यादवस्य यदुकस्य कन्यायां हरिवं०

**भानुमत्** स्त्री भानुः किरणोऽस्त्यस्य मतुप्। १सूर्य्ये शब्दरत्ना० २अर्कवृक्षे च। भानुमानीत्यप्यत्र। ३नृपभेदे पु० मा०मौ० ५४अ०। अङ्गारतिलकस्य भार्य्यायां जाते शतवीर्य्यस्य ४दुहितृभेदे स्त्री भा० आ० ९५अ०।

**भानुसेन** पु० कर्णपुत्रभेदे भा० क० ४८ अ०।

**भानेमि** पु० भानोः नेमिरिव। १सूर्य्ये २अर्कवृक्षे च त्रिका०।

**भान्त** पु० भायाः दीप्तेः पञ्चदशाहमध्ये अन्तो यत्र। शुक्लकृष्णपक्षयोः पञ्चदशाहमध्ये काले अपचयापचययुक्ते चन्द्रे "भान्तः पञ्चदशो" यजु० १४।२३ वेददी० द्रष्ट०। २नक्षत्रराश्योरन्ते च।

**भाम** क्रोधे भ्वा०आत्म०सक०सेट्। भामते अभामिष्ट बभामे।

**भाम** पु०भाम—घञ्। १क्रोधे निघण्टुः। भा—भावे म। २दीप्तौ च। कर्त्तरि म। ३सूर्य्ये मेदि०। ४अर्कवृक्षे च। ५भगिनीपतौ पु०शब्दरत्ना० ६कोपनायां स्त्रियां स्त्री मेदि०।

**भामनी** पु० भामं नयति नी—क्विप्। परमेश्वरे "एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद" छा०उ०। "एष उ भामनीरेष हि यस्मात् सर्वेषु लोकेष्वादित्यचन्द्राग्न्यादिरूपैर्भाति दीप्यते। "तस्य भासा सर्वमिदं विभातीति" श्रुतेरतो भामानि नयतीति भामनीः" भा०। [ताया स्त्रियाम् स्त्री ङीप् अमरः।

**भामिन्** त्रि०भाम—णिनि। क्रोधयुक्ते स्त्रियां ङीप्। कोप-

**भार** पु० भृ—घञ्। १गुरुत्वपरिमाणे २वहति द्रव्ये ३विंशतितुलापरिमाणे (अष्टसहस्रतोलकपरिमाणे) च पु०। ३वीवधे ४विष्णौ च मेदि०।

**भारङ्गी** स्त्री भृ—बा० अङ्गच्। पोषणकर्त्र्यां स्त्रियां ततः कास्या० ठञ्। भारङ्गिक तत्र भवे त्रि०।

**भारण्ड** पु० उत्तरदेशजे खगभेदे "एकोदराः पृथग्ग्रीवा अन्योऽन्यफलभक्षिणः। असंहता विनश्यन्ति भारण्डा इव पक्षिणः" पञ्चत०।

**भारत** न० भरतान् भरतवंश्यानधिकृत्य कृतो ग्रन्थः अण्। भारं वेदादिशास्त्रेभ्योऽपि भारांशं तनोति तन—ड वा। १वेदव्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे। भरतेन दौष्यन्तिना शासितं तस्येदं वा अण्। "हिमाह्वं दक्षिणं वर्षं भरताय ददौ पिता। तस्मात्तु भारतं वर्षम्" इत्युक्ते जम्बुद्वीपान्तर्गते २वर्षभेदे। भरतस्य गोत्रापत्यम् अण्। भरतजनपदस्य ३वंश्ये। भरतेन मुनिना प्रोक्तमण्। ४भरतमुनिकृते नाटकशास्त्रादौ न०। तदधीयते पुनरण्। ५नटे श०च०। ६अग्निभेदे च। महाभारतग्रन्थस्य निरुक्तिः भा०आ०१अ० दर्शिता यथा "एकतश्चतुरो वेदान् भारतञ्चैतदेकतः। पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम्। चतुर्भ्यः सरहस्येभ्यो वेदेभ्यो ह्यधिकं यदा। तदाप्रभृति लोकेऽस्मिन् महाभारतमुच्यते। महत्त्वे च गुरुत्वे च ध्रियमाणं यतोऽधिकम्। महत्त्वाद्भारवत्त्वाच्च महाभारतमुच्यते। निरुक्तमस्य यो वेद सर्वपापैः प्रमुच्यते"।

तत्र वेदव्यासेन कृतं तदादिष्टः तच्छिष्यः वैशम्पायनः जनमेजयं श्रावयामास यथोक्तं भा० आ० १अ०।

"जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः। शशास शिष्यमासीनं वैशम्पायनमन्तिके। स सदस्यैः सहासीनः श्रावयामास भारतम्। कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनःपुनः। विस्तरं कुरुवंशस्य गान्धार्या धर्मशीलताम्। क्षत्तुः प्रज्ञां,धृतिं कुन्त्याः सम्यग्द्वैपायनोऽब्रवीत्। वासुदेवस्य माहात्म्यं पाण्डवानाञ्च सत्यताम्। दुर्वृत्तं धार्त्तराष्ट्राणामुक्तवान् भगवानृषिः"।

तत्तु नानाविधं नानासंख्यान्वितं च तत् लोके तु शतसाहस्रसंख्यातं यथोक्तं तत्रैवाध्याये
"चतुर्विंशतिसाहस्रीं चक्रे भारतसंहिताम्। उपाख्यानैर्विना तावद्भारतं प्रोच्यते बुधैः। ततोऽध्यर्द्धशतं भूयः संक्षेपं कृतवानृषिः। अनुक्रमणिकाध्यायं वृत्तान्तानां सपर्व्वणाम्। इदं द्वैपायनः पूर्व्वं पुत्त्रमध्यापयच्छुकम्। ततोऽन्येभ्योऽनुरूपेभ्यः शिष्येभ्यः प्रददौ विभुः। षष्टिं शतसहस्राणि चकारान्यां स संहिताम्। त्रिंशच्छतसहस्रञ्च देवलोके प्रतिष्ठितम्। पित्र्ये पञ्चदश प्रोक्तं गन्धर्व्वेषु चतुर्द्दश। एकं शतसहस्रन्तु मानुषेषु प्रतिष्ठितम्। नारदोऽश्रावयद्देवानसितो देवलः पितॄन्। गन्धर्व्वयक्षरक्षांसि श्रावयामास वै शुकः। अस्मिंस्तु मानुषे लोके वैशम्पायन उक्तवान्। शिष्यो व्यासस्य धर्म्मात्मा सर्व्ववेदविदां वरः। एकं शतसहस्रन्तु मयोक्तं वै निबोध तत्"। तच्चाष्टादशमहापर्व्वयुतं तदवान्तरपर्व्वशतकं तद्विभागस्तत्र वर्णनीयपदार्थानां संग्रहश्च भा० आ० २अ० दर्शितो यथा
"भारतस्येतिहासस्य श्रूयतां पर्व्वसंग्रहः। आदिपर्व्वणि "१पर्व्वानुक्रमणी पूर्व्वं द्वितीयः२ पर्व्वसंग्रहः।३पौष्यं ४पौलोममास्तीकं५मादिर(१)ंशावतारणम्६। ततः सम्भव७पर्व्वोक्तमद्भुतं रोमहर्षणम्। दाहो जतुगृहस्यात्र८ हैडिम्बं९ पर्व्व चोच्यते। ततो बकवधः१० पर्व्व पर्व्व चैत्ररथं११ ततः। ततः स्वयम्वरो१२ देव्याः पाञ्चाल्याः पर्व्व चोच्यते। क्षात्रधर्म्मेण निर्जित्य ततो वैवाहिकं१३ स्मृतम्। विदुरागमनं पर्व्व राज्यलाभस्तथैव१४ च। अर्ज्जुनस्य वने वासः१५ सुभद्राहरणं१६ ततः। सुभद्राहरणादूर्द्ध्वं ज्ञेयं हरणहारिका१७। ततः खाण्डवदाहाख्यं१८ तत्रैव मयदर्शनम्।(२)सभापर्व्व ततः१९ प्रोक्तं मन्त्रपर्व्व२० ततः परम्। जरासन्धवधः२१ पर्व्व पर्व्व दिग्विजय२२स्तथा। पर्व्व दिग्विजयादूर्द्ध्वं राजसूयिक२३मुच्यते। ततश्चार्घाभिहरणं२४ शिशुपालवध२५स्ततः। द्यूतपर्व्व२६ ततः प्रोक्तमनुद्यूत२७मतः परम्। तत (३)आरण्यकं पर्व्व किर्म्मीरवधः२८ एव च। अर्ज्जुनस्याभिगमनं२९ पर्व्व ज्ञेयमतः परम्। ईश्वरार्ज्जुनयोर्युद्धं पर्व्व कैरात३०संज्ञितम्। इन्द्रलोकाभिगमनं ३१ पर्व्व ज्ञेयमतः परम्। नलोपाख्यान३२मपि च धार्म्मिकं करुणोदयम्। तीर्थयात्रा३३ ततः पर्व्व कुरुराजस्य धीमतः। जटासुरवधः३४ पर्व्व यक्षयुद्ध३५मतः परम्। निवातकवचैर्युद्धं३६ पर्व्व चाजगरं३७ ततः। मार्कण्डेयसमास्या३८ च पर्व्वानन्तरमुच्यते। संवादश्च ततः पर्व्व द्रौपदीसत्यभामयोः३९। घोषयात्रा४० ततः पर्व्व मृगस्वप्नोद्भव४१स्ततः। व्रीहिद्रौणिक४२माख्यानमैन्द्रद्युम्नं (तदाख्यानान्तर्गतं) तथैव च। द्रौपदीहरणं४३ पर्व्व जयद्रथविमोक्षणम्४४। पतिव्रताया माहात्म्यं सावित्र्याश्चैवमद्भुतम्४५। रामोपाख्यान४६मत्रैव पर्व्व ज्ञेयमतः परम्। कुण्डलाहरणं४७ पर्व्व ततः परमिहोच्यते। आरणेयं४८ ततः पर्व्व (४)वैराटन्तदनन्तरम्। पाण्डवानां प्रवेशश्च४९ समयस्य च पालनम्। कीचकानां वधः५० पर्व्व पर्व्व गोग्रहणं५१ ततः। अभिमन्योश्च वैराट्या पर्व्व वैवाहिकं ५२ स्मृतम्। (५)उद्योगपर्व्व विज्ञेयमत ऊर्द्ध्वं महाद्भुतम्। ततः सञ्जययानाख्यं५३ पर्व्व ज्ञेयमतः परम्। प्रजागरस्ततः५४ पर्व्व धृतराष्ट्रस्य चिन्तया। पर्व्व सनत्सुजातं ५५ वै गुह्यमध्यात्मदर्शनम्। यानसन्धि५६स्ततः पर्व्व भगवद्यान५७मेव च। मातलीयमुपाख्यानं चरितं गालवस्य च। सभाप्रवेशः कृष्णस्य विदुरापुत्रशासनम्। ज्ञेयं विवादपर्व्व५८ च कर्णस्यापि महात्मनः। निर्याणञ्च५९ ततः पर्व्व कुरुपाण्डवसेनयोः। रथातिरथसंख्या६० च पर्व्वोक्तं तदनन्तरम्। उलूकदूतागमनं ६१ पर्व्वामर्षविवर्द्धनम्। अम्बोपाख्यान६२मत्रैव पर्व्व ज्ञेयमतः परम्। भीष्माभिषेचनं(६) पर्व्व ततश्चाद्भुतमुच्यते। जम्बूखण्डविनिर्म्माणं६३ पर्व्वोक्तं तदनन्तरम्। भूमिपर्व्व६४ ततः प्रोक्तं द्वीपविस्तारकीर्त्तनम्। पर्व्वोक्तं भगवद्गीता६५ पर्व्व भीष्मवध६६स्ततः। द्रोणाभिषे(७)चनं पर्व्व संशप्तकवधः६७स्ततः। अभिमन्युवधः६८ पर्व्व प्रतिज्ञा६९ पर्व्व चोच्यते। जयद्रथवधः७० पर्व्व घटोत्कचवध७१स्ततः। ततो द्रोणवधः७२ पर्व्व विज्ञेयं लोमहर्षणम्। मोक्षो७३ नारायणास्त्रस्य पर्व्वानन्तरमुच्यते। कर्णपर्व्व(८) ततो ज्ञेयं शल्यपर्व्व(९) ततः परम्। ह्रदप्रवेशनं७४ पर्व्व गदायुद्धमतः७५ परम्। सारस्वतं७६ ततः पर्व्व तीर्थवंशानुकीर्त्तनम्। अत ऊर्द्ध्वं सुबीभत्सं पर्व्व सौप्तिक(१०)मुच्यते। ऐषीकं७७ पर्व्व चोद्दिष्टमत ऊर्द्ध्वं सुदारुणम्। जलप्रदानिकं७८ पर्व्व स्त्रीविलाप(११)स्ततः परम्। श्राद्धपर्व्व७९ ततो ज्ञेयं कुरूणामौर्द्ध्वदेहिकम्। चार्व्वाकस्य वधः८० पर्व्व रक्षसो ब्रह्मरूपिणः। आभिषेचनिकं८१

पर्व धर्मराजस्य धीमतः । प्रतिभागो८२ गृहाणाञ्च पर्वोक्तं तदनन्तरम् । शान्तिपर्व(१२) ततो यत्र राजधर्मानुशासनम्८३ । आपद्धर्मश्च८४ पर्वोक्तं मोक्षधर्म८५स्ततः परम् । शुकप्रश्नाभिगमनं ब्रह्मप्रश्नानुशासनम् । प्रादुर्भावश्च दुर्वाससः संवादश्चैव मायया । ततः पर्व परिज्ञेयमानुशासनिकम्(१३) परम् । स्वर्गारोहणिकञ्चैव ततो भीष्मस्य धीमतः । ततोऽश्वमेधिकं(१४) पर्व सर्वपापप्रणाशनम् । अनुगीता८६ ततः पर्व ज्ञेयमध्यात्मवाचकम् । पर्व चाश्रमवासा(१५)ख्यं पुत्रदर्शनमेव च । नारदागमनं८७ पर्व ततः परमिहोच्यते । मौषलं(१६) पर्व चोद्दिष्टं ततो घोरं सुदारुणम् । महाप्रस्थानिकं(१७) पर्व स्वर्गारोहणिकं(१८) ततः । हरिवंशस्ततः पर्व८८ पुराणं खिलसंज्ञितम् । विष्णुपर्व८९ शिशोश्चर्या विष्णोः कंसवधस्तथा । भविष्यं पर्व९० चाप्युक्तं खिलेष्वेवाद्भुतं महत् । एतत् पर्वशतं पूर्णं व्यासेनोक्तं महात्मना । (महापर्वसहितं किञ्चिदधिकशतपर्वात्रेति बोध्यम्) । यथावत् सूतपुत्रेण लौमहर्षणिना ततः । उक्तानि नैमिषारण्ये पर्वाण्यष्टादशैव तु । समासो भारतस्यायमत्रोक्तः पर्वसंग्रहः । पौष्यं पौलोममास्तीकमादिरं(वं)शावतारणम् । सम्भवो जतुवेश्मास्यं हिडिम्बबकयोर्वधः । तथा चैत्ररथं देव्याः पाञ्चाल्याश्च स्वयंवरः । क्षात्रधर्मेण निर्जित्य ततो वैवाहिकं स्मृतम् । विदुरागमनञ्चैव राज्यलम्भस्तथैव च । वनवासोऽर्जुनस्यापि सुभद्राहरणं ततः । हरणाहरणञ्चैव दहनं खाण्डवस्य च । मयस्य दर्शनञ्चैव आदिपर्वणि कथ्यते । पौष्ये पर्वणि माहात्म्यमुत्तङ्कस्योपवर्णितम् । पौलोमे भृगुवंशस्य विस्तारः परिकीर्त्तितः । आस्तीके सर्वनागानां गरुड़स्य च सम्भवः । क्षीरोदमथनञ्चैव जन्मोच्चैःश्रवसस्तथा । यजतः सर्पसत्रेण राज्ञः पारीक्षितस्य च । कथेयमभिनिर्वृत्ता भारतानां महात्मनाम् । विविधाः सम्भवा राज्ञामुक्ताः सम्भवपर्वणि । अन्येषाञ्चैव शूराणामृषेर्द्वैपायनस्य च । अंशावतरणञ्चात्र देवानां परिकीर्त्तितम् । दैत्यानां दानवानाञ्च यक्षाणाञ्च महौजसाम् । नागानामथ सर्पाणां गन्धर्वाणां पतत्रिणाम् । अन्येषाञ्चैव भूतानां विविधानां समुद्भवः । महर्षेराश्रमपदे कण्वस्य च तपस्विनः । शकुन्तलायां दुष्मन्ताद्भरतश्चापि जज्ञिवान् । यस्य लोकेषु नाम्नेदं प्रथितं भारतं कुलम् ।

वसूनां पुनरुत्पत्तिर्भागीरथ्यां महात्मनाम् । शान्तनोर्वेश्मनि पुनस्तेषाञ्चारोहणं दिवि । तेजोऽंशानाञ्च सम्पातो भीष्मस्याप्यत्र सम्भवः । राज्यान्निवर्त्तनं तस्य ब्रह्मचर्य्यव्रते स्थितिः । प्रतिज्ञापालनञ्चैव रक्षा चित्राङ्गदस्य च । हते चित्राङ्गदे चैव रक्षा भ्रातुर्यवीयसः । विचित्रवीर्य्यस्य तथा राज्ये सम्प्रतिपादनम् । धर्मस्य नृषु सम्भूतिरणीमाण्डव्यशापजा । कृष्णद्वैपायनाच्चैव प्रसूतिर्वरदानजा । धृतराष्ट्रस्य पाण्डोश्च पाण्डवानाञ्च सम्भवः । वारणावतयात्रायां मन्त्रो दुर्य्योधनस्य च । कूटस्य धार्त्तराष्ट्रेण प्रेषणं पाण्डवान् प्रति । हितोपदेशश्च पथि धर्मराजस्य धीमतः । विदुरेण ततो यत्र हितार्थं म्लेच्छभाषया । विदुरस्य च वाक्येन सुरङ्गोपक्रमक्रिया । निषाद्याः पञ्चपुत्रायाः सुप्ताया जतुवेश्मनि । पुरोचनस्य चात्रैव दहनं सम्प्रकीर्त्तितम् । पाण्डवानां वने घोरे हिडिम्बायाश्च दर्शनम् । तत्रैव च हिडिम्बस्य वधो भीमान्महाबलात् । घटोत्कचस्य चोत्पत्तिरत्रैव परिकीर्त्तिता । महर्षेर्दर्शनञ्चैव व्यासस्यामिततेजसः । तदाज्ञयैकचक्रायां ब्राह्मणस्य निवेशने । अज्ञातचर्य्यया वासो यत्र तेषां प्रकीर्त्तितः । बकस्य निधने चैव नागराणाञ्च विस्मयः । सम्भवश्चैव कृष्णाया धृष्टद्युम्नस्य चैव हि । ब्राह्मणात् समुपश्रुत्य व्यासवाक्यप्रचोदिताः । द्रौपदीं प्रार्थयन्तस्ते स्वयंवरदिदृक्षया । पाञ्चालानभितो जग्मुर्यत्र कौतूहलान्विताः । अङ्गारपर्णं निर्जित्य गङ्गाकूलेऽर्जुनस्तदा । सख्यं कृत्वा ततस्तेन तस्मादेव च शुश्रुवे । तापत्यमथ वाशिष्ठमौर्व्वञ्चाख्यानमुत्तमम् । भ्रातृभिः सहितः सर्वैः पाञ्चालानभितो ययौ । पाञ्चालनगरे चापि लक्ष्यं भित्त्वा धनञ्जयः । द्रौपदीं लब्धवानत्र मध्ये सर्वमहीक्षिताम् । भीमसेनार्जुनौ यत्र संरब्धान् पृथिवीपतीन् । शल्यकर्णौ च तरसा जितवन्तौ महामृधे । दृष्ट्वा तयोश्च तद्वीर्य्यमप्रमेयममानुषम् । शङ्कमानौ पाण्डवांस्तान् रामकृष्णौ महामती । जग्मतुस्तैः समागन्तुं शालायां भार्गववेश्मनि । पञ्चानामेकपत्नीत्वे विमर्शो द्रुपदस्य च । पञ्चेन्द्राणामुपाख्यानमत्रैवाद्भुतमुच्यते । द्रौपद्या देवविहितो विवाहश्चाप्यमानुषः । क्षत्तुश्च धृतराष्ट्रेण प्रेषणं पाण्डवान् प्रति । विदुरस्य च सम्प्राप्तिर्दर्शनं केशवस्य च । खाण्डवप्रस्थवासश्च तथा राज्यार्द्धशासनम् । नारदस्याज्ञया

चैव द्रौपद्याः समयक्रिया । सुन्दोपसुन्दयोस्तद्वदाख्यानं परिकीर्त्तितम् । अनन्तरञ्च द्रौपद्या सहासीनं युधिष्ठिरम् । अनुप्रविश्य विप्रार्थं फाल्गुनो गृह्य चायुधम् । मोक्षयित्वा गृहं गत्वा विप्रार्थं कृतनिश्चयः । समयं पालयन् वीरो वनं यत्र जगाम ह । पार्थस्य वनवासे च उलूप्या पथि सङ्गमः । पुण्यतीर्थानुसंयानं बभ्रुवाहनजन्म च । तत्रैव मोक्षयामास पञ्च सोऽप्सरसः शुभाः । शापाद्ग्राहत्वमापन्ना ब्राह्मणस्य तपस्विनः । प्रभासतीर्थे पार्थेन कृष्णस्य च समागमः । द्वारकायां सुभद्रा च कामयानेन कामिनी । वासुदेवस्यानुमते प्राप्ता चैव किरीटिना । गृहीत्वा हरणं प्राप्ते कृष्णे देवकिनन्दने । अभिमन्योः सुभद्रायां जन्म चोत्तमतेजसः । द्रौपद्यास्तनयानाञ्च सम्भवोऽनुप्रकीर्त्तितः । विहारार्थञ्च गतयोः कृष्णयोर्यमुनामनु । सम्प्राप्तिश्चक्रधनुषोः खाण्डवस्य च दाहनम् । मयस्य मोक्षो ज्वलनाद्भुजङ्गस्य च मोक्षणम् । महर्षेर्मन्दपालस्य शार्ङ्ग्यां तनयसम्भवः । इत्येतदादिपर्व्वोक्तं प्रथमं बहुविस्तरम् । अध्यायानां शते द्वे तु संख्याते परमर्षिणा । सप्तविंशतिरध्याया व्यासेनोत्तमतेजसा । अष्टौ श्लोकसहस्राणि अष्टौ श्लोकशतानि च । श्लोकाश्चतुरशीतिश्च मुनिनोक्ता महात्मना (१) ।

द्वितीयन्तु सभापर्व्व बहुवृत्तान्तमुच्यते । सभाक्रिया पाण्डवानां किङ्कराणाञ्च दर्शनम् । लोकपालसभाख्यानं नारदाद्देवदर्शिनः । राजसूयस्य चारम्भो जरासन्धवधस्तथा । गिरिव्रजे निरुद्धानां राज्ञां कृष्णेन मोक्षणम् । तथा दिग्विजयोऽत्रैव पाण्डवानां प्रकीर्त्तितः । राज्ञामागमनञ्चैव सार्हणानां महाक्रतौ । राजसूयेऽर्घ्यसंवादे शिशुपालवधस्तथा । यज्ञे विभूतिं तां दृष्ट्वा दुःखामर्षान्वितस्य च । दुर्य्योधनस्यावहासो भीमेन च सभातले । यत्रास्य मन्युरुद्भूतो येन द्यूतमकारयत् । यत्र धर्म्मसुतं द्यूते शकुनिः कितवोऽजयत् । यत्र द्यूतार्णवे मग्नां द्रौपदीं नावमर्थवत् । धृतराष्ट्रो महाप्राज्ञः स्नुषां परमदुःखिताम् । तारयामास तां तीर्णां ज्ञात्वा दुर्य्योधनो नृपः । पुनरेव ततो द्यूते समाह्वयत पाण्डवान् । जित्वा स वनवासाय प्रेषयामास तांस्ततः । एतत् सर्व्वं सभापर्व्व समाख्यातं महात्मना । अध्यायाः सप्ततिर्ज्ञेयास्तथा चाष्टौ प्रसंख्यया । श्लोकानां द्वे सहस्रे तु पञ्च श्लोकशतानि च । श्लोकाश्चैकादश ज्ञेयाः पर्व्वण्यस्मिन् द्विजोत्तमाः" (२) । ( द्वितीयसभापर्व्व )

"अतःपरं तृतीयन्तु ज्ञेयमारण्यकं महत् । वनवासं प्रयातेषु पाण्डवेषु महात्मसु । पौरानुगमनञ्चैव धर्म्मपुत्रस्य धीमतः । अन्नौषधीनाञ्च कृते पाण्डवेन महात्मना । द्विजानां भरणार्थञ्च कृतमाराधनं रवेः । धौम्योपदेशात्तिग्मांशुप्रसादादन्नसम्भवः । हितञ्च ब्रुवतः क्षत्तुः परित्यागोऽम्बिकासुतात् । त्यक्तस्य पाण्डुपुत्राणां समीपगमनन्तथा । पुनरागमनञ्चैव धृतराष्ट्रस्य शासनात् । कर्णप्रोत्साहनाच्चैव धार्त्तराष्ट्रस्य दुर्म्मतेः । वनस्थान् पाण्डवान् हन्तुं मन्त्रो दुर्य्योधनस्य च । तं दुष्टभावं विज्ञाय व्यासस्यागमनं द्रुतम् । निर्य्याणप्रतिषेधश्च सुरभ्याख्यानमेव च । मैत्रेयागमनञ्चात्र राज्ञश्चैवानुशासनम् । शापोत्सर्गश्च तेनैव राज्ञो दुर्य्योधनस्य च । किर्म्मीरस्य वधश्चात्र भीमसेनेन संयुगे । वृष्णीनामागमश्चात्र पाञ्चालानाञ्च सर्व्वशः । श्रुत्वा शकुनिना द्यूते निकृत्या निर्जितांश्च तान् । क्रुद्धस्यानुप्रशमनं हरेश्चैव किरीटिना । परिदेवनञ्च पाञ्चाल्या वासुदेवस्य सन्निधौ । आश्वासनञ्च कृष्णेन दुःखार्त्तायाः प्रकीर्त्तितम् । तथा सौभवधाख्यानमत्रैवोक्तं महर्षिणा । सुभद्रायाः सपुत्रायाः कृष्णेन द्वारकां पुरीम् । नयनं द्रौपदेयानां धृष्टद्युम्नेन चैव हि । प्रवेशः पाण्डवेयानां रम्ये द्वैतवने ततः । धर्म्मराजस्य चात्रैव संवादः कृष्णया सह । संवादश्च तथा राज्ञा भीमस्यापि प्रकीर्त्तितः । समीपं पाण्डुपुत्राणां व्यासस्यागमनं तथा । प्रतिस्मृत्याथ विद्याया दानं राज्ञो महर्षिणा । गमनं काम्यके चापि व्यासे प्रतिगते ततः । अस्त्रहेतोर्विवासश्च पार्थस्यामिततेजसः । महादेवेन युद्धञ्च किरातवपुषा सह । दर्शनं लोकपालानामस्त्रप्राप्तिस्तथैव च । महेन्द्रलोकगमनमस्त्रार्थे च किरीटिनः । यत्र चिन्ता समुत्पन्ना धृतराष्ट्रस्य भूयसी । दर्शनं बृहदश्वस्य महर्षेर्भावितात्मनः । युधिष्ठिरस्य चार्त्तस्य व्यसने परिदेवनम् । नलोपाख्यानमत्रैव धर्म्मिष्ठं करुणोदयम् । दमयन्त्याः स्थितिर्यत्र नलस्य चरितं तथा । तथाक्षहृदयप्राप्तिस्तस्मादेव महर्षितः । लोमशस्यागमस्तत्र स्वर्गात् पाण्डुसुतान् प्रति । वनवासगतानाञ्च पाण्डवानां महात्मनाम् । स्वर्गे प्रवृत्तिराख्याता लोमशेनार्ज्जुनस्य वै । सन्देशादर्ज्जुनस्यात्र तीर्थाभिगमनक्रिया । तीर्थानाञ्च फलप्राप्तिः पुण्यत्व-

स्तापि कीर्त्तितम्। पुलस्त्यतीर्थयात्रा च नारदेन महर्षिणा। तीर्थयात्रा च तत्रैव पाण्डवानां महात्मनाम्। कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्। तथा यज्ञविभूतिश्च गयस्यात्र प्रकीर्त्तिता। आगस्त्यमपि चाख्यानं यत्र वातापिभक्षणम्। लोपामुद्राभिगमनमपत्यार्थमृषेस्तथा। ऋष्यशृङ्गस्य चरितं कौमारब्रह्मचारिणः। जामदग्न्यस्य रामस्य चरितं भूरितेजसः। कार्त्तवीर्य्यवधो यत्र हैहयानाञ्च वर्ण्यते। प्रभासतीर्थे पाण्डूनां वृष्णिभिश्च समागमः। सौकन्यमपि चाख्यानं च्यवनो यत्र भार्गवः। शर्य्यातियज्ञे नासत्यौ कृतवान् सोमपीथिनौ। ताभ्याञ्च यत्र स मुनिर्यौवनं प्रतिपादितः। मान्धातुश्चाप्युपाख्यानं राज्ञोऽत्रैव प्रकीर्त्तितम्। जन्तूपाख्यानमत्रैव यत्र पुत्रेण सोमकः। पुत्रार्थमयजद्राजा लेभे पुत्रशतञ्च सः। ततः श्येनकपोतीयमुपाख्यानमनुत्तमम्। इन्द्राग्नी यत्र धर्म्मश्चाप्यजिज्ञासन्त शिबिं नृपम्। अष्टावक्रीयमत्रैव विवादो यत्र बन्दिना। अष्टावक्रस्य विप्रर्षेर्जनकस्याध्वरेऽभवत्। नैयायिकानां मुख्येन वरुणस्यात्मजेन च। पराजितो यत्र बन्दी विवादेन महात्मना। विजित्य सागरं प्राप्तं पितरं लब्धवानृषिः। यवक्रीतस्य चाख्यानं रैभ्यस्य च महात्मनः। गन्धमादनयात्रा च वासो नारायणाश्रमे। नियुक्तो भीमसेनश्च द्रौपद्या गन्धमादने। व्रजन् पथि महाबाहुर्दृष्टवान् पवनात्मजम्। कदलीषण्डमध्यस्थं हनूमन्तं महाबलम्। यत्र सौगन्धिकार्थेऽसौ नलिनीं तामधर्षयत्। यत्रास्य युद्धमभवत् सुमहद्राक्षसैः सह। यक्षैश्चैव महावीर्य्यैर्मणिमत्प्रमुखैस्तथा। जटासुरस्य च वधो राक्षसस्य वृकोदरात्। वृषपर्व्वणो राजर्षेस्ततोऽभिगमनं स्मृतम्। आर्ष्टिषेणाश्रमे चैषां गमनं वास एव च। प्रोत्साहनञ्च पाञ्चाल्या भीमस्यात्र महात्मनः। कैलासारोहणं प्रोक्तं यत्र यक्षैर्बलोत्कटैः। युद्धमासीन्महाघोरं मणिमत्प्रमुखैः सह। समागमश्च पाण्डूनां यत्र वैश्रवणेन च। समागमश्चार्जुनस्य तत्रैव भ्रातृभिः सह। अवाप्य दिव्यान्यस्त्राणि गुर्व्वर्थं सव्यसाचिना। निवातकवचैर्युद्धं हिरण्यपुरवासिभिः। निवातकवचैर्घोरैर्दानवैः सुरशत्रुभिः। पौलोमैः कालकेयैश्च यत्र युद्धं किरीटिनः। वधश्चैषां समाख्यातो राज्ञस्तेनैव धीमता। अस्त्रसन्दर्शनारम्भो धर्म्मराजस्य सन्निधौ। पार्थस्य प्रतिषेधश्च नारदेन सुरर्षिणा। अवरोहः पुनश्चैव पाण्डूनां गन्धमादनात्। भीमस्य ग्रहणञ्चात्र पर्व्वताभोगवर्ष्मणा। भुजगेन्द्रेण बलिना तस्मिन् सुगहने वने। अमोक्षयद्यत्र चैनं प्रश्नानुक्त्वा युधिष्ठिरः। काम्यकागमनञ्चैव पुनस्तेषां महात्मनाम्। तत्रस्थांश्च पुनर्द्रष्टुं पाण्डवान् पुरुषर्षभान्। वासुदेवस्यागमनमत्रैव परिकीर्त्तितम्। मार्कण्डेयस्य च तथा देवर्षेर्नारदस्य च। मार्कण्डेयसमास्यायामुपाख्यानानि सर्व्वशः। पृथोर्वैण्यस्य यत्रोक्तमाख्यानं परमर्षिणा। संवादश्च सरस्वत्यास्तार्क्ष्यर्षेः सुमहात्मनः। मत्स्योपाख्यानमत्रैव प्रोच्यते तदनन्तरम्। मार्कण्डेयसमास्या च पुराणं परिकीर्त्तितम्। ऐन्द्रद्युम्नमुपाख्यानं धौन्धुमारं तथैव च। पतिव्रतायाश्चाख्यानं तथैवाङ्गिरसं स्मृतम्। द्रौपद्याः कीर्त्तितश्चात्र संवादः सत्यभामया। पुनर्द्वैतवनञ्चैव पाण्डवाः समुपागताः। घोषयात्रा च गन्धर्व्वैर्यत्र बद्धः सुयोधनः। ह्रियमाणस्तु मन्दात्मा मोक्षितोऽसौ किरीटिना। धर्म्मराजस्य चात्रैव मृगस्वप्ननिदर्शनम्। काम्यके काननश्रेष्ठे पुनर्गमनमुच्यते। व्रीहिद्रौणिकमाख्यानमत्रैव बहुविस्तरम्। दुर्व्वाससोऽप्युपाख्यानमत्रैव परिकीर्त्तितम्। जयद्रथेनापहारो द्रौपद्याश्चाश्रमान्तरात्। यत्रैनमन्वयाद्भीमो वायुवेगसमो जवे। चक्रे चैनं पञ्चशिखं यत्र भीमो महाबलः। रामायणमुपाख्यानमत्रैव बहुविस्तरम्। यत्र रामेण विक्रम्य निहतो रावणो युधि। सावित्र्याश्चाप्युपाख्यानमत्रैव परिकीर्त्तितम्। कर्णस्य परिमोक्षोऽत्र कुण्डलाभ्यां पुरन्दरात्। यत्रास्य शक्तिं तुष्टोऽदादेकवीरवधाय च। आरणेयमुपाख्यानं यत्र धर्म्मोऽन्वशात् सुतम्। जग्मुर्लब्धवरा यत्र पाण्डवाः पश्चिमां दिशम्। एतदारण्यकं पर्व्व तृतीयं परिकीर्त्तितम्। अत्राध्यायशते द्वे तु संख्यया परिकीर्त्तिते। एकोनसप्ततिश्चैव तथाध्यायाः प्रकीर्त्तिताः। एकादश सहस्राणि श्लोकानां षट्शतानि च। चतुःषष्टिस्तथा श्लोकाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः" ३। (वनपर्व्व)

"अतःपरं निबोधेदं वैराटं पर्व्व विस्तरम्। विराटनगरं गत्वा श्मशाने विपुलां शमीम्। दृष्ट्वा सन्निदधुस्तत्र पाण्डवा आयुधान्युत। यत्र प्रविश्य नगरं छद्मना न्यवसन्त ते। पाञ्चालीं प्रार्थयानस्य कामोपहतचेतसः। दुष्टात्मनो वधो यत्र कीचकस्य वृकोदरात्। पाण्डवान्वेषणा-

र्ण्मु राज्ञो दुर्य्योधनस्य च। चराः प्रस्थापिताश्चात्र निपुणाः सर्वतो दिशम्। न च प्रवृत्तिस्तैर्लब्धा पाण्डवानां महात्मनाम्। गोग्रहश्च विराटस्य त्रिगर्तैः प्रथमं कृतः। यत्रास्य युद्धं सुमहत् तैरासील्लोमहर्षणम्। ह्रियमाणश्च यत्रासौ भीमसेनेन मोक्षितः। गोधनञ्च विराटस्य मोक्षितं यत्र पाण्डवैः। अनन्तरञ्च कुरुभिस्तस्य गोग्रहणं कृतम्। समस्ता यत्र पार्थेन निर्जिताः कुरवो युधि। प्रत्याहृतं गोधनञ्च विक्रमेण किरीटिना। विराटेनोत्तरा दत्ता स्नुषा यत्र किरीटिनः। अभिमन्युं समुद्दिश्य सौभद्रमरिघातिनम्। चतुर्थमेतद्विपुलं वैराटं पर्व वर्णितम्। अत्रापि परिसंख्याता अध्यायाः परमर्षिणा। सप्तषष्टिरथो पूर्णा श्लोकानामपि मे शृणु। श्लोकानां द्वे सहस्रे तु श्लोकाः पञ्चाशदेव तु। उक्तानि वेदविदुषा पर्वण्यस्मिन् महर्षिणा ४। (विराटपर्व)

"उद्योगपर्व विज्ञेयं पञ्चमं शृण्वतः परम्। उपप्लव्ये निविष्टेषु पाण्डवेषु जिगीषया। दुर्य्योधनोऽर्जुनश्चैव वासुदेवमुपस्थितौ। साहाय्यमस्मिन् समरे भवान्नौ कर्त्तुमर्हति। इत्युक्ते वचने कृष्णो यत्रोवाच महामतिः। अयुध्यमानमात्मानं मन्त्रिणं पुरुषर्षभौ। अक्षौहिणीं वा सैन्यस्य कस्य किं वा ददाम्यहम्। वव्रे दुर्य्योधनः सैन्यं मन्दात्मा यत्र दुर्मतिः। अयुध्यमानं सचिवं वव्रे कृष्णं धनञ्जयः। मद्रराजञ्च राजानमायान्तं पाण्डवान् प्रति। उपहारैर्वञ्चयित्वा वर्त्मन्येव सुयोधनः। वरदं तं वरं वव्रे साहाय्यं क्रियतां मम। शल्यस्तस्मै प्रतिश्रुत्य जगामोद्दिश्य पाण्डवान्। शान्तिपूर्वञ्चाकथयद्यत्रेन्द्रविजयं नृपः। पुरोहितप्रेषणञ्च पाण्डवैः कौरवान् प्रति। वैचित्रवीर्य्यस्य वचः समादाय पुरोधसः। तथेन्द्रविजयञ्चापि यानञ्चैव पुरोधसः। सञ्जयं प्रेषयामास शमार्थी पञ्चपाण्डवान् प्रति। यत्र दूतं महाराजो धृतराष्ट्रः प्रतापवान्। श्रुत्वा च पाण्डवान् यत्र वासुदेवपुरोगमान्। प्रजागरः संप्रजज्ञे धृतराष्ट्रस्य चिन्तया। विदुरो यत्र वाक्यानि विचित्राणि हितानि च। श्रावयामास राजानं धृतराष्ट्रं मनीषिणम्। तथा सनत्सुजातेन यत्राध्यात्ममनुत्तमम्। मनस्तापान्वितो राजा श्रावितः शोकलालसः। प्रभाते राजसमितौ सञ्जयो यत्र वा विभोः। ऐकात्म्यं वासुदेवस्य प्रोक्तवानर्जुनस्य च। यत्र कृष्णो दयापन्नः सन्धिमिच्छन्महामतिः। स्वयमागाच्छमं कर्त्तुं नगरं नागसाह्वयम्। प्रत्याख्यानञ्च कृष्णस्य राज्ञा दुर्य्योधनेन वै। शमार्थे याचमानस्य पक्षयोरुभयोर्हितम्। दम्भोद्भवस्य चाख्यानमत्रैव परिकीर्त्तितम्। वरान्वेषणमत्रैव मातलेश्च महात्मनः। महर्षेश्चापि चरितं कथितं गालवस्य वै। विदुलायाश्च पुत्रस्य प्रोक्तञ्चाप्यनुशासनम्। कर्णदुर्य्योधनादीनां दुष्टं विज्ञाय मन्त्रितम्। योगेश्वरत्वं कृष्णेन यत्र राज्ञां प्रदर्शितम्। रथमारोप्य कृष्णेन यत्र कर्णोऽनुमन्त्रितः। उपायपूर्वं शौटीर्य्यात् प्रत्याख्यातश्च तेन सः। आगम्य हास्तिनपुरादुपप्लव्यमरिन्दम!। पाण्डवानां यथावृत्तं सर्वमाख्यातवान् हरिः। ते तस्य वचनं श्रुत्वा मन्त्रयित्वा च यद्धितम्। सांग्रामिकं ततः सर्वं सज्जञ्चक्रुः परन्तपाः। ततो युद्धाय निर्य्याता नराश्वरथदन्तिनः। नगराद्धास्तिनपुराद्बलसंख्यानमेव च। यत्र राज्ञा उलूकस्य प्रेषणं पाण्डवान् प्रति। श्वो भाविनि महायुद्धे दौत्येन कृतवान् प्रभुः। रथातिरथसंख्यानमम्बोपाख्यानमेव च। एतत्सुबहुवृत्तान्तं पञ्चमं पर्व भारते। उद्योगपर्व निर्दिष्टं सन्धिविग्रहमिश्रितम्। अध्यायानां शतं प्रोक्तं षडशीतिर्महर्षिणा। श्लोकानां षट् सहस्राणि तावन्त्येव शतानि च। श्लोकाश्च नवतिः प्रोक्तास्तथैवाष्टौ महात्मना। व्यासेनोदारमतिना पर्वण्यस्मिंस्तपोधनाः! (५)। (उद्योगपर्व)

"अतःपरं विचित्रार्थं भीष्मपर्व प्रचक्षते। जम्बूखण्डविनिर्माणं यत्रोक्तं सञ्जयेन ह। यत्र यौधिष्ठिरं सैन्यं विषादमगमत् परम्। यत्र युद्धमभूद्घोरं दशाहानि सुदारुणम्। कश्मलं यत्र पार्थस्य वासुदेवो महामतिः। मोहजं नाशयामास हेतुभिर्मोक्षदर्शिभिः। समीक्ष्याधोक्षजः क्षिप्रं युधिष्ठिरहिते रतः। रथादाप्लुत्य वेगेन स्वयं कृष्ण उदारधीः। प्रतोदपाणिराधावद्भीष्मं हन्तुं व्यपेतभीः। वाक्यप्रतोदाभिहतो यत्र कृष्णेन पाण्डवः। गाण्डीवधन्वा समरे सर्वशस्त्रभृतां वरः। शिखण्डिनं पुरस्कृत्य यत्र पार्थो महाधनुः। विनिघ्नन्निशितैर्बाणैरथाद्भीष्ममपातयत्। शरतल्पगतश्चैव भीष्मो यत्र बभूव ह। षष्ठमेतत् समाख्यातं भारते पर्व विस्तृतम्। अध्यायानां शतं प्रोक्तं तथा सप्तदशापरे। पञ्च श्लोकसहस्राणि संख्ययाष्टौ शतानि च। श्लोकाश्च चतुरशीतिरस्मिन् पर्वणि की-

र्त्तिताः। व्यासेन वेदविदुषा संख्याता भीष्मपर्व्वणि (६)। द्रोणपर्व्व ततश्चित्रं बहुवृत्तान्तमुच्यते। सैनापत्येऽभिषिक्तोऽथ यत्राचार्य्यः प्रतापवान्। दुर्य्योधनस्य प्रीत्यर्थं प्रतिजज्ञे महास्त्रवित्। ग्रहणं धर्म्मराजस्य पाण्डुपुत्त्रस्य धीमतः। यत्र संशप्तकाः पार्थमपनिन्यू रणाजिरात्। भगदत्तो महाराजो यत्र शक्रसमो युधि। सुप्रतीकेन नागेन स हि शान्तः किरीटिना। यत्राभिमन्युं बहवो जघ्नुरेकं महारथाः। जयद्रथमुखा बालं शूरमप्राप्तयौवनम्। हतेऽभिमन्यौ क्रुद्धेन यत्र पार्थेन संयुगे। अक्षौहिणीः सप्त हत्वा हतो राजा जयद्रथः। यत्र भीमो महाबाहुः सात्यकिश्च महारथः। अन्वेषणार्थं पार्थस्य युधिष्ठिरनृपाज्ञया। प्रविष्टौ भारतीं सेनामप्रधृष्यां सुरैरपि। संशप्तकावशेषञ्च कृतं निःशेषमाहवे। अलम्बुषः श्रुतायुश्च जलसन्धश्च वीर्य्यवान्। सौमदत्तिर्विराटश्च द्रुपदश्च महारथः। घटोत्कचादयश्चान्ये निहता द्रोणपर्व्वणि। अश्वत्थामापि चात्रैव द्रोणे युधि निपातिते। अस्त्रं प्रादुश्चकारोग्रं नारायणममर्षितः। आग्नेयं कीर्त्त्यते यत्र रुद्रमाहात्म्यमुत्तमम्। व्यासस्य चाप्यागमनं माहात्म्यं कृष्णपार्थयोः। सप्तमं भारते पर्व्व महदेतदुदाहृतम्। यत्र ते पृथिवीपालाः प्रायशो निधनं गताः। द्रोणपर्व्वणि ये शूरा निर्द्दिष्टाः पुरुषर्षभाः। अत्राध्यायशतं प्रोक्तं तथाध्यायाश्च सप्ततिः। अष्टौ श्लोकसहस्राणि तथा नव शतानि च। श्लोका नव तथैवात्र संख्यातास्तत्त्वदर्शिना। पाराशर्य्येण मुनिना संचिन्त्य द्रोणपर्व्वणि (७)।

अतःपरं कर्णपर्व्व प्रोच्यते परमाद्भुतम्। सारथ्ये विनियोगश्च मद्रराजस्य धीमतः। आख्यातं यत्र पौराणं त्रिपुरस्य निपातनम्। प्रयाणे परुषश्चात्र संवादः कर्णशल्ययोः। हंसकाकीयमाख्यानं तत्रैवाक्षेपसंहितम्। वधः पाण्ड्यस्य च तथा अश्वत्थाम्ना महात्मना। दण्डसेनस्य च ततो दण्डस्य च वधस्तथा। द्वैरथे यत्र कर्णेन धर्म्मराजो युधिष्ठिरः। संशयं गमितो युद्धे मिषतां सर्व्वधन्विनाम्। अन्योन्यं प्रति च क्रोधो युधिष्ठिरकिरीटिनोः। यत्रैवानुनयः प्रोक्तो माधवेनार्ज्जुनस्य हि। प्रतिज्ञापूर्व्वकञ्चापि वक्षो दुःशासनस्य च। भित्त्वा वृकोदरो रक्तं पीतवान् यत्र संयुगे। द्वैरथे यत्र पार्थेन हतः कर्णो महारथः। अष्टमं पर्व्व निर्द्दिष्टमेतद्भारतचिन्तकैः। एकोनसप्ततिः प्रोक्ता अध्यायाः कर्णपर्व्वणि। चत्वार्य्येव सहस्राणि नव श्लोकशतानि च। चतुःषष्टिस्तथा श्लोकाः पर्व्वण्यस्मिन् प्रकीर्त्तिताः (८)। (कर्णपर्व्व)

"अतःपरं विचित्रार्थं शल्यपर्व्व प्रकीर्त्तितम्। हतप्रवीरे सैन्ये तु नेता मद्रेश्वरोऽभवत्। यत्र कौमारकाख्यानमभिषेचनकर्म्म च। वृत्तानि रथयुद्धानि कीर्त्त्यन्ते यत्र भागशः। विनाशः कुरुमुख्यानां शल्यपर्व्वणि कीर्त्त्यते। शल्यस्य निधनञ्चात्र धर्म्मराजान्महात्मनः। शकुनेश्च वधोऽत्रैव सहदेवेन संयुगे। सैन्ये च हतभूयिष्ठे किञ्चिच्छिष्टे सुयोधनः। ह्रदं प्रविश्य यत्रासौ संस्तभ्यापो व्यवस्थितः। प्रवृत्तिस्तत्र चाख्याता यत्र भीमस्य लुब्धकैः। क्षेपयुक्तैर्व्वचोभिश्च धर्म्मराजस्य धीमतः। ह्रदात् समुत्थितो यत्र धार्त्तराष्ट्रोऽत्यमर्षणः। भीमेन गदया युद्धं यत्रासौ कृतवान् सह। समवाये च युद्धस्य रामस्यागमनं स्मृतम्। सरस्वत्याश्च तीर्थानां पुण्यता परिकीर्त्तिता। गदायुद्धञ्च तुमुलमत्रैव परिकीर्त्तितम्। दुर्य्योधनस्य राज्ञोऽथ यत्र भीमेन संयुगे। ऊरू भग्नौ प्रसह्याजौ गदया भीमवेगया। नवमं पर्व्व निर्द्दिष्टमेतदद्भुतमर्थवत्। एकोनषष्टिरध्यायाः पर्व्वण्यत्र प्रकीर्त्तिताः। संख्याता बहुवृत्तान्ताः श्लोकसंख्यात्र कथ्यते। त्रीणि श्लोकसहस्राणि द्वे शते विंशतिस्तथा। मुनिना सम्प्रणीतानि कौरवाणां यशोभृता (९)। (शल्यपर्व्व)

"अतःपरं प्रवक्ष्यामि सौप्तिकं पर्व्व दारुणम्। भग्नोरुं यत्र राजानं दुर्य्योधनममर्षणम्। अपयातेषु पार्थेषु त्रयस्तेऽभ्याययू रथाः। कृतवर्म्मा कृपो द्रौणिः सायाह्ने रुधिरोक्षितम्। समेत्य ददृशुर्भूमौ पतितं रणमूर्द्धनि। प्रतिजज्ञे दृढक्रोधो द्रौणिर्यत्र महारथः। अहत्वा सर्व्वपाञ्चालान् धृष्टद्युम्नपुरोगमान्। पाण्डवांश्च सहामात्यान्न विमोक्ष्यामि दंशनम्। यत्रैवमुक्त्वा राजानमपक्रम्य त्रयो रथाः। सूर्य्यास्तमनवेलायामासेदुस्ते महद्वनम्। न्यग्रोधस्याथ महतो यत्राधस्ताद्व्यवस्थिताः। ततः काकान् बहून् रात्रौ दृष्ट्वोलूकेन हिंसितान्। द्रौणिः क्रोधसमाविष्टः पितुर्व्वधमनुस्मरन्। पाञ्चालानां प्रसुप्तानां वधं प्रति मनो दधे। गत्वा च शिविरद्वारि दुर्द्दर्शं तत्र राक्षसम्। घोररूपमपश्यत् स दिवमावृत्य धिष्ठितम्। तेन व्याघातमस्त्राणां क्रियमाणमवेक्ष्य च। द्रौणिर्यत्र विरूपाक्षं रुद्रमाराध्य सत्वरः। प्रसुप्तान्निशि विश्वस्तान् धृष्टद्युम्नपुरोगमान्। पाञ्चालान् सपरीवारान् द्रौपदेयांश्च सर्व्वशः। कृतवर्म्मणा च सहितः कृपेण च

निर्जग्मिवान्। यत्रागच्छन्त ते पार्थाः पञ्च कृष्णबलाश्रयात्। सात्यकिश्च महेष्वासः शेषाश्च निधनं गताः। पाञ्चालानां प्रसुप्तानां यत्र द्रोणसुताद्वधः। धृष्टद्युम्नस्य सूतेन पाण्डवेषु निवेदितः। द्रौपदी पुत्रशोकार्त्ता पितृभ्रातृवधार्दिता। कृतानशनसंकल्पा यत्र भर्तॄनुपाविशत्। द्रौपदीवचनाद्यत्र भीमो भीमपराक्रमः। प्रियं तस्याश्चिकीर्षन् वै गदामादाय वीर्यवान्। अन्वधावत् सुसंक्रुद्धो भारद्वाजं गुरोः सुतम्। भीमसेनभयाद्यत्र दैवेनाभिप्रचोदितः। अपाण्डवायेति रुषा द्रौणिरस्त्रमवासृजत्। नैवमित्यब्रवीत् कृष्णः शमयंस्तस्य तद्वचः। यत्रास्त्रमस्त्रेण च तच्छमयामास फाल्गुनः। द्रौणेश्च द्रोहबुद्धित्वं वीक्ष्य पापात्मनस्तदा। द्रौणिद्वैपायनादीनां शापाश्चान्योन्यकारिताः। मणिं तथा समादाय द्रोणपुत्रान्महारथात्। पाण्डवाः प्रददुर्हृष्टा द्रौपद्यै जितकाशिनः। एतद्वै दशमं पर्व सौप्तिकं समुदाहृतम्। अष्टादशास्मिन्नध्यायाः पर्वण्युक्ता महात्मना। श्लोकानां कथितान्यत्र शतान्यष्टौ प्रसंख्यया। श्लोकाश्च सप्ततिः प्रोक्ता मुनिना ब्रह्मवादिना। सौप्तिकै षीकसम्बद्धे पर्वण्युत्तमतेजसा (१०)। (सौप्तिकपर्व)

"अत ऊर्ध्वमिदं प्राहुः स्त्रीपर्व करुणोदयम्। पुत्रशोकाभिसन्तप्तः प्रज्ञाचक्षुर्नराधिपः। कृष्णोपनीतां यत्रासावायसीं प्रतिमां दृढाम्। भीमसेनद्रोहबुद्धिर्धृतराष्ट्रो बभञ्ज ह। तथा शोकाभितप्तस्य धृतराष्ट्रस्य धीमतः। संसारगहनं बुद्ध्या हेतुभिर्मोक्षदर्शनैः। विदुरेण च यत्रास्य राज्ञ आश्वासनं कृतम्। धृतराष्ट्रस्य चात्रैव कौरवायोधनं तथा। सान्तःपुरस्य गमनं शोकार्त्तस्य प्रकीर्त्तितम्। विलापो वीरपत्नीनां यत्रातिकरुणः स्मृतः। क्रोधावेशः प्रमोहश्च गान्धारीधृतराष्ट्रयोः। यत्र तान् क्षत्रियान् शूरान् संग्रामेष्वनिवर्त्तिनः। पुत्रान् भ्रातॄन् पितॄंश्चैव ददृशुर्निहतान् रणे। पुत्रपौत्रवधार्त्तायास्तथात्रैव प्रकीर्त्तिता। गान्धार्याश्चापि कृष्णेन क्रोधोपशमनक्रिया। यत्र राजा महाप्राज्ञः सर्वधर्मभृतां वरः। राज्ञां तानि शरीराणि दाहयामास शास्त्रतः। तोयकर्मणि चारब्धे राज्ञामुदकदानिके। गूढोत्पन्नस्य चाख्यानं कर्णस्य पृथयात्मनः। सुतस्यैतदिह प्रोक्तं व्यासेन परमर्षिणा। एतदेकादशं पर्व शोकवैक्लव्यकारणम्। प्रणीतं सज्जनमनोवैक्लव्याश्रुप्रवर्त्तकम्। सप्तविंशतिरध्यायाः पर्वण्यस्मिन् प्रकीर्त्तिताः। श्लोकसप्तशती चापि पञ्चसप्ततिसंयुता। संख्यया भारताख्यानमुक्तं व्यासेन धीमता (११) (स्त्रीपर्व)

"अतःपरं शान्तिपर्व द्वादशं बुद्धिवर्द्धनम्। यत्र निर्वेदमापन्नो धर्मराजो युधिष्ठिरः। घातयित्वा पितॄन् भ्रातॄन् पुत्रान् सम्बन्धिमातुलान्। शान्तिपर्वणि धर्माश्च व्याख्याताः शारतल्पिकाः। राजभिर्वेदितव्यास्ते सम्यग्ज्ञानबुभुत्सुभिः। आपद्धर्माश्च तत्रैव कालहेतुप्रदर्शिनः। यान् बुद्ध्वा पुरुषः सम्यक् सर्वज्ञत्वमवाप्नुयात्। मोक्षधर्माश्च कथिता विचित्रा बहुविस्तराः। द्वादशं पर्व निर्दिष्टमेतत् प्राज्ञजनप्रियम्। अत्र पर्वणि विज्ञेयमध्यायानां शतत्रयम्। त्रिंशच्चैव तथाध्याया नव चैव तपोधनाः। चतुर्दशसहस्राणि तथा सप्त शतानि च। सप्त श्लोकास्तथैवात्र पञ्चविंशतिसंख्यया (१२)। (शान्तिपर्व)

"अत ऊर्ध्वं तु विज्ञेयमनुशासनमुत्तमम्। यत्र प्रकृतिमापन्नः श्रुत्वा धर्मविनिश्चयम्। भीष्माद्भागीरथीपुत्रात् कुरुराजो युधिष्ठिरः। व्यवहारोऽत्र कार्त्स्न्येन धर्मार्थीयः प्रकीर्त्तितः। विविधानाञ्च दानानां फलयोगाः प्रकीर्त्तिताः। तथा पात्रविशेषाश्च दानानाञ्च परो विधिः। आचारविधियोगश्च सत्यस्य च परा गतिः। माहाभाग्यं गवाञ्चैव ब्राह्मणानां तथैव च। रहस्यञ्चैव धर्माणां देशकालोपसंहितम्। एतत् सुबहुलाख्यानमुत्तमञ्चानुशासनम्। भीष्मस्यात्रैव सम्प्राप्तिः स्वर्गस्य परिकीर्त्तिता। एतत्त्रयोदशं पर्व धर्मनिश्चयकारकम्। अध्यायानां शतं त्वत्र षट्चत्वारिंशदेव तु। श्लोकानान्तु सहस्राणि प्रोक्तान्यष्टौ प्रसंख्यया (१३)। (अनुशासनपर्व)

"ततोऽश्वमेधिकं नाम पर्व प्रोक्तं चतुर्दशम्। तत् संवर्त्तमरुत्तीयं यत्राख्यानमनुत्तमम्। सुवर्णकोषसम्प्राप्तिर्जन्म चोक्तं परीक्षितः। दग्धस्यास्त्राग्निना पूर्वं कृष्णात् सञ्जीवनं पुनः। चर्य्यायां हयमुत्सृष्टं पाण्डवस्यानुगच्छतः। तत्र तत्र च युद्धानि राजपुत्रैरमर्षणैः। चित्राङ्गदायाः पुत्रेण पुत्रिकाया धनञ्जयः। संग्रामे बभ्रुवाहेन संशयञ्चात्र दर्शितः। अश्वमेधे महायज्ञे नकुलाख्यानमेव च। अनुगीता तथा प्रोक्ता सम्यग्भगवता पुनः। कथितः शाश्वतो धर्मः कृष्णेनार्जुनसन्निधौ। तथा ब्राह्मणगीता च यत्रादौ गुरुशिष्ययोः। इत्याश्वमेधिकं पर्व प्रोक्तमेतन्महाद्भुतम्। अध्यायानां शतञ्चैव त्रयोऽध्यायाश्च कीर्त्तिताः। त्रीणि श्लोकसहस्राणि तावन्त्येव शतानि च। विंशतिश्च तथा

श्लोकाः संख्याताः तत्त्वदर्शिना" (१४ आश्वमेधिकपर्व)।

"ततस्त्वाश्रमवासाख्यं पर्व पञ्चदशं स्मृतम्। यत्र राज्यं समुत्सृज्य गान्धार्या सहितो नृपः। धृतराष्ट्राश्रमपदं विदुरश्च जगाम ह। यं दृष्ट्वा प्रस्थितं साध्वी पृथाप्यनुययौ तदा। पुत्रराज्यं परित्यज्य गुरुशुश्रूषणे रता। यत्र राजा हतान् पुत्रान् पौत्रानन्यांश्च पार्थिवान्। लोकान्तरगतान् वीरानपश्यत् पुनरागतान्। ऋषेः प्रसादात् कृष्णस्य दृष्ट्वाश्चर्यमनुत्तमम्। त्यक्त्वा शोकं सदारश्च सिद्धिं परमिकां गतः। यत्र धर्मं समाश्रित्य विदुरः सुगतिं गतः। सञ्जयश्च महामात्यो विद्वान् गावल्गणिर्वशी। ददर्श नारदं यत्र धर्मराजो युधिष्ठिरः। नारदाच्चैव शुश्राव वृष्णीनां कदनं महत्। एतदाश्रमवासाख्यं पर्वोक्तं महदद्भुतम्। द्विचत्वारिंशदध्यायाः पर्वैतदभिसंख्यया। सहस्रमेकं श्लोकानां पञ्च श्लोकशतानि च। षडेव च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना" (१५ आश्रमवासपर्व)

"अतःपरं निबोधेदं मौषलं पर्व दारुणम्। यत्र ते पुरुषव्याघ्राः शस्त्रस्पर्शहता युधि। ब्रह्मदण्डविनिष्पिष्टाः समीपे लवणाम्भसः। आपाने पानकलिता दैवेनाभिप्रचोदिताः। एरकारूपिभिर्वज्रैर्निजघ्नुरितरेतरम्। यत्र सर्वक्षयं कृत्वा तावुभौ रामकेशवौ। नातिचक्रमतुः कालं प्राप्तं सर्वहरं महत्। यत्रार्जुनो द्वारवतीमेत्य वृष्णिविनाकृताम्। दृष्ट्वा विषादमगमत् परां चार्त्तिं नरर्षभः। स संस्कृत्य नरश्रेष्ठं मातुलं शौरिमात्मनः। ददर्श यदुवीराणामापाने वैशसं महत्। शरीरं वासुदेवस्य रामस्य च महात्मनः। संस्कारं लम्भयामास वृष्णीनाञ्च प्रधानतः। स वृद्धबालमादाय द्वारवत्यास्ततो जनम्। ददर्शापदि कष्टायां गाण्डीवस्य पराभवम्। सर्वेषाञ्चैव दिव्यानामस्त्राणामप्रसन्नताम्। नाशं वृष्णिकलत्राणां प्रभावाणामनित्यताम्। दृष्ट्वा निर्वेदमापन्नो व्यासवाक्यप्रचोदितः। धर्मराजं समासाद्य सन्न्यासं समरोचयत्। इत्येतन्मौषलं पर्व षोडशं परिकीर्त्तितम्। अध्यायाष्टौ समाख्याताः श्लोकानाञ्च शतत्रयम्। श्लोकानां विंशतिश्चैव संख्याता तत्त्वदर्शिना" (१६ मौषलपर्व)।

"महाप्रस्थानिकं तस्मादूर्द्ध्वं सप्तदशं स्मृतम्। यत्र राज्यं परित्यज्य पाण्डवाः पुरुषर्षभाः। द्रौपद्या सहिता देव्या महाप्रस्थानमास्थिताः। यत्र तेऽग्निं ददृशिरे लौहित्यं प्राप्य सागरम्। यदाग्निना चोदितश्च पार्थस्तस्मै महात्मने। ददौ सम्पूज्य तद्दिव्यं गाण्डीवं धनुरुत्तमम्। यत्र भ्रातॄन् निपतितान् द्रौपदीञ्च युधिष्ठिरः। दृष्ट्वा हित्वा जगामैव सर्वाननवलोकयन्। एतत् सप्तदशं पर्व महाप्रस्थानिकं स्मृतम्। यत्राध्यायास्त्रयः प्रोक्ताः श्लोकानाञ्च शतत्रयम्। विंशतिश्च तथा श्लोकाः संख्यातास्तत्त्वदर्शिना"। (१७ महाप्रस्थानिकपर्व)।

"स्वर्गपर्व ततो ज्ञेयं दिव्यं यत्तदमानुषम्। प्राप्तं दैवरथं स्वर्गान्नेष्टवान् यत्र धर्मराट्। आरोढुं सुमहाप्राज्ञ आनृशंस्याच्छुना विना। तामस्याविचलां ज्ञात्वा स्थितिं धर्मे महात्मनः। श्वरूपं यत्र तत्त्यक्त्वा धर्मेणासौ समन्वितः। स्वर्गं प्राप्तः स च तथा यातनां विपुलां भृशम्। देवदूतेन नरको यत्र व्याजेन दर्शितः। शुश्राव यत्र धर्मात्मा भ्रातॄणां करुणा गिरः। निदेशे वर्त्तमानानां देशे तत्रैव वर्त्तताम्। अनुदर्शितश्च धर्मेण देवराजेन पाण्डवः। आप्लुत्याकाशगङ्गायां देहं त्यक्त्वा स मानुषम्। स्वधर्मनिर्ज्जितं स्थानं स्वर्गे प्राप्य स धर्मराट्। मुमुदे पूजितः सर्वैः सेन्द्रैः सुरगणैः सह। यत्रैष नरकप्राप्तिः प्रमोक्षश्चात्र कीर्त्त्यते। समागमश्च वीराणां स्वर्गलोके महात्मना। कीर्त्त्यते यत्र विधिवत् स्वर्गसंवाद एव च। यानि स्थानानि च प्राप्ता यत्र ते पुरुषर्षभाः। एतदष्टादशं पर्व प्रोक्तं व्यासेन धीमता। अध्यायाः पञ्च संख्याताः पर्वण्यस्मिन्महात्मना। श्लोकानां द्वे शते चैव प्रसंख्याते तपोधनाः। नव श्लोकास्तथैवान्ये संख्याताः परमर्षिणा। (१८ स्वर्गारोहणिकपर्व)।

अष्टादशैवमेतानि पर्वाण्युक्तान्यशेषतः। खिलेषु हरिवंशश्च भविष्यच्च प्रकीर्त्तितम्। विष्णुपर्व शिशोश्चर्या विष्णोः कंसवधस्तथा। भविष्यं पर्व चाप्युक्तं खिलेष्वेवाद्भुतं महत्। दश श्लोकसहस्राणि विंशत् श्लोकशतानि च। खिलेषु हरिवंशे च संख्यातानि महर्षिणा"। "भारतं स्नुवाचिन्त्य भारतं परिकीर्त्तयेत्। भारतं भवने यस्य तस्य हस्तगतो जयः" भा०आ० १अ०। भरतस्य अपत्यादि शुभ्रा० ढक्। भारतेय तदपत्यादौ पुंस्त्री०।

**भारतवर्ष** पुंन० जम्बुद्वीपान्तर्गते वर्षभेदे जम्बुद्वीपशब्दे ३०४६ पृ० दृश्यम्।

**भारती** स्त्री भ-अतच्। स्वार्थे प्रज्ञाद्यण्। १वाक्ये तदधिदेवतायां २सरस्वत्यां ३पक्षिभेदे "भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः" इति सा०द० व्यवहारोक्ते

४ऋत्विग्भेदे च ५लक्ष्याविनाशुपाधिभेदे च स्त्री ।

**भारद्वाज** पु० भरद्वाजस्य गोत्रापत्यम् अण् । गोत्रप्रवर्त्तके १मुनिभेदे २द्रोणाचार्य्ये मेदि० ३अगस्त्यमुनौ शब्दर० ४व्याघ्राटविहगे ५बृहस्पतिपुत्रे च हेमच० ६वनकार्पास्यां स्त्री ङीप् । पृषो० । भाद्वाजोऽप्यत्र । विदा० अञ् ततः यञा० फक् । भारद्वाजायन तद्गोत्रापत्ये पुंस्त्री० । स्त्रियां ङीप् । भारद्वाजी इत० । भारद्वाजीपुत्र तत्पुत्रे च च यजुर्वेदस्य वंशस्थः ऋषिभेदः शत०ब्रा० १४।८।४।२।

**भारभृत्** त्रि० भारं बिभर्त्ति भृ–क्विप् । १भारधारके । २विष्णौ पु० "भारभृत् कथितो योगी" विष्णु स०।

**भारमेय** त्रि० भारमस्येदम् यञ्जा० ढक् । भरमसम्बन्धिनि स्त्रियां ङीप् ।

**भारय** पु० भासा रयो वेगो यस्य ।(भारद्र) खगभेदे शब्दच०।

**भारयष्टि** स्त्री भारस्य वहनार्थो यष्टिः शाक०त०। भारवहन-दण्डे (बाँक) अमरः ।

**भारव** न० भारं वाति वा–क । धनुर्गुणे त्रिका० ।

**भारवाह(ह्)** त्रि० भारं वहति अण् क्विप् वा । भार-वाहिनि पशु । भारवाहकोऽप्यत्र । अमरः स्त्रियां ङीप् क्विप्प्रत्ययान्तस्य यथादापञ्जादौ ङीपि च ऊठ् । भारौहः भारौही ।

**भारवि** पु० किरातार्जुनीयकाव्यकारके १कविभेदे । "तावद्भा भारवेर्भाति यावन्माघस्य नोदयः । उदिते च पुनर्माघे भारवेर्भा रवेरिव" उद्भटः । तत्कृते २काव्ये च "उपमा कालिदासस्य भारवेरर्थगौरवम्" उद्भटः ।

**भारवृक्ष** पु० भारीभूतो वृक्षः । काचौलाभगन्धद्रव्ये शब्दच०

**भार(र)हार** त्रि० भारं हरति हृ–अण् अच् वा । भार-वाहके तथात्वद्योतने अण् । उद्यमने तु अण् इतिभेदः ।

**भाराक्रान्त** त्रि० इत० । १भारेणाक्रान्ते "भाराक्रान्ता नमन-रमणा गुरुः श्रुतिरमहोवैः" छन्दोम०उक्ते २सप्तदशाक्षर-पादके वर्णवृत्तभेदे स्त्री ।

**भारि** पु० हरिद्रादिः पृषो० । सिंहे हेमच० ।

**भारिक** त्रि० भारं वहति भार+ठक् । भारवाहके अमरः

**भारिट** पु० भासा रेटति रिट–क । भरद्वाजपक्षे खगभेदे राजनि० ।

**भारिन्** त्रि० भारोऽस्त्यस्य प्राशस्त्येन इनि । भारवाहके बलवत्परस्य चावापन्नस्य पुत्रः । भारभारी । "शक्तिमा-तायभारिणः" काव्याद० ।

**भारुण्ड** पु० उत्तरकुरुवर्त्तिनि १खगभेदे तद्वृत्तान्ते "भारुण्डा-नाम शकुनास्तीक्ष्णतुण्डा भयानकाः । तान्निर्हरन्तीह मृतान् दरीषु प्रक्षिपन्ति च" भा०भी० ७अ० । २सामभेदे तत्र भारुण्डेति पाठभेदः । तत्सामद्रष्टरि ३ऋषिभेदे "भा-रुण्डसामगीताभिरथर्वशिरसोद्गतैः" भा०शा० ६७ अ० । तत्र सामार्च्चिके १।२।२ "इमं स्तोममर्हते" इत्यादिमन्त्रे गेयं साम, तत्कृत उक्थादागानादिसूत्रतो १०४ पृ०दृश्यम् । "भारुण्डोक्तानि सामानि शान्तिकं भारुणानि च । पश्चिमे द्वारपालौ तु पठेतां सामगौ तथा" विधानपा० ।

**भारूप** न० भारूपमस्य । विदारके १मल्लिकि २आत्मनि पु० ।

**भार्ग** पु० भर्गस्य देशभेदस्य राजा अण् । १भर्गदेशनृपे तत्र तद्राजस्य भार्गी० स्त्रियां न लुक् । भार्गी । २प्रतर्द्दनस्य पुत्रभेदे पु० हरिवं० २९ अ० ।

**भार्गभूमि** पु० आङ्गिरसे भार्गेयपुत्रभेदे हरिवं० ३२अ० ।

**भार्गव** पुंस्त्री० भृगोरपत्यम् तद्गोत्रापत्यं वा अण् । १भृगु-वंश्ये बहुत्वे तु भृग्वत्रीत्यादिना अणो लुक् । भृगवः तद्गोत्रापत्येषु । २शुक्राचार्य्ये ३धन्विनि ४गजे च पु० मेदि० । तेन प्रोक्ता तेनाधीता ज्ञाता वा अण् । ५वेदप्रसिद्धे विद्याभेदे ६पार्वत्यां ७लक्ष्म्यां ८दूर्वायां च स्त्री मेदि० ङीप् । प्राच्ये ९देशभेदे पु० । "ब्रह्मो-त्तराः प्रविजया भार्गवास्तेयमल्लकाः" मार्कपु०। १०द्रुपद-नगरस्थे कुम्भकारभेदे पु० भा०आ०१९०अ०। ११महर्षिभेदे पु० भा० द्रो० २०१अ० ।

**भार्गवन** न० द्वारकास्थे वनभेदे हरिवं० १९७ अ० ।

**भार्गवप्रिय** पु० ६त० । हीरके तस्य शुक्रग्रहप्रियत्वात् तथात्वम् ।

**भार्गायण** पुंस्त्री० भर्गस्य गोत्रापत्यं त्रैगर्त्तैः फञ् । त्रैगर्त्ते° [भर्गगोत्रापत्ये ।

**भार्गी** स्त्री भार्गस्येव वर्णः । (बामनहाटि)क्षुपभेदे राजनि० ।

**भार्म्य** पु० भर्म्यस्य गोत्रापत्यं गर्गा०यञ् । मुद्गलगोत्रे नृपभेदे भाग० ९।२१।२४।

**भार्य्या** स्त्री भृ–ण्यत् । १विधिनोढायां स्त्रियाम् २स्त्रीमात्रे ३भरणीयमात्रे त्रि०। भार्य्याशब्दश्च यूपाहवनीयादिवत् अ-लौकिकसंस्कारसहितस्त्रीबोधकः । तस्याः गुणदोषा यथा "सा भार्य्या या गृहे दक्षा सा भार्य्या या प्रियंवदा । सा भार्य्या या पतिप्राणा सा भार्य्या या पतिव्रता । नित्यस्नाता सुगन्धा च नित्यञ्च प्रियवादिनी । अल्पभुक् अल्पभाषी च सततं मङ्गलैर्युता । सततं धर्मबहुला सततञ्च पतिप्रिया । सततं प्रियवक्त्री च सततं भर्त्तृ-कामिनी । पितृदेवक्रियायुक्ता सर्वसौभाग्यवर्द्धिनी ।

यस्यैषा भवेद्भार्य्या देवेन्द्रो न च मानुषः” ।
“यस्य भार्य्या विरूपाक्षी कश्मला कलहप्रिया। उत्तरोत्तरवादा स्यात् सा जरा न जरा जरा। यस्य भार्य्या श्रिताऽन्यञ्च परवेश्माभिकाङ्क्षिणी। कुक्रिया त्यक्तलज्जा च सा जरा न जरा जरा। यस्य भार्य्या गुणज्ञा च भर्त्तारमनुगामिनी। अल्पाल्पेन तु सन्तुष्टा सा प्रिया न प्रिया प्रिया। दुष्टा भार्य्या शठो मित्रं भृत्याश्चोत्तरदायकाः। ससर्पे च गृहे वासो मृत्युरेव न संशयः। आपत्सु मित्रं जानीयात् युद्धे शूरं धने शुचिम्। भार्य्याञ्च विभवे क्षीणे दुर्भिक्षे च प्रियातिथिम्”। गारुडे १०८।१०९ अ०। “वृहस्पतिवाक्य “यस्य नास्ति सती भार्य्या गृहेषु प्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। सुशीला सुन्दरी शान्ता गता यस्य गृहोदरात्। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भावानुरक्ता वनिता मृता यस्य च मानुषा। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। दैवेनापहृता यस्य पतिसाध्वी पतिव्रता। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। यस्य माता गृहे नास्ति भार्य्या चाप्रियवादिनी। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। प्रियाशून्यं गृहं यस्य पूर्णं चौधनबन्धुभिः। अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्। भार्य्याशून्या वनसमाः सभार्य्याश्च गृहा गृहाः। गृहिणी च गृहं प्रोक्तं न गृहं गृहमुच्यते। अशुचिः स्त्रीविहीनश्च दैवे पैत्रे च कर्मणि। यदह्ना कुरुते कर्म न तस्य फलभाग्भवेत्। दाहकशक्तिहीनश्च यथा वह्निः कृतावनः। प्रभाहीनो यथा सूर्य्यः शोभाहीनो यथा शशी। शक्तिहीनो यथा जीवो यथात्मा च तनुं विना। विनाधारं यथाधेयो यथेशः प्रकृतिं विना। न च शक्तो यथा यज्ञः फलदो दक्षिणां विना। कर्मिणे च फलं दातुं सामग्रीमूलमेव च। विना स्वर्णं स्वर्णकारो यथाऽशक्तः स्वकर्मणि। यथाऽशक्तः कुलालश्च मृत्तिकाञ्च विना द्विजाः!। तथा गृही न शक्तश्च सततं सर्वकर्मणि। भार्य्यामूलाश्च पुत्राश्च भार्य्यामूला गृहाश्रमाः। भार्य्यामूलं सुखं शश्वद् गृहस्थानां गृहे सदा। भार्य्यामूलो सदा हर्षः भार्य्यामूलश्च मङ्गलम्। भार्य्यामूलश्च संसारो भार्य्यामूलञ्च सौरतम्। यथा रथश्च रथिनां गृहिणाञ्च तथा गृहम्। सारथिश्च यथा तेषां गृहस्थानां तथा प्रिया। सर्वरत्नप्रधाना च स्त्रीरत्नं दुष्कुलादपि। सा गृहीता गृहस्थेनैवेत्याह कमलोद्भवः। यथा जलं विना पद्मं पद्मं शोभां विना यथा। तथैव च गृहं शश्वद् गृहिणां गृहिणीं विना”। ब्रह्मवै०पु० प्र० ख० ५६ अ०। “तोषयेत् सततं भार्य्यां विधिवत् पाणिपीडिताः। तस्यां तुष्टायां तु कल्याणमकल्याणमतोऽन्यथा। सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च। यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम्। यथा विरूढाते स्वामी सौभाग्यमदहप्तया। असतीत्वञ्च कर्त्तुं सा स्याद्वेश्या भवान्तरे। इहापि लोकेऽवाच्यत्वमधर्मञ्चापि विन्दति। न च पितृकुलं स्वामिकुलं तस्याः प्रमोदते। विरुध्यमाने पत्यौ यत् सपत्न्या वा प्रवर्त्तते। अतीव दुःखं भवति तदकल्याणमनयोः” कालिकापु० २० अ०।

भार्य्याट पु० भार्य्यां तद्दानमटति अट अण् उप० स०। अन्यस्मै सभार्य्यादानार्थं गन्तरि त्रिका०।

भार्य्याटिक पु० भार्य्यया आटो गतिः प्रयोजनमस्य ठक्। १मुनिभेदे २हरिणभेदे च मेदि०।

भार्य्यारु पु० भार्य्यं धार्य्यमृच्छति ऋ-उण्। १शैलभेदे २हरिणभेदे। भार्य्यां परभार्य्यामृच्छति ऋ-उण्। ३अनियोगेन परभार्य्यागामिनि च मेदि०।

भार्य्यावृक्ष पु० भार्य्येव प्रियत्वात् वृक्षो यस्य ’ पतङ्गे राजनि०। [अर्द्धभार्य्यो वे

भार्य्योढ़ पु० ऊढा भार्य्या येन आहिता० वा परनिपातः।

भाल न० भा-लच्। १ललाटे भ्रुवोरूर्द्ध्वभागे २तमसि मेदि०।

भालकृत् पु० गोत्रप्रवर्त्तिभेदे प्रवराध्यायः।

भालचन्द्र पु० भाले चन्द्रोऽस्य। १शिवे २गणेशे ३दुर्गायां स्त्री

भालदर्शन न० भाले दृश्यते कर्मणि ल्युट्। १सिन्दूरे भालस्थ० भाले दर्शनं नेत्रमस्य। २कपाललोचने महादेवे।

भालदृश् पु० भाले दृगस्य। त्रिनयने महादेवे हेमच०।

भालनेत्र पु० भाले नेत्रमस्य। १शिवे। भाललोचनादयोऽप्यत्र। २त्रिनयनायां दुर्गायां स्त्री।

भालाङ्क पु० भाललेखाङ्को यस्य भाले अङ्को यस्य वा। १शाकभेदे २करपत्रेऽस्त्रे (करात्) ३रोहितमत्स्ये ४महालक्षणविशेष ललाटचिह्नयुक्ते ४पुरुषभेदे ५शिवे ६कच्छपे च मेदि०। [उज्ज्वल०।

भालु पु० भाति दीप्यते भा-कु। उदयने ऊष् रश्च वः। आदित्ये

भालु(लू)क पुंस्त्री० ठु० भल-अवरोधे ऊक ऊक वा। ... -

र्मिकः शुचिः । नित्यप्रवासी चोत्साही सात्त्विको धार्मिकः शुचिः४ । शयने चैव यो जातो नानारोगैर्धनक्षयः । हन्ताघाती महाक्रोधी पिशुनः परनिन्दकः५ । यो जातो गमनेच्छायां बहुपुत्रो महाधनः । पण्डितो गुणवान् दाता जायते च नरोत्तमः६ । सभायाञ्च यदा जातः कृपणो धनसंयुतः । नानागुणेन गुणवान् धार्मिकः पण्डितः शुचिः७ । आगमने च यो जातो लम्पटो बहुभाषकः । बहुबन्धुविनाशः स्याद्दानाढ्योऽपि च जायते८ । भोजने च महादुष्टो मन्दाग्निश्च रुजान्वितः । कृपणः कटुवाक्यश्च दुःखितो नित्यसेवकः९ । यो जातो नृत्यलिप्सायां खड्गो भवति नान्यथा । पुत्रनाशो भवेत्तस्य जायानाशो भवेद् ध्रुवम्१० । कौतुके च यदा जातो गुणैः सर्वैः समन्वितः । नानाधनेन धनवान् राजसेवासु तत्परः । यदि दैवाद् भवेत् षष्ठी स्वष्टमी वा कदाचन । तदा सर्वं वैपरीत्यं जायते च न संशयः११ । यो जातो राहुनिद्रायां दुःखितः सर्वतः सदा । नानास्थाने गतो वापि धनपुत्रविवर्जितः । जायायाश्च मृतस्थाने जातो निद्रां विधुन्तुदः । तदा सर्वं वैपरीत्यं गतआयासमन्वितः१२ । राहोः एवं केतूनाम् । २२वैशेषिकोक्तेषु द्रव्यगुणकर्मसामान्यविशेषसमवायात्मकेषु षट्सु पदार्थेषु "द्रव्यादयः षड् भावा अनेके समवायिनः" भाषा॰ "तथा हि पदार्थो द्विविधः भावोऽभावश्च । तत्र भावाः षट् सप्तमस्याभावस्य कीर्तनात्" सि॰मु॰ । अभाव एक इति पदार्थाः सप्त । तत्र द्रव्यादिपञ्चकस्य अनेकत्वविशिष्टं भावत्वं साधर्म्यं समवायस्य भावत्वेऽपि एकत्वात् न तत्र तत्सङ्गः । तत्र च द्रव्यादिषट्कान्यतमत्वम् भावत्वमिति सि॰मु॰ । सत्तावत्त्वमित्यपि दिनकरप्रभृतयः । सत्तावत्त्वं च तत्र सम्बन्धेन तादात्म्येन एकार्थसमवायेन वा बोध्यम् । तेन द्रव्यादित्रिके समवायेन, सत्तायां तादात्म्येन विशेषे एकार्थसमवायेन, समवाये आत्माश्रयसमवायेन [illegible] विशेषेण सत्तासम्बन्धसत्त्वान्नाव्याप्तिः" । 'भावो यथा तथाऽभावः कार्यवत्कारणं मतः' कुसुमा॰ ।

भू-णिच् [illegible] करणे अच् । २३अन्तःकरणे "भावदुष्टो न शुध्यति" वा॰ त॰ । २४तन्त्रोक्ते पश्वाचारादिभेदे "भावस्तु त्रिविधो देवि ! दिव्यवीरपशुक्रमात् । दिव्यवीरौ महाभावौ अधमः पशुभावकः । देवतः पशुभावेन पूजयेत् परमेश्वरम् । [illegible] वरारोहे ! पशुभावो महाधमः । दिव्ये वीरे महेशानि ! जायते सिद्धिरुत्तमा" । धात्वर्थेन साध्यरूपायाः क्रियाया भावत्वमुक्तं यथा "ननु यत्रोभे भावप्रधाने भवतः पूर्वापरीभूतं भावमाख्यातेनाचष्टे व्रजति पचतीत्युपक्रमप्रभृत्यपवर्गपर्यन्तं, मूर्तं सत्त्वभूतं सत्त्वनामभिर्व्रज्या पक्तिरित्यादिभिः अदःसामान्याश्रुतेर्यो गौरश्वः पुरुषो हस्तीति भवतीति भावस्य, आस्ते शेते व्रजति तिष्ठतीति" । आलङ्कारिकोक्तभावस्य द्विविधता स्थायिव्यभिचारिभेदात् तच्छब्दे दृश्यम् । २५[illegible]सङ्केतपदार्थद्योतकहस्तादिचेष्टाभेदे च । "यस्य च क्रियया क्रियान्तरं लक्ष्यते स भावः" इति व्याकरणपरिभाषिते २६पदार्थे च तत्र च सप्तमीत्याकरे स्थितम् । भवतीति भू-कर्त्तरि ण । २७उत्पत्तियुते षड्विकारयुते च पदार्थे॰ भावविकारशब्दे दृश्यम् । २८सांख्यमतसिद्धेषु धर्माधर्मादिषु बुद्धिधर्मेषु "संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" सां॰का॰ । "भावैरधिवासितं धर्माधर्मज्ञानाज्ञानवैराग्यावैराग्यैश्वर्यानैश्वर्याणि भावास्तदन्विता बुद्धिः तदन्वितञ्च सूक्ष्मशरीरमिति तदपि भावैरधिवासितं यथा सुरभिचम्पककुसुमसम्पर्काद्वस्त्रं तदामोदवासितं भवति तस्माद्भावैरधिवासितत्वात् संसरति" तत्त्वकौ॰ । तेषां करणाश्रितत्वं कार्याश्रितत्वञ्च दर्शितं यथा "सांसिद्धिकाश्च भावाः प्राकृतिका वैकृतिकाश्च धर्माद्याः । दृष्टाः करणाश्रयिणः कार्याश्रयिणश्च कललाद्याः" सां॰ का॰ "वैकृतिका नैमित्तिकाः प्राकृतिकाः, स्वाभाविकाः सांसिद्धिकाः भावाः यथा सर्गादावादिविद्वान् भगवान् कपिलो महामुनिर्धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः प्रादुर्बभूवेति स्मरन्ति । वैकृतिकाश्च भावाः असांसिद्धिकाः उपायानुष्ठानोत्पन्नाः यथा प्राचेतसप्रभृतीनां महर्षीणाम् । एवमधर्माज्ञानावैराग्यानैश्वर्याण्यपि । कार्यं शरीरं तदाश्रयिणस्तस्यावस्थाः कललबुद्बुदमांसपेशीकरण्डाङ्गप्रत्यङ्गव्यूहाः गर्भस्थस्य, ततो निर्गतस्य बालस्य बाल्यकौमारयौवनवार्द्धकानीति" त॰ कौ॰ । २९तत्तत्पदार्थाधारत्वे धर्मे च "भावे त्वतलौ" पा॰ । भावशब्देनाधाराधेयधर्म उच्यते । स च तद्धितराहित्ये [illegible] यथा गोत्वमित्यादौ भावार्थकत्वप्रत्ययेन गवेतराहित्ये सति सकलगोव्यक्तिवृत्तिधर्मो बोध्यते ।

**भावक** पु॰ भाव+स्वार्थे क । १भावशब्दार्थे मनोविकारे शब्दा॰ । भू-भावि-वा ण्वुल् । २सत्ताश्रये ३उत्पादके च त्रि॰ ।

**भावत** त्रि॰ भू-शतृ भवत् तस्येदम् अण् । [illegible]सम्बन्धिनि स्त्रियां ङीप् ।

**भावत्क** त्रि० युष्मदर्थकात् भवच्छब्दात् इदमर्थे पक्षे ठक् । भवतष्ठक्छसाविति पक्षे ठक् । सित्त्वात् पदत्वम् । भवदीय तदर्थे त्रि० ।

**भावन** न० भू–णिच्–ल्यु । (भावना) फलभेदे २विष्णौ पु० । भावे ल्युट् । ३अधिवासने ४चिन्तायाम् ५ध्याने ६पर्य्यालोचनायां वैद्यकोक्ते ७औषधसंस्कारभेदे । भावि–युच् । “व्यापारो भावना सैवोत्पादना सैव च क्रिया” इत्युक्ते धर्मविनिर्भजनात् ८व्यापारभेदे स्त्री मञ्जूषायां दृश्यम् । अनुभवजन्ये स्मृतिहेतौ ९संस्कारभेदे स्त्री । “संस्कारभेदो वेगोऽथ स्थितिस्थापकभावने” “अतीन्द्रियोऽसौ विज्ञेयः क्वचित् स्पन्देऽपि कारणम् । भावनाख्यस्तु संस्कारो जीववृत्तिरतीन्द्रियः । उपेक्षानात्मकस्तस्य निश्चयः कारणं भवेत् । स्मरणे प्रत्यभिज्ञायामप्यसौ हेतुरुच्यते” भाषाप० । “भावनाख्य इति । तस्य संस्कारस्य, उपेक्षात्मकज्ञानात् संस्कारानुत्पत्तेरुपेक्षानात्मकनिश्चय इत्युक्तम् । तेनोपेक्षान्यनिश्चयत्वेन संस्कारं प्रति हेतुतेति भावः । ननु कारणं त्वनुपेक्षान्यनिश्चयत्वेन हेतुत्वं तेनोपेक्षात्मकत्वे न कारणम् इत्यत्र संस्कारं प्रति ज्ञानत्वेनैव हेतुतास्त्विति चेन्न विनिगमनाविरहेणापि संस्कारं प्रति उपेक्षान्यनिश्चयत्वेन हेतुतायाः सिद्धत्वात् । किञ्च उपेक्षास्थले संस्कारकल्पनाया गुरुत्वात् संस्कारं प्रति चोपेक्षान्यत्वेन हेतुतायाः सिद्धत्वात् । तत्र प्रमाणं दर्शयति । स्मरणे इति । असौ संस्कारः स्मरणं प्रत्यभिज्ञानञ्च जनयति । अतः संस्कारः कल्प्यते । विना व्यापारं पूर्वानुभवस्य स्मरणादिजननासामर्थ्यं स्वव्यापारान्तराभावे कारणत्वासम्भवात् । न च प्रत्यभिज्ञां प्रति तत्तत्संस्कारस्य हेतुत्वेन प्रत्यभिज्ञायाः संस्कारजन्यत्वेन घटितत्वापत्तिरिति वाच्यम् । अप्रयोजकत्वात् । परे तु अनुद्बुद्धसंस्कारात् प्रत्यभिज्ञानुदयादुद्बुद्धसंस्कारस्य हेतुत्वापेक्षया तत्तत्स्मरणस्यैव प्रत्यभिज्ञां प्रति हेतुत्वं कल्प्यत इत्याहुः” सि०मु० । भ–चिन्तायां युच् । १०चिन्तायां स्त्री । चिन्ता च मानसव्यापारभेदः सा च त्रिविधा यथोक्तं विष्णुपु० ६अं० ७अ० । “त्रिविधा भावना विप्र ! विश्वमेतन्निबोधत । ब्रह्माख्या कर्मसंज्ञा च तथा चैवोभयात्मिका । ब्रह्मभावात्मिका ह्येका कर्मभावात्मिका परा । उभयात्मिका तथैवान्या त्रिविधा भावभावना । सनन्दनादयो ब्रह्मभावभावनया युताः । कर्मभावनया चान्ये देवाद्याः स्थावराश्चराः । हिरण्यगर्भादिषु च ब्रह्मकर्मात्मिका द्विधा । बोधाधिकारयुक्तेषु विद्यते भावभावना” । बुधचन्द्रदर्शितं बौद्धमतसिद्धभावनाचतुष्टयञ्च दृश्यम् । पु० भू–णिच् भावे युच् । ११निर्यासादिना चूर्णद्रव्यस्य पिण्डीकरणे चूर्णद्रव्यस्य निर्यासादिना संस्कारभेदो भावना तत्प्रमाणञ्चोक्तं भावप्र० यथा
“द्रवेण यावता सम्यक् चूर्णं सर्वं प्लुतं भवेत् । भावनायाः प्रमाणन्तु चूर्णे प्रोक्तं भिषग्वरैः” ।

**भावबोधक** पु० भावस्य रत्यादेर्बोधकः ज्ञापकः । रत्याद्यनुभावके १भ्रूभङ्गादिदेहचेष्टाविशेषे २सुखरागादौ च अमरः ।

**भावयु** त्रि० भावमिच्छति क्यच् उन् वेदे नि० । भावेच्छौ । ऋ० १०।८६।१९ । [ङीप् ।

**भाववत्** त्रि० भाव+अस्त्यर्थे मतुप् मस्य वः । भावयुते स्त्रियां

**भावविकार** पु० ६त० । वाक्योक्तेषु उत्पत्तियुक्तपदार्थस्य जन्मादिषु षट्सु धर्मेषु “षड्भावविकारा भवन्तीति वार्ष्यायणिः, जायतेऽस्ति विपरिणमते वर्धतेऽपक्षीयते विनश्यतीति, जायत इति पूर्वभावस्यादिमाचष्टे नापरभावमाचष्टे न प्रतिषेधति अस्तीत्युत्पन्नस्य सत्त्वस्यावधारणं, विपरिणमत इत्यप्रच्यवमानस्य तत्त्वाद्विकारं, वर्धत इति स्वाङ्गाभ्युच्चयं, सांयौगिकानां वार्थानां, वर्धते विजयेनेति वा वर्धते शरीरेणेति वा, अपक्षीयत इत्येतेनैव व्याख्यातः प्रतिलोमं, विनश्यतीत्यपरभावस्यादिमाचष्टे न पूर्वभावमाचष्टे न प्रतिषेधति” ।

**भाववृत्त** पु० भावे वृत्तः प्रवृत्तः भावो वृत्तो जातो यस्माद्वा । सृष्टिकर्त्तरि ब्रह्मणि “अनुष्टुप् च भवेच्छन्दो भाववृत्तस्तु दैवतम्” स्मृतिः ।

**भावाट** पु० भावं भावेन वा अटति अट–अण् अच् वा । १भावके २साधौ ३धाष्टे ४नटे ५निवेशे च मेदि० । भावे घञ् ६त० ६भावव्याप्तौ ।

**भावानुगा** स्त्री भावं पदार्थमात्रं वानुगच्छति गम–ड । १छायायाम् २अभिप्रायानुगन्तरि त्रि० राजनि० ।

**भावालीना** स्त्री भावे पदार्थे आलीना । छायायां राजनि० ।

**भाविक** त्रि० भावेन निर्वृत्तम् ठञ् । १भावसाध्ये पदार्थे २अर्थालङ्कारभेदे ४०१ पृ० दृश्यम् ।

**भावित** त्रि० चु०भू–प्राप्तौ चिन्तायां मिश्रणे वा कर्मणि क्त । १वासिते २प्राप्ते मेदि० । ३शुद्धे ४चिन्तिते ५मिश्रिते वैद्यकोक्तनिर्यासादिना मिश्रिते ६वृष्टौ च । वीजग० उक्ते अव्यक्तानेकवर्णसमीकरणेन ७अव्यक्तीकरणे ।

८देवगन्धर्वभेदे भा० आ० ६५ अ० । ९आङ्गिरसे वह्निभेदे भा० व० २१९ अ० । १०दानवभेदे भा० आ० २२७ अ० । ११अमावसुवंश्ये नृपभेदे हरिवं० २७ अ० । सात्वतवंश्ये १२नृपभेदे हरिवं० ९५ अ० । १३विदर्भाधीशे नृपभेदे दमयन्तीपितरि तत्कथा भा० व० ५१ अ० । १४अष्टादशाक्षरच्छन्दोभेदे "आदौ मध्ये तथा चान्ते चतुरक्षयुतो नतः । ख्यातश्चो भीम इत्येव सः अष्टादशाक्षरः" छन्दोम० ।

**भीमक** पु० पार्वत्यारोषजाते गणभेदे हरिवं० १६८अ० ।

**भीमजानु** पु० यवनभाषया नृपभेदे भा० स० ८अ० ।

**भीमतिथि** स्त्री भीमोपासिता तिथिः शा०त० । भीमैकादश्याम् माघशुक्लैकादश्याम् ।

**भीमद्वादशी** स्त्री भीमोपासिता द्वादशी १माघशुक्लद्वादश्याम् तत्र भीमसेनकृते २व्रतभेदे च हेमा० व्र० पद्मपु० ।

**भीमनाद** पु०६ब० । १सिंहे शब्दच०, वर्म० । २भयानकशब्दे पु० ।

**भीमपराक्रम** त्रि० भीमः पराक्रमोऽस्य । १भयानकपराक्रमे २विष्णौ पु० "भीमो भीमपराक्रमः" विष्णुस० ।

**भीमपुर** न० ६त० । विदर्भराजस्य नगरे कुण्डिनपुरे भीमनगरादयोऽप्यत्र ।

**भीमबल** त्रि० ६ब० । १भयानकवीर्ये २धृतराष्ट्रपुत्रभेदे पु० भा० आ० ११७ अ० । ३वह्निभेदे पु० भा० व० २१९ अ० ।

**भीमयु** स्त्री आत्मनो भीमं इच्छति क्यच् वेदे नि० उन् । आत्मनो इच्छेच्छौ स्त्रीत्वात् ऋ० ५।६६।२ ।

**भीमरथ** पु० १असुरभेदे गरुडपु० ८६अ० । २धृतराष्ट्रपुत्रभेदे भा० आ० ६७ अ० । ३धन्वन्तरिवंश्ये नृपभेदे हरिवं० २९ अ० । ४दशार्हवंश्ये नृपभेदे हरिवं० ३७ अ० । सत्यभामायां जाते वासुदेवस्य ५पुत्रभेदे हरिवं० १६२अ० ।

**भीमरथी** स्त्री "सप्तसप्ततिमे वर्षे सप्तमे मासि सप्तमी । रात्रिर्भीमरथी नाम नराणामतिदुस्तरा" इत्युक्तायां १रात्रौ । "तामतीत्य नरो योऽसौ दिनानि यानि जीवति । क्रतुभिस्तानि तुल्यानि सुवर्णशतदक्षिणैः । मतिः प्रदक्षिणं विष्णोर्लङ्घनं मन्त्रधारणम् । ध्यानं निद्रा सुधा चान्नं भीमरथ्याः फलश्रुतिः" वैद्यके । २नदीभेदे भा०व०८८अ० ।

**भीमरिका** स्त्री सत्यभामागर्भजातायां श्रीकृष्णस्य कन्यायां हरिवं० १६२ अ० ।

**भीमल** त्रि०भियो मलः सम्बन्धो यतः । भयङ्करे यजु०२०।६ ।

**भीमविक्रम** पु० १धृतराष्ट्रपुत्रभेदे भा०आ० १७ अ० । ६ब० । २भयानकविक्रमे त्रि० ।

**भीमविक्रान्त** पुंस्त्री ६ब० । १सिंहे त्रिका० स्त्रियां जातित्वात् ङीष् । ६ब० । २भयानकविक्रमयुते त्रि० ।

**भीमवेग** त्रि० ६ब० । १भयानकवेगयुते २धृतराष्ट्रपुत्रभेदे पु० भा०आ० ६७ अ० । ३दानवभेदे पु०हरिवं० २४ अ० ।

**भीमवेगवत्** पु० धृतराष्ट्रपुत्रभेदे भा० आ० १८६ अ० ।

**भीमशर** पु० धृतराष्ट्रपुत्रभेदे भा० आ० ६७ अ० ।

**भीमशासन** पु०भीमं शासनमस्य । १यमे शब्दार्थचि० भयानकशासनकर्त्तरि २नृपादौ च ।

**भीमसेन** पु० युधिष्ठिरानुजे १मध्यमपाण्डवे २कर्पूरभेदे च शब्दरत्ना० । ३जनमेजयस्य भ्रातृभेदे भा० आ० ३अ० । ४पौरवप्राचीनजनमेजयस्य पुत्रभेदे भा०आ० ९४ अ० ।

**भीमहास** पु० इन्द्रतूले (बुढ़िरसूता) शब्दरत्ना० ।

**भीमा** स्त्री १भीमाख्यायाम दुर्गायाम् २रोचनाख्यगन्धद्रव्ये शब्दरत्ना० ३कशायां शब्दमाला ४नदीभेदे भा०व०२२२अ० ।

**भीमादेवी** स्त्री भीमाख्या देवी । दुर्गामूर्त्तिभेदे "पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले । रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात् । तदा मां मुनयः सर्वे स्तोष्यन्त्यानम्रमूर्त्तयः । भीमादेवीति विख्यातं तन्मे नाम भविष्यति" देवीमा० ।

**भीमादि** पु० "भीमादयोऽपादाने" पा० अपादाने निपातनसाध्ये शब्दगणे स च गणः पा० ग० उक्तो यथा "भीम भीष्म भयानक वाह चरु प्रस्कन्दन प्रपात समुद्र स्रुव स्रुक् दृष्टि रक्षः शङ्कु सुक मूर्ख खलति" ।

**भीमैकादशी** स्त्री भीमेनोपास्या एकादशी शाक० त० । माघशुक्लैकादश्याम् । तद्व्रतादिकं मत्स्यपु०६५अ० उक्तम् ।

**भीरु** त्रि०भी–क्रु । १भयशीले अमरः । २शतावर्यां स्त्री धरणिः । ३कण्टकार्यां ४शतपादिकायां शब्दर० । ५छागायां ६योषिति ७अजायां स्त्री मेदि० । ८व्याघ्रे पु०शब्दमा० । ९इक्षौ राजनि० १०इक्षुभेदे हेमच० ।

**भीरुक** पु० भी–क्रुकन् । १वने २व्याघ्रे ३इक्षुभेदे च । "वातपित्तप्रशमनो मधुरो रसपाकयोः । सुशीतो बृंहणो बल्यः पौण्ड्रको भीरुकस्तथा" भावप्र० । ४भययुक्ते त्रि० ।

**भीरुकच्छ** पु० देशभेदे मार्कपु० ५७ अ० ।

**भीरुपत्री** स्त्री भीरुरिव पत्राण्यस्याः ङीप् । शतमूल्याम् [अमरः

**भीरुस्थान** न० ६त० अपायस्थेति यावत् । भीरूणां स्थाने ।

**भीरुहृदय** पु० ६ब० । १मृगे त्रिका० २भयशीलहृदये त्रि० ।

**भीरू** स्त्री भीरु+स्त्रियामूङ् । भयशीलायां नार्यां भरतः ।

**भीलु(क)(लुक)** त्रि०भी क्रु । भयशीले, लुकन् । तत्र भल्लूके पु० ।

समानाय्य जीवं हृदि समानयेत्"। भूतशुद्धौ तु विशेषो वाराहीतन्त्रे "हंसाख्यं न चरेत् यत्र भूतशुद्धौ कदाचन। चरणात्तरणं याति दीक्षा च विफला भवेत्"। शारदायाम् "जीवं तेजोमयं ध्यात्वा मन्त्री मन्त्रेण योजयेत्"। भूतशुद्धिपदस्य तूपलक्षणाच्च विशुद्धेश्वरे "शरीराकारभूतानां भूतानां यद्विशोधनम्। अव्ययब्रह्मसंयोगात् भूतशुद्धिरियं मता" वराहीये "मूलाधारात्ततो बीजं ब्रह्ममार्गेण देशिकः। हंसेन पुष्करस्थाने परमात्मनि योजयेत्"। ब्रह्ममार्गः सुषुम्ना। त्रिपुरासारसमुच्चये "संयोज्य बीजमथ दुर्गमसूक्ष्मनाडी-मार्गेण पुष्करनिविष्टशिवे सुसूक्ष्मे"। ज्ञानार्णवे "प्राणप्रतिष्ठया पश्चात् जीवं देहे निधापयेत्। सुसङ्गतं महत्त्वाख्यं हंसस्तु विपरीततः। उच्चरेत् परमेशानि! विद्येयं मन्त्रचारी मता। प्राणप्रतिष्ठामन्त्रोऽयं सर्वकर्माणि साधयेत्। तेनैव विधिना देवि! स्थिरीकुर्यात्स्विकां तनुम्"। तारादौ विशेषस्तत्रैव दृश्यः।

भूतसञ्चार पु॰ ६त॰। भूतावेशे राजनि॰।

भूतसञ्चारिन् पु॰ भूत इव सञ्चरति सम्+चर–णिनि। दावानले शब्दमा॰। [त्रि भावते"।

भूतसंप्लव पु॰ ६त॰। प्रलये "आभूतसंप्लवस्थानममृतत्वं

भूतसर्ग पु॰ ६त॰। भूतसृष्टौ स च चतुर्दशविधः यथोक्तं वह्निपु॰ "ब्राह्मं प्राजापतीयञ्च सौम्यमैन्द्रन्तथैव च। गान्धर्वमथ कौबेरं रक्षःपैशाचमानुषम्। स्थावरं पाशवं पार्गं पार्थं शाकुनिकन्तथा। चतुर्दशविधं ह्येतद्भूतसर्गं प्रकीर्त्तितम्" श्रीवत्सभार्गम्।

भूतसाधनी स्त्री भूतानि प्राणिनः साधयति यत्र आधारे ल्युट् ङीप्। भूमौ। भूमिं विना जन्तुमात्रावासस्तूपत्ते-रभावात् तस्यास्तथात्वम् यजु॰२६।१ वेददीपः। [राजनि॰

भूतसार पु॰ भूत इव अग्न्यत्वात् सारोऽस्य। श्योनाकवृक्षे

भूतहन्त्री स्त्री भूतान् तद्भयं हन्ति हन-तृच् ङीप्। १वन्ध्याकर्कोट्याम्, २श्वेतदूर्वायाञ्च तद्धारणे हि स्त्रीणां प्रजोत्पत्तिरोधकभूतभयनाशः। [राजनि॰

भूतहर पु॰ भूतान् हरति अपसारयति हृ-अच्। गुग्गुलौ

भूतहारिन् पु॰ भूतान् हरति स्थानान्तरं नयति हृ-णिनि। देवदारुवृक्षे राजनि॰।

भूतांश पु॰ १ऋषिभेदे ऋ॰ १०।१०६।११ २काश्यपऋषौ निरु॰ १२।४०। ६त॰। ३भूतानामंशे च। [अनामस्थाते हर्ये।

भूताङ्कुश पु॰ भूतानां पिशाचानामङ्कुश इवापसारकत्वात्।

भूतात्मन् पु॰ भूतानि पृथिव्यादीनि पञ्च द्रव्याणि आत्मा स्वरूपं यस्य। १देहे भूतानि पञ्च द्रव्याणि भूताः प्राणिनश्च आत्मा स्वरूपं यस्य। २परब्रह्मणि "सर्वं खल्विदं ब्रह्म तज्जलानिति" श्रुतिः। ३सर्वभूतात्मके हिरण्यगर्भे ४विष्णौ ५वटुकभैरवे च 'भूतात्मा भूतभावनः' इति तयोः स्तोत्रे।

भूतादि पु॰ ६त॰। "परमेश्वरे भूतादिर्निधिरव्ययः" विष्णुस॰ सांख्यमतसिद्धे १अहङ्कारतत्त्वे "अहङ्कारात् पञ्चतन्मात्राणि" सां॰सू॰। आद्ये च तन्मात्रे।

भूतारि पु॰ ६त॰। हिङ्गौ राजनि॰ तद्गन्धेन हि भूताप-सरणमिति तस्य तथात्वम्।

भूतार्त्त त्रि॰ ३त॰। पिशाचाविष्टे हेमच॰।

भूतार्थ पु॰ भूतः सत्यभूतोऽर्थो यस्य। यथार्थे

भूतालो स्त्री॰ भूतानीव अलति पर्याप्नोति अल-अच् गौरा॰ ङीष्। १भूमिपाटल्याम्, २मुसल्याञ्च राजनि॰।

भूतावास पु॰ भूतानां प्राणिनामावासः अधिष्ठानत्वात्। १विष्णौ, "भूतावासो वासुदेवः" विष्णुस॰। "वसन्ति त्वयि भूतानि भूतावासस्ततो हरिः" हरिवं॰ ६त॰। २विभीतक-वृक्षे राजनि॰।

भूताविष्ट त्रि॰ भूतेनाविष्टः। पिशाचग्रस्ते "भूताविष्टेषु चक्षुष्मत् स्वतापस्नात्र वै यतस्" स्मृ॰त॰।

भूतावेश पु॰ ६त॰। पिशाचप्रवेशे (भूते पाओया) त्रिका॰।

भूति स्त्री भू-क्तिन्। १भवने २अणिमाद्यष्टविधैश्वर्ये ३शिवाङ्ग-स्थभस्मनि ४गजवेशे च मेदि॰५भूतृणे ६सम्पत्तौ ७जात्यां ८वृद्धिनामौषधे च राजनि॰।

भूतिक न॰भूत्या सम्पत्त्या कायति कै-क। १भूनिम्बे २कत्तृणे च अमरः। ३यमान्याम् ४चन्दने ५कट्फले हेमच॰। पु॰ वा दीर्घः। भूतीकोऽप्यत्र भिन्नके भावप्र॰। [शब्दमा॰।

भूतिकील पु॰ भूतेः सम्पत्तेः कील इव। (खाना) भूमिखाते

भूतितीर्थी स्त्री कुमारानुचरमातृभेदे भा॰ श॰ ४७अ॰।

भूतियुवक पु॰कूर्मचक्रस्य वामकुक्षिस्थे देशभेदे मार्कपु॰५८अ॰

भूतिलय पु॰ तीर्थभेदे भा॰व॰ १२९अ॰।

भूतृण न॰ भुव इव तृणं गन्धवत्त्वात् (गन्धवेण) १तृणभेदे रत्नमा॰ २रोहिषतृणे पु॰ राजनि॰।

भूतेश ६त॰। १प्रथमाधीशे २परमेश्वरे च भूतेश्वरादयोऽप्यत्र।

भूतेष्टा स्त्री ६त॰। आश्विनकृष्णचतुर्दश्याम्।

भूतोड्डामर न॰ तन्त्रभेदे।

भूतोन्माद पु॰ भूतकृत उन्मादः। पिशाचकृते उन्मादे।

स्मृता। अथ स्वल्पफला खारकखैंठी छाडुमखाका। पिण्डखर्जूरिका त्वन्या सा देशे पश्चिमे भवेत्। खर्जूरी गोस्तनाकारा परद्वीपादिहागता। जायते पश्चिमे देशे सा छोहारेति कीर्त्तिता। खर्जूरीत्रितयं शीतं मधुरं रसपाकयोः। स्निग्धं रुचिकरं हृद्यं क्षतक्षयहरं गुरु। तर्पणं रक्तपित्तघ्नं पुष्टिविष्टम्भशुक्रदम्। कोष्ठमारुतहृद्बल्यं वान्तिवातकफापहम्। ज्वरातिसारक्षुत्तृष्णाकासश्वासनिवारणम्। मदमूर्च्छामरुत्पित्तमद्योद्भूतगदान्तकृत्। महतीभ्यां गुणैरल्पा स्वल्पखर्जूरिका स्मृता। खर्जूरीतरुतोयन्तु मदपित्तकरं भवेत्। वातश्लेष्महरं रुच्यं दीपनं बलशुक्रकृत्” भावप्र०।

भूमिचम्पक पु० भूमिलग्नः चम्पकः शाक०त०(भूइचांपा) इक्षुभेदे शब्दच०।

भूमिज पु० भूमेर्जायते जन-ड। १मङ्गलग्रहे २नरकासुरे मेदि० ३भूमिकदम्बे ४मनुष्ये च राजनि०। ५भूमिजातमात्रे त्रि०। ६सीतायां स्त्री।

भूमिजगुग्गुलु पु० कर्म०। आभापुरजाते गुग्गुलौ राजनि०

भूमिजम्बु स्त्री ७त०। क्षुद्रजम्ब्वां रत्नमा० वा ङीप्। तत्रार्थे राजनि०। स्वार्थे क। तत्रार्थे स्त्री अमरः।

भूमिजीविन् पु० भूमिं तत्कर्षणं जीवति जीव–णिनि। वैश्ये शब्दरत्ना०।

भूमिस्वय पु० विराटस्यपुत्र प्रभेदे भा० वि० ३६अ०।

भूमिधर पु० भूमिं धरति धृ–अच्। १कुलपर्वते पर्वताराव २पर्वतमात्रे। [दयोऽप्यत्र।

भूमिप पु० भूमिं पाति पा–क। नृपे जटा०। भूमिपालाभूमिपक्ष पु० भूमिः पक्ष इवास्य। वातायन्ते हारा०।

भूमिपति पु० ६त०। भूपतौ भूमिनाथादयोऽप्यत्र।

भूमिपिशाच पु० भूमौ पिशाच इव। तालवृक्षे जटा०।

भूमिपुत्र पु० ६त०। १मङ्गलग्रहे २नरकासुरे च भूमिसुतादयोऽप्यत्र। ३जानक्यां स्त्री गौरा० ङीष्।

भूमिप्रविभाग पु० सुश्रुतोक्ते औषधार्थभूमिविभागे “अथातो भूमिप्रविभागविज्ञानीयमध्यायं व्याख्यास्यामः। श्वभ्रशर्कराश्मविषमवल्मीकश्मशानाघातनदेवतायतनसिकताभिरनुपहतामनूषरामभङ्गुरामदूराम्भसं स्निग्धां प्ररोहवतीं मृद्वीं स्थिरां समां कृष्णां गौरीं लोहितां वा भूमिमौषधार्थं परीक्षेत तस्यां जातमपि कृमिविषशस्त्रातपपवनदहनतोयसम्बाधमार्गैरनुपहतमेकरसं पुष्टं पृथ्ववगाढमूलमुदीच्यां चौषधमाददीतेत्यौषधभूमिपरीक्षाविशेषः सामान्यः। विशेषतस्तु। तत्राश्मवती स्थिरा गुर्वी श्यामा कृष्णा वा स्थूलवृक्षसस्यप्राया स्वगुणभूयिष्ठा। स्निग्धा शीतलाऽऽसन्नोदका स्निग्धसस्यतृणकोमलवृक्षप्राया शुक्लाऽम्बुगुणभूयिष्ठा। नानावर्णा लघ्वश्मवती प्रविरलाल्पपाण्डुवृक्षप्ररोहाऽग्निगुणभूयिष्ठा। रूक्षा भस्मरासभवर्णा तनुवृक्षाल्पकोटरवृक्षप्रायाऽनिलगुणभूयिष्ठा। मृद्वी समा श्वभ्रवत्यव्यक्तरसजला सर्वतोऽसारवृक्षा महापर्वतवृक्षप्राया श्यामा चाकाशगुणभूयिष्ठा। तत्र केचिदाहुराचार्याः प्रावृड्वर्षाशरद्धेमन्तवसन्तग्रीष्मेषु यथासंख्यं मूलपत्रत्वक्क्षीरसारफलान्याददीतेति तत्तु न सम्यक् कस्मात् सौम्याग्नेयत्वाज्जगतः। सौम्यान्यौषधानि सौम्येष्वृतुष्वाददीताग्नेयान्याग्नेयेष्वेवमव्यापन्नगुणानि भवन्ति। सौम्यान्यौषधानि सौम्येष्वृतुषूद्धृतानि सोमगुणभूयिष्ठायां भूमौ जातान्यतिमधुरस्निग्धशीतानि जायन्ते। एतेन शेषं व्याख्यातम्। तत्र पृथिव्यम्बुगुणभूयिष्ठायां भूमौ जातानि विरेचनद्रव्याण्याददीताग्न्याकाशमारुतगुणभूयिष्ठायां वमनद्रव्याणि। उभयगुणभूयिष्ठायामुभयतोभागानि। आकाशगुणभूयिष्ठायां संशमनान्येवं बलवत्तराणि भवन्ति। सर्वाण्येव चाभिनवान्यन्यत्र मधुघृतगुडपिप्पलीविडङ्गेभ्यः। सर्वाण्येव चक्षीराणि वीर्यवन्ति तेषामसम्पत्तावतिक्रान्तसंवत्सराण्याददीतेति। भवन्ति चात्र। गोपालास्तापसा व्याधा ये चान्ये वनचारिणः। मूलाहाराश्च ये तेभ्यो भेषजव्यक्तिरिष्यते। सर्वावयवसाध्येषु पलाशलवणादिषु। व्यवस्थितो न कालोऽस्ति तत्र सर्वो विधीयते। गन्धवर्णरसोपेता षड्विधा भूमिरिष्यते। तस्माद्भूमिस्वभावेन बीजिनः षड्रसैर्युताः। अव्यक्तः किल तोयस्य रसो निश्चयनिश्चितः। रस एव स चाव्यक्तो भूमेरेव रसाद्भवेत्। सर्वलक्षणसम्पन्ना भूमिः साधारणी स्मृता। द्रव्याणि यत्र तत्रैव तद्गुणानि विशेषतः। विगन्धेनापरामृष्टमविपन्नं रसादिभिः। नवं द्रव्यं पुराणं वा ग्राह्यमेव विनिर्दिशेत्। विडङ्गं पिप्पली क्षौद्रं सर्पिश्चाप्यनवं हितम्। शेषमन्यत्त्वभिनवं गृह्णीयाद्दोषवर्जितम्। जङ्गमानां वयःस्थानां रक्तरोमनखादिकम्। क्षीरमूत्रपुरीषाणि जीर्णाहारेषु संहरेत्। प्लोतमृद्भाण्डफलकशङ्कुविन्यस्तभेषजम्। प्रशस्तायां दिशि शुचौ भेषजागारमिष्यते।”

राजनि०।२प्रचुरवले त्रि०।३धृतराष्ट्रपुत्रभेदे पु०भा०आ०२७अ०

**भूरिमल्ली** स्त्री भूरि बहु यथा स्यात् तथा मलति मल-अच् गौरा० ङीष्। अम्बष्ठायाम् राजनि०।

**भूरिमाय** पुंस्त्री० भूरयः माया यस्य। १शृगाले अमरः स्त्रियां योपधत्वात् टाप्। २प्रभूतमायायुते त्रि०

**भूरिमूलिका** स्त्री भूरीणि मूलानि यस्याः कप् टापि अत इत्त्वम्। अम्बष्ठायाम् भैषज्यर०।

**भूरिशस्** अव्य० भूरि-शस्। बहुश इत्यर्थे।

**भूरिश्रवस्** पु० ६ब०। चन्द्रवंश्ये १सोमदत्तसुते नृपभेदे। भा० आ० १८७ अ०। २प्रचुरयशस्के त्रि०।

**भूरिश्रेष्ठिक** पु० भूरयः श्रेष्ठिनो यत्र। (भुरसुट) गौड़देशस्थे पुरभेदे "गौड़े राष्ट्रमनुत्तमं निरुपमा तत्रापि राढ़ा पुरी भूरिश्रेष्ठिकनाम धाम परमं तत्रोत्तमोऽनः पिता" प्रबोधच०।

**भूरिहन्** त्रि० भूरीन् हन्ति हन-क्विप्। १बहुतरनाशके २असुरभेदे पु० भा०शा० २२७ अ०।

**भूरुण्डी** स्त्री भुवं रुण्डति आच्छादयति रुडि-आच्छादने (भाष्यवृत्तौ पठितः) अण् उप०स०। (हातिशुँड़ा) वृक्षभेदे अमरः। [शब्दमा०

**भूरुह** पु० भुवि रोहति रुह-क ७त०। महीरुहे वृक्षे

**भूर्ज** पु० ऊर्ज-अच् ७त०। स्वनामख्याते वल्कप्रधाने वृक्षे। "भूर्जत्वचः स्पर्शवतीर्दधानाः" कुमा०। 'भूर्जः कटुः कषायोष्णः भूतरक्षाकरः परः। त्रिदोषशमनः पथ्यः दुष्टकौटिल्यनाशनः" राजनि०। "कर्णरोगपित्तकफमेदोविषहरश्च सः" भावप्र०।

**भूर्जकण्टक** पुंस्त्री० "व्रात्यात्तु जायते विप्रात् पापात्मा भूर्जकण्टकः" मनूक्ते जातिभेदे स्त्रियां ङीष्।

**भूर्जपत्र** पु० भुवि-ऊर्जं पत्रं यस्य। स्वनामख्याते वृक्षे। भूर्जत्वगादयोऽप्यत्र रत्नमा०।

**भूर्णि** स्त्री भृ-नि नि० उत्व रपरः। पृथिव्यां सि० कौ०।

**भूर्लोक** पु० कर्म०। चादरवाचयोन्यत्वान्यले लोके।

**भूलग्ना** स्त्री भुवि लग्ना ७त०। मधुपुष्प्याम् राजनि०।

**भूलता** स्त्री भुवि लतेव। महीलतायां (केँचो) सरीसृपभेदे हेम०।

**भूलिङ्गशकुनि** पु० भूलिङ्गः शकुनिः कर्म०। विलयावित्ति पक्षिभेदे "प्रकृतिं यान्ति भूतानि भूलिङ्गशकुनिर्यथा" भा० स० ४१अ०। तद्विवृतिर्यथा

"अथ चेत्त्वा न ते बुद्धिः प्रकृतिं याति भारत!। तथैव कथितं पूर्वं भूलिङ्गशकुनिर्यथा। भूलिङ्गशकुनिर्नाम पार्श्वे हिमवतः परे। भीष्म! तस्याः सदा वाचः श्रूयन्तेऽर्थविगर्हिताः। मा साहसमितीदं सा सततं वाशते किल। साहसं चात्मनातीव चरन्ती नावबुध्यते। सा हि मांसार्गलं भीष्म! मुखात् सिंहस्य खादतः। दन्तान्तरविलग्नं यत्तदादत्तेऽल्पचेतना। इच्छतः सा हि सिंहस्य भीष्म! जीवत्यसंशयम्। तद्वत्त्वमप्यधर्मिष्ठ! सदा वाचः प्रभाषसे भा०स०४४अ०। "भूलिङ्गशकुनिर्यथाव्यवहदत्यन्तम् करोति तद्वत्ते युद्धं कामयन्ते यथा वदन्तीत्यर्थः भुवं लिङ्गतीति भूलिङ्गो विलयायी पक्षिविशेषः यथेति पाठे यथा अवसरदीया बुद्धिस्त्वदीया त्वद्वत्ते इति योज्यं तदा यथैव शकुन्युपमत्वम् अर्थविगर्हिताः उक्तिविपरीतक्रियया अर्थोविगर्हितो यासां ताः। वाशते शब्दं करोति। मांसार्गलं दंष्ट्रान्तरलग्नस्य मांसस्य बहिर्निर्गतभागमद्योत्पम् इच्छति इति। सा हि पक्षिणी मृत्युमुखे प्रविष्टापि तदुपेक्षया जीवन्ती यथा लोकानुपदिशति मा साहसमिति तथा त्वमुपदेशकारित्वात् मृत्युमुखे पतितोऽपि मृत्युना उपेक्षितो जीवत्यन्योपदिशसि मृत्युमुखे न पतितव्यमिति" नील०।

**भूवलय** न० भूवेष्टवलय। भूमिपरिधौ। [निघण्टुः

**भूशमी** स्त्री भूलग्ना शमी शाक०त०। लज्जालुकायां मदनपाल-

**भूशय** पु० भुवि शेते शी-अच् ७त०। १बिलशये नकुलादौ। २विष्णौ च "भूशयो भूषणो भूतिः" विष्णुस०। स हि रामावतारे समुद्रलङ्घनाय सागरोपान्तभूमौ शयित इति तस्य तथात्वम्। [भैषज्यप्र०

**भूशर्करा** स्त्री भुवि स्थाता शर्करा शा० त०। कन्दभेदे

**भूशेलु** पु० भुवि स्थाता शेलुः शा० त०। भूबद्दारके राजनि०।

**भूष** अलङ्कृतौ वा चु०उभ०पक्षे भ्वा० पर० सक० सेट्। भूषयति ते भूषति अबूभुषत्-त अभूषीत्।

**भूषण** न० भूष्यतेऽनेन भूष-करणे ल्युट्। १अलङ्कारे किरीटादौ। भावे ल्युट्। २भूषायाम्। अलङ्कारभेदाः तत्साधनद्रव्याणि च यथा

"किरीटञ्च शिरोरत्नं कुण्डलञ्च ललाटिका। तालपत्रञ्च हारञ्च ग्रैवेयकमथोर्मिका। प्रालम्बिका रत्नसूत्रमुत्तरीयं च काञ्चिका। पार्श्वद्योतो नखद्योतोऽङ्गुलीत्राणमेव च। कटिबन्धं मालयको मूर्ध्नि तारा कराम्बिका। अङ्गदो

गमननिषेधो यथा। “भ्रातृजायां [illegible]” अगम्यशब्दे १८७२पृ० दृश्यम् । अनियोगेन तद्गमने दोषो यथा “भ्रातृजायापहारी च मातृगामी भवेन्नरः” ब्रह्मवै०प्र० ५६ अ० । भ्रातृपत्न्यादयोऽप्यत्र ।

**भ्रातृद्वितीया** स्त्री भ्रातृभोजनार्था द्वितीया । कार्त्तिकशुक्लपक्षस्य द्वितीयायाम् यमद्वितीयायां तद्विधिः निर्णयसि० भविष्ये “कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर! । यमो यमुनया पूर्वं भोजितः स्वगृहेऽर्चितः। अतो यमद्वितीयेयं त्रिषु लोकेषु विश्रुता । अस्यां निजगृहे विप्र! न भोक्तव्यं ततो नरैः । स्नेहेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम्। दानानि च प्रदेयानि भगिनीभ्योऽपि विधानतः। स्वर्णालङ्कारवस्त्रान्नपूजासत्कारभोजनैः । सर्वा भगिन्यः संपूज्या अभावे प्रतिपन्नकाः” प्रतिपन्नाः भ्रातृभगिन्य इति हेमाद्रिः । “पितृव्यभगिनीहस्तात् प्रथमायां युधिष्ठिर! । मातुलस्य सुताहस्ताद्द्वितीयायां तथा नृप! ।। पितृमातृस्वसुः कन्ये तृतीयायां तयोः करात् । भोक्तव्यं सहजायाश्च भगिन्या हस्ततः परम् । सर्वासु भगिनीहस्ताद्भोक्तव्यं बलवर्द्धनम् । अस्यां तिथौ यमुनया यमराजदेवः संभोजितः प्रतिजगत् स्वसृसौहृदेन । तस्मात् स्वसुः करतलादिह यो भुनक्ति प्राप्नोति रत्नधनधान्यमनुत्तमं सः। गौडास्तु “यमं च चित्रगुप्तं च यमदूतांश्च पूजयेत् । अर्घ्यश्चात्र प्रदातव्यो यमाय सहजद्वयैः मन्त्रः “एह्येहि मार्त्तण्डज! पाशहस्त! यमान्तकालोकधरामरेश! ।। भ्रातृद्वितीयाकृतदेवपूजां गृहाण चार्घ्यं भगवन्नमस्ते! । भ्रातस्तवानुजाताहं भुङ्क्ष्व भक्तमिदं शुभम् । प्रीतये यमराजस्य यमुनाया विशेषतः” ज्येष्ठाऽग्रजातेति वदेदिति स्मार्त्तः । इत्यन्नदान[illegible] । ब्रह्माण्डपुराणेऽपि “या तु भोजयते नारी भ्रातरं युग्मके तिथौ । अर्च्चयेच्चापि ताम्बूलैर्न सा वैधव्यमाप्नुयात् । भ्रातुरायुःक्षयो राजन् न भवेत् तत्र कर्हिचित्” ।

**भ्रातृवधू** स्त्री ६त० । (भाद्दरबौ) कनिष्ठभ्रातृजायायां शब्दा० ।

**भ्रातृभगिनी** स्त्री द्वि०व० । वा एकशेषः । भ्रातृसहित भगिन्याम् ।

**भ्रातृवत्** त्रि० भ्राताऽस्त्यस्य मतुप् । भ्रातृयुक्ते ।

**भ्रातृव्य** पु० भ्रातुः पुत्रः भ्रातृ+व्यत् । १भ्रातृपुत्रे २शत्रौ च वेदप० “अतिशायमानं भ्रातृव्यं जयति य एतया स्तुते” ता०ब्रा०२।७।२। [ज्येष्ठभ्रातरि (भासुर) शब्दरत्ना०।

**भ्रातृश्वशुर** पु० भ्राता पतिभ्राता श्वशुर इव पूज्यत्वात् । पति-

**भ्रात्र** न० भ्रातुरिदम् विशा० अण् । भ्रातृसम्बन्धिनि ।

**भ्रात्रीय** पुंस्त्री० भ्रातुरपत्यम् छ । भ्रातृपुत्रे अमरः ।

**भ्रान्त** न० भ्रम-भावे क्त । १भ्रमणे “गजस्थाने भ्रान्तम्” माट० कर्त्तरि क्त । २मिथ्याज्ञानयुक्ते ३भ्रमणयुक्ते च त्रि० । ४धुस्तूरे ५मत्तगजे च पु० राजनि० ।

**भ्रान्ति** स्त्री भ्रम-क्तिन् । १भ्रमणे २अयथार्थज्ञाने च । “नानाविधे तु संसारे भ्रान्तिः संजायते स्वयम् । धात्वाक्षराणि कुटानि पताकाग्रान्ततः पुरा” ज्यो० त० । भ्रान्तिज्ञानश्च चित्तविक्षेपः योगान्तरायः पात०सू० तच्च चित्तविक्षेपशब्दे २९४१ पृ० दृश्यम् ।

**भ्रान्तिमत्** त्रि० भ्रान्तिरस्त्यस्य मतुप् मस्य वः । १भ्रमज्ञानयुते स्त्रियां ङीप् । २अर्थालङ्कारभेदे पु० अलङ्कारशब्दे दृश्यम् । [२भ्रमणकारके त्रि० स्त्रियां ङीप् ।

**भ्रान्तिहर** पु० भ्रान्तिं हरति हृ-ट । १मन्त्रिणि शब्दरत्ना०

**भ्राम** त्रि० भ्रम-ज्वला० कर्त्तरि ण । भ्रमयुक्ते ।

**भ्रामक** त्रि० भ्रामयति भ्रम-णिच्-ण्वुल् । १भ्रमजनके २शृगाले पुंस्त्री० स्त्रियां ङीप् । ३धूर्ते त्रि० । ४सूर्य्यावर्त्ते मणौ ५अयस्कान्ते (चुम्बकपाथर) मेदि० तस्य लोहचालकत्वात् तथात्वम् ।

**भ्रामर** न० भ्रमरेण संभृतं मध्वादिकम् तस्येदं वा अण् । १मधुनि । २भ्रमरसम्बन्धिनि त्रि० ३अयस्कान्ते पु०मेदि० । “तदाहं भ्रामरं रूपं कृत्वाऽसंख्येयषट्पदम्” इत्युपक्रम्य “भ्रामरीति च मां लोकाः” इति देवीमा० उक्ते ४चण्डीमूर्त्तिभेदे स्त्री । भ्रामरमधुगुणादि “किञ्चित् सूक्ष्मैः प्रविष्टेभ्यः पुष्पेभ्योऽभिनिचितम् । निर्मलं स्फटिकाभं यत्तन्मधु भ्रामरं स्मृतम् । भ्रामरं रक्तपित्तघ्नं मूत्रजाड्यकरं गुरु । स्वादुपाकमभिष्यन्दि विशेषात् पिच्छिलं हिमम्” भावप्र० उक्तम् । ५अपस्माररोगे शब्दमाला ।

**भ्रामरिन्** त्रि० भ्रामरं भ्रमरस्येव घूर्णनमस्त्यस्य इनि । अपस्माररोगयुते “भ्रामरी गण्डमाली च” मनुः ३।१६१। टीकायां कुल्लू० ।

**भ्राश** भासे भ्वा०आ०अक०सेट् । भ्राशते भ्राश्यते अभ्राशिष्ट । भ्रेशे बभ्राशे। ऋदित् चङि न ह्रस्वः । ट्वित् अथुच् भ्राशथुः ।

**भ्राष्ट्र** पु० भ्रस्ज-करणे ष्ट्रन् । १अम्बरीषे (भाजनाखोला) अमरः । भ्राष्ट्रे संस्कृतः अण् । २अम्बरीषसंस्कृते भक्ततण्डुलादौ त्रि० स्त्रियां ङीप् ।

**भ्राष्ट्रकि** पु० गोत्रप्रवर्त्तकऋषिभेदे प्रवरा० ।

मक्षिका स्त्री मश-सिकन् । कीटभेदे वंभराख्यकीटे (मौमाछि) शब्दच० । पृषो० दीर्घः तत्रार्थे राजनि० ।

मक्षिकामल न० ६त० । सिक्थके (मोम) राजनि० ।

मक्षिकासन न० ६त० । (मौचाक) सिक्थकाधारे राजनि० पाठान्तरम् । [भा०८।२६।६

मक्षु न० मश–उन् । शीघ्रे निघण्टुः २शीघ्रगतियुते त्रि०

मख यजने भ्वा०पर०सक०सेट् । मखति अमाखीत् अमखीत् ममाख मेखतुः । [मङ्क्ते ।

मख सर्पणे भ्वा०पर०सक०सेट् इदित् । मङ्खति अमङ्खीत्

मख पु० मख–संज्ञायां घ । यज्ञे अमरः ।

मखत्राट पु०मखं विश्वामित्रयज्ञमखं त्रायते त्रै–तृच् । श्रीरामे शब्दर० । [त्रि० ।

मखद्विष् पु०मखाय द्वेष्टि द्विष-क्विप् । १राक्षसे २यज्ञद्वेषिणि

मखाग्नि पु० ६त० । यज्ञे संस्कृताग्नौ जटा० । मखानलादयोऽप्यत्र ।

मखान्न न० मखे तत्काले भोज्यमन्नं शस्यत्वात् शा०त०। (माखना)इत्यख्याते जलजे फलभेदे"मखान्नं पद्मबीजञ्च गुणैस्तुल्यं विनिर्दिशेत्" भावप्र० । ६त० । २यज्ञान्ने च ।

मखासुहृत् पु० ६त० । दक्षयज्ञस्य नाशके महादेवे हेमच०

मग सर्पणे भ्वा०पर०सक०सेट् इदित् । मङ्गति अमङ्गीत् ।

मगध पु० मङ्क्यते अधोगम्यतेऽनेन मगि-घ पृषो० मगं दोषं पापं वा दधाति धा-क । १देशभेदे २तद्देशस्थे जने ब०व०। स च कीकटेतिवंशः ख्यातदेशस्य । कीकटेषु गया पुण्या नदी पुण्या पुनःपुना" इत्युक्तेः गयादीनामेव पुण्यत्वम् । अन्येषामपुण्यत्वं प्रत्युत पापजनकत्वम् "अङ्गवङ्गकलिङ्गांश्च गत्वा संस्कारमर्हति" मिता० देवलोक्तेः । "तीर्थयात्रां व्यतिरेकेणैतान् गत्वा तत्रैव चिरमुषित्वा तत्रागमनं प्रायश्चित्तम् । तदयुक्तौ पुनरुपनयनं अतिचिरवासे तु पुनरुपनयनं कृत्वा चान्द्रायणं कर्त्तव्यम्" प्रा० वि० । अतस्तस्य पापजनकत्वात् तथात्वम् । ततः भवार्थे शण्डा० अ । मगधीय तत्र भवे त्रि०

मगधा स्त्री मगध तदुपलक्षितस्थानत्वेनास्त्यस्या अच् । पिप्पल्यां रत्नमा० । [मागे च ।

मगधेश्वर पु० ६त० । १जरासन्धनृपे हेम० । २तद्देशपति-

मगधोद्भवा स्त्री मगधदेशे बाहुल्येनोद्भवति अच् । पिप्पल्याम् राजनि० । तद्देशे तस्याः प्रचुरभवत्वात्तथात्वम् ।

मगध्य परिवेष्टने कण्ड्वा० प० सक०सेट् । मगध्यति अमगध्यी(धी)त् ।

मगन्द पु०मगं पापं ददाति दा-ड पृषो०मुम् च । कुसीदिनि निरु० ६।२२ ।

मगण पु० छन्दःशास्त्रोक्ते सर्वगुरुके वर्णत्रये ।

मगल पु० गोत्रप्रवरर्षिभेदे प्रवरा० ।

मग्न त्रि० मस्ज–क्त । (डोबा) जलादौ कृतमज्जने ।

मघ कैतवे द्यूतक्रीडादौ अक० गतौ निन्दायां आरम्भे च सक०भ्वा०आ०सेट् इदित् । मङ्घते अमङ्घिष्ट । [मङ्क्ते

मघ भूषणे भ्वा०पर०सक०सेट् इदित् । मङ्घति अमङ्घीत् ।

मघ पु० मघि-अच् पृषो० । १द्वीपभेदे मेदि० । (मग)नामके २म्लेच्छदेशभेदे । ३पुष्पभेदे न० शब्दरत्ना० ।

मघवन्(त्) पु० मह-कनिन् नि०हस्य घः "मघवा बहुलम्" पा०वा तृ च । १इन्द्रे अमरः २तन्नामकनामके मेचके च । तृचि मघवान् कनिनि मघवा । एवं मघवानौ मघवन्तावित्यादिरूपद्वयम् । भत्वे सम्प्रसारणे मघोनः इत्यत्र न मघवतः इत्यादि ङीपि मघोनी मघवतीत्यादि तद्धिते न भस्य० । माघवनम् इत्यादि भाष्ये तु मघवन्शब्दात् तत्सिद्धयं बाधयित्वा प्रत्ययान्तरमित्युक्ता न तृजित्युक्तम् ।

मघा स्त्री मह-घ टाप च । अश्विन्यवधिके दशमे नक्षत्रे तस्याः पञ्चताराकत्वात् बहुत्वमपि "पितरः पञ्चयन्त्यपरदङ्मघासु च" श्रुतिः । "मघां भूत्वा पर्जन्ये-दिति "मघायां पिण्डदानश्चेति" श्रुतिषु तत्तदाश्रयतात्पर्याभिप्रायेण । अस्याः योगताराद्रियशब्दे मातृदे ४६७ पृ० उक्तम् । २औषधभेदे भरद्विः ।

मघात्रयोदशी स्त्री मघानक्षत्रेण युक्ता त्रयोदशी शा०त० । भाद्रकृष्णत्रयोदश्यां तत्रैव मघानक्षत्रसंयोगसम्भवात् । तत्र श्राद्धमावश्यकं यथोक्तं ति० त०

"प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदश्यां मघायुक्तायामनियत यत्किञ्चिद्द्रव्येण श्राद्धमावश्यकं यज्ञादिविधिवाक्ये नक्षत्रविशिष्टतिथेः श्रुतेः । ततश्च केवलत्रयोदशीकेवलमघाश्राद्धार्थवादा अपि तत्प्रविशिष्टविधिप्रकरणस्थो नित्यत्वबोधकाः न तु केवलविध्यन्तरकल्पना गौरवात् । तथाच मनुः "प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम् । प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च" मनुः "यत्किञ्चित् मधुना मिश्रं प्रदद्यात्तु त्रयोदशीम् । तदप्यक्षयमेव स्यात् वर्षासु च मघासु च" । विष्णुधर्मोत्तरम् "प्रौष्ठपद्यामतीतायां तथा कृष्णा त्रयोदशी । प्राप्य श्राद्धकालान् वै नित्यानाह प्रजापतिः" । शाता-

मङ्गल्य न० मङ्गलाय हितं यत्। १चन्दने २मङ्गलागुरुणि ३स्वर्णे ४सिन्दूरे राजनि०५दध्नि च। ६रुचिरे त्रि० हेम० ७मङ्गलकरे त्रि० मेदि०। "सर्वमङ्गलमङ्गल्ये" इति देवीमा०। ८अश्वत्थे ९बिल्वे १०जीरके ११मसूरके च पु० मेदि० १२नारिकेले १३कपित्थे १४रीठाकरञ्जे च पु० राजनि०। १५त्रायमाणौषधौ पु० शब्दचि०।

मङ्गल्यक पु० मङ्गल्यमङ्गस्य यस्य तद्दोषनिवारणार्थं दीय-मानत्वेन शास्त्रविधानात्। मसूरे अमरः। [भावप्र०।

मङ्गल्यकुसुमा स्त्री मङ्गल्यं कुसुमं यस्याः। शतपुष्पायाम्

मङ्गल्यनामधेया स्त्री ६ब०। जीवन्त्यामोषधौ जटा०।

मङ्गल्या स्त्री मङ्गलाय हिता यत्। १मल्लिकागन्धागुरुणि अमरः २रोचनायाम् ३शतपुष्पायाम् ४शम्यां ५शुक्लवचायां मेदि० ६प्रियङ्गौ ७मासपर्ण्यां हेमच० ८शतपुष्पायाम् ९जीवन्त्याम् १०ऋद्धिनामौषधौ ११हरिद्रायां १२दूर्वायां राजनि० १३दुर्गायाञ्च स्त्री रत्नमा०।
"मङ्गल्याऽगुरुशिशिरा मज्जाया दोषनाशिका" राजनि०

मङ्गिनी स्त्री मङ्गो नौकाग्रिरः अस्त्यस्या इनि ङीप्। नौकायां हेमच०। [पत्ये पुंस्त्री

मङ्गुष पु० ऋषिभेदे तस्यापत्यं कुर्वा० ण्य। माङ्गुष्य तद-

मच दम्भे शाठ्ये च भ्वा०आ०सक०सेट्। मचते अमचिष्ट मेचे।

मचि उन्नताकरणे धारणे पूजायां च सक० दीप्तौ अक० भ्वा० आत्म० सेट् इदित्। मञ्चते अमञ्चिष्ट। ममञ्चे।

मचक्रुक न० कुरुक्षेत्रान्तर्गते तीर्थभेदे। कुरुक्षेत्रशब्दे दृश्यम्

मचर्चिका स्त्री चर्च-धात्वर्थनिर्देशे ण्वुल् मस्य मयोरिव चर्चिका प्रशस्तम्। प्रशस्ते अमरः वाच्यलिङ्गोऽयमित्यन्ये "मतल्लिकादयो नियतलिङ्गा न तु विशेष्यनिघ्नाः" सि० कौ० "प्रशंसावचनैश्च" पा० अस्य विशेषणत्वेऽपि परनिपातः गोमचर्चिका गोमतल्लिका इत्यादि।

मच्छ पुंस्त्री० माद्यति मद्-क्विप् तथा सन् शेते शी-ड। मत्स्ये शब्दर०। स्त्रियां जातित्वात् ङीष्।

मजिर पु० ऋषिभेदे तस्यापत्यं शिवा० अण्। माजिर तद-पत्ये पुंस्त्री०।

मज्जकृत् न० मज्जानं करोति कृ-क्विप्। १देहस्थे अस्थि-रूपे पदार्थे हेमच० अन्नादिषु भुक्तेषु रसादिपरिपा-केन क्रमेणमेदोचितमांसत्वगस्थिमज्जाधातूत्पत्तेः अस्थ्नः मज्जाजनकत्वम्।

मज्जन् पु० मस्ज-कनिन्। १अस्थिजाते अस्थिमध्यस्थे स्नेहा-कारे पदार्थे २वृक्षादेः सारांशे च अमरः। अस्थिमज्जा-

शुक्राः "यस्य यस्य भवेद्यत्र वीर्यं" भवति यादृशम्। तस्य तस्यैव वीर्येण मज्जानमपि निर्दिशेत्" राजवल्लभः "अस्थि यद्वातानिलना मज्जा तत्र सारो द्रुवो घनः। यः स्नेहस्तु पृथग्भूतः स मज्जेत्यभिधीयते"। मज्ज-स्थानमाह "स्थूलास्थिषु विशेषेण मज्जा त्वभ्यन्तरे स्थितः" भावप्र०।

मज्जन न० मस्ज-भावे ल्युट्। १स्नाने (डोबा) शब्दार्थ०। कर्त्तरि ल्यु। २मज्जायां शब्दर० अस्थिमध्यगमज्जाना-मत्यासन्नत्वम्। ३कुम्भीपाकनरकभेदे भा०व०४६अ०।

मज्जसमुद्भव न० मज्जतः समुद्भवति सम्+उद्+भू-अच् ५त०। शुक्रे तस्य मज्जाजातत्वम् मज्जनशब्दे दृश्यम्।

मज्जा स्त्री मस्ज-अच् टाप्। १अस्थिसारे २वृक्षादेः सारांशे च हेम०। "मज्जातको मूत्रपुरीषयुक्तैः शिरामज्जा-वहितैः" सुश्रुतः। [राजनि० २शुक्रधातौ न०

मज्जाज न० मज्जातो जायते जन-ड। १भूमिजे गुग्गुलौ

मज्जारस मज्जायाः रसः परिपाकः। शुक्रे राजनि०। तस्य मज्जापरिपाकत्वं मज्जनशब्दे दृश्यम्।

मज्जासार न० मज्जायां सारोऽस्य। जातीफले राजनि०।

मज्जूषा स्त्री मस्ज-ऊषन्। मञ्जूषायां रायमुकुटः।

मज्मन् न० मस्ज-मनिन् पृषो०। बले निघण्टुः।

मञ्च पु० मचि-उच्छ्राये घञ्। १खट्वायाम् अमरः (माचा) वंशनिर्मिते २उच्चासने ३उच्चमण्डपभेदे शब्दा० "मञ्चस्थ-रघुनन्दनम्" पुराणम्। भावे घ। तत्रैव "इन्दोऽस्य पतितेन मञ्चगतः" इति शा० १प०।

मञ्चकाश्रय पु० ६ब०। मत्कुणे (छारपोका) राजनि०।

मञ्चमण्डप पु० मञ्च इव मण्डपः। क्षेत्ररक्षार्थं उच्चे पत्रा-दिकृते (टङ्) शब्दा०। [शब्दरत्ना०।

मञ्जर न० मञ्ज-अरच्। १तिलकवृक्षे २मुक्तायाञ्च ३वल्लर्याञ्च

मञ्जरि(री) स्त्री मञ्जु ऋच्छति ऋ-इन् शक० पररूपं वा ङीप्। अभिनवोद्भिन्नायां कुसुमादीनां पत्रशाकुरूपायां १वल्लर्याम् अमरः स्त्रीलिङ्गस्त तत्र २मुक्तायां ३तिलक-लतायां शब्दरत्ना०। ४तुलस्याम् राजनि० ततः तारका० इतच्। मञ्जरित जातमञ्जरीके त्रि०। स्त्रीरत्नः ऋजधा कलोमिति गरपदैर्मञ्जरी" अ० र० टी० उक्ते अष्टदशा-क्षरपादके छन्दोभेदे। [राज नि०।

मञ्जरीनम्र पु० मञ्जर्यां तदवस्थायामपि नम्रः। वेतसे।

मञ्जा स्त्री मजि-अच्। १अजायां त्रिका०।२मञ्जर्यां हेमच०।

मञ्जि(ञ्जी) स्त्री मञ्ज-इन् वा ङीप्। मञ्जर्याम् त्रिका०।

अज्ञानबन्धने मेदि० योन्यर्थे शब्दरत्ना० [हगग्रम्।

**मणिकर्ण** पु० १कामरूपस्थे २शिवलिङ्गभेदे मणिकूटशब्दे

**मणिकर्णिका** स्त्री मणिकर्णः मणिमयकर्णभूषणमस्त्यस्यां ठन्। विष्णुतपश्चादर्शनात् विस्मयेन शिवस्य मणिमयकुण्डलपतनस्थाने काशीस्थे १तीर्थभेदे।

तन्नामनिरुक्तिः काशी० २६अ० यथा

विष्णुं प्रति शिववाक्यम् "त्वदीयस्यास्य तपसो महोपचयदर्शनात्। यन्मयान्दोलितो मौलिरहिन्द्रवरभूषणः। तदान्दोलनतः कर्णात् पपात मणिकर्णिका। मणिभिः खचिता रम्या ततोऽस्तु मणिकर्णिका। चक्रपुष्करिणीतीर्थं पुराख्यातमिदं शुभम्। त्वया चक्रेण खननाच्छङ्खचक्रगदाधर!। मम कर्णात् पपातेयं यदा च मणिकर्णिका। तदा प्रभृति लोकेऽत्र ख्यातास्तु मणिकर्णिका" मणिकर्णीत्यप्यत्र। २मणिमयकर्णभूषणे च।

**मणिकर्णीश्वर** न० काशीस्थे शिवलिङ्गभेदे काशीख०१००अ०

**मणिकर्णेश्वर** न०कामरूपस्थे शिवलिङ्गभेदे कालिकापु०८१अ०.

**मणिकानन** न० मणिकनिबानं यत्र। कण्ठे शब्दर०।

**मणिकार** पु० मणिमयं भूषणं करोति क-अण्। (जहरि) १मणिमयभूषणकारके २प्रत्यथादिषत्तःकण्ठालकतन्मणिनामणिनामकग्रन्थकारे गङ्गेशोपाध्याये च। क-क्विप् ङत०। मणिकृदादयोऽप्यत्र।

**मणिकुट्टिका** स्त्री कुमारानुचरमातृभेदे भा०श०४७अ०।

**मणिकूट** पु०मणिमयः कूटोऽस्य। कामरूपस्थे पर्वतभेदे यथोक्तम् "मत्स्यकूटस्य चैशान्यां मणिकूटो महागिरिः। मणिकर्णो नाम हरस्तत्र तिष्ठति लिङ्गकः" कालिकापु०८१अ०।

**मणिकेतु** पु० केतुभेदे वृ०स० ११अ० केतुशब्दे दृश्यम्।

**मणिगणनिकर** पु० "वसुहययतिरिह मणिगणनिकरः" वृ०र० उक्ते पञ्चदशाक्षरपादके छन्दोभेदे द्विगुणहय चतुरित्यत्राभावप्रवृत्तिः।

**मणिग्रीव** पु० कुबेरपुत्रभेदे शब्दर०।

**मणिच्छिद्रा** स्त्री मणिरिव छिद्रमस्याम्। १मेदानामौषधौ २ऋषभानामौषधौ च मेदि०। [११अ०।

**मणिजला** स्त्री मणिप्रचुरं जलमस्याम्। नदीभेदे भा० व०

**मणित** न० मण-क्त। रतिकाले स्त्रीणामव्यक्तशब्दभेदे हेम०

**मणितारक** पुंस्त्री० मणिरिव तारकाक्षि। सारसखगे राजनि० स्त्रियां जातित्वात् ङीप्।

**मणिद्वीप** पु० मणिमयः मणिप्रचुरो वा द्वीपः। क्षीरसमुद्रमध्यस्थे श्रीविद्यापीठरूपे द्वीपभेदे "सुधासिन्धोर्मध्ये सुरविटपिवाटीपरिवृते मणिद्वीपे नीपोपवनवति चिन्तामणिगृहे" आनन्दल०।

**मणिनाग** पु० नागभेदे भा० आ० ३५ अ०। [१५८अ०।

**मणिपर्वत** पु० मणिप्रचुरः पर्वतः शा०त०। पर्वतभेदे हरिवं०

**मणिपालि** त्रि० मणिं पालयति पालि-इनि। मणिपालके तस्य धर्म्यं मह्यिष्या०अण्। माणिपाल तस्य धर्म्ये त्रि०। तस्यापत्यम् रेवत्या०ठक्। माणिपालिक तदपत्ये पुंस्त्री०

**मणिपुच्छी** स्त्री मणिरिव पुच्छं यस्याः जिता ङीप्। मणिवर्ण्णपुच्छयुतायां स्त्रियाम्।

**मणिपुष्पक** पु० सहदेवस्य शङ्खे गीता १।१६।

**मणिपुर** न० पौरस्त्ये देशभेदे।

**मणिपूर** न० सुषुम्णान्तर्गते षट्चक्रमध्ये नाभिस्थे पद्मभेदे "तदूर्द्ध्वे नाभिदेशे तु मणिपूरं महाप्रभम्। मेघाभं विद्युदाभञ्च बहुतेजोमयं ततः। मणिवद्भिन्नं तत्पद्मं मणिपूरं तथोच्यते। दशभिश्च दलैर्युक्तं डादिफान्ताक्षरान्वितम्। शिवेनाधिष्ठितं पद्मं विश्वलोकनकारणम्"

**मणिबन्ध** पु० मणिर्बध्यतेऽत्र बन्ध-आधारे घञ्। प्रकोष्ठपाण्योर्मध्यस्थे १करपन्थौ तस्य शुभाशुभलक्षणं गरु०पु० ६६अ० उक्तं यथा "मणिबन्धैर्निगूढैश्च सुश्लिष्टशुभसन्धिभिः। नृपा हीनैः करच्छेदसशब्दैर्धनवर्जिताः" २सैन्धवलवणाकारे पर्वतभेदे च। [राजनि०।

**मणिबी(वी)ज** पु० मणिरिव बी(वी)जमस्य। दाडिमवृक्षे

**मणिभद्र** पु० यक्षभेदे भा० स० १०अ०।

**मणिभूमि** स्त्री ६त०। मणीनामाकरे।

**मणिमञ्जरी** स्त्री "द्विनायैः स्यात् यभनयजजगाः कीर्त्तिता मणिमञ्जरी" वृ० र० टीकोक्ते ऊनविंशत्यक्षरपादके छन्दोभेदे।

**मणिमण्डप** पु० मणिमयः मणिप्रचुरो वा मण्डपः। १मणिखचिते मण्डपे २देवतापीठस्थानभेदे तन्त्रसारः।

**मणिमत्** त्रि० मणिरस्त्यस्य मतुप्। १मणियुते त्रि० स्त्रियां ङीप्। २यक्षभेदे पु० भा० स० १०अ०। ३तत्रागरीयजाते द्वापरयुगीये २नृपभेदे पु० भा० आ० ६७अ०। ४नागभेदे भा० स० ९अ०। ५राक्षसभेदे भा०व०१६०अ०। ६दैत्यभेदे हरिवं०३अ०। ७पश्चिमस्थे देशभेदे वृ०स०१४अ०।

**मणिमध्य** न० "स्यान्मणिमध्यं चेद्भमसाः" छन्दोम० उक्ते नवाक्षरपादके छन्दोभेदे। [शब्दे अमरः।

**मणिमन्थ** न०मणिरिव मथ्यते मन्थ-कर्मणि घञ्। सैन्धव-

**मणिमाला** स्त्री ६त०। "त्यौ त्यौ मणिमाला छिन्ना गुह-

नान्यदेव हि। चण्डालो जायते राजन्! कार्त्तिके मांसभक्षणात्" नारदीयपु०। माघवैशाखयोर्विष्णुब्रह्मचर्य्यविधानात् मत्स्यभक्षणं नितरां निषिद्धमिति कल्पतत्त्वम्। "नाभक्ष्यं नैवेद्यार्थे भक्ष्येष्वप्यजामहिषीक्षीरं वर्जयेत् पञ्चनखमत्स्यवराहमांसानि च" आह्नि०त० विष्णुसूत्रम्। अन्नतिथौ मत्स्यभक्षणनिषेधो यथा "आमिषं कलहं हिंसां वर्षवृद्धौ विवर्जयेत्" "भुञ्जीत यस्तु निरामिषं स हि भवेज्जन्मान्तरे पण्डितः" ति०त०। श्रेवस्य मत्स्यभक्षणनिषेधो यथा

"न मद्यं न च मिथ्ये भक्तिः न मांसं न शिवार्चनम्। मत्स्यमांसरतानां वै दूरे तिष्ठति शङ्करः" काशीख०। विन्ध्यपर्वतस्य पश्चिमे मत्स्यभक्षणनिषेधो यथा

"विन्ध्यस्य पश्चिमे भागे मत्स्यभुक् पतितो नरः" पुराणम्। कामतो मत्स्यभक्षणप्रायश्चित्तं यथा "मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसेत्" अत्रा-नवसादर्शनम्" प्रा०वि०। मत्स्यभक्षणनिषेधे प्रतिप्रसवो यथा "मत्स्यान् सशल्कान् भुञ्जीत मांसं रौरवमेव च। निवेद्य देवताभ्यश्च ब्राह्मणेभ्यश्च नान्यथा। शफरं सिंहतुण्डञ्च तथा पाठीनरोहितौ। मत्स्येष्वेते समुद्दिष्टा भक्षणाय तपोधनैः। प्रोक्षितं भक्षयेदेषां मांसञ्च द्विजकाम्यया। यथाविधि नियुक्तश्च प्राणानामपि चात्यये" कौर्म्मे पु० १६अ०। "पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः। राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः" मनुः। "अनिवेद्य न भोक्तव्यं मत्स्यं मांसञ्च यद्भवेत्। अन्नं पिता पयो मत्स्यं सर्व्वमेतदनिवेदितम्" आ० त०। प्रेतश्राद्धे मत्स्यदानविधिर्यथा

"सपिण्डीकरणं यावत् प्रेतश्राद्धानि षोडश। पक्वान्नैव कर्त्तव्यं सामिषेण द्विजातिभिः" श्राद्ध०त०।

२विराटदेशे पु०। सोऽभिजनोऽस्य तस्य राजा वा अण्। मात्स्य प्रियादिगणेषु तद्देशवासिनि तस्य नृपे च बहुषु अणो लुक्। ३तद्देशवासिषु ब० व०। ४मेषादितो द्वादशराशौ मीनराशौ। ५भगवतः प्रथमावतारे तत्कथा मत्स्यपु० २अ०। भा० व० १८७ अ० च। मत्स्यभगवदवतारभेदमधिकृत्य कृतो ग्रन्थः अण्। मात्स्य महापुराणभेदे तत्प्रतिपाद्यविषयाश्च तत्रैव २९०अ० उक्ता यथा "सूत उवाच। एतद्वः कथितं सर्व्वं यदुक्तं विश्वरूपिणा। मात्स्यं पुराणमखिलं धर्म्मकामार्थसाधनम्। कल्पादौ मनुसंवादो ब्रह्माण्डकथनन्तथा। सांख्यं शारीरकं प्रोक्तं चतुर्मुखमुखोद्भवम्। देवासुराणामुत्पत्तिर्मारुतोत्पत्तिरेव च। मदनद्वादशी तद्वल्लोकपालाभिपूजनम्। मन्वन्तराणामुद्देशो वैन्यराज्याभिवर्णनम्। सूर्य्यवैवस्वतोत्पत्तिर्बुधसङ्गमनं तथा। पितृवंशानुकथनं श्राद्धकालस्तथैव च। पितृतीर्थप्रवासश्च सोमोत्पत्तिस्तथैव च। कीर्त्तनं सोमवंशस्य ययातिचरितं तथा। कार्त्तवीर्य्यस्य माहात्म्यं वृष्णिवंशानुकीर्त्तनम्। भृगुशापस्तथा विष्णोर्दैत्यशापस्तथैव च। कीर्त्तनं पुरुवंशस्य वंशो हौताशनस्तथा। पुराणकीर्त्तनं तद्वत् क्रियायोगस्तथैव च। व्रतं नक्षत्रसंख्याख्यं मार्त्तण्डशयनं तथा। कृष्णाष्टमीव्रतं तद्वद्रोहिणीचन्द्रसंज्ञितम्। तडागविधिमाहात्म्यं पादपोत्सर्ग एव च। सौभाग्यशयनं तद्वदगस्त्यव्रतमेव च। तथानन्ततृतीया तु रसकल्याणिनी तथा। आर्द्रानन्दकरी तद्वद् व्रतं सारस्वतं पुनः। उपरागाभिषेकश्च सप्तमीस्नपनं पुनः। भीमाख्या द्वादशी तद्वदनङ्गशयनं तथा। अशून्यशयनं तद्वत्तथैवाङ्गारकव्रतम्। सप्तमीसप्तकं तद्वद्विशोकद्वादशी तथा। मेरुप्रदानं दशधा ग्रहशान्तिस्तथैव च। ग्रहस्वरूपकथनं तथा शिवचतुर्द्दशी। तथा सर्व्वफलत्यागः सूर्य्यवारव्रतं तथा। संक्रान्तिस्नपनं तद्वद्विभूतिद्वादशीव्रतम्। षष्टिव्रतानां माहात्म्यं तथा स्नानविधिक्रमः। प्रयागस्य तु माहात्म्यं सर्व्वतीर्थानुकीर्त्तनम्। पैलाश्रमफलं तद्वद्द्वीपलोकानुकीर्त्तनम्। तथान्तरिक्षचारश्च ध्रुवमाहात्म्यमेव च। भवनानि सुरेन्द्राणां त्रिपुरायोधनं तथा। पितृपिण्डमाहात्म्यं मन्वन्तरविनिर्णयः। वज्राङ्गस्य तु संभूतिः तारकोत्पत्तिरेव च। तारकासुरमाहात्म्यं ब्रह्मदेवानुकीर्त्तनम्। पार्व्वतीसम्भवस्तद्वत् तथा शिवतपोवनम्। अनङ्गदेहदाहस्तु रतिशोकस्तथैव च। गौरीतपोवनं तद्वद्विश्वनाथप्रसादनम्। पार्व्वतीऋषिसंवादस्तथैवोद्वाहमङ्गलम्। कुमारसम्भवस्तद्वत् कुमारविजयस्तथा। तारकस्य वधो घोरो नरसिंहोपवर्णनम्। पद्मोद्भवविसर्गस्तु तथैवान्धकघातनम्। वाराणस्यास्तु माहात्म्यं नर्म्मदायास्तथैव च। प्रवरानुक्रमस्तद्वत् पितृगाथानुकीर्त्तनम्। तथोभयमुखीदानं दानं कृष्णाजिनस्य च। तथा सावित्र्युपाख्यानं राजधर्म्मास्तथैव च। यात्रानिमित्तकथनं स्वप्नमाङ्गल्यकीर्त्तनम्। वामनस्य तु माहात्म्यं तथैवादिवराहकम्।

**मत्स्योदरी** स्त्री मत्स्यगन्धयुक्तमुदरमस्याः । १व्यासमातरि मत्स्यगन्धायां २वाराणस्यां तीर्थभेदे च काशी० ६९ अ० "दुर्गाणि तैः कृतानीह सप्त स्वर्गसमानि च । सद्द्वाराणि सयन्त्राणि कवाटविकटानि च । कोटिकोटिभटाढ्यानि सर्वर्द्धिसहितान्यपि । ततः शैलमहादुर्गं तैः काश्यां परितः कृतम् । परिखा च कृता सिन्धुर्मत्स्योदर्या समाश्रिता । मत्स्योदरी द्विधा जाता बहिरन्तश्चरा पुनः । तस्य तीर्थं महत् ख्यातं लिखितं शास्त्रवादिभिः । यदा संहारमार्गेण गङ्गाम्भः प्रसरेदिह । तदा मत्स्योदरीतीर्थं लभ्यते पुण्यगौरवात् । सूर्याचन्द्रमसोः पर्व तदा कोटिगुणं मतम् । सर्वपर्वाणि तत्रैव सर्वतीर्थानि तत्र वै । तत्रैव सर्वलिङ्गानि गङ्गामत्स्योदरी यतः । मत्स्योदर्याञ्च ये स्नाता यत्र कुत्रापि मानवाः । कृतपिण्डप्रदानास्ते न मातुरुदरेशयाः । चतुष्कणमिदं क्षेत्रं मत्स्याकारत्वमाप्नुयात् । परितः स्वर्धुनीवारिसंहारे परिलोक्यते । मत्स्योदर्यां कृतस्नाना ये नरास्ते नरोत्तमाः । कृत्वापि बहुपापानि नेक्षन्ते भास्करेः पुरीम् । किं स्नात्वा बहुतीर्थेषु किं तप्त्वा दुष्करं तपः । यदि मत्स्योदरीस्नाताः कुतो गर्भभयं ततः । यत्र यत्र हि लिङ्गानि स्वर्देवर्षिकृतान्यपि । तत्र मत्स्योदरीं प्राप्य स्नातो मोक्षभाजनम् । सन्ति तीर्थान्यनेकानि भूर्भुवःस्वर्गतान्यपि । न समानि परं तानि कोट्यंशेनापि निश्चितम् । इत्थं तीर्थं कृतं तेन विभो ! कैलासवासिना । मत्स्याधिपेन सुमहत् सुमहोदारकर्मणा ।"

**मथ** विलोडने भ्वा०पर०सक०सेट् । मथति मथेत् अमथीत् ज्वला० वा ण । मथः माथः । ऋदित् चङि न ह्रस्वः ।

**मथ** वधे सक०क्लेशे अक०भ्वा०पर०सेट् इदित् । मन्थति अमन्थीत् मन्थ्यते ।

**मथन** न० मथ-ल्युट् । १वधे २क्लेशे ३विलोडने च । "क्षीरोदमथनोद्भूता" चन्द्रस्तवः । ४गणिकारिकावृक्षे पु० रत्नमा० ।

**मथित** न० मथ-क्त । १निर्जलतक्रे २पीडिते ३हते च त्रि० ।

**मथु(थू)रा** स्त्री मथ-उ(ऊ)रच् । स्वनामख्यातायां नगर्य्याम् । "अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती चैव सप्तैता मोक्षदायिकाः" काशी०ख० । तन्माहात्म्यं विष्णुपु० ६अंशे ८अ० । वराहपु०२७अ० । ततः चतुरर्थ्यां वरणा० अण् । माथुर तत्पुर्य्यं दूरभवे त्रि० । मथूराप्यत्र द्विरूपको० ।

**मथुरेश** पु० ६त० । श्रीकृष्णे शब्दर० । मथुरानाथादयोऽप्यत्र

**मद** हर्षे दिवा०पर०अक० सेट् शमा० । माद्यति इरित् अमदत् अमादीत् अमदीत् । ईदित् निष्ठायामनिट् पुषादिरयं तेन अमददित्येवेति पाणिनीयाः । घटा० मदयति ज्ञीत् मत्तोऽस्ति । प्र+अनवधाने । [ईदित् घटा० मदयति ।

**मद** गर्वे दैन्ये च भ्वा०पर०अक०सेट् । मदति अमादीत्-अम-

**मद** तर्पणे चु०आ०सक०सेट् । मादयते । अमीमदत ।

**मद** जाड्ये स्वप्ने मदे मोदे स्तुतौ दीप्तौ च यथायथं अक० सक० च भ्वा० आत्म० इदित् । मन्दते अमन्दिष्ट । तत्र स्तुतौ "मन्दमानः इमन्नभिः" ताण्ड्य०ब्रा०१.७.६ । "मन्दमानः स्तूयमानः मदि-स्तुतौ कर्मणि शकि प्राप्ते व्यत्ययेन शप्" भा० ।

**मद** पु० मद अच् । १हस्तिगण्डादिस्रुतजले दानजले अमरः २गर्वे हर्षे ३रेतसि ४मृगमदे मेदि० ५मत्ततायाम् हेमच० ६मद्ये ७कल्याणकरे वस्तुनि च धरणिः ।

**मदकट** पु० मदेन कटति कट-अच् षण्डे (षांड़) हेमच० ।

**मदकल** त्रि० मदेन कलते कल-अच् । १मत्तहस्तिनि मदोत्कटे अमरः । २अव्यक्तशब्दकारिणि त्रि० शब्दरत्ना० । मदेन कलो यस्य । ३मदाव्यक्तभाषिणि त्रि० मेदि० ।

**मदगन्ध** पु० मदस्य हस्तिदानस्येव गन्धोऽस्य । १सप्तच्छदवृक्षे २मदिरायां स्त्री टाप् । ३शणवृक्षे राजनि० ।

**मदघ्नी** स्त्री मदं मदिरामत्ततां हन्ति हन-ट ङीप् । पूतिकायाम् जटा० ।

**मदधार** पु० मदप्रधाना धारा यत्र । पर्वतभेदे भा०स०२९अ० ।

**मदन** पु० माद्यत्यनेन मद-करणे ल्युट् । १कामदेवे अमरः । २सुरायां हेमच० । ३वसन्ते काले ४सिक्थके ५धुस्तूरे च पु० मेदि० । (मयना) ६वृक्षभेदे रत्नमाला । ७भ्रमरे जटा० माषे दन्तघायभेदे हेमच० । ८खदिरवृक्षे शब्दच० १०अङ्कोटवृक्षे ११बकुलवृक्षे (मयनफल) १२वृक्षभेदे च राजनि० । १३आलिङ्गनभेदे कामशास्त्रम् ।

**मदनक** पु० मदयति मद-णिच्-ल्युट् स्वार्थे क । दमनकवृक्षे राजनि० । [२रोमाञ्चे त्रिका० ।

**मदनकण्टक** पु० मदननिमित्तः कण्टक इव । १सात्त्विके

**मदनकाकुरव** पुंस्त्री० मदनेन हेतुना काकुरवोऽस्य । पारावते स्त्रियां जातित्वात् ङीष् ।

**मदनगृह** न० ६त० । १ज्योतिषमते सुरतगृहादयोऽप्यत्र । लग्नावधिके सप्तमस्थाने ज्यो० ।

**मदनगोपाल** पु० मदन इव गोपालः । श्रीकृष्णे ।

क्षीणेन रूक्षेण तथाऽबलेन । अम्लाभिषण्णेन च सेव्यमानं करोति मद्यं विविधान् विकारान्" । तानेव विकारान् विवृणोति । "पानात्ययं परमदं पानाजीर्णमथापि वा" । पानविकारान् विवृणोति । "पानविभ्रममुग्रञ्च तेषां वक्ष्यामि लक्षणम् । तत्र मदात्ययस्य सामान्यलक्षणमाह "शरीरदुःखं बलवत्प्रमोहो हृदयव्यथा । अरुचिः सततं तृष्णा ज्वरः शीतोष्णलक्षणः । शिरःपार्श्वास्थिसन्धीनां वेदना विद्यते तथा । जायतेऽतिबलाज्जृम्भा स्फुरणं वेपनं श्रमः । उरोविबन्धः कासश्च हिक्का प्रजागरः । शरीरकम्पः कर्णाक्षिमुखरोगास्त्रिकग्रहः । छर्दिर्विड्भेदहृल्लासो वातपित्तकफात्मकः । भ्रमः प्रलापो रूपाणामसताञ्चैव दर्शनम् । तृणभस्मलतापर्णपांशुभिश्चावपूरितम् । प्रधर्षणं विहङ्गैश्च भ्रान्तचेताः स मन्यते । व्याकुलानामशस्तानां स्वप्नानां दर्शनानि च । मदात्ययस्य रूपाणि सर्वाण्येतानि लक्षयेत्" । अथ मदात्ययस्य वातिकस्य निदानमाह "स्त्रीशोकभयभाराध्वकर्मभिर्योऽतिकर्षितः । रूक्षाल्पप्रमिताशी च यः पिबत्यतिमात्रया । रूक्षं परिणतं मद्यं निशि निद्रां निहन्ति च । करोति तस्य तच्छीघ्रं वातप्रायं मदात्ययम्" । तद् मद्यम् । अथ तस्य लक्षणमाह । "हिक्काश्वासशिरःकम्पपार्श्वशूलप्रजागरैः । विद्याद्बहुप्रलापस्य वातप्रायं मदात्ययम्" । अथ पैत्तिकस्य निदानमाह "तीक्ष्णोष्णं मद्यमम्लञ्च योऽतिमात्रं निषेवते । अम्लोष्णतीक्ष्णभोजी च क्रोधनोऽग्न्यातपप्रियः । तस्योपजायते तीव्रः पित्तप्रायो मदात्ययः" । अथ तस्य लक्षणमाह "तृष्णादाहज्वरस्वेदमोहातीसारविभ्रमैः । विद्याद्धरितवर्णस्य पित्तप्रायं मदात्ययम्" । अथ श्लैष्मिकस्य मदात्ययस्य निदानमाह "मधुरस्निग्धगुरुभोजी यः पिबत्यतिमात्रया । अव्यायामदिवास्वप्नशय्यासनसुखे रतः । मदात्ययं कफप्रायं स नरो लभते ध्रुवम्" । अथ तस्य लक्षणमाह "छर्द्यरोचकहृल्लासतन्द्रास्तैमित्यगौरवैः । विद्याच्छीतपरीतस्य कफप्रायं मदात्ययम्" । अथ सान्निपातिकस्य मदात्ययस्य निदानं लक्षणञ्चाह "त्रिदोषहेतुभिः सर्वैः सर्वैर्लिङ्गैर्मदात्ययः" । अथ परमदलक्षणमाह "श्लेष्मोच्छ्रयोऽङ्गगुरुता विरसास्यता च विण्मूत्रसक्तिरथ तन्द्रिररोचकश्च । लिङ्गं परस्य तु मदस्य वदन्ति तज्ज्ञास्तृष्णा रुजा शिरसि सन्धिषु चापि भेदः" । तन्द्रिः तन्द्रा । पानाजीर्णमाह "आध्मानमुग्रमथ चोद्गिरणं विदाहः पाने त्वजीर्णमुपगच्छति लक्षणानि" । उद्गिरणं वान्तिः उद्गारो वा । पीयत इति पानं मद्यम् । पानविभ्रममाह "हृद्गात्रतोदकफसंस्रवकण्ठधूममूर्च्छावमीज्वरशिरोरुजनप्रदेहाः । द्वेषः सुरान्नविकृतेषु च तेषु तेषु तं पानविभ्रममुशन्त्यखिलेषु धीराः । कण्ठधूमः निर्गम इव । प्रदेहः कफेन लिप्तास्यता । द्वेषः सुरान्नविकृतेषु सुराविकारेषु अन्नविकारेषु च द्वेषः । असाध्यानां मदात्ययादीनां लक्षणमाह । "हीनोत्तरौष्ठमतिशीतममन्ददाहं तैलप्रभास्यमतिपानहतं त्यजेत्तु । जिह्वौष्ठदन्तमसितं त्वथ वापि नीलम् पीते च यस्य नयने रुधिरप्रभे च । हिक्काज्वरौ वमथुवेपथुपार्श्वशूलाः कासभ्रमावपि च पानहतं त्यजेत्तम्" ।

मदाम्नात पु० मदस्यातिक्रमे आम्नातः । गजपृष्ठस्थे ढक्कावाद्ये हारा० ।

मदाम्बर पु० मदो दानमम्बरमिवास्य । मतगजे त्रिका० ।

मदार पुंस्त्री० मद आरक् । १वराहे उज्ज्वल० स्त्रियां ङीष् । २धूर्त्ते ३मत्तगजे विश्वः । ४कामुके ५गन्धभेदे उणादिको० । [त्रिका० ।

मदार्मद पु० मदजन्यमर्दं ददाति दा-क । फलकमत्स्ये

मदालस त्रि० मदेनालसः । १मदेनालसे २गन्धर्वराजविश्वकेतुकन्यायां स्त्री । [शब्दमाला

मदालापिन् पु० मदेनालपति आ+लप-णिनि । कोकिले

मदाह्व पु० मदः मृगमद आह्वा यस्य । मृगमदे कस्तूर्यां त्रिका० ।

मदि स्त्री मद्नाति तृणोत्करोषम् मद-इन् उणा० । (मई) ख्याते कृषिसाधने तृणवयन्त्रभेदे धार्य्ये च । तत्करणे कृषितत्त्वे २१९९ पृ० मदिकादानविधिर्दृश्यः । तल्लक्षणन्तु २११८ पृ० तत्र शब्दे दृश्यम् ।

मदिन् त्रि० मदयतीति मदि-णिनि । तर्पके यजु० ६।२७।

मदिन्तम त्रि० अतिशयेन मदी तमप् वेदे नुडागमः । अतिशयतर्पके यजु० ६।२७ ।

मदिरा स्त्री मद-करणे किरच् । "माध्वीकं पानसं द्राक्षं खार्ज्जूरं तालमैक्षवम् । मैरेयं माक्षिकं टाङ्कं मधूकं नारिकेलजम् । अन्नजविकारोत्थं मद्यानि द्वादशैव तु" इत्युक्ते १मद्यसामान्ये २मत्तखञ्जने शब्दरत्ना० । ३रक्तखदिरे पु० शब्दच० । ४छन्दोभेदे तल्लक्षणमुक्तं यथा

भारतशासिनः। म्रष्टे म्रष्टे सुरां पीत्वा वर्णभ्रष्टा भवन्ति हि” उत्पत्तितन्त्रे ६४ पटले। “दीक्षाशीरमयो भावः कलौ नास्ति कदाचन। केवलं पशुभावेन मन्त्रसिद्धिर्भवेन्नृणाम्” महानिर्वाणतन्त्रम्। “न दद्याद् ब्राह्मणो मद्यं महादेव्यै कदाचन। वामकामो ब्राह्मणो हि मद्यं मांसं न भक्षयेत्” तन्त्रम्। भैरवतन्त्रे “नारिकेलोदकं कांस्ये ताम्रे गव्यं तथा मधु। राजन्यवैश्ययोरेवं न द्विजस्य कदाचन। एवं प्रदानमात्रेण जीनाद्- ब्राह्मणो भवेत्”। कलौ मद्यपानादिनिषेधो यथा याज्ञवल्क्यदीपकलिकायां ब्रह्मपु० “नराश्वमेधौ मद्यञ्च कलौ वर्ज्यौ द्विजातिभिः” निषेधविषयं दर्शयति वचना “मद्यमदेयमपेयमनिर्ग्राह्यम्”। अनिर्ग्राह्यमस्त्रीकार्यमिति कल्पतरुः। कालिकापु०। “अमात्यरुधिरं दत्त्वा आत्महत्यामवाप्नुयात्। मद्यं दत्त्वा ब्राह्मणस्तु ब्राह्मण्यादेव हीयते”। स्मृतिः “ताम्रे चेक्षुरसो मद्यं पयसा यवचूर्णकम्। गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना”। अतो मद्यप्रतिनिधिदानमपि न युक्तम्” ति०त० रघु०। मद्यतुल्यं यथा “नारिकेलोदकं कांस्ये ताम्रपात्रे स्थितं मधु। गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना” कर्मलोचनम्।

**मद्यकीट** पु० मद्यजातः कीटः। सुराजाते कीटभेदे हेम०।

**मद्यद्रुम** पु० मद्यहेतुर्द्रुमः शा०त०। माडवृक्षे राजनि०।

**मद्यप** त्रि० मद्यं पिबति पा–क।१मद्यपायिनि २दानवभेदे पु० हरिवं २४० अ०।

**मद्यपङ्क** पु० मद्यस्य पङ्क इव। सुराकल्के (सिकोया) हेम०।

**मद्यपाशन** न० मद्यपैरश्यते अश–कर्मणि ल्युट्। मद्यपानरोचके चर्वणे भक्ष्ये (चाटनी) हेम०।

**मद्यपीत** त्रि० पीतं मद्यं येन आहि० परनि०। सुरापान-कर्त्तरि स्त्रियां ङीप्।

**मद्यपुष्पा** स्त्री मद्यं मदसाधनं पुष्पं यस्याः शा०त०। धातक्यां (धाइफुल) राजनि०। [जाते हेमच०।

**मद्यबीज** न० ६त०। किण्वादौ (बाखर) मद्यकारणे पदार्थे

**मद्यवासिनी** स्त्री मद्यस्येव वासो गन्धो विद्यते वासस्ये नास्याः इनि। धातकीवृक्षे (धाइफुल) राजनि०।

**मद्यसन्धान** न०मद्यस्य मद्योत्पादनार्थं सन्धानम् अभिषवः। मद्योत्पादनव्यापारे हेमच०। [राजनि०

**मद्यामोद** पु० मद्यस्येव आमोदः गन्धोऽस्य। बकुलवृक्षे

**मद्र** पु०मद–रक्। “विराटपाण्ड्ययोर्मध्ये पूर्वदक्षिणतश्च च। मद्रदेशः समाख्यातः” इत्युक्ते १देशे २हर्षे ३मङ्गले च। ह०सं० १४अ०।

**मधु** न मन–उ नस्य धः। १मद्ये “मधं गर्ज गर्ज क्षणं मूढ! मधु यावत् पिबाम्यहम्” देवीमा०। २क्षौद्रे “मधु वाता ऋतायते” इति मधुसूक्तम्। ३पुष्परसे भरत०। “मधु द्विरेफः कुसुमैकपात्रे” कुमारः। ४जले च विश्वः ५मधुररसे च। “मधुक्षरन्ति सिन्धवः” इति मधुसूक्तम्। ६मधुरे त्रि० ७विष्णुकर्णमलजाते दैत्यभेदे पु०। “विष्णुकर्णमलोद्भूता-वसुरौ मधुकैटभाविति” देवीमा० कुम्भीनस्याभर्त्तरि ८दैत्यभेदे पु०रामा० ९वसन्ते १०चैत्रमासि (चैत) ११दुग्धभेदे च मेदि० १२अशोकवृक्षे हेम० १३यष्टिमधौ पु० भरत० १४प्राणिनां शुभाशुभकर्मणि न०विष्णुस०भा०। १५जीवन्त्यां स्त्री अमरः। १६पक्षिभेदे १७रागभेदे च पु० विश्वः।

**मधुकण्ठ** पुंस्त्री० मधुः मधुरः कण्ठोऽस्य। कोकिले त्रिका०। स्त्रियां ङीष्।

**मधुकर** पुंस्त्री०मधूनि करोति सञ्चित्य निष्यन्दयति कृ–अच्। १भ्रमरे अमरः २तद्योषिति स्त्री ङीप्। ३कामिजने मधुलिहः।४भृङ्गराजे च पु०रत्नमा०मधुकृदादयोऽपि अमरे।

**मधुकर्कटी** स्त्री मधुः मधुरा कर्कटी। १जम्बीरभेदे २पिण्ड-खर्जूरिकायाञ्च राजनि०। स्वार्थे क ह्रस्वः टाप्। मधुकर्कटिका बीजपूरे। [च मेदि०।

**मधुका** स्त्री मधिव इवार्थे कन्। १यष्टिमधौ, २मधुपर्ण्यां

**मधुकोष** पु० मध्वर्थं कृतः कोषः। (मौचाक) मक्षिकाकृते कोषाकारे पदार्थे शब्दच०। [क तत्रैव।

**मधुक्षीर** पु० मधु मधुरं क्षीरमस्य। खर्जूरवृक्षे। स्वार्थे

**मधुखर्जूरी** स्त्री मधुर्मधुरा खर्जूरी। अतिमिष्ट-खर्जूरीभेदे राजनि०।

**मधुच्छदा** स्त्री मधुर्मधुरः छदोऽस्याः। मधुरशिखायाम भावप्र०

**मधुज** न० मधुनो जायते जन ड।१सिक्थके (मोम) राजनि० मधुरत्वभेदोजातायां २भूमौ स्त्री शब्दच०।

**मधुजम्बीर** पु० मधुर्मधुरः जम्बीरः। अतिमिष्टजम्बीरे। (कमलालेबु) राजनि०।

**मधुजित्** पु० मधुमसुरभेदं जितवान् जि भूते क्विप्। विष्णौ शब्दरत्ना० मधुमथ,मधुरिपुप्रभृतयोऽप्यत्र।

**मधुतृण** न०कर्म०। इक्षौ त्रिका० पुंस्त्वं राजनि०।

**मधुत्रय** न० मधूनां मधुराणाम् त्रयम्। मधुघृतसितानां,त्रये राजनि०। मधुत्रिकमप्यत्र न०।

मधु(वी)वीज पु॰ मधु मधुरं वी(बी)जं यस्य । दाड़िमे राजनि॰

मधु(वी)वीजपूर पु॰ कर्म॰। मधुकर्कटिकायाम् राजनि॰ ।

मधुव्रत पुंस्त्री॰ मधु तद्भक्षणे व्रतं सततानुष्ठीयमानं यस्य । भ्रमरे अमरः स्त्रियां ङीष् ।

मधुशर्करा स्त्री मधुजाता शर्करा शा॰त॰ । (मिताखण्ड) मधुजातशर्करायां राजनि॰ ।

मधुशाख पु॰ मधुर्मधुरा शाखाऽस्य (मौल) वृक्षे शब्दच॰ ।

मधुशिग्रु पु॰ मधुः मधुरः शिग्रुः । रक्तशोभाञ्जने अमरः

मधुशेष पु॰ न॰ मधुनः शेषः उच्छिष्टम् । सिक्थके (मोम) । राजनि॰ ।

मधुश्रेणी स्त्री मधुनः श्रेणीव । मूर्वायाम् अमरः ।

मधुश्वासा स्त्री मधुन इव श्वसित्यस्मात् श्वस-अपादाने घञ् । जीवन्तीवृक्षे राजनि॰ । [वृक्षे अमरः ।

मधुष्ठील पु॰ मधु अष्ठीले गर्भेऽस्य पृषो॰ । (मौल) गुड़पुष्प-

मधुसख पु॰ मधोर्वसन्तस्य सखा सहचरः टच्समा॰ । कामदेवे मधुसारथ्यादयोऽप्यत्र ।

मधुसूदन पु॰ मधुं तन्नामासुरं सूदयति, मधु, जीवानां शुभाशुभकर्म, ज्ञानदानेन सूदयति वा सूद-ल्यु । १श्रीकृष्णे । "भक्तानां कर्मणाञ्चैव सूदनात् मधुसूदनः" तन्त्रागमवचनः । मधु माध्वीकं सूदयति क्षरयति । २भ्रमरे जटा॰ पुंस्त्री॰ स्त्रियां ङीष् । मधु इव सूद्यते क्षर्यते ल्युट् ङीप् । ३पालङ्कीशाके स्त्री हेमच॰।

मधुस्रव पु॰ मधूनि मद्यानि स्रवत्यस्मात् स्रु-अप् । (मौल) १वृक्षे २मोरटलतायां राजनि॰ । ३मधुयष्टिकायां स्त्री जटा॰ ४जीवन्त्यां स्त्री शब्दच॰ । ५मूर्वायां स्त्री राजनि॰ । [जटाधरः ।

मधुस्रवस् पु॰ मधु स्रवति स्रु-असुन् । (मौल) वृक्षे

मधुस्वर पुंस्त्री॰ मधुर्मधुरः स्वरोऽस्य । १कोकिले शब्दर॰ स्त्रियां ङीष् । २मधुरस्वरवति त्रि॰ स्त्रियां टाप् ।

मधुहन् पु॰ मधुं तन्नामासुरं कर्मफलं वा ज्ञानद्वारा हन्ति हन् क्विप् । विष्णौ ।

मधूक न॰ मह-ऊक हस्य धः । १यष्टिमधौ अमरः । (मौल)२वृक्षे पु॰राजनि॰। [अमरः ।—मधूच्छिष्टमप्यत्र ।

मधूच्छिष्ट न॰ मधुन उच्छिष्टमवशिष्टम् । (मोम) सिक्थके

मधूपघ्न पु॰ मधुदैत्यस्योपघ्न आश्रयः । मथुरानगरे जटा॰ ।

मधूल पु॰ मधु लाति ला-क पृषो॰ । १जलजगिरिजमधूकद्वयोः जटा॰ । २मधुकर्कट्याम् ३द्राक्षे ४जीरनके च स्त्री गौरा॰ ङीष् राजनि॰ । स्वार्थे क अत इत्वम् टाप् । मधूलिका मूर्वायाम् अमरः ।

मध्य पुं न॰ मन-यत् नस्य धः । १देहस्यावयवभेदे । (माजा) "मध्येन सा वेदिविलग्नमध्या" कुमारः । न्याय्ये-मन्दत्वमीषत्वमिव २व्यापारभेदे न॰अमरः ।३पूर्वापरयोरन्तराले ४परार्द्धसंख्यातोऽर्वाचीनायां ५बहुसंख्यायां न॰६तत्संख्याते च ।"अन्त्यं मध्यं परार्द्धम्" लीला॰। ज्योतिषोक्ते ग्रहाणां ७गतिभेदे स्त्री मदति दपके पु॰। ८न्याय्ये १०अन्तर्वर्त्तिनि च त्रि॰ शब्दर॰।११मद्यकरपादके छन्दोमाले इ॰र॰ ।

मध्यगन्ध पु॰मध्ये फलमध्ये गन्धो यस्य । आम्रवृक्षे शब्दच॰

मध्यतस् अव्य॰ मध्य+तसिल् । प्रथमापञ्चमीसप्तम्यर्थवृत्ते-र्मध्यशब्दार्थे ।

मध्यदेश पु॰ कर्म॰ । 'हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशना-दपि । प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्त्तित, मनूक्ते देशभेदे ।

मध्यदिन न॰ मध्यं दिनस्य एकदेशिस॰ । १मध्याह्ने । अनुक॰। मध्यन्दिनमप्यत्र । तत्र भवे तत्र पुष्यति २बन्धूकवृक्षे राजनि॰ ।

मध्यपञ्चमूलक न॰ । "बलापुनर्नवैरण्डशूर्पपर्णीद्वयेन तु । एकत्र योजितेनैव ख्यातमध्यं पञ्चमूलकम्" राजनि॰ उक्ते पदार्थपञ्चके ।

मध्यपदलोपिन् पु॰ मध्यपदस्य लोपोऽस्त्यस्य इनि । व्याकरणप्रसिद्धे शाकपार्थिवादिके मध्यपदलोपयुते समासभेदे ।

मध्यम त्रि॰ मध्ये भवः म । १मध्यभवे । २षड्जस्वरमध्ये क्रौञ्चस्वरतुल्ये ३पञ्चमे स्वरे पु॰ अमरः ।

मध्यमपाण्डव पु॰ कर्म॰। अर्जुने तस्य पूर्वापरयोर्द्वयोर्द्वयो-र्मध्यवर्त्तित्वात् तथात्वम् । [मध्यमे हापि अर्जीवकादौ ।

मध्यमभृतक पु॰ कर्म॰ । 'मध्यमस्तु कृषीवल' इत्युक्ते

मध्यमलोक पु॰ कर्म॰ । पृथिव्याम् तस्याः पातालस्वर्ग-लोकयोर्मध्यवर्त्तित्वात् तथात्वम् । "मध्यमलोकपालः" इति रघुः मध्यलोकोऽप्यत्र ।

मध्यमसंग्रह पु॰ कर्म॰ । "प्रेषणं गन्धमाल्यानां धूपभूषण-वाससाम् । प्रलोभनञ्चान्नपानैर्मध्यमः संग्रहोमतः" व्यासोक्ते मध्यमे स्त्रीसंग्रहरूपे विवादभेदे ।

मध्यमसाहस न॰ कर्म॰ । "वासःपशन्नपानानां गृहोपकर-णस्य च । एतेनैव प्रकारेण मध्यमं साहसं स्मृतम्" इत्युक्ते परकीयवस्त्रादेर्भङ्गाक्षेपादिरूपे साहसभेदे "पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः । मध्यमः

अत्र्यादौ मुनिभेदे च पु०। मनवश्च चतुर्दश ते च हरिवं० ७अ० उक्ता दृश्याः। [स्त्रियां जातौ ङीष्।

**मनुज** पु०मनोः अन्ववायात् जायते जन-ड। मनुष्ये अमरः

**मनुष्य** पु० मनोरपत्यं यत् षुक् च। मानवे जातिभेदे। स्त्रियां जातौ टाप्। [कुबेरे अमरः।

**मनुष्यधर्मन्** पु० मनुष्यस्येव धर्मो यस्य अनिच् समा०।

**मनोगुप्ता** स्त्री मनसा मनःशब्देन तच्छब्दवाच्यत्वात् गुप्ता। मनःशिलायाम् अमरः।

**मनोजव** त्रि० जु-अच् मनोजवं वेगवत् गमनाय अर्हति। १पितृतुल्ये अमरः। मनस इव जवो यस्य। २अतिवेगवति त्रि० ३विष्णौ पु०। ४अग्निजिह्वाभेदे स्त्री अटा०। "काली कराली च मनोजवा च" श्रा०ति०। ५दुर्गाशक्तिभेदे। [कामवृद्धिकरक्षुपे राजनि०।

**मनोजवृद्धि** पु० मनोजस्य कामस्य वृद्धिर्यस्मात् ५ब०।

**मनोज्ञ** त्रि० मनो जानाति ज्ञापयति बोधनाय प्रवणीकरोति अन्तर्भूतण्यर्थे ज्ञा-क। १मनोहरे अमरः। २मनःशिलायां रत्नमा०। ३वन्ध्याकर्कोट्यां, ४कटभ्यां, ५जीरके ६मदिरायाञ्च स्त्री राजनि०। ७राजपुत्र्यां जटा० ८सरलकाष्ठे न० रत्नमा०। [तयोऽन्यत्र।

**मनोभव** पु० मनसि भवति भू-अच्। कामदेवे मनोभूरप्यत्र।

**मनोरथ** पु० मन एव रथोऽत्र, मनसो रथ इव वा दूरप्रापकत्वात्। इच्छायाम् अमरः।

**मनोरम** त्रि० मनो रमयति रम-णिच् अण् उप०स०। १मनोहरे अमरः। २गोरोचनायां स्त्री राजनि०। ३ऋषि-सुभार्यायां स्त्री मार्कं०। [वशे च।

**मनोहत** त्रि० मनो हतं यस्य। १प्रतिहते अमरः २प्रति-

**मनोहर** त्रि० मनो हरति सदर्शनादि हृ-अच्। १रुचिरे २कुन्दवृक्षे पु० शब्दर०। ३जात्यां ४स्वर्णयूथ्यां च स्त्री। ५स्वर्णे न० राजनि०। णिनि। मनोहारिन् मनोहरे त्रि० स्त्रियां ङीप्। [शिलायाम् अमरः।

**मनोह्वा** स्त्री मनःशब्देनाह्वयते ह्वे-क अर्थे च। मनः-

**मन्ज** मार्जने अक० ध्वनौ अक० भ्वा० पर० सेट्। मञ्जति अमञ्जीत् ममञ्ज। [मेदि०।

**मन्तु** पु० मन-तुन् तुट् च। १अपराधे २मनुष्ये ३प्रजापतौ च

**मन्त्र** पु० मन्त्रि-अच्। १गुप्तभाषणे, २इह वि कर्त्तव्यावधारणार्थं गुप्तौ ३देवादीनां साधनार्थं तन्त्राद्युक्ते मन्त्रभेदे, ४वेदविभागभेदे च। वैदिकतान्त्रिकमन्त्रलक्षणादि आगमभेदभाष्योक्तं वह्निपु० २८अ० उक्तञ्च दृश्यम्।

**मन्त्रकृत्** त्रि० मन्त्रं तदुच्चारणं वा कृतवान् कृ-भूते क्विप्। १मन्त्रव्याकारके २वेदमन्त्राणां स्मरणकर्त्तरि ३ऋषिभेदे पु० परिशिष्टखण्डे दृश्यम्।

**मन्त्रजिह्व** पु०मन्त्र एव जिह्वा आस्वादनसाधनं यस्य। अग्नौ हेमच०। मन्त्रेण दत्तहविरास्वादकत्वात्तस्य तथात्वम्।

**मन्त्रणा** स्त्री मन्त्रि-युच्। गुप्तभाषणे ल्युट्। तत्रार्थे न०।

**मन्त्रदातृ** पु० दा-तृच् ६त०। गुरौ।

**मन्त्रिन्** पु० मन्त्रयते णिनि। धीसचिवे येन सह इदमिति कर्त्तव्यमवधीयते तस्मिन् अमात्ये अमरः।

**मन्थ** क्लेशे अक० विलोडने सक० भ्वा० पर० सेट्। मन्थति अमन्थीत्। मथ्यते। [मथ्यते।

**मन्थ** विलोडे क्र्या० पर० द्विक० सेट्। मथ्नाति अमन्थीत्।

**मन्थ** पु० मन्थ करणे घञ्। १मन्थानदण्डे, "सक्तुभिः सर्पिषाभ्यक्तैः शीतवारिपरिप्लुतैः। नात्यच्छो नातिसान्द्रश्च मन्थ इत्यभिधीयते" इत्युक्ते २पेयभेदे, "चूर्णे चतुष्पले शीते गुडद्रव्यं पलं क्षिपेत्। ऋतुपाले मन्थयेत् सम्यक् तस्मात् हितं पिबेत्" भावप्र० उक्ते पेयभेदे च। ३नेत्रमले धरणिः ४किरणे च शब्दच०। भावे घञ्। ५आलोडनादौ। [रत्नमा०।

**मन्थज** न० मन्थात् दधिमन्थनात् जायते जन-ड। नवनीते

**मन्थन** पु० मथ्यतेऽनेन करणे ल्युट्। १मन्थानदण्डे शब्दर०। भावे ल्युट्। २विलोडनादौ न०।

**मन्थर** न० मन्थ-अरच्। १कुसुम्भाग्रान्। २कोषे ३फले, ४बाधे मन्थानदण्डे च पु०५वक्रे ६पृथौ ७मन्दे च त्रि० मेदि० "मदवशमन्थरमलयसमीरः" नैष०। ८जडे शब्दर०। ९नीचे हेम०। १०सूचके विश्वः ११कैकेय्याः दास्यां स्त्री।

**मन्थशैल** पु० ६त०। अमृतमन्थनाय मन्थानदण्डरूपेण कल्पिते मन्दरपर्वते। [बकवृक्षे राजनि०।

**मन्थान** पु० मन्थ-आनच्। १मन्थानदण्डे अमरः। २आरग्-

**मन्द** त्रि० मदि-अच्। १मूर्खे २स्वैरे ३अभाग्ये ४रोगिणि ५अल्पे ६स्वतन्त्रे ७खले च हेम०। ८मदरते ९शनिग्रहे १०हस्तिभेदे च पु० मेदि०। ११यमे त्रिका०। १२प्रलये च पु०अजयः। १३ज्योतिषोक्ते रविसंक्रान्तिभेदे १४ग्रहगतिभेदे च स्त्री।

**मन्दग** त्रि० मन्दं गच्छति गम ड १मृदुगामिनि २शनैश्चरे पु० शनि, ग्लानिपुरुष, हय, हंस, गज, वरस्त्रियः इत्येते स्वभावान्मन्दगतयः। णिनि। मन्दगामिन् तत्रार्थे त्रि० स्त्रियां ङीप्।

**मरकत** न॰ मरकं मारिभयं तरत्यनेन तॄ-ड। हरिद्वर्णे-मणिभेदे (पान्ना) अमरः। तद्वर्णवादि परिणिष्टे द्रव्यम्

**मरकतपत्त्री** स्त्री मरकतमिव हरिद्वर्णं पत्त्रमस्याः ङीप्। पाच्याम् राजनि॰।

**मरण** न॰ म्रियतेऽनेन मृ-करणे ल्युट्। वत्सनाभाख्ये १विषे राजनि॰। भावे ल्युट्। देहात्मनोर्विच्छेदरूपे, प्राणवायो-रुत्क्रमणरूपे वा २व्यापारभेदे।

**मरत** पु॰ मृ-अतच्। मरणे उणा॰।

**मरन्द** पु॰ मरं मरणं द्यति भ्रमराणां जीवनहेतुत्वात् दो-ड पृषो॰ मुम्। मकरन्दे शब्दर॰।

**मराकाली** स्त्री मरो मरणकालिकं दुःखमिवाकति याल-नेन मराको दुःखिकः स दवाकति पर्याप्नोति दुःख-दानाय अल-अच् गौरा॰ ङीष्। पक्षिकायौ (पिक्काति) रत्नमाला।

**मराल** पु॰ मृ-आलच्। १राजहंसे जटा॰ "तत्रापराजय-मरालमरालकेशी" नैषधम्। २कज्जले ३कारण्डवे ४अश्वे ५मेघे ६दाडिमीवने च वारस्वतः। ७स्निग्धे त्रि॰ मेदि॰।

**मरि(री)च** पु॰ मृ-इच-ए॰ वा दीर्घः। १धान्यमध्याते द्रव्ये अमरः। २कक्कोलके राजनि॰। [राजनि॰।

**मरि(री)चपत्त्रक** पु॰ मरिचस्येव पत्त्रमस्य कप्। सरलवृक्षे

**मरीचि** पु॰ मृ-ईचि। सप्तर्षिमध्ये ब्रह्मणो मानसे ज्येष्ठे पुत्रे १मुनिभेदे २कृपणे च हेमच॰। ३किरणे पुंस्त्री॰ अमरः।

**मरीचिका** स्त्री मरीचौ सूर्यकिरणे कमिव यत्र भ्रान्तौ। सूर्यकिरणे जलभ्रान्तौ, मृगतृष्णायाम् अमरः।

**मरु** पु॰ मृ-उ। १पर्वते २निर्जलदेशे च अमरः ३कुरवकवृक्षे भावप्र॰ ४देशभेदे च (माडवार) हेमच॰।

**मरुज** पु॰ मरुदेशे जायते जन-ड। १नखीनामगन्धद्रव्ये शब्दच॰। २निर्जलदेशजाते त्रि॰। ३महाकर्कोटिकाम् स्त्री राजनि॰।

**मरुत्** पु॰ मृ-उति। १वायौ अमरः २मरुवके भावप्र॰ ३देवे ४पृक्कापर्णे न॰ मेदि॰। ५पृक्कायां स्त्री शब्दर॰। स्वार्थे प्रज्ञाद्यण्। मारुतोऽप्यत्र। पृषो॰ मरुतः। मरुतोऽपि देवे च वायौ च ख्यातिः। [शब्दच॰।

**मरुत्कर** पु॰ मरुतमपानवायुं करोति कृ-अच्। राजमाषे

**मरुत्त** पु॰ चन्द्रवंश्ये १नृपभेदे।

**मरुत्तक** पु॰ मरुदिव तकति तक-हासे अच्। मरुवके भावप्र॰

**मरुत्पथ** पु॰ ६त॰। आकाशे। मरुद्वर्त्मादयोऽप्यत्र।

**मरुत्पाल** पु॰। मरुतो देवान् पालयति पाल-अण्। इन्द्रे

**मरुत्वत्** पु॰ मरुत् पोष्यत्वेन हेतुत्वेन वाऽस्त्यस्य न पदत्वम् मस्य वः। १इन्द्रे अमरः। २हनूमति शब्दर॰।

**मरुत्सख** पु॰ मरुतो वायोः सखा-टच् समा॰। १इन्द्रे धरणिः। २वह्नौ ३चित्रकवृक्षे च। [शब्दमाला।

**मरुदान्दोल** न॰ मरुतमान्दोलयत्यनेन करणे घञ्। व्यजने

**मरुदिष्ट** पु॰ मरुतां देवानामिष्टः। गुग्गुलौ राजनि॰।

**मरुद्भवा** स्त्री मरुतो वायोर्भवति वर्द्धते भू-अच् ५त॰। ताम्र-मूलीक्षुपे (खिराट) रत्नमा॰। [खदिरे रत्नमा॰

**मरुद्रुम** पु॰ मरोर्निर्जलदेशस्य द्रुमः तत्रजातत्वात्। विट्-

**मरुद्वाह** पु॰ मरुत् वाह इव यस्य। १धूमे त्रिका॰ २वह्नौ शब्दमा॰ ३चित्रकवृक्षे च। [अमरः।

**मरुन्माला** स्त्री मरुतो मालेव। (पिड्िङशाक) पृक्कायाम्

**मरुभू** पु॰ मरुर्भूर्निर्जला (माड़वार) १देशभेदे त्रिका॰। कर्म॰। २निर्जलभुवि स्त्री। [भावप्र॰।

**मरुभूरुह** पु॰ मरुभुवि निर्जलभूमौ रोहति रुह-क। करीरे

**मरुव** पु॰ मरुं निर्जलदेशं वाति कारणत्वेन वा-क। (नाग-दाना) (मरुवा) वृक्षभेदे। स्वार्थे क। तत्र वृक्षभेदे (मयना) अस्वपत्ररूपकाख्याम् अमरः। जम्बीरभेदे भरतः पुष्पप्रधाने (मरुयाफुल) वृक्षभेदे रत्नमा॰ व्याघ्रे, राहौ भयानके च जटा॰।

**मरुसम्भवा** स्त्री मरौ सम्भवति सम्+भू-अच् ७त॰। क्षुद्र-दुरालभायाम् राजनि॰ मरुस्थाद्योऽप्यत्र।

**मरूद्भवा** स्त्री मरौ उद्भवति उद्+भू-अच् ७त॰। १कार्पास्यां २क्षुद्रखदिरे ३यवासे च राजनि॰।

**मर्क** गतौ भ्वा॰ पर॰ सक॰ सेट्। मर्कति अमर्कीत् ममर्क।

**मर्कट** पुंस्त्री॰ मर्क-अटन्। १वानरे अमरः। स्त्रियां ङीष्। २ऊर्णनाभे (माकड़सा) ३स्थावरविषभेदे हेमच॰ (हाड़-गिला) ४पक्षिभेदे च पुंस्त्री॰ त्रिका॰ स्त्रियां ङीष्। स्वार्थे क। मर्कटक तत्रैव संज्ञायां कन्। मत्स्यभेदे देवभेदे च शब्दर॰। [भावप्र॰।

**मर्कटतिन्दुक** पु॰ मर्कटप्रियस्तिन्दुकः शाक॰त॰। कुपीलौ

**मर्कटपिप्पली** स्त्री॰ मर्कटप्रिया पिप्पली शाक॰त॰। अपा-मार्गे राजनि॰।

**मर्कटप्रिय** पु॰ ६त॰। क्षीरवृक्षे (खिरद) शब्दमा॰।

**मर्कटवासस्** पु॰ ६त॰। (माकड़सारजाल)लूतातन्तौ शब्दर॰

**मर्कटशीर्ष** न॰ मर्कटस्य वानरस्य शीर्षमिव। हिङ्गुले रत्नमा॰

६टङ्कणे न० राजनि० (सोहागा)। इनि। मलीमसम

मलिनमुख पु० मलिनं मुखं यस्य १वह्नौ तस्यादौ धूमाय मानत्वेन कृष्णत्वात् २चिलककपो च। ३वानरे पुंस्त्री० जाति०स्त्रियां ङीष् ४क्रूरे ५खले च त्रि०मेदि०६प्रेते हेम०।

मलिम्लुच पु० मली वैदिककर्माननुष्ठानेन दुष्टः सन् म्लोचति गच्छति म्लुच-क। १मलमासे २वायौ ३वह्नौ ४चौरे च मेदि०। ५चिल्लककपो। [कासीसे च मेदि०।

मलीमस त्रि०मल-ईमसच्।१मलिने अमरः। २लौहे ३पुष्प-

मल्ल धृतौ भ्वा०आ०अक०सेट्। मल्लते अमल्लिष्ट ममल्ले।

मल्ल पु० मल्ल-अच्। १बाहुयुद्धकारके नियोद्धरि २पात्रे ३बलीयसि ४मत्स्यभेदे ५कपोले च मेदि० ६व्रात्यक्षत्रि- यात् सवर्णायां जाते जातिभेदे (माल) ७सङ्कीर्ण- जातिभेदे लेटात् तीवरकन्यायां जाते सङ्कीर्णवर्णे (माला)शब्दर०पु० ८तन्त्रवाय्यां कुन्दकाराज्जाते सङ्कीर्ण- जातिभेदे च पुंस्त्री० स्त्रियां जातित्वात् ङीष्।९देशभेदे स्वार्थे क मल्लक तत्रार्थे। संज्ञायां कन्। दन्ते हेम०।

मल्लक पु० मल्लयते ध्रियतेऽत्र मल्ल-वुन्। १दीपाधारे पात्रे २नारिकेलफलजाते पात्रे च (माला) अमरः। ३प्रदीपे मधुरेशः ४नागपुष्पे स्त्री अमरः टाप् अत इत्वम्।

मल्लज न० मल्ले देशे जायते जन-ड। मरिचे जटा०।

मल्लभू स्त्री मल्लक्रीडनस्य बाहुयुद्धस्य योग्या भूः स्थानम्। देशभेदे। मल्लभूम्यादयोऽप्यत्र।

मल्लयुद्ध ६त०। बाहुयुद्धे तत्प्रकारः भा० वि० १२अ०।

मल्लार पु०मल्ल इव आच्छति आ-ऋ-अण्। १रागभेदे २वसन्त- रागस्य रागिणीभेदे स्त्री ङीप् सङ्गीतदामो०।

मल्लि(ल्ली) स्त्री मल्ल-इन् वा ङीप्। १मल्लिकायाम् शब्दमा० संज्ञायां कन्। मल्लिका अमरशेषे आलोडितचञ्चु- चरणे २हंसभेदे पुंस्त्री० मल्लिकाक्षोऽप्यत्र।

मल्लिकापुष्प पु० मल्लिकाया इव पुष्पमस्य। १कुटजवृक्षे राजनि०। २कदम्बवृक्षे च वैद्यक०। ६त०। ३मल्लि- कायाः कुसुमे।

मल्लिपत्र न० मल्लिरिव पत्त्रमस्य। छत्राके त्रिका०।

मव बन्धे भ्वा०पर०सक०सेट्। मवति अमवीत् अमावीत्।

मव्य बन्धे भ्वा०पर०सक०सेट्। मव्यति अमव्यीत्।

मश ध्वनौ अक० कोपे सक० भ्वा० पर० सेट्। मशति अमशीत्-अमाशीत् मेशतुः।

मशक पु० मश-वुन्। १कीटभेदे (मशा) राजनि०। २चर्म- मयजलपात्रभेदे ३रोगभेदे शब्दर०। तद्रोगलक्षणं यथा "अवेदनं स्थिरं चैव यस्य गात्रे प्रदृश्यते। माषवत् कृष्णमुत्पन्नमनिलं मशकं दिशेत्" गरु० पु० १७५अ०।

मशकिन् पु० मशकोऽस्त्यस्य इनि। उडुम्बरवृक्षे हेम०।

मशहरी स्त्री मशं मशकं हरति हृ-ट। मशकनिवारणार्थे वस्त्रनिर्मिते पदार्थे चतुष्क्याम् जटा०।

मषि(षी) स्त्री मष(स) इन् वा ङीप्। (काली) १पत्र- लेखनद्रव्ये त्रिका०। २नीलशेफालिकावृक्षे च शब्दर०।

मष वधे भ्वा०पर०सक०सेट्। मषति अमषीत् अमाषीत्।

मस परिमाणे अक० परिणामे सक० दि०पर०सेट्। मस्यति इरित् अमसत् अमसीत् अमासीत्। पुषादिरयं तेन अमसदित्येवेति पाणिनीयाः।

मसन न० मस-ल्यु। सोमराजीवृक्षे शब्दच०।

मसरा स्त्री मस-अरच्। मसूरे जटा०।

मसिका स्त्री मसीव इवार्थे कन्। नीलशेफालिकायाम् शब्दर०। ['त्रिका०

मसि(षी)जल न०मषिमिश्रितं जलम्। (कालो) लेखनद्रव्ये

मसिधान न० मसिर्धीयतेऽत्राधारे धा-ल्युट्। मस्याधारे (दोयात) स्त्रीत्वमपि तत्र ङीप्।

मसिपथ पु० मसिमादुपलक्षितमक्षरमेव पन्थाः विज्ञेयं यस्य। लेखनोपजीविनि त्रिका०।

मसिप्रसू स्त्री मस्याः प्रसूरिव। १मस्याधारे। मसिः प्रसूरिव यस्याः। २लेखन्याम् हारा०।

मसीना स्त्री मस-ईनन्। अतस्याम् (तिसि) शब्दच०।

मसु(सू)र पुंस्त्री०मस-उरच् ऊरच् वा। १कलायभेदे त्रिका स्त्रियां गौरा० ङीष्। २वेश्यायां, ३व्रीहिभेदे च स्त्री ङीप् मेदि०।

मसूरविदला स्त्री मसूरस्येव विदलं यस्याः। १कृष्णत्रिवृति (कालतेओडी) अमरः। २श्यामलतायां रत्नमा०।

मसूरिका स्त्री मसूरेव इवार्थे कन्। १वसन्तरोगे २कुट्टि- न्याम् शब्दमा० "कट्वम्ललवणक्षारविरुद्धाध्यशनाशनैः। दुष्टनिष्पावशाकाद्यैः प्रदुष्टपवनोदकैः। क्रूरग्रहेक्षणा- च्चापि देशे दोषाः समुद्धताः। जनयन्ति शरीरेऽस्मिन् दुष्टरक्तं समुद्धताः। मसूराकृतिसंस्थानाः पिडकाः स्युर्मसूरिकाः" भावप्र०।

मसूरी स्त्री मस-ऊरच् गौरा० ङीष्। १वसन्तरोगे मेदि० २त्रिवृति, ३रक्तत्रिवृति च राजनि०।

मसृण त्रि० मस-क्सुन, मसृ+क्स-क प्रषो० वा। १स्निग्धे २अकर्कशे च। ३अतस्यां स्त्री मेदि०।

ध्वजे रत्नमा०। २इन्द्रवारुण्यां (राखालशशा) स्त्री जटा०।

महाबल पु० महत् बलं यस्य। १वायौ २दशबले बुद्धे च त्रिका० ३महाबलयुते त्रि०। महत् बलं यस्मात् ५ब०। ४सीसके न० हेमच०। ५पीतवाट्यालके स्त्री रत्नमा०।

महाभारत पु० न० "चत्वारएकतो वेदा भारतञ्चैकमेकतः। पुरा किल सुरैः सर्वैः समेत्य तुलया धृतम्। चतुर्भ्यः सरहस्येभ्यो वेदेभ्योऽभ्यधिकं यदा। तदा प्रभृति लोकेऽस्मिन् महाभारतमुच्यते। महत्त्वात् भारतत्वाच्च महाभारतमुच्यते" इत्युक्तलक्षणे व्यासप्रणीते लक्षश्लोकात्मके ग्रन्थभेदे भारतशब्दे दृश्यम्।

महाभीता स्त्री कर्म०। १लज्जालुलतायाम् शब्दच०। स्पर्शमात्रेण हि सङ्कोचेन तस्या अतिभीतत्वम्। २अतिभीते त्रि०।

महाभूत न० कर्म०। सर्वेषां पञ्चीकरणतारतम्या स्थूलभा-वेषु इत्युक्तेषु पृथिव्यप्तेजोवाय्वाकाशेषु १पञ्चसु भूतेषु। "तं वेधा विदधे नूनं महाभूतसमाधिना" रघुः। २परमेश्वरे पु० "तस्यैतस्य महाभूतस्य निःश्वसितमेतत् यदृग्वेदः" इत्यादि श्रुतिः। [मत्स्यपु०।

महाभूतघट पु० षोडशमहादानान्तर्गते षोडशे महादाने

महाभृङ्ग पु० कर्म०। १नीलभृङ्गराजे राजनि०। [हेमच०।

महामनस् त्रि० महदुदारं मनस्तुल्यापरोऽस्य। महाशये।

महामात्र पु० "मन्त्रे कर्मणि भूषायां वित्ते माने परिच्छदे मात्रा च महती येषां महामात्रास्तु ते स्मृताः" इत्युक्ते प्रधानामात्ये।

महामाया स्त्री कर्म०। अस्मिन् अन्यधर्मावभासो हि माया सर्वजगन्मूलत्वात्तस्या महत्त्वम्। १जगत्कारणभूतायाम् अविद्यायां २तदधिष्ठात्र्यां दुर्गायाञ्च "महामाया हरेश्चैषा यया संमोह्यते जगत्" देवीमा०।

महामाष पु० कर्म०। राजमाषे (बरबटी) शब्दच० माषापेक्षया तस्य हि महत्त्वात्तथात्वम्।

महामूल पु० महत् वीर्यकारित्वात् श्रेष्ठं मूलमस्य। राजपलाण्डौ राजनि०।

महामृग पुंस्त्री०महान् मृगः पशुः। १गजे हेमच०।२शरभे च राजनि०तयोर्हि पशुषु महत्त्वात् तथात्वम्। स्त्रियां ङीष्

महामेद पु० स्त्री द्वन्द्व। वैद्यकप्रसिद्धाष्टवर्गोक्ते औषधिभेदे रत्नमाला। तत्रार्थे स्त्री राजनि०। "महामेदाभिधः कन्दो मोरङ्गादौ प्रजायते। शुक्लार्द्रकनिभः कन्दो लताजातः सपाङ्कुरः। महामेदाभिधो ज्ञेयः" भावप्र०।

महामोह पु० महान् मोहः भ्रान्तिहेतुको वस्तुतोऽनिष्टेऽपि रागः। १संसारतद्विषयकारणक्लेशाज्ञानभेदे "तमोऽविवेको मोहः स्यादन्तःकरणविभ्रमः। महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा" इत्युक्ते २मैथुनादिसुखभोगेच्छारूपे अन्तःकरणवृत्तिभेदे च। वैषयिकसुखस्य वस्तुतोऽनिष्टत्वात् तथात्वम्। "दशविधो महामोहः" सा० का०। "शब्दादिषु पञ्चसु दिव्यादिव्यतया दशविधेषु विषयेषु रञ्जनीयेषु रागः आसक्तिः" त० कौ० उक्ते ३दशविधविषयरागे च। [१तद्युक्ते पु०।

महाम्ल न० कर्म०। १अम्ले २तिन्तिड़ीफले च जटा०।

महायज्ञ पु० कर्म०। नित्यं महत्फलसाध्ये वेदाध्ययनाग्निहोत्रपितृतर्पणभूतबलिकर्मातिथिपूजनरूपेषु पञ्चसु कर्मसु।

महारजत न० कर्म०। १काञ्चने २धुस्तूरे च अमरः। तस्य हि रञ्जकत्वात् महत्त्वम्, कर्म०। ३हरिद्रायां च।

महारजन न० रजत्यनेन ल्युट् कर्म०। १कुसुम्भपुष्पे अमरः २स्वर्णे च मेदि०।

महारथ पु० "एकादश सहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च विज्ञेयः स महारथः" इत्युक्ते योधभेदे

महारस पु० ६ब०। १खर्जूरे २कशेरुणि ३कोषकारे मेदि० ४इक्षौ पु०काञ्जिके न०जटा०। कर्म० ५पारदे पु० राजनि०। "दरदः पारदं शङ्खो वैक्रान्तं कान्तमभ्रकम्। माक्षिकं विमलश्चेति स्युरेतेऽष्टौ महारसाः" राजनि० उक्तेषु ६दरदादिषु पु०।

महाराज(जि)क पु० महान् सन् राजते राज् ण्वुल्। इत्वं वा। विंशत्यधिकशतद्वयसंख्याते गणदेवभेदे।

महाराजद्रुम पु० कर्म०। आरग्वधे (सोन्दाल) राजनि०।

महारात्रि स्त्री "ब्रह्मणश्च निपाते च महाकल्पो भवेन्नृप। प्रकीर्त्तिता महारात्रिः" इत्युक्ते महाकल्पान्ते १महाप्रलये "अर्द्धरात्रात् परं यत्तु मुहूर्त्तद्वयमुच्यते। सा महारात्रिरुद्दिष्टा" तन्त्रोक्ते अर्द्धरात्रोपरि मुहूर्त्तद्वयात्मके २रात्रिकाले।

महाराष्ट्र पु० कर्म०। (महाराष्ट्र) १देशभेदे। तद्देशः कारणत्वेन अस्त्यस्य अच् गौरा० ङीष्। २जलपिप्पल्याम् ३शाकभेदे च स्त्री राजनि०। [शुभे न०।

महारिष्ट पु० कर्म०। १गिरिजाते निम्बभेदे राजनि०। २अत्य-

महारोग पु० कर्म०। "उन्मादो राजयक्ष्मा च श्वासस्त्वग्दोष एव च। मधुमेहश्चाश्मरी च तथोदरभगन्दरौ। इत्येतेऽष्टौ महारोगा महापातकसम्भवाः" इत्युक्तेषु महापातकजन्येषु उन्मादादिषु रोगेषु। (मद्रा०) मद्रावदल

कृष्णाहेतौ शुण्ठ्यां राजनि० । [स्त्री ङीप् ।
**महाशूद्र** पु० कर्म० । १आभीरे (आहीर) जातिभेदे २तत्स्त्र्यां
**महाश्मशान** न० कर्म० । काश्याम् समूलकर्मवर्जितसर्वजो-
वानां पुनरुत्पादनाय मायाधारत्वात् तस्यास्तथात्वम् ।
**महाश्यामा** स्त्री कर्म० । १श्यामालतायां रत्नमा० । २शिं-
शपाभेदे राजनि० ।
**महाश्रावणिका** स्त्री कर्म० । (कुकुरी) क्षुपभेदे राजनि०
**महाश्वेता** स्त्री कर्म० । १सरस्वत्याम् त्रिका० २श्वेतभूमि-
कुष्माण्डे च अमरः ।
**महाष्टमी** स्त्री कर्म० । "आश्विने शुक्लपक्षस्य भवेद् या तिथि-
रष्टमी । महाष्टमीति सा प्रोक्ता" इत्युक्तायामाश्विन-
शुक्लाष्टम्याम् । [राजनि० ।
**महासर्ज** पु० कर्म० । १असनवृक्षे २पनसवृक्षे च (कांठाल)
**महासह** पु० कर्म० । १पुष्पप्रधाने कुब्जवृक्षे राजनि० ।२माषप-
र्ण्याम् स्त्री ३अम्लानवृक्षे च स्त्री अमरः ।४अतिक्षमे त्रि०
**महासान्तपन** न० । कर्म० । मन्वाद्युक्तव्यरात्युक्ते व्रतभेदे ।
**महासार** पु० महान् सारोऽस्य । दुष्खदिरे राजनि० ।
**महासिंह** पु० नित्यक० । १शरभे राजनि० २श्रेष्ठसिंहे च
**महासुगन्धा** स्त्री बहु गन्धोऽधिकंसा यस्याः कर्म० ।
१गन्धनाकुल्याम् राजनि० २अतिसुगन्धयुक्ते त्रि० ।
**महासेन** पु० महती सेनाऽस्य । १कार्त्तिकेये अमरः । २म-
हत्सेनाधिपतौ च ।
**महास्कन्धा** स्त्री महान् स्कन्धोऽस्याः । जम्बूवृक्षे राजनि० ।
**महाहास** पु० कर्म० । अट्टहासे उच्चैर्हासे शब्दर० ।
**महाहिगन्धा** पु० अहेर्गन्धो हिंसा यस्मात् अहिगन्धो
नकुलः तत्सदृशगन्धोऽस्य कर्म० । गन्धनाकुल्याम्
राजनि० । [२अतिखर्वे त्रि०
**महाह्रस्वा** स्त्री कर्म० । १कपिकच्छ्वाम् (आलकुशी) शब्दमा०
**महि(ही)** स्त्री मह-इन् वा ङीप् ।१पृथिव्याम् । ङीबन्तस्तु
मालवदेशस्थे २नदीभेदेऽपि ।
**महिका** स्त्री मह्यते मह-क्वुन् । हिमे अमरः ।
**महिमन्** पु० महतो भावः इमनिच् टिलोपः ।
१महत्त्वे २ईश्वरैश्वर्यभेदे हेमच० । [२मर्कटवृक्षे च ।
**म(मि)हिर** पु० मह-(मिह-)वा किरच् ।१सूर्ये त्रिका० ।
**महिला** स्त्री मह-इलच् ।१योषिति अमरः ।२प्रियङ्गुलतायां
३रेणुकागन्धद्रव्ये राजनि० ४मत्तायां स्त्रियाञ्च शब्दर० ।
एलच् । महेलापि योषिति शब्दर० ।
**महिष** पुं स्त्री० मह-टिषच् । १स्वनामख्याते पशुभेदे,
स्त्रियां ङीप् । २महिषासुरे च । ३कृताभिषेकायां राज्ञः
स्त्रियां ४वैरिन्ध्र्याम् ५ओषधिभेदे च स्त्री मेदि० ङीप् ।
६व्यभिचारिण्यां स्त्रियां माहिषिकशब्दे दृश्यम् ।
**महिषध्वज** पु० महिषो ध्वजः चिह्नं वाहनत्वेनास्य ।
१यमे २जिनभेदे च हेमच० महिषवाहनादयोऽप्यत्र ।
**महिषमर्दिनी** स्त्री महिषं महिषासुरं मर्द्दयति मृद-
णिनि ङीप् ६त० । दुर्गाभेदे । [क तत्रैव ।
**महिषाक्ष** पु० महिषस्याक्षीव वर्णप्रभा० । गुग्गुलुभेदे । स्वार्थे
**महिषासुर** पु० रम्भासुरेण महिष्यामुत्पादिते असुरभेदे ।
**महिषासुरसम्भव** पु० महिषासुरात्तन्मेदसः सम्भवति
सम्+भू-अच् । भूमिजगुग्गुलौ राजनि० । [न्द्रे अमरः ।
**महीक्षित्** पु० महीं क्षयते ईष्टे क्षि-ऐश्वर्ये क्विप् तुक् च ।
**महीज** न० मह्या जायते जन-ड । १आर्द्रके राजनि० । २म-
ङ्गलग्रहे ३नरकासुरे च पु० ४सीतायां स्त्री । [धरोऽप्यत्र ।
**महीध्र** पु० महीं धारयति धृ-क । पर्वते अमरः । अच् । महो-
**महीप्राचीर** न० मह्याः प्राचीरमिवावरकत्वात् । समुद्रे
त्रिका० । [क्विप् । १पर्वते २भूपतौ च ।
**महीभृत्** पु० महीं बिभर्त्ति धारयति पालयति वा भृ-
**महीयस्** त्रि० अतिशयेन महान् महत्+ईयसुन् टिलोपः ।
अतिमहति "महतो महीयान्" श्रुतिः ।
**महीयमान** त्रि० महीयते महो+यक्ता० शक-शानच् ।
१पूज्ये २श्रेष्ठे च "महीयमाना भवताऽतिमात्रम्" भट्टिः ।
**महीरुह** पु० मह्यां रोहति रुह-क । १वृक्षे अमरः २शाकवृक्षे
राजनि० ।
**महीलता** स्त्री मह्या लतेव । (केंचो) किञ्चुलुके अमरः ।
**महेच्छ** त्रि० महती इच्छा यस्य । महाशये अमरः ।
**महेन्द्र** पु० महान् इन्द्रः इन्द्रस्यापि नियन्तृत्वात् । १परमे-
श्वरे २महैश्वर्यवति इन्द्रे ३जम्बुद्वीपस्थपर्वतभेदे च मेदि०
**महेन्द्रकदली** स्त्री महेन्द्रप्रिया तद्वर्णा वा कदली ।
कदलीभेदे राजनि० । [इयोऽप्यत्र राजनि० ।
**महेन्द्रपुरी** स्त्री ६त० । अमरावत्याम् । महेन्द्रनगर्या-
**महेन्द्रवारुणी** स्त्री महेन्द्रस्य वरुणस्य तयोरियं प्रियत्वात्
अण् देवताद्वन्द्वे उभयपदवृद्धिः कर्म० । (बडमाकाल)
लताभेदे राजनि० । [अमरः ।
**महेरणा** स्त्री मही गवोत्पन्नक्षीरदात लयु । शल्लकीवृक्षे
**महेश** पु० कर्म० । शिवे । महेश्वरोऽप्यत्र "महेश्वरस्त्र्यम्बक
एव नापरः" इति रघुः ।
**महेशबन्धु** पु० ६त० । बिल्ववृक्षे शब्दच० ।

**महेला** स्त्री॰ कर्म॰। स्थूलैलायाम् (बड़एलाची) राजनि॰।

**महोक्ष** पु॰ महान् उक्षा अच् समा॰। वृहद्वृषे अमरः। "महोक्षं वा महाजं वा श्रोत्रियाय प्रकल्पयेत्" मनुः।

**महोटी** स्त्री महान्ति फलापेक्षया स्थूलानि अटानि यस्याः ङीप्] वृहत्यां क्षुपभेदे भावप्र॰।

**महोत्पल** पु॰ कर्म॰। १पद्मे, २सारसपक्षिणि च अमरः।

**महोत्सव** पु॰ कर्म॰। मङ्गलसूचकसम्मादकव्यापारे।

**महोत्साह** त्रि॰ महान् उत्साहो यस्य। अत्यन्तोद्यमयुक्ते महोद्यमोऽप्यत्र।

**महोदधि** पु॰ कर्म॰। समुद्रे।

**महोदय** पु॰ महान् उदयो हरिराधिक्यं वा यस्य। १कान्यकुब्जदेशे। २तद्देशस्थे पुरभेदे न॰। ३मोक्षे पु॰मेदि॰। ४स्वामिनि पु॰हेमच॰। "अमार्कपाते श्रवणम्" इत्यादि वचनात् पुण्ययुक्तार्कोदययोगात् "किञ्चिदूने महोदयः" इत्युक्ते किञ्चिदूने ५योगभेदे पु॰। ६नागबलायां स्त्री राजनि॰।

**महोदरी** स्त्री॰ महदुदरं यस्याः। १शतमूल्याम् भावप्र॰। २महदुदरयुक्ते त्रि॰। [त्रि॰।

**महोन्नत** पु॰ कर्म॰। १तालवृक्षे भावप्र॰। २अत्यन्तोन्नतियुक्ते

**महोरग** पु॰ कर्म॰। वृहत्सर्पभेदे महोरगाकारोऽस्त्यस्य अच्। २तगरमूले न॰ रत्नमा॰।

**महोल्का** स्त्री कर्म॰। वृहदुल्कायाम्।

**महौषध** न॰ कर्म॰। १शुण्ठ्याम् २लशुने ३वाराहीकन्दे वत्सनाभे ४विषे, ५भूम्याहुल्यके राजनि॰ ६पिप्पल्याम् शब्दच॰ ७अतिविषायाम् अमरः दिव्यवीर्य्यवदौषधमात्रे च।

**महौषधि** स्त्री कर्म॰। १दूर्वायां २लज्जालुकुपे शब्दच॰। "सहदेवी तथा व्याघ्री बला चातिबला त्वच। शङ्खपुष्पी तथा सिंही अष्टमी च सुवर्चला। महौषध्यष्टकं प्रोक्तम्" इत्युक्ते ३देवादीनां स्नानीयद्रव्यभेदे। वा ङीप्। ४श्वेतकण्टकार्य्यां ५ब्राह्म्यां ६कटुकायाम् ७अतिविषायाञ्च राजनि॰ ८हिलमोचिकायाम् त्रिका॰।

**महौषधिगण** पु॰ "पृश्निपर्णी श्यामलता भृङ्गराजः शतावरी। गुडूची सहदेवी च महौषधिगणः स्मृतः" शब्दच॰उक्ते पृश्निपर्ण्यादौ ओषधिगणे। [अमित मने।

**मा** शब्दे अक॰ माने सक॰ जु॰ आ॰ अनिट्। मिमीते

**मा** माने अदा॰ प॰ सक॰ अनिट्। माति अमासीत्।

**मा** माने दि॰ ङित् आ॰ सक॰ अनिट्। मायते अमास्त।

**मा** अव्य॰ ङिदनुबन्धात् दैवादिकात् आदादिकाद्वा माधातोः क्विप्। १वारणे। धातोर्ङित्त्वेन शब्दे ङित्त्वकरणात् "न माङ्योगे" पा॰ ङिदनुबन्धधातुनिष्पन्नयोगे न अडागमः तद्भिन्नयोगे तु स्यादेव "मा निषाद प्रतिष्ठां त्वमगमः" इति रामायणम्। मा-क-टाप्। २लक्ष्म्याम् मेदि॰३मातरि च स्त्री। मा-सम्प॰भावे क्विप्। ४माने स्त्री शब्दर॰।

**मांस** न॰ मन-स दीर्घश्च। "मां स भक्षयितामुत्र यस्य मांसमिहाद्म्यहम्। इति मांसस्य मांसत्वं मनुरब्रवीत्" मनूक्ते प्राणिदेहस्थशोणितपरिपाकजे धातुभेदे भावप्रकाशे मांसवर्गे तद्गुणाः उक्ता दृश्याः। पाकघानशब्दे परे समासेऽस्यान्त्यलोपः "मांस्पचन्या उखायाः" महाभाष्यम्।

**मांसच्छदा** स्त्री मांसं छादयति छद-णिच्-अण् गुणः। मांसरोहिण्यां लतायाम राजनि॰।

**मांसज** न॰ मांसात् जायते जन-ड। देहस्थे मांसजन्ये मेदसि हेमच॰। अस्थ्यादयस्तत्रैवात्र।

**मांसदलन** पु॰ मांसं शोथात्मकं मांसं दलयति दल-णिच्-ल्यु। शोथघातकवृक्षे शब्दच॰। [राजनि॰।

**मांसद्राविन्** पु॰ मांसं द्रावयति णिच्-णिनि। अम्लवेतसे

**मांसपेशि** स्त्री हृत॰। गर्भस्थावयवभेदे। वा ङीप् तत्रैव भावप्र॰। [राजनि॰।

**मांसफला** स्त्री मांसमिव कोमलं फलं यस्याः। वार्त्ताक्याम्

**मांसमासा** स्त्री मस-परिणामे अच् मांसस्य परिणामो यस्याः ५ ब॰। माषपर्ण्याम् राजनि॰।

**मांसरोहिणी** स्त्री मांसं रोपयति रुह-णिच् णिनि वा न पुक्। सुगन्धिद्रव्यभेदे (चामकषा) राजनि॰।

**मांसल** त्रि॰ मांस+बलवदर्थे लच्। १बलवति अमरः। २स्थूले दृढे च। [राजनि॰।

**मांसलफला** स्त्री मांसलं दृढं फलमस्याः। वार्त्ताक्याम्

**मांससार** पु॰ हृत॰। मेदसि राजनि॰। मांससारोऽप्यत्र

**मांसहासा** स्त्री मांसेन हसते कर्मणि घञ्। देहस्थचर्मणि शब्दर॰। [(कपाट) अमरः।

**मांसिक** त्रि॰ मांसं पण्यमस्य ठक्। मांसविक्रयोपजीविनि।

**मांसिनी** स्त्री मांसस्याकारस्तद्वत्त्वं वाऽस्त्यस्याः इनि। जटामांस्याम् राजनि॰।

**मांसी** स्त्री मांसमस्त्यस्य अच् गौ॰ ङीप्। १जटामांस्याम् २कक्कोल्याम् मेदि॰ ३मांसच्छदायां राजनि॰।

**मांसिष्टा** स्त्री मांसमिष्टं यस्याः तद्गुणायां खगभेदे राजनि॰

**माकन्द** पु॰ माति मा-क्विप् माः परिमिताः कन्दोऽस्य।

**माधवोद्भव** पु० माधवे वैशाखे उद्भवति फलवत्त्वेन उद्+भू-अच्। (पियाल) राजादन्याम् राजनि०।

**माधुर** न० मधु-राति अमरेभ्यो ददाति रा-क-स्वार्थे, मधुरस्येदं वा अण्। १मल्लिकापुष्पे त्रिका०। २मधुरस्वभावे त्रि०।

**माधुरी** स्त्री मधुरस्य भावः ष्यञ् माधुर्य्यं पित्त्वात् स्त्रीत्वपक्षे ङीष् यलोपः। १माधुर्य्ये मधुरत्वे, "मद्यमस्य माधुरी धारा" इत्युद्भटः। मधुरा+स्वार्थे अण्। २मदिरायाम्

**माधुर्य्य** न० मधुरस्य भावः ष्यञ्। १मधुरत्वे "चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते" सा०द० उक्ते २काव्यगुणभेदे च। तद्व्यञ्जकवर्णाश्च तत्रोक्ता यथा "मूर्द्ध्नि वर्गान्त्यवर्णेन युक्ताः टठडढान् विना। रणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः। अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा"। तत्र सम्भोगश्टङ्गारादावनुगुण्यं यथोक्तं तत्रैव "सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्" २लावण्ये हेम०। "रूपं किमप्यनिर्वाच्यं तनोर्माधुर्य्यमुच्यते" उज्ज्वलमणौ तल्लक्षणमुक्तम्।

**माध्यन्दिन** न० मध्यन्दिनमेव-अण्। मध्यमदिने तत्र पाठः अण्। शुक्लयजुर्वेदीयशाखाभेदे।

**माध्वीक** स्त्री मधुना मधूकपुष्पेण च निर्वृत्तम् ईकक्। १मधूकपुष्पजाते मद्ये अमरः। मधु एव अण् स्वार्थे ईकक्। २द्राक्षाफले "माध्वी माध्वीकं। चिन्ता विन्ध्यस्थिति जयदेवः। [नारिकेले राजनि०।

**माध्वीकफल** पु० माध्वीकमिव मधुरं फलमस्य। मधु-

**माध्वीमधुरा** स्त्री० माध्वीकमिव मधुरा खर्जू० अलोपः। मधुरखर्जूरिकायाम् राजनि०।

**मान** विचारे भ्वा० आत्म० सेट् स्वार्थे सन् नेट्। मीमांसते अमीमांसिष्ट अर्थायां च तत्र न स्वार्थे सन्।

**मान** पूजायां वा चु० उ० पक्षे भ्वा० पर० सक० सेट्। मानयति ते मानति अमीमनत्-त अमानीत्।

**मान** न० मा-ल्युट्। १परिमाणे कुडवप्रस्थादौ द्रव्यपरिच्छेदे भावप्र० मानपरिभाषा वर्णनञ्च दृश्या। २प्रमाणे "मानाधीना मेयसिद्धिः" मीमांसकाः। मानाङ्के कालक्रियायां तालविरामोपलक्षिते ३कालव्यापारे च मेदि०। मन-घञ्। आत्मनि उत्कर्षाभिमानात्मिकायां ४चित्तसमुन्नतौ पु० अमरः। "स्वाभीष्टाद्यनीदिविरोधी मान उच्यते" इत्युक्ते ५अनुरक्तदम्पत्योः ६कोपभेदे पु०। "देहि मयि मानमनिदानम् जयदेवः। ७अभिमाने च।

**मानग्रन्थि** पु० मानस्य ग्रन्थिर्बन्धनं यस्मात्। अपराधे त्रिका०

**मानरन्ध्रा** स्त्री मानाय कालप्रमाणज्ञानाय रन्ध्रं यस्याः। ताम्रनिर्मिते सच्छिद्रे कालज्ञानहेतौ घटीयन्त्रभेदे त्रिका०।

**मानव** पु० मनोरपत्यम् अण्। १मनुष्ये अमरः। स्त्रियां जातौ ङीप्। सा च २स्वायम्भुवकन्यायाम् भारतम्। ३शासनदेवताभेदे हेमच०। ४बाले पु० शब्दर०।

**मानस** न० मन एव अण्। १मनसि अमरः। कैलासान्तिकस्थे ब्रह्मणा मनसा कृते २सरोवरभेदे च। मनस इदम् अण्। ३चित्तसम्बन्धिनि त्रि०।

**मानसव्रत** न० मनसा कृतं मानसं कर्म०। "अहिंसा सत्यमस्तेयं ब्रह्मचर्य्यमकल्कता। एतानि मानसानि स्युर्व्रतानि" इत्युक्तेषु अहिंसादिषु। [वाक्यादयोऽप्यत्र।

**मानसौकस्** पु० मानसमोको यस्य। हंसे अमरः मान-

**मानिनी** स्त्री मान-इनि ङीप्। १फलीवृक्षे मेदि०। २अभिमानवत्यां स्त्रियां च। ३मानयुते त्रि० ४सिंहे पु० राजनि०।

**मानुष** पु० मनोरयम् अण् षुक् च। मानवे, ततो जातौ स्त्रियां ङीप् मानुषी। मानुषस्येदम् अण्। २मनुष्यसम्बन्धिनि त्रि० स्त्रियां ङीप् सा च ३चिकित्साभेदे शब्दर०।

**मानुष्य** न० मानुषस्य भावः ष्यञ्। मनुष्यत्वे।

**मानोज्ञक** न० मनोज्ञस्य भावः मनोज्ञा० वुञ्। मनोज्ञत्वे

**मान्द्य** न० मन्दस्य भावः ष्यञ्। १रोगे हेम०२मन्दतायाम्।

**मान्धातृ** पु० मामिन्द्रं धयति धे-तृच्। "मामयं धास्यतीत्यस्मात् मान्धातासौ प्रकीर्त्तितः" इति निरुक्ते युवनाश्वराजपुत्रे नृपभेदे। [२सहस्रावार्या स्त्री शब्दमा०।

**मान्य** पु० मान-अर्हायां कर्मणि ण्यत्। १पूज्ये जटा०।

**मामक** त्रि० मम-इदम् अस्मद्+वुञ् ममादेशः। मत्सम्बन्धिनि अञ्। मामकीनोप्यत्र।

**माया** स्त्री मा-यत् वा०नैत्यम्। १शाम्बरि कापट्ये अमरः। २इन्द्रजालादौ ३मिथ्याबुद्धिहेतुज्ञानभेदे, ४कृपायां ५दम्भे ६बुद्ध्यां च मेदि०। ७बुद्धमातरि स्त्री अमरः। ८ईश्वरस्योपाधौ, अघटनघटनापटीयस्यां शक्तौ वेदान्त०। ९पीताम्बरे १०असुरभेदे पु०मेदि०। [(बाजीकर) शब्दर०।

**मायाकृत्** पु० मायामिन्द्रजालं करोति कृ-क्विप्। मायाकरे

**मायादेवीसुत** पु० ६त०। बुद्धे अमरः।

**मायावत्** त्रि० माया+अस्त्यर्थे मतुप् मस्य वः। १माया विशिष्टे० २कंसराजे पु० शब्दर०। ३कामपत्न्यां स्त्री ङीप् जटा०।

यति-ते मार्गति । अममार्गत् त । अमार्गीत् ।

**मार्ग** पु० मृज-घञ्-मार्ग-अन्वेषणे वा घञ् । १पथि अमरः । तन्नेदा यथा "त्रिंशद्धनूंषि विस्तीर्णो देवमार्गस्तु तैः स्मृतः । विंशद्धनुर्ग्राममार्गः सीमामार्गो दशैव तु । धनूंषि दश विस्तीर्णः श्रीमान् राजपथः स्मृतः । नृवाजिरथनागानामसम्बाधः सुसञ्चरः । धनूंषि चैव चत्वारि शाखारथ्यास्तु निर्म्मिताः । त्रिकरायोपरथ्यास्तु द्विकरायोपरथ्यका । जङ्घापथश्चतुष्पादस्त्रिपादश्च गृहान्तरम् । प्रतिपादस्त्वर्द्धपादः प्राग्वंशः पादकः स्मृतः । अवकरः परिवारः पादमात्रः समन्ततः । प्राड्काले तु प्राड्ती कर्त्तव्या अन्यथा नहि" देवीपु० ।

**मार्गण** न० मार्ग-ल्युट् । १अन्वेषणे अमरः । २याचने ३प्रणये च मेदि० । कर्त्तरि ल्यु । ४याचके त्रि० ५शरे पु० अमरः ।

**मार्गशिर** पु० मृगशिरसा युक्ता पौर्णमासी अण् सा यत्र मासे पुनरण् । चान्द्रे १अग्रहायणे मासि २तत्पौर्णमास्यां स्त्री ङीप् शब्दर० ।

**मार्गशीर्ष** पु० साधनं मार्गशिरवत् । १अग्रहायणे मासि । अमरः । २तत्पौर्णमास्यां स्त्री ङीप् ।

**मार्गित** त्रि० मार्ग-क्त । अन्वेषिते ।

**मार्ज्ज** मार्जने सक० स्वनौ अक० चुरा० उभ० सेट् । मार्जयति-ते अममार्जत्-त ।

**मार्ज्जन** न० मृज-ल्युट् । प्रोञ्छनादिना निर्म्मलीकरणे । शुच् । तत्रैवार्थे स्त्री । सा च २तरजन्नौ हेमच० । करणे ल्युट । सम्मार्जन्याम् (झाँटा) । स्त्री ङीप् अमरः ।

**मार्ज्जार(ल)** पुंस्त्री० मृज-आरन् वा रस्य लः । १विड़ाले अमरः स्त्रियां ङीष् । २रक्तचित्रके पु० राजनि० । ३खट्टाशे च हेमच० । ततः संज्ञायां कन् । मयूरे ।

**मार्ज्जारगन्धा** स्त्री मार्ज्जारस्येव गन्धो यस्याः । मुद्गपर्णीभेदे रत्नमा० । स्वार्थे क अत इत्वम् । तत्रैव ।

**मार्ज्जारी** स्त्री मृज-आरन् गौरा० ङीष् । १कस्तूर्य्याम् २खट्टाशजन्तौ ३मार्ज्जारयोषिति च मेदि० ।

**मार्ज्जारी(री)य** पुंस्त्री० मार्ज्जार+(छ) स्वार्थे छ, मृज-आरीयक् रस्य लत्वम् वा । १विड़ाले २शूद्रे च स्त्रियां टाप् ३कायशोधने पु० मेदि० ।

**मार्जित** पु० मार्ज-क्त । २शोधिते । दधि-खण्डमधुसर्पिर्मरिचादियुते कर्पूरादिवासिते भक्ष्यभेदे स्त्री (रसा) । भरतः

**मार्त्तण्ड** पु० मृते अण्डे भवः अण् पृष० । १सूर्य्ये । तस्य तन्नामकत्वकथा च "मारितस्य यतः प्रोक्तमेतदण्डं त्वयोदित । तस्मान्मुने ! सुतस्तेऽयं मार्त्तण्डाख्यो भविष्यति" मार्क० पु० । २अर्कवृक्षे अमरः । ३शूकरे पुंस्त्री० मेदि० स्त्रियां ङीष् ।

**मार्त्तिक** न० मृत्तिकया निर्मितम् अण् । १शरावे (सरा) शब्दर० । २मृण्मये त्रि० । [शाढ़के अमरः ।

**मार्द्दङ्गिक** त्रि० मृदङ्गः तद्वादनं शिल्पमस्य ठक् । मृदङ्ग-

**मार्द्दव** न० मृदोर्भावः अण् । १मृदुत्वे २परदुःखासहिष्णुतायाम् ३द्रवीभावे च "अभितप्तमयोऽपि मार्द्दवं भजते कैव कथा शरीरिणाम्" रघुः । ४सङ्कीर्णजातिभेदे पुंस्त्री० जटा० । स्त्रियां ङीष् । [५नाश्योक्ती च हेमच० ।

**मार्ष** पु० मृष-क ततः स्वार्थे अण् । १नाट्योक्तौ मान्ये भरतः

**मार्ष्टि** स्त्री मृज-क्तिन् । शोधने ।

**माल** पु० मल-धारणे संज्ञायां कर्त्तरि घञ् । "माला भिल्लाः किराताश्च सर्वेऽपि म्लेच्छजातयः" हेमच० उक्ते १म्लेच्छभेदे २विष्णौ पु०भरतः । ३देशभेदे ४क्षेत्रे मेदि० ५कपटे ६वने हेमच० ।

**मालक** न० मल ण्वुल् । १स्थलपद्मे जटा० । २नारिकेलपात्रभेदे पु० (माला) । ३निम्बवृक्षे पु० अमरः ।

**मालकोश** पु०रागभेदे तस्य गानसमयः शरदृतौ रात्रिशेषः ।

**मालती** स्त्री मां लक्ष्मीं शोभां वा लतति वेष्टते लत-अच् गौरा० ङीष् । १जातीलतायां २युवत्यां अमरः । ३काकमाच्यां ४नदीभेदे ५विशल्यायां ६ज्योत्स्नायां ७निशायाञ्च हेमच० ।

**मालतीतीरज** पु० मालत्या नदीभेदस्य तीरे जायते जन-ड । टङ्कणे (सोहागा) हेम० मालतीतीरभवादयोऽप्यत्र

**मालतीपत्री** स्त्री मालत्यास्तन्नामकजात्याइव पत्रमस्याः । जातीपत्राम् (जैयत्री) राजनि० । [जातीफले राजनि० ।

**मालतीफल** न०मालत्यास्तन्नामकजात्याः फलम् । (जायफल)

**मालभारिक** त्रि०मालानां भारोऽस्त्यस्य ठन् पूर्वपदह्रस्वः । मालानां भारवति । [सङ्गीतदा० ।

**मालव** पु० । १अवन्तिदेशे (मालओयार देश) २रागभेदे च

**मालविका** स्त्री मालवे भवा ठक् । त्रिवृति (तेओड़ि) राजनि० ।

**मालसी** स्त्री मालं मलनं जटादिना दुष्टत्वं स्यति सो-क गौरा० ङीष् । १केशपुष्टिकारके द्रव्ये शब्दच० । २रागिणीभेदे च सङ्गीतदा० ।

**माला** स्त्री मल-धारणे संज्ञायां कर्त्तरि घञ् । १श्रेण्यां हेम-

त्रि० । "आहत्य वायुः सकफो धमनीः शब्दवाहिनीः । नरान् करोत्यक्रियकान् मूकमिन्मिनगद्गदान्" सुश्रु- तात् ईषदर्थे नञ् । तत्र वाक्योच्चारणे मूकत्वम् मन्मनत्वे सानुनासिकशब्दोच्चारकता अव्यक्ते गद्गदस्वरत्वमिति भेदः ।

**मिल** श्लेषे तु०उभ० सक० सेट् । मिलति अमेलीत् अमेलिष्ट कुटादिरयमित्येके तेन अमिलीत् ल्युटि मिलनम् ।

**मिव** सेके भ्वा० पर० सक० सेट् इदित् । मिन्वति अमिन्वीत् ।

**मिश** ध्वनौ अक० कोपे सक० भ्वा० पर० सेट् । मेशति अमेशीत् ।

**मिशि(शी)** स्त्री मिश-इन् वा ङीप् । १मधुरिकायां (मौरी) २शतपुष्पायां, (सुलफा) भरतः ३जटामांस्याञ्च शब्दर० । अत्र दन्त्यो०मिसि मिसी मिषि-मिषी इत्यादयः उक्तार्थेषु । तत्र पाठान्तरम् । [ यति-ते अमिमिश्र(श)त् त ।

**मिश्र (क)** योजने अद० चु० उभ० सक० सेट् । मिश्र(श)

**मिश्र** त्रि० मिश्र अच् ।१संयुते उत्तरपदस्थः २श्रेष्ठार्थे । यथा आर्यमिश्राः । ३गजजातिभेदे पु० हेमच० । ४ज्योति- षोक्ते कृत्तिकाविशाखानक्षत्रगणे च पु० । संज्ञायां कन् । ५इन्द्रवने जटा० ६मौलकवचे राजनि० ।

**मिश्रकावण** न० मिश्रकनामकं वनं पूर्वदीर्घो णत्वञ्च । १इन्द्रोद्याने । [कायाम् राजनि० ।

**मिश्रपुष्पा** स्त्री मिश्रं पुष्पं यस्याः अजा० टाप् । मेथि-

**मिश्रवर्ण** न० मिश्रवित्तौ वर्णौ यस्य । १कृष्णागुरुणि राजनि० २मिश्रितवर्णमात्रे त्रि० । [वार्त्ताक्यां राजनि०

**मिश्रवर्णफला** स्त्री मिश्रवर्णं चित्रकृष्णान्वितं फलं यस्याः ।

**मिश्रव्यवहार** पु० लीलावत्युक्ते गणनाभेदे ।

**मिश्रिता** स्त्री "मिश्रिता चैव विज्ञेया मिश्रितर्क्षैस्तु संक्रम" इत्युक्ते १कृत्तिकाविशाखानक्षत्रकाले रविसंक्रमणे । २गौरचिते न० जटा० ३मिलिते त्रि० ।

**मिश्रेया** स्त्री मिश्र-अच् मिश्रा ईयते ई गतौ यत् एया कर्म० शक० । १मधुरिकायां (मौरी) अमरः । २शतपुष्पायाञ्च (सुलफा) राजनि० । [ङ्गा सेट् ।

**मिष** सेचने भ्वा० पर० सक० सेट् । मेषति अमेषीत् । षदित्

**मिष** पराभिभवेच्छायाम् तु० पर० सक० सेट् । मिषति अमेषीत् मिमेष ।

**मिष** न० मिष-क । १छले २स्पर्द्धने पु० मेदि० ।

**मिषिका** स्त्री० मिषी+स्वार्थे क । जटामांस्याम् शब्दमा० ।

**मिष्ट** त्रि० मिष-क्त । १सिक्ते २स्पर्द्धिते च । ३मधुररसे पु० ४तद्वति त्रि० भावप्र० ।

**मिह** सेचने भ्वा० पर० सक० अनिट् । मेहति अमिक्षत् ।

**मिहिका** स्त्री मिह-क्वुन् अत इत्वम् । नीहारे शब्दर० ।

**मिहिर** पु० मिह-किरच् । १सूर्य्ये २अर्कवृक्षे ३वृद्धे मेदि० ४मेघे हेमच० ५वायौ, ६चन्द्रे, विक्रमादित्यसभास्थे नवरत्नमध्यस्थे पण्डितभेदे च. शब्दच० । तच्चिन्त्यम् । "धन्वन्तरिक्षपणकामरसिंहशङ्कुवेतालभट्टघटकर्परकालि- दासाः । ख्यातो वराहमिहिरो नृपतेः सभायां रत्नानि वै वररुचिर्नव विक्रमस्य" ज्योतिर्विदाभरणवाक्ये वराहः मिहिरः इत्येकैव तत्र समासे वराहमिहिर इत्येकः "वराहमिहिरात्मजेन पृथुयशसा" तत्पुत्रकृतषट्पञ्चा- शिकायामुक्तेः द्वित्वे वररुचिना सह दशसंख्यापत्तेश्च ।

**मी** वधे दि० आ० सक० अनिट् । मीयते अमेष्ट ।

**मी** वधे क्र्या० उ० सक० सेट् । मीनाति मीनीते अमासीत् अमास्त । ओदित् क्त मीनः ।

**मी** गत्यां मत्याञ्च वा चु० उभ०पक्षे भ्वा०पर० सक० अनिट् । माययति ते मयति अमीमयत्-त अमैषीत् ।

**मीढ** त्रि० मिह-क्त । मूत्रिते ।

**मीढुष्टम** पु० मीढुस्+अतिशय तमप् नि० । शिवे ।

**मीढुस्** पु० मिह-क्वसु नि० । शिवे ।

**मीन** पुंस्त्री० मी-नक् ।१मत्स्ये अमरः स्त्रियां ङीष् मेषा- दितोद्वादशे २राशौ ३भगवदवतारभेदे च पु० ।

**मीनकेतन** पु० मीनः केतनं यस्य । कन्दर्पे अमरः । मीनध्वजादयोऽप्यत्र । [राजनि० मीनाक्षीत्यादयोऽप्यत्र ।

**मीननेत्रा** स्त्री मीनस्य नेत्रमिव पत्त्रमस्याः । गण्डदूर्वायां

**मीनाण्डा** स्त्री मीनस्याण्डस्येवाकारा रेणुकाऽस्त्यस्य अच् गौ० ङीष् । शर्करायाम् राजनि० ।

**मीम** शब्दे अक० गतौ सक० भ्वा० पर० सेट् । मीमति अमीमीत् । ऋदित् चङि न ह्रस्वः ।

**मीमांसक** पु० मीमांसां वेत्त्यधीते वा वुन् । १मीमांसा- शास्त्रज्ञे २तदध्येतरि च । मान-विचारे स्वार्थे सन् ण्वुल् । ३सिद्धान्तकारके ।

**मीमांसा** स्त्री मान-विचारे स्वार्थे सन् अ । १विचारपूर्वक- तत्त्वनिर्णये २तत्प्रतिपादकग्रन्थभेदे च स च ग्रन्थः कर्म- ब्रह्मविषयभेदेन द्विविधस्तत्र कर्मकाण्डविषयसंशयनिवारको ग्रन्थो जैमिनिप्रणीतः स च पूर्वमीमांसात्वेन प्रसिद्धः ब्रह्मविषयसंशयनिवारकस्तु वेदान्तत्वेन प्रसिद्धः ।

**मील** निमेषे भ्वा० पर० अक० सेट् । मीलति अमीलीत् । ऋदित् चङि वा ह्रस्वः ।

६नापिते जटा० ७स्थाणुवृक्षे च पु० । ८मुण्डिते त्रि० । ९महाश्रावणिकायां १०मुण्डीरिकायाञ्च स्त्री टाप् मेदि० ११उपनिषद्भेदे "मुण्डमाण्डूक्यतित्तिरिः" ।

मुण्डक पु० मुण्डयति मुडि-णिच्-ण्वुल् । नापिते हेमच० ।

मुण्डचणक पु० मुण्डश्चणकइव । कलाये राजनि० ।

मुण्डन न० मुडि-भावे ल्युट् । केशच्छेदे वपने हेमच० ।

मुण्डफल पु० मुण्डं शिरइव फलमस्य । नारिकेले शब्दर० ।

मुण्डशालि पु० मुण्डः शूकशून्यः शालिः । निःशूके शालिभेदे राजनि० ।

मुण्डायस न० मुण्डमयः अच् समा० । लौहभेदे राजनि० ।

मुण्डितिका स्त्री मुडि-क्त स्वार्थे क अत इत्वम् टाप् । (मुण्डीरी) वृक्षभेदे रत्नमा० ।

मुण्डिन् पु० मुण्डयति मुडि-णिच्-णिनि । नापिते अमरः ।

मुण्डीरी स्त्री मुडि-ईरच् गौरा० ङीष् । अनामख्याते वृक्षभेदे जटाधरः ।

मुद्गौल पु० ८२१ पृ० दर्शिते गो० ता० उक्ते इलावाक्ययोगे

मुद समाश्वासने चु० उ० सक० सेट् । मोदयति ते अमूमुदत् त

मुद हर्षे भ्वा० आ० अक० सेट् । मोदते अमोदिष्ट । मुमुदे ।

मुद्(दा) स्त्री मुद-सम्प०भावे क्विप् वा टाप् । १हर्षे अमरः । २हरिद्रानामौषधौ राजनि० ।

मुदिर पु० मुद-किरच् । १मेघे अमरः २भेके च संक्षिप्तसा० ३कामुके त्रि० मेदि० । [४जलकाके च हेमच० ।

मुद्ग पु० मुद-गक् सेट् । १कलायभेदे (मुग) पु० मेदि० २पक्षिभेदे

मुद्गपर्णी स्त्री मुद्गस्येव पर्णमस्याः । (मुगानी) वनमुद्गे अमरः ।

मुद्गर न० मुदं गिरति गृ-अच् । १मल्लिकाभेदे २लोष्टभेदने (मुगुर) मेदि० । ३पुष्पप्रधानवृक्षभेदे ४कर्मारवृक्षे (कामराङ्गा) च पु० राजनि० । स्वार्थे क । तत्रैव ।

मुद्गल न० मुदं गिलति गॄ-अच् रस्य लः । १रोहिषतृणे राजनि० । २गोत्रप्रवरर्षौ मुनिभेदे, ३रूपभेदे पु० ।

मुद्गष्ट पु० मुद्गं अश्नाति प्रतिबध्नाति अश-क्त पृषो० षत्वम् । वनमुद्गे अमरः । स्वार्थे कन् मुद्गष्टकोऽप्यत्र ।

मुद्रा स्त्री मुद-रक् । १प्रत्ययकारिण्याम् (मोहर) त्रिका० २अङ्गुलिस्थे मुद्राङ्कनयुक्ताङ्गुलीयके शब्दर० ३स्वर्णरौप्यादिटङ्कायाम ४अक्षकाये । "मुद्रालिपिः शिल्पलिपिर्लिपिर्लेखनिसम्भवा । गुण्डिकाघुणसम्भूता लिपयः पञ्चधा मताः" इत्युक्तलिपिमध्ये ५लिपिभेदे वाराहीतन्त्रम् । "लेखन्या लिखितं वित्तं मुद्राभिरङ्कितञ्च यत् । मिश्रादिनिर्मितं यच्च पात्रं धार्यञ्च सर्वदा" मलमासत० । ६तन्त्रप्रसिद्धे वीराचारभेदे "पृथुकास्तण्डुला भृष्टा गोधूमचणकादयः । तस्य नाम भवेन्मुद्रा" इत्युक्ते पञ्चमकारान्तर्गतद्रव्यभेदे ७देवविशेषाराधनायाङ्गुल्यादिसन्निवेशविशेषे तन्त्रसारः "मोदनात् सर्वदेवानां द्रावणात् पापसन्ततेः । तस्मात् मुद्रेति सा ख्याता सर्वकामार्थसाधनी" "मुद्राप्रकरणमि"ति तन्त्रम् इत्युक्तोचे च ।

मुद्रालिपि स्त्री मुद्रया लिपिः । पञ्चधाविभक्तलिपिमध्ये लिपिभेदे (छापार अक्षर)

मुद्रिका स्त्री मुद्रेव मुद्रा वा मुद्रा कन् । स्वर्णरौप्यादिनिर्मिते अङ्गुलिस्थे अङ्कनसाधनयोग्ये पदार्थे ।

मुद्रित त्रि० मुद्रा जाताऽस्य इतच् । १अप्रकाशिते २अङ्कित च

मुधा अव्य० मुह-का पृषो० हस्य धः । मिथ्यार्थे अमरः

मुनि पु० मन-इन् पृषो० उत्वम् । "दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः । वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते" गीतोक्तलक्षणे स्थिरचित्ते वीतरागादौ जने । ते च मन्वत्रिविष्णुहारीतादय । २सप्तसंख्यायाञ्च । ३अगस्तितरौ ४जिने मेदि० ।५पियालवृक्षे ६पलाशवृक्षे हेमच० ७दमनकवृक्षे राजनि० । "मननान्मुनिरुच्यते" इत्युक्ते ८मननयुते त्रि० । [राजनि० ।

मुनिखर्जूरी स्त्री मुनिप्रिया खर्जूरी । खर्जूरीभेदे

मुनिच्छद पु० मुनिसंख्याताः सप्तसंख्याताः छदाः प्रतिपर्वं यस्य । सप्तच्छदे (छातिम) राजनि० ।

मुनितरु पु० मुनिरगस्त्यनामकस्तरुः । बकवृक्षे रत्नमा० ।

मुनिद्रुम पु० मुनीनां प्रियो मुनिनामको वा द्रुमः । १श्योनाकवृक्षे रत्नमा० २बकवृक्षे च राजनि० ।

मुनिपुत्रक पु० मुनेः पुत्रः संज्ञायां कन् । १दमनकवृक्षे भावप्र० २खञ्जने च त्रिका० । ६त० । ३ऋषिसुते । [बकपुष्पे ।

मुनिपुष्प न० मुनिद्रुमस्य पुष्पं भीमो भीमसेनवदुत्तरपदलोपः ।

मुनिभेषज न० मुनीनां भेषजमिव । १हरीतक्यां २अगस्त्ये, मुनौ, ३भोजनाभावे च मेदि० । [लङ्घने ।

मुनीन्द्र पु० मुनिः इन्द्र इव । १बुद्धे अमरः । ७त० । २ऋषिमुख्ये

मुन्थ गत्यां भ्वा० पर० सक० सेट् क्त्वा वेट् । मुन्थति अमुन्थीत्

मुन्था स्त्री नी०ध०ताजकप्रसिद्धे इत्थिहायलद्यार्थे । इत्थिहाशब्दे ८२८पृ० दृश्यम् ।

मुन्यन्न न० मुनियोग्यमन्नम् । नीवारकन्दादौ ।

मुमुक्षु त्रि० मोक्तुमिच्छुः मुच-सन्-उ । मोक्षेच्छावति । १संसारबन्धनाभावेच्छावति । २यतौ पु० ।

मुमूचान पु० मुच कानच् पृषो० दीर्घः । १मेघे २मुक्तवति त्रि० ।

मृतालक न० मृतमालयति भूषयति अल–णिच्–ण्वुल्। आढक्याम् अमरः। मृत् मृत्तिका तालः प्रतिष्ठा यस्य वा कप्। मृत्तालकमप्यत्र भरत०। सौराष्ट्रमृदि राजनि०

मृत्तिका स्त्री मृद्+तिकन् टाप्। १मृदि (माटि) वा स्वार्थे कन् टाप्। २आढक्याम् राजनि०।

मृत्फली स्त्री मृदि फलमस्याः ङीष्। कुटीवधौ। (कुड़) हारा०।

मृत्यु पु० मृ–त्युक्। १यमे हेम० देहादिभ्यः २प्राणवियोगे विजातीयात्ममनःसंयोगनाशे वा ३मरणे च अमरः। "मृत्योः स मृत्युमाप्नोति" श्रुतिः अधर्मात् मायायां जाते ४मुनिभेदे पु० "अधर्मस्य च वै भार्या मृत्युं भूतापहारिणम्। निकृन्तित तथा कन्या मृत्योर्भार्याऽभवत् तदा। अलक्ष्मीर्नाम तस्यां च मृत्योः पुत्राश्चतुर्दश" मार्क०पु०।

मृत्युञ्जय पु० मृत्युं जयति जि–खच्। १महादेवे अमरः "कतिधा मृत्युकन्यानां प्रजानां कोटियोजने। काले न क्षीणः मृत्युश्च बलस्यापी च निर्गुणः। मृत्युकन्या जिता यस्मात् शिवेन तुरया मम। न मृत्युना जितः शम्भुः कस्ये यस्ते स्मृतौ श्रुतम्" ब्रह्मवै०प्र० १७अ०।

मृत्युनाशक पु० मृत्युं नाशयति नाशि–ण्वुल्। १पारदे राजनि० तस्य हि रसायनक्रियादिना शोधयित्वा सेवने मृत्युनाशकत्वम्। २मृत्युनाशकमात्रे त्रि०।

मृत्युपुष्प पु० मृत्यवे फलिनत्वात् पुष्पं यस्य। इक्षौ रत्नमा० तस्मिन् पुष्पिते हि तत्स्वामिनो नाशः।

मृत्युफला स्त्री मृत्यवे आनाशाय फलं यस्याः। कदल्यां वैद्य० फलपाके हि तस्या नाशो लोकसिद्धः। [लिका०।

मृत्युबीज पु० मृत्युतत्रेतदर्थ एव बीजं कारणमस्य। वंशे

मृत्युसूति स्त्री मृत्यवे सूतिः प्रसवोऽस्याः। कर्कटकीयोनिति प्रसवेन हि तस्या नाशः "यथा कर्कटकी गर्भमादत्ते मृत्यवे निजम्" इति पुराणम्।

मृत्(त्था)स्ना स्त्री मृद्+प्रशस्तार्थे स्न वा। १प्रशस्तमृत्तिकायाम् अमरः। कर्णाद्याच् स्नान्तः। २आढक्याम् अमरः।

मृद क्षोदे क्र्या० प० सक० सेट्। मृद्नाति अमर्दीत् ममर्द।

मृद् (दा) स्त्री मृद्यते मृद्–कर्मणि क्विप्। मृत्तिकायाम् (माटि) अमरः हलन्तत्वात् वा टाप्। मृदाप्यत्र।

मृदङ्ग पु० मृदः अङ्गम् निरू०। १वाद्यभेदे अमरः। २घोषा-लक्ष्यां स्त्री रत्नमा० गौरा० ङीष्।

मृदङ्गफल पु० मृदङ्ग इव फलमस्य। पनसवृक्षे भरत०।

मृदङ्गफलिनी स्त्री मृदङ्ग इव फलमस्त्यस्या इति ङीप्।

कोषातक्याम् राजनि०। तत्फलं वाद्यादस्त्यस्य अच्। मृदङ्गतुल्यफले पनसवृक्षे पु० भरत०।

मृदु त्रि० मृद्–कु। १कोमले अमरः। स्त्रियां वा ङीष् मृद्वी मृदुः। सा च २मन्दगन्धायाम्। ३चित्रानुराधामृगरेवतीनक्षत्रभेदे नक्षत्रगणभेदे च त्रि०ज्यो०त०।

मृदुचर्मिन् पु० मृदु कोमलं चर्म त्वगस्त्यस्य ब्रीह्या०इनि। भूर्जवृक्षे राजनि०।

मृदुच्छद पु० आच्छाद्यतेऽनेन छदः त्वक् कृत०। १भूर्जवृक्षे २पर्वतजपीलुवृक्षे जटा० ३कुकुरवृक्षे ४शीतालवृक्षे च राजनि०।

मृदुताल स्त्री कर्म०। शीतालवृक्षे (तेडेल) राजनि०।

मृदुत्वच(च) पु० मृदुः त्वक् त्वचा वा यस्य। भूर्जवृक्षे अमरः।

मृदुपत्र पु० मृदूनि पत्राण्यस्य। १नले राजनि०। कर्म०। २कोमलपर्णे न० कृत०। ३तद्युति त्रि०। ४चित्रीमाले स्त्री राजनि० गौरा० ङीष्। [२मृदुपत्त्रियुक्ते त्रि०।

मृदुपर्वक पु० मृदूनि पर्वाण्यस्य कप्। १वेत्रे राजनि०।

मृदुपुष्प पु० मृदूनि पुष्पाण्यस्य। १शिरीषवृक्षे रत्नमा०। कृत०। २मृदुकुसुमयुते त्रि०। कर्म०। ३कोमलपुष्पे न०।

मृदुफल न० मृदूनि फलान्यस्य। १विकङ्कते (वइचि) २मधुनारिकेले च राजनि०। ३कोमलफलयुते त्रि०। कर्म०। ४कोमलफले न०। [त्रि० अमरः।

मृदुल न० मृद्–कुलच्। १जले शब्दच० २कोमलमात्रे

मृदुलोमक पु० कृत०। १शशके हेमच०। २कोमललोमयुक्ते त्रि०। कर्म०। ३कोमललोम्नि न०।

मृदूत्पल न० कर्म०। १नीलोत्पले भरत०। २नीलपद्मे च

मृद्वीका स्त्री मृद्+ईकन्। १द्राक्षायाम् अमरः २कपिलद्राक्षायाम् राजनि०।

मृध न० मृध्यतेऽत्र घञर्थे आधारे क। युद्धे अमरः।

मृध आर्द्रीभावे भ्वा० उभ० अक० सेट् पदित् क्त्वा वेट्। मर्धति–ते अमर्धीत् अमर्धिष्ट ममर्ध ममृधे।

मृश स्पर्शने प्रणिधाने च तु० पर० सक० अनिट्। मृशति अम्राक्षीत् अमार्क्षीत् अमृक्षत् ममर्श।

मृष क्षमायाम् अद०चु०उभ०सक०सेट्। मृषयति ते अममृषत् त। [अमर्षिष्ट।

मृष क्षान्तौ अदु०भ्वा०उभ० सक० सेट्। मर्षति ते अमर्षीत्

मृष सेचने भ्वा०पर०सक०सेट्। मर्षति अमर्षीत् उदित् क्त्वा वेट्।

**मेथिका** स्त्री मेथ-ण्वुल्। (मेथि) शाकभेदे राजनि०। मिथि मेथिनी। अत्रैव स्त्री ङीप्। कप् गौरा०ङीष्। मेथी अत्रैवार्थे राजनि०।

**मेद** वधे मेधायाञ्च भ्वा० उभ० अक० सेट्। मेदति ते अमेदीत् अमेदिष्ट। ऋदित् चङि न ह्रस्वः।

**मेदःसारा** स्त्री मेदस इव सारोऽस्याः। अष्टवर्गप्रसिद्धौषधिभेदे मेदायां राजनि०।

**मेदक** पु० मेद-ण्वुल्। जगले (मेकोया) अमरः।

**मेदज** पु० मेदात् महिषासुरमेदसो जायते जन-ड। भूमिज गुग्गुलौ राजनि०। मेदोजातमात्रे त्रि०।

**मेदस्** न० मेद-असुन्। मांसजन्ये धातुभेदे (वसा) अमरः। मेद अत्रैव पु०। [मांसे हेमच०।

**मेदस्कृत्** न० मेदः करोति स्वपरिपाकेण जनयति कृ-क्विप्।

**मेदा** स्त्री मेदः कारणत्वेनास्त्यस्याः अच्। अष्टवर्गप्रसिद्धौषधिभेदे भावप्र०।

**मेदिनी** स्त्री मेदः मधुकैटभमेदोऽस्त्यस्याः कारणत्वेन इनि। १वसुन्धरायाम् "मधुकैटभयोरासीन्मेदसैव परिप्लुता। तेनेयं मेदिनी देवी प्रोच्यते" इति पुराणम्। २मेदायाञ्च।

**मेदुर** त्रि० मिद-घुरच्। १अतिशयस्निग्धे। "मेघैर्मेदुरमम्बरम्" जयदेवः। २काकोल्यां स्त्री राजनि० टाप्।

**मेदोज** न० मेदसो धातोः जायते जन-ड। देहस्थे मज्जाहेतौ अस्थिनामके धातौ। [ओषधिभेदे राजनि०

**मेदोद्भवा** स्त्री मेदाद्भवति उद्+भू-अच्। अष्टवर्गप्रसिद्धौ-

**मेध** मेधवत् सर्वम्। मेधति ते अमेधीत् अमेधिष्ट।

**मेधस्** पु० मेध-असुन्। स्वायम्भुवस्य मनोः पुत्रभेदे।

**मेधा** स्त्री मेध-अङ्। १धारणावत्यां बुद्धौ यथा बुद्ध्या श्रुतस्य न विस्मरणं तस्याम्। नञ्दुःसुभ्यश्च अस० असिच्समा०। अमेधाः दुर्मेधाः सुमेधाः इत्यादि। आधारे घञ्। २यागे पु०। [वति त्रि० मेदि० स्त्रियां ङीप्।

**मेधाविन्** पु० मेधा+अस्त्यर्थे विनि। १शुकपक्षे। २मेधा-

**मेधिर** त्रि० मेधा+अस्त्यर्थे इरच्। मेधावति त्रिका०।

**मेधिष्ठ** त्रि० अतिशयेन मेधावान् इष्ठन् मतोर्लुक्। अतिशयमेधावति जने। ईयसुन् मेधीयस् तत्रार्थे स्त्रियां ङीप्

**मेध्य** त्रि० मेध-यत्। १पवित्रे अमरः २शुचौ च मेदि० मेधाय यज्ञाय हितः यत्। ३छागे ४खदिरे ५यवे च पु० मेदि०। ६केतक्यां ७गङ्गापुष्प्यां ८रजस्वलायाम् ९रोचनायां, १०वच्याम्, ११मण्डूक्यां १२ज्योतिष्मतीलतायाम् स्त्री राजनि०।

**मेनका** स्त्री मि-नक। १स्वर्वेश्याभेदे शब्दर०। मेना स्वार्थे क। २हिमालयपत्न्याम्। [ण्यान।

**मेनकात्मजा** स्त्री ६त०। मेनकायां दुर्गायाम् मेनासुतादयो-

**मेना** स्त्री मि-न। हिमालयपत्न्याम् पितॄणां मानस्यां कन्यायाम्। "मेनां मुनीनामपि माननीयाम्" कुमा०।

**मेनाद** पुंस्त्री० मे इति नादो यस्य। १विडाले २छागे ३मयूरे च मेदि० स्त्रियां ङीप्।

**मेन्धी** स्त्री मा वर्ण्योः इध्यते यया इन्ध-घञ् गौरा०ङीष्। (मेहदी) वृक्षे तत्पत्रमर्दने हि कराङ्गुलीनां रक्तता।

**मेप** गतौ भ्वा० आ० सक० सेट्। मेपते अमेपिष्ट। ऋदित् चङि न ह्रस्वः। [न्]मेयर्णितः"।

**मेय** त्रि० मा-मि-वा यत्। १परिच्छेद्ये २ज्ञेये च मानाधी-

**मेरु** पु० मि-रु। सर्वपर्वतेभ्य उन्नते १पर्वतभेदे जपमालोपरिस्थे २मणिबीजादिके ३करस्थपर्वाकारायामङ्गुलिपर्वभेदे च

**मेरक** पु० मेरुरिव पीतवर्णत्वात् इवार्थे कन्। यक्षधूपे (धुना) शब्दच०।

**मेरुसावर्ण** पु०। चतुर्दश मनुषु एकादशे मनौ।

**मेलक** त्रि० मेलयति मिल-णिच्-ण्वुल्। १विवाहे योटकमेले मिल-भावे घञ् स्वार्थे क। २सङ्गे अमरः।

**मेला** स्त्री मिल-णिच्-अच् टाप्। १नीलीवृक्षे राजनि०। २मस्याम् ३अञ्जने ४मेलने च मेदि०। [जटा०।

**मेलान्धु** पु० मेलाया मस्या अन्धुरिव। मस्याधारे (दोयात)

**मेलापकाख्या** स्त्री नी० शा० उक्ते यात्रादिभेदे यात्रादिशब्दे २७५१ पृ० दृश्यम्। [चङि न ह्रस्वः।

**मेव** सेवने भ्वा० आ० सक० सेट्। मेवते अमेविष्ट। ऋदित्

**मेष** पुंस्त्री० मिष-अच्। (भेडा) १पशुभेदे अमरः स्त्रियां ङीप्। २चक्रमर्दवृक्षे मेदि०। ज्योतिषक्षेत्रे द्वादशांशे अश्विनीभरणीकृत्तिकापादात्मके ३राशिभेदे।

**मेषकम्बल** पु० मेषस्य लोम्ना निर्मितः कम्बलः। मेषलोमजाते वस्त्राकारे पदार्थे अमरः।

**मेषलोचन** पु० मेषस्य लोचनमिव पुष्पमस्य। १चक्रमर्दे भावप्र०। २मेषतुल्यनेत्रे त्रि० मेषनेत्रादयोऽप्यत्र।

**मेषवल्ली** स्त्री मेषस्य शृङ्गाकारफलयुता वल्ली शाक०त०। (गाडरशिङ्गी) लताभेदे भावप्र०।

**मेषविषाणी** स्त्री मेषस्य विषाणमिव फलं अस्याः गौरा०ङीष् (नाडरशिङ्गा) लताभेदे रत्नमा०। स्वार्थे क अत इत्वम्। मेषविषाणिका तत्रार्थे।

**मेषशृङ्ग** पु० मेषशृङ्गमिवाकारोऽस्त्यस्य अच्। १स्थावरविष

युच्छ प्रमादे भ्वा० पर० अक० सेट् । युच्छति अयुच्छीत् ।

युज युतौ रु० उ० सक० अनिट् । युनक्ति युङ्क्ते इरित् अयुजत् अयौक्षीत् अयुक्त युयोज युयुजे ।

अजन्तोपसर्गात् उदश्च परस्मात् आत्म० ।

अनु+प्रश्ने सक० आ० । अनुयुङ्क्ते अनुयोगः ।

अभि+व्यवहारेणाक्रन्दने (नालिशकरा) सक० आत्म० अभियुङ्क्ते अभियोगः ।

उद्+आयोजने सक० उद्यमे अक० उद्युङ्क्ते उद्योगः ।

उप+भोजने सक० सम्बन्धभेदे अक० आत्म० उपयुङ्क्ते उपयोगः ।

नि+प्रेरणे सक०आत्म०नियुङ्क्ते । नियोगः । [पर्य्यनुयोगः ।

परि+अनु+दूषणाय प्रश्ने आत्म० सक० । पर्य्यनुयुङ्क्ते

प्र+उच्चारणे व्यवहारभेदे च सक० आत्म० प्रयुङ्क्ते प्रयोगः

प्रति+प्रतिरूपे योगे सक० आ० प्रतियुङ्क्ते प्रतियोगः ।

सम्+संयोगे सक० प० संयुनक्ति संयोगः ।

युज निन्दायां चु० आ० सक० सेट् । योजयते अयूयुजत ।

युज समाधौ दि० आत्म० अनिट् । युज्यते । युयुजे ।

युज बन्धने युतौ च वा चु० उभ० पक्षे भ्वा० पर०सक०सेट् । योजयति ते योजति । अयूयुजत् त । अयोजीत् ।

युज् त्रि० दि०युज क्विप् । १समाधिमति । युक् युजौ । रु० युज क्विप् ।२संयोगवति त्रि०युङ् युञ्जौ युञ्जः इति भेदः चु० युज-निन्दे भावे क्विप् । ३निन्दायाम् अम० ।

युञ्जान पु० युज–शानच् ।१योगविशेषवति भावनाप्रकारेण सर्वपदार्थज्ञातरि भाषा०। २रथसारथौ ३विप्रे च मेदि०।

युत दीप्तौ भ्वा०आ०अक०सेट् । योतते । अयोतिष्ट । ऋदित् चङि न ह्रस्वः । [४हस्तचतुष्टयमाने न०मेदि०।

युत त्रि० यु–क्त । १संयुक्ते २मिलिते ३अमिलिते च ।

युतक न० यु–क्त युत-क वा ततः स्वार्थे क । १संशये २युगे ३स्त्रीवसनाञ्चले ४चरणाग्रे ५यौतके धने मेदि० । ६मैत्रीकरणे शब्दर०।७संश्रवे दम्पूर्णाग्रे च नानार्थमा०। ८स्त्रीवस्त्रभेदे हेम० । १०संयुक्ते त्रि० ।

युतवेध पु० विवाहादौ नक्षत्रे चन्द्रेण सह पापग्रहयोगे उपयमशब्दे १२६७पृ० वसुवाक्ये दृश्यम् ।

युद्ध न० युध–भावादौ क्त । १परस्पराभिघातार्थं शस्त्रादिक्षेपणव्यापारे योधने २तदाधारे संग्रामे अमरः। ज्योतिषोक्ते ग्रहाणां गतिभेदकृते योधनरूपे ३परस्परमिलनविशेषे च । ग्रहयुद्धशब्दे २७६६ पृ० दृश्यम् ।

युध युद्धे दिवा० आ० सक० अनिट् । युध्यते अयुद्ध युयुधे ।

युध्(धा) स्त्री युध–सम्प० क्विप् वा टाप् । १युद्धे योधने २संग्रामे च अमरः । [२५अ०।

युधाजित् पु० क्रोष्टुनृपपुत्रे माद्रीगर्भजाते नृपभेदे हरिवं०

युधान पु० युध–उणा०आन । १क्षत्रिये उणादिको० ।

युधिष्ठिर पु० युधि युद्धे स्थिरः "गविमुधिभ्यां स्थिरः" पा० षत्वम् । पाण्डवश्रेष्ठे । [अयोपीत् ।

युप विमोहे दिवा०पर०सक० सेट् । युप्यति इरित् अयुपत्

युयुधान पु० युध–कानच् द्वित्वम् । १इन्द्रे सात्यकिनामनि यादवे क्षत्रियभेदे त्रिका० ।२क्षत्रियमात्रे च संक्षिप्तसा०।

युवखलति स्त्री युवतिरेव खलतिः पुंवत् । (टाक) रोगवत्याम् युवत्याम् । [शब्दर० ।

युवगण्ड पु० ६त० । यूनो गण्डस्थव्रणभेदे । (ब्रयस्फोड़ा)

युव(ति)ती स्त्री युवन्+ति ङीप् वा । १यौवनवत्यां स्त्रियाम् शब्दर० । युवन्–ङीप् । यूनीत्यप्यत्र । २स्त्रीमात्रे भागुरिः ३हरिद्रायां शब्दच० ।

युवतीष्टा स्त्री युवतीनामिष्टा । स्वर्णयूथिकायाम् राजनि०।

युवन् त्रि० यु–कनिन् । १श्रेष्ठे २निसर्गबलवति मेदि० । "आषोडशाद्भवेद्बालस्तरुणस्तत उच्यते" इत्युक्तवयस्के ३तरुणे च । "जीवति तु वंश्ये युवा" पा० उक्तेरुक्ते पौत्रादेरपत्ये ४चतुर्थादौ बालादिस्वरेषु ५स्वरभेदे ।

युवनाश्व पु० सूर्य्यवंश्ये मान्धातृपितरि नृपभेदे ।

युवराज पु० युवैव राजा टच्समा० । राज्ययोग्यक्रियत्कार्य्यकरे १राजपुत्रे अमरः ।२बुद्धभेदे त्रिका०। [युष्मद्

युष भजने सौ०पर०सक०सेट् । योषयति अयोषीत् । योषा

युष्मद् त्रि० सौ० युष-मदिक् । संबोध्यचेतने मध्यमपुरुषार्थे । उक्तार्थेऽस्य सर्वनामता त्रिषु लिङ्गेषु समरूपता च ।

यूका पुंस्त्री० यू–क्विप् क । मत्कुणे (उकुण) स्त्रीत्वे टाप् ।

यूति स्त्री यु-क्तिन् नि० दीर्घः । मिश्रीकरणे ।

यूथ न० यु–थक् पृषो० दीर्घः । सजातीयसमुदाये अमरः ।

यूथनाथ पु० ६त० । वन्यगजादीनां प्रधाने अमरः । यूथपादयोऽप्यत्र ।

यूथिका स्त्री यु–थक् पृषो० दीर्घः स्वार्थे क अत इत्वम् टाप् । १अम्लानके मेदि० २पाठायां राजनि०। ३यूथ्याम् (युइ) अमरः । [अमरः ।

यूथी स्त्री यु-थक् पृषो० दीर्घः ङीप् । (युइ) पुष्पप्रधाने वृक्षे

यूप पुंन० यु-पक् पृषो० दीर्घः । १यज्ञीयपशुबन्धनकाष्ठभेदे तल्लक्षणं यज्ञपात्रे दृश्यम् । यागसमाप्तिचिह्नार्थे २स्तम्भे च अमरः ३जयस्तम्भे पु० उणादिको० ।

**योजनवल्ली** स्त्री योजनं व्याप्य वल्लीव। मञ्जिष्ठायाम् अमरः स्वार्थे क ह्रस्वः टाप्। तत्रैव राजनि०।

**योटक** त्रि० युट–ण्वुल्। १मेलके विवाहमेलकस्य उपयमनशब्दे १२४८ पृ० दृश्यः।

**योत्र** न० यु-ष्ट्रन्। योक्त्रे (योत) अमरः।

**योद्धृ** पु० युध–तृच्। युद्धकर्त्तरि अमरः। [२युद्धे।

**योध** पु० युध–अच्। १युद्धकारके अमरः। भावे घञ्।

**योधन** न० युध–भावे ल्युट्। १युद्धे। करणे ल्युट्। २अस्त्राद्यायुधे। कर्त्तरि ल्यु। ३युद्धकर्त्तरि पु०।

**योधनसंराव** पु० योधनस्य युद्धाय संरावः आह्वानम् ४अर्थे ६त०। योधानां युद्धार्थे परस्पराह्वाने अमरः।

**योनल** पु० यवस्य नल इव काण्डोऽस्य पृषो० अत्वम्। (देधान) शस्यभेदे हेमच०।

**योनि** पुंस्त्री० यु–नि। १भगाद्युत्पत्तिस्थाने आकरे मेदि०। २कारणे ३जले हेम०। ४स्त्रीणामसाधारणचिह्ने अमरः। ५तद्देवताके पूर्वफल्गुनीनक्षत्रे ज्यो०। स्त्रीत्वे वा ङीप्। ६उत्पत्तिस्थानमात्रे त्रिका०।

**योनिज** न० योनिस्थानात् जायते जन–ड। देहभेदे १जरायुजे २अण्डजे च देहे।

**योनिमुद्रा** स्त्री योन्याकारा मुद्रा। तन्त्रोक्ते देवताविशेषपूजाङ्गे प्रदर्शनीये अङ्गुलीसन्निवेशविशेषे तल्लक्षणन्तु "मिथः कनिष्ठिके बद्ध्वा तर्जनीभ्यामनामिके। अनामिकोर्ध्वसंश्लिष्टे दीर्घमध्यमयोरधः। अङ्गुष्ठाग्रद्वयं न्यस्य योनिमुद्रेयमीरिता" तन्त्रसा०। २मूलबन्धरूपे योनेर्बन्धभेदे तल्लक्षणमुक्तं पदार्थादर्शे "पार्ष्णिभागेन सम्पीड्य योनिमार्गं तथा गुदम्। अपानमूर्ध्वमाकर्षेत् मूलबन्धो निगद्यते। गुदमेढ्रान्तरं योनिस्तामाकुञ्च्य प्रबन्धयेत्। युवा भवति वृद्धोऽपि सततं मूलबन्धनात्"। (योनिस्थानसङ्कोचनात् योनिमुद्रात्वमस्याः) "सेयं मयोक्ता खलु योनिमुद्रा बन्धश्च देवैरपि दुर्लभोऽस्य। अनेन बन्धेन न बाध्यते यस्मात्स्येव तत्साधकपुङ्गवस्य"।

**योनिरोग** पु० ६त०। षोडशविधे भगरोगभेदे "उदावर्त्ता१तथा वन्ध्या२विप्लुता३च परिप्लुता४। वातला५ योनिजो रोगो वातदोषेण पञ्चधा। पञ्चधा पित्तदोषेण तत्रादौ लोहितक्षरा१। प्रस्रंसिनी२ वामनी३च पुत्रघ्नी४ पित्तला५तथा। अत्यानन्दा१ कर्णिनी२ च चरणा३नन्दपूर्विका४। अतिपूर्वापि५सा ज्ञेया श्लेष्मला५च कफादिमाः। षण्ढ्य१ण्डिनी२ च विवृता३ सूचीवक्त्रा४ त्रिदोषिणी५। पञ्चैता योनयः प्रोक्ताः सर्वदोषप्रकोपतः"। अथ तासां लक्षणान्याह "सफेनिलमुदावर्त्ता१ रजः कृच्छ्रेण मुञ्चति। वन्ध्या२ निरार्त्तवा ज्ञेया विप्लुता३ नित्यवेदना। परिप्लुतायां४ भवति ग्राम्यधर्मे रुजा भृशम्। वातला५ कर्कशा स्तब्धा शूलनिस्तोदपीड़िता। चतसृष्वपि चाद्यासु भवन्त्यनिलवेदनाः"। अनिलवेदनास्तोदादयः वातलायां त्वति वातवेदना बोद्धव्या वातलेत्यन्वयात्। "सदाहं क्षरते रक्तं यस्याः सा लोहितक्षरा१। प्रस्रंसिनी२ स्रंसते च क्षोभिता दुःप्रजायिनी"। क्षोभिता विमर्द्दिता स्रंसते स्वस्थानाच्च्यवते दुष्प्रजायिनी दुष्प्रजननशीला। "सततमुद्गिरेद्वीर्य्यं वामनी३ रजसा युतम्। स्थितं हि पातयेद्गर्भं पुत्रघ्नी४ रक्तसंस्रवात्"। पुत्रघ्न्योऽल्पापत्योपलक्षकः। "अत्यर्थं पित्तला५ योनिर्दाहपाकज्वरान्विता। चतसृष्वपि चाद्यासु पित्तलिङ्गोच्छ्रयो भवेत्"। अत्यानन्दा१न सन्तोषं ग्राम्यधर्मेण विन्दति। कर्णिन्यां२ कर्णिका योनौ श्लेष्मासृग्भ्यां प्रजायते"। कर्णिका मांसस्य कर्णिकाकारो ग्रन्थिः। "मैथुने चरणा३ पूर्वं पुरुषादतिरिच्यते। अतिरिच्यते रजोमुञ्चतीत्यर्थः। बहुशश्चातिचरणा४ तयोर्वीर्य्यं न तिष्ठति"। बहुशः वारंवारमतिरिच्यते तयोः चरणातिचरणयोः। "श्लेष्मला५ पिच्छिला योनिः कण्डूयुक्तातिशीतला। चतसृष्वपि चाद्यासु श्लेष्मलिङ्गोच्छ्रयो भवेत्। अनार्त्तवाऽस्तनी षण्ढी१ खरस्पर्शा च मैथुने"। अस्तनी ईषत्स्तनी यस्याः सा अत्र तस्या षण्ढी। महामेढ्रग्रहीताया बालाया अण्डिनी२ भवेत्। महामेढ्रपुरुषेण गृहीतायाः बालायाः सूक्ष्मयोनिच्छिद्रायाः अण्डिनी२ अण्डवल्लम्बमाना योनिर्भवति"। विवृतां सूचीवक्त्राञ्चाह "विवृता३ च महायोनिः सूचीवक्त्रातिसंवृता४। त्रिदोषजामाह "सर्वलिङ्गसमुत्थानं सर्वदोषप्रकोपजम्। चतसृष्वपि च द्यासु सर्वलिङ्गनिदर्शनम्"। असाध्यां योनिमाह। "पञ्चासाध्या भवन्तीह योनयः सर्वदोषजाः। पञ्च षण्ढीप्रभृतयः" अथ योनिकन्दस्य निदानमाह। "दिवास्वप्नादतिक्रोधात् व्यायामादतिमैथुनात्। क्षताच्च नखदन्ताद्यैः वाताद्याः कुपिता यथा"। यथासन्निदानं कुपिता वातादयः। रूपमाह "पूयशोणितसङ्काशं लकुचाकृतिसन्निभम्। जनयन्ति यदा योनौ नाम्ना कन्दः स योनिजः"। लकुचाकृतिसन्निभं लकुचाकारं गुडकमल विशेष्यं बोध्यम्"। वातजादिभेदेन रूपमाह। "रूक्षं विवर्णं स्फुटितं वातिकं तं विनिर्द्दिशेत्। दाहराग-

"यज्जराव्याधिविध्वंसि वयस्तम्भकरं तथा। चक्षुष्यं बृंहणं वृष्यं भेषजं तद्रसायनम्"। रसायनस्य फलमाह "दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः। देहेन्द्रियबलं कान्तिं नरो विन्देद्रसायनात्"। तद्विधिमाह "पूर्वे वयसि मध्ये वा मनुष्यस्य रसायनम्। प्रयुञ्जीत भिषक् प्राज्ञः स्निग्धशुद्धतनोः सदा। नाविशुद्धशरीरस्य युक्तो रसायनो विधिः। न भाति वाससि क्लिष्टे रङ्गयोग इवाहितः"। "शीतोदकं पयः क्षौद्रं घृतमेकैकशो द्विशः। त्रिशः समस्तमथ वा प्राक् पीतं स्थापयेद्वयः। मण्डूकपर्ण्याः स्वरसः प्रभाते प्रयोज्य यष्टीमधुकस्य चूर्णम्। रसो गुडूच्यास्तु समूलपुष्प्याः कल्कः प्रयोज्यः खलु शङ्खपुष्प्याः। आयुःप्रदान्यामयनाशनानि बलाग्निवर्णस्वरवर्द्धनानि। मेध्यानि चैतानि रसायनानि मेध्या विशेषेण च शङ्खपुष्पी"। मण्डूकपर्णी ब्राह्मी। (बरमी) इति लोके, तदभावे मञ्जिष्ठापि ग्राह्या तस्या अपि रसायनत्वात्। "शालिसेय(?) तुगाक्षीर्या पिप्पल्या सवर्णेन(?) च। त्रिफला सितया चापि युक्ता सिद्धं रसायनम्। सिन्धूत्थं शर्करा शुण्ठी कणामधुगुडैः क्रमात्। वर्षादिष्वभया प्राश्या रसायनगुणैषिणा। पुनर्नवस्यार्द्धपलं नवस्य पिष्टं पिबेद् यः पयसार्द्धमासम्। मासद्वयं तत्त्रिगुणं समां वा जीर्णोऽपि भूयः स पुनर्नवः स्यात्। ये मासमेकं स्वरसं पिबन्ति दिने दिने भृङ्गरजःसमुत्थम्। क्षीराशिनस्ते बलवीर्ययुक्ताः समाशतं जीवनमाप्नुवन्ति। शतावरी छिन्नलतिका(?) गुडूची वच(?)-त्रिकव्यां(?) सह तालमूली। एतानि कृत्वा समभागयुक्तान्याज्येन किं वा मधुनावलिह्यात्। जराविहीनोऽमलबुद्धिदेही भवेन्नरो वीर्यबलादियुक्तः। विभाति देवप्रतिमः स नित्यं प्रभामयो भूरिविशुद्धबुद्धिः। पीतास्वगन्धा पयसार्द्धमासं घृतेन तैलेन सुखाम्बुना वा। वीर्यस्य पुष्टिं वपुषो विधत्ते बालस्य सस्यस्य यथाम्बुवृष्टिः। अयःपलं गुग्गुलुकस्य योज्यः पलत्रयं जीवनकानि पञ्च। पलानि चाष्टौ त्रिफलारजश्च कर्षं त्रिकट्वा(?) व्याघ्रवरस्य(?) चैव। न केवलं दीर्घमिहायुरश्नुते रसायनं यो विधिवन्निषेवते। गतिं स देवर्षिनिषेवितां शुभां प्रपद्यते ब्रह्म तथैव चाक्षयम्"।

**रसायनफला** स्त्री रसायनमौषधविशेष इव फलं व्याधिनाशकत्वात् यस्याः। हरितक्याम् त्रिका०।

**रसायनश्रेष्ठ** पु० रसायनेषु औषधभेदेषु श्रेष्ठः। पारदे राजनि०।

**रसायनी** स्त्री रसायनं रसस्यायनमस्त्यस्या अच् गौ० ङीष्। १गुडूच्याम् २काकमाच्यां ३महाकरञ्जे(?) ४गोरक्षदुग्धायाम् ५मांसच्छदायाञ्च राजनि०।

**रसाल** न० रसमाकाति आ+का–क पृ०(?)। १सिह्लके २गन्धरसे मेदि०। ३शिखरिण्याम् (पेयभेदे) तत्पाकविधिः शिखरिणीशब्दे २१८४ पृ० भावप्र० उक्तो दृश्यः। ४रसनायां ५दूर्वायां ६विदार्य्यां ७द्राक्षायाञ्च स्त्री मेदि०। टाप्(?) "रसालाः सालाः समधुरताऽङ्गना(?)" नैषधम्। ८इक्षौ अमरः। १०पनसे शब्दर०। ११गोधूमे १२पुण्ड्रकेक्षौ(?) च पु० राजनि०।

**रसालिहा** स्त्री रसां भूमिं लेढि स्पृशति लिह–क (चाकुलिया) क्षुपभेदे शब्दच०। [बांध) स्वभेदे(?) राजनि०।

**रसाली** स्त्री रसमाकाति आ+का–क गौरा० ङीष्। (पुण्डि

**रसाश्वासा** स्त्री रसां भूमिमाश्वासयति दलैः आ+श्वस–णिच् अच्। पलाशीलतायाम् राजनि०।

**रसास्वादिन्** पु० रसं पुष्परसमास्वदते आ+स्वद–णिनि १भ्रमरे शब्दमा०। २मधुरादिरसास्वादके त्रि० स्त्रियां ङीप्।

**रसिक** पु०स्त्री० रसं वेत्ति अनुभवति ठन्। १सारसपक्षिणि राजनि० २अश्वे ३गजे शारदातः। स्त्रियां जातित्वात् ङीष्। ४रसज्ञे त्रि०। रसोऽस्त्यस्य ठन्। ५रसान्विते च त्रि० मेदि०। ६रसावत्याम् ७इक्षुरसे च स्त्री मेदि० टाप्। ८रसनायां स्त्री विश्वः।

**रसित** न० चु०रस–भावे क्त। १मेघादिशब्दे २विहगादिशब्दे च अमरः। कर्त्तरि क्त। ३शब्दवति वर्णिते(?) क्त ४स्वादिते च त्रि०। [तत्रैव स्वार्थे क। तत्रार्थे।

**रसुन** पु० रस–उनन्। लशुने शब्दच०। लोनन्(?) रसोन

**रसेन्द्र** पु० रस इन्द्र इव। पारदे राजनि०।

**रसेश्वर** पु० रसः पारद ईश्वर इव तद्धेतुकत्वात्(?)। १ईश्वरतुल्ये रसे। तत्पानानन्तरं देहस्थैर्य्यसम्पादनद्वारा मुक्तिहेतुत्वमस्य माहेश्वरभेदाः प्रतिपेदिरे तन्मतञ्च सर्वदर्शनसंग्रहे प्रदर्शितं यथा

"अपरे माहेश्वराः परमेश्वरतादात्म्यवादिनोऽपि पिण्डस्थैर्य्ये सर्वाभिमता जीवन्मुक्तिः सेत्स्यतीत्याश्रित्य पिण्डस्थैर्य्योपायं पारदादिपदवेदनीयं रसमेव सङ्गिरन्ते रसस्य पारदत्वं संसारपरपारप्रापकत्वेन तदुक्तम्

इतःपरः ग्रन्थः पारदशब्दे ४११२ पृष्ठे प्रदर्शितः ।
"प्रकारान्तरेणापि जीवन्मुक्तौ नेयं शास्त्रोयुक्तिर्युक्तिमतीति चेन्न षट्स्वपि दर्शनेषु देहपातानन्तरं मुक्तेरुक्ततया तत्र विश्वासानुपपत्त्या निर्विचिकित्सप्रवृत्त्यनुपपत्तेः । तदप्युक्तं तत्रैव "षड्दर्शनेऽपि मुक्तिस्तु दर्शिता पिण्डपातने । करामलकवत्साऽपि प्रत्यक्षा नोपलभ्यते । तस्मात्तं रक्षयेत्पिण्डं रसैश्चैव रसायनैरिति"। गोविन्दभगवत्पादाचार्य्यैरपि "इति धनशरीरभोगान्मत्वाऽनित्यान् सदैव यतनीयम् । मुक्तौ सा च ज्ञानात् तच्चाभ्यासात् स च स्थिरे देहे" इत्युक्तम् । ननु विनश्वरतया दृश्यमानस्य देहस्य कथं नित्यत्वमवगम्यते इति चेन्मैवं मंस्थाः, षाट्कौशिकस्य शरीरस्यानित्यत्वेऽपि रसाभ्रकपदाभिधेयहरगौरीसृष्टिजातस्य नित्यत्वोपपत्तेः तथा च रसहृदये "ये चात्यक्तशरीरा हरगौरीसृष्टिजां तनुं प्राप्ताः। मुक्तास्ते रससिद्धा मन्त्रगणः किङ्करो येषामिति" । तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमं दिव्यतनुर्विधेया । हरगौरीसृष्टिसंयोगजनितत्वञ्च रसस्य हरजत्वेनाभ्रकस्य गौरीसम्भवत्वेन तदात्मकत्वमुक्तम् "अभ्रकस्तव बीजन्तु मम बीजन्तु पारदः । अनयोर्मेलनं देवि ! मृत्युदारिद्र्यनाशनमिति"। अत्यल्पमिदमुच्यते देवदैत्यमुनिमानवादिषु बहवो रससामर्थ्याद्दिव्यं देहमाश्रित्य जीवन्मुक्तिमाश्रिताः श्रूयन्ते रसेश्वरसिद्धान्ते "देवाः केचिन्महेशाद्या दैत्याः काव्यपुरःसराः । मुनयो वालखिल्याद्या नृपाः सोमेश्वरादयः । गोविन्दभगवत्पादाचार्य्यो गोविन्दनायकः । चर्वटिः कपिलो व्याडिः कापालिः कन्दलायनः । एतेऽन्ये बहवः सिद्धा जीवन्मुक्ताश्चरन्ति हि । तनुं रसमयीं प्राप्य तदात्मककथाचणाः" इति । अयमेवाभ्यर्थः परमेश्वरेण परमेश्वरीं प्रति प्रपञ्चितः' ।

इतःपरो ग्रन्थः पारदशब्दे ४११२ पृ० दर्शितः ।
तत्प्रपञ्चस्तु गोविन्दभगवत्पादाचार्य्यसर्वज्ञरामेश्वरभट्टारकप्रभृतिभिः प्राचीनैराचार्य्यैर्निरूपित इति ग्रन्थभूयस्त्वभयादुदास्यते । न च रसशास्त्रं धातुवादार्थमेवेति मन्तव्यं देहवेधद्वारा मुक्तेरेव परमप्रयोजनत्वात् तदुक्तं रसार्णवे "लोहवेधस्त्वया देव ! यदुक्तं परमेशितः । । तं देहवेधमाचक्ष्व येन स्यात् खेचरी गतिः । यथा लोहे तथा देहे कर्त्तव्यः सूतकः सदा । समानं कुरुते देवि ! प्रत्ययं देहलोहयोः । पूर्वं लोहे परीक्षेत पश्चाद्देहे प्रयोजयेत्" इति । ननु सच्चिदानन्दात्मकपरतत्त्वस्फुरणादेव मुक्तिसिद्धौ किमनेन दिव्यदेहसम्पादनप्रयासेनेति चेत्तदेतदवार्त्तं वार्त्तशरीरालाभे तद्वार्त्ताया अयोगात् । तदुक्तं रसहृदये "गलितानल्पविकल्पः सर्वाध्वविवर्जितश्चिदानन्दः । स्फुरितोऽप्यस्फुरिततनोः करोति किं जन्तुवर्गस्येति । यं जरया जर्जरितं कासश्वासादिदुःखविशदञ्च । योग्यं तं न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् । बालः षोडशवर्षो विषयरसास्वादलम्पटः परतः । जातविवेको वृद्धो मर्त्त्यः कथमाप्नुयान्मुक्तिमिति" । ननु जीवत्वं नाम संसारित्वं तद्विपरीतत्वं मुक्तत्वं तथा च परस्परविरुद्धयोः कथमेकायतनत्वमुपपन्नं स्यादिति चेत्तदनुपपन्नं विकल्पानुपपत्तेः मुक्तिस्तावत् सर्वतीर्थकरसम्मता सा किं ज्ञेयपदे निविशते न वा चरमे शशविषाणकल्पा स्यात् प्रथमे न जीवनं सर्वजीवमजीवतो ज्ञातृत्वानुपपत्तेः । तदुक्तं रसेश्वरसिद्धान्ते "रसाङ्कमेकमार्गोक्तं जीवमोक्षोऽस्त्यधोगताः । प्रमाणान्तरवादेषु युक्तिभेदावलम्बिषु । ज्ञानज्ञेयमिदं विद्धि सर्वतन्त्रेषु सम्मतम् । नाजीवन् ज्ञास्यति ज्ञेयं यदतोऽस्त्येव जीवनम्" इति । न चेदमदृष्टचरमिति मन्तव्यं विष्णुस्वामिमतानुसारिभिः नृपञ्चास्यशरीरस्य नित्यत्वोपपादनात् । तदुक्तम् साकारसिद्धौ "सच्चिन्नित्यनिजाचिन्त्यपूर्णानन्दैकविग्रहम् । नृपञ्चास्यमहं वन्दे श्रीविष्णुस्वामिसम्मतम्" इति । नन्वेतत् सावयवं रूपवद्भासमानं नृकण्ठीरवाङ्गं सदिति न सङ्गच्छत इत्यादिनाक्षेपपुरःसरं सनकादिप्रत्यक्षेण "सहस्रशीर्षा पुरुषः" इत्यादिश्रुत्या "तमद्भुतं बालकमम्बुजेक्षणं चतुर्भुजं शङ्खगदाद्युदायुधम्" इत्यादिपुराणश्रवणेन प्रमाणत्रयेण सिद्धं नृपञ्चाननाङ्गं कथमसत् स्यादिति । सदादीनि विशेषणानि गर्भश्रीकान्तमिश्रैः विष्णुस्वामिचरणपरिणतान्तःकरणैः प्रतिपादितानि । तस्मादस्मदिष्टदेहनित्यत्वमत्यन्तादृष्टं न भवतीति पुरुषार्थकामुकैः पुरुषैरेष्टव्यम् । अत एवोक्तम् "आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् । श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकमिति" । अजरामरीकरणसमर्थश्च रसेन्द्र एव तदाह "एकोऽसौ रसराजः शरीरमजरामरं कुरुते" इति । किं वर्ण्यते रसस्य माहात्म्यं यस्य दर्शनस्पर्शनादिनापि महत् फलं भवति। तदुक्तं रसार्णवे "दर्शनात् स्पर्शनात्तस्य भक्षणात् स्मरणादपि । पूजना-

-. द्रुपदामात्र दृश्यते षड्विधं फलम्। केदारादीनि लिङ्गानि पृथिव्यां यानि कानिचित्। तानि दृष्ट्वा तु यत् पुण्यं तत् पुण्यं रसदर्शनादित्यादिना”। अन्यत्रापि “काश्म्यादिसर्वलिङ्गेभ्यो रसलिङ्गार्चनं शिवम्। प्राप्यते येन तल्लिङ्गं भोगारोग्यामृतावहम्” इति। रसनि॰ न्द्रायाः प्रत्ययायोऽपि दर्शितः “प्रसादाद्रसनिन्द्रायाः सुतापेनं चरेत् सुधीः। त्र्याक् त्यजेत्स्विन्दवं नित्यं नि-न्द्रया पूरितासुभम्” इति। तस्मादपक्षुतया दीर्घा दिव्यं देहं लब्ध्वा योगाभ्यासवशात् परतत्त्वे दृष्टे पुरुषार्थप्राप्तिर्भवति। तद्रा “भ्रूयुगमध्यगतं यत् शिखि-विद्युत्सूर्य्यवज्जगद्भासि। केषाञ्चित् पुण्यदृशामुन्मीलति चिन्मयं ज्योतिः। परमानन्दैकरसं परमं ज्योतिः-स्वभावमविकल्पम्। विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम्। तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत् पश्यन्। उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाप्नो-तीति”। श्रुतिश्च “रसो वै सः रसं ह्येवायं लब्ध्वानन्दी भवतीति”। तदित्थं भवे मान्योऽदुःखमरतरणोपायो रस एवेति सिद्धम्। तथाच रसस्य परब्रह्मणा साम्यमिति प्रतिपादकः श्लोकः “यः स्यात् प्रावरणाविमोचनधियां साध्यः प्रयत्नात् पुनः सम्यक्को वहते न दीप्यति परं वैश्वानरे जायति। आत्मो यद्यपरं न वेदयति च स्व-स्मात् स्वयं द्योतते यो ब्रह्मेव स दैन्यसंसृतिभयात् पायादसौ पारदः” इति।

**रसोत्तम** पु॰ रस उत्तमो यस्य। मुद्गे राजनि॰।

**रसोद्भव** न॰ रसः पारद उद्भवस्थानात् उद्+भू-अप् उद्भवो यस्य। १हिङ्गुले राजनि॰। ५त॰। २रसजाते त्रि॰।

**रसोपल** न॰ रसः पारद इव उपलीयते शुभ्रत्वात् उप+ली-ड। मौक्तिके त्रिका॰।

**रस्न** न॰ रसं न। द्रव्ये उज्ज्वलद॰।

**रस्य** न॰ रसाद्भुक्तान्नपरिणामादागतः यत्। १रुधिरे शब्दच॰ रस्यते आस्वाद्यते रस-यत्। २आस्वाद्ये त्रि॰। रस्याः, “स्निग्धाः स्थिरा हृद्याः” गीता। ३पाठायां ४रास्ना-याञ्च स्त्री राजनि॰।

**रह** गतौ भ्वा॰ पर॰ सक॰ सेट् इदित्। रंहति अरंहीत्, “तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः” शारीरकसूत्रम्।

**रह** त्यागे भ्वा॰ प॰ सक॰ सेट्। रहति अरहीत्।

**रह** त्यागे अद॰ चु॰ उभ॰ सक॰ सेट्। रहयति ते अररहत्-त

**रहस्** न॰ रह-असुन्। १निर्जने अमरः। २गोप्ये ३स्वायायां ४रतषे च मेदि॰। ५निर्जने अव्य॰ अमरः। रहस्ते ऽस्मिन् रह-असुन् मतु रः। ६विद्यायोऽप्यादेशे उज्ज्वलद॰।

**रहस्य** त्रि॰ रहसि भवः यत्। १गोप्ये “रहस्यमत्राः स मन्त्रदिति” नैषधम्। २निर्जनभवे च ३पाठायां ४रा-स्नायाञ्च स्त्री राजनि॰ टाप् ५नदीभेदे स्त्री मेदि॰।

**रहित** त्रि॰ रह-त्यागे कर्मणि क्त। वर्जिते।

**रा** दाने ग्रहणे च अदा॰ पर॰ सक॰ अनिट्। राति अरासीत्।

**रा** स्त्री रा-सम्प॰ भावे क्विप्। १विभवे २दाने एकाक्षर-कोषः। कर्मणि क्विप्। ३धने शब्दर॰।

**राका** स्त्री रा-क तस्य नेत्त्वम्। १प्रतिपद्युक्तायां पूर्ण-मास्यां सम्पूर्णेन्दुतिथौ २नदीभेदे ३नवजातरजस्कायां नार्य्यां ४कच्छुरोगे च मेदि॰। ५आङ्गिरसः कन्याभेदे कृष्णपक्षे २१६२ पृ॰ दृश्यम्।

**राक्षस** पु॰ रक्ष एव स्वार्थे अण्। “क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते” इति भाष्योक्तेः पुंस्त्वम्। रक्षापहृताते निकषात्मजे १जातिभेदे अमरः जातौ ङीप्। २राक्षसजातिस्त्रियाम् स्त्री। रक्षस इदम् अण्। ३राक्षससम्बन्धिनि त्रि॰स्त्रियां ङीप्। “राक्षसी रात्रिरन्यत्र” सि॰ त॰। ४दंष्ट्रायां शब्दच॰ ५चण्डिकायां ६चोरनामगन्धद्रव्ये च स्त्री मेदि॰ ङीप्।

**राक्षसेन्द्र** पु॰राक्षस इन्द्र इव श्रेष्ठत्वात्। विश्रवसः ज्येष्ठ पुत्रे निकषात्मजे रावणे त्रिका॰।

**राक्षा** स्त्री रज्यतेऽनया रञ्ज-करणे-घञ् पृषो॰ इत्वं कस्य रक्ष। लाक्षायाम् अमरः।

**राख** शोषणे भूषणे निवारणे च सक॰ शोषणे अक॰ भ्वा॰ पर॰ सेट्। राखति अराखीत्। अदित् चङि न ह्रस्वः।

**राग** पु॰ रञ्ज-भावे घञ् नि॰ नलोपकुत्वे। १रञ्जने २कुङ्कुमादिवर्णे ३प्रीतौ ४अनुरागे ५क्लेशे ६गान्धारादिना-मभिः प्रसिद्धे निषादादिस्वरयोनिके स्वरभेदे मेदि॰ ७चन्द्रे ८नृपे च शब्दर॰। करणे घञ्। ९लोहितवर्णे १०तद्विशिष्टलाक्षादौ च “तेन रक्तं रागात्” पा॰ अनुरागलक्षणम् उज्ज्वलमणिनोक्तं यथा “दुःखमप्यधिकं चित्ते सुखत्वेनैव रज्यते। यतस्तु प्रणयोत्कर्षात् स राग इति कथ्यते”। स्वरभेदनिरुक्तिर्यथा “यैस्तु चेतांसि रज्यन्ते जगत्त्रितयवर्त्तिनाम्। ते रागा इति कथ्यन्ते मुनिभिर्भरतादिभिः” तेषां भेदाः संगीतदा॰ मतभेदे नाना तत्र प्रसिद्धा षड् भेदा यथा

"आदौ मालवरागेन्द्रस्ततो मल्लारसंज्ञितः । श्रीरागश्च ततः पश्चात् वसन्तस्तदनन्तरम् । हिन्दोलश्चाथ कर्णाट एते रागाः षडेव तु" सङ्गीतदा० । भरतमते तु "भैरवः कौशिकश्चैव हिन्दोलो दीपकस्तथा । श्रीरागो मेघरागश्च रागाः षडिति कीर्त्तिताः" ।

**रागचूर्ण** पु० रागस्य रतेश्चूर्ण इव । १कामे । रागाय चूर्ण्यतेऽसौ चूर्ण–घञ् । २खदिरे च मेदि० । ३लाक्षायां राजनि० ४रागयुक्तचूर्णे पु० (फाग) मल्लप० ।

**रागदालि** पु० दल्यतेऽसौ दल–णिच्–इन् पृषो० इत्वम् रागेण रक्ततया युक्तो दालिर्वा । मसूरे राजनि० ।

**रागपुष्प** पु० रागयुक्तं रक्तवर्णं पुष्पमस्य । १बन्धूके २रक्ताम्लाने च ३जवायां स्त्री राजनि० ङीप् ।

**रागप्रसव** पु० रागयुक्तो रक्तवर्णः प्रसवोऽस्य । १बन्धूके २रक्ताम्लाने च राजनि० ।

**रागयुज्** पु० रागेण रक्तवर्णेन युज्यते युज–कर्मणि क्विप् । १माणिक्ये राजनि० २रक्तवर्णयुक्ते त्रि० ।

**रागसूत्र** न० रागयुक्तं सूत्रम् । पट्टसूत्रे २तुलासूत्रे च मेदि० । [राजनि० १त० । रागाख्यायन स्त्री ।

**रागाङ्गी** स्त्री रागयुक्तमङ्गं यस्याः ङीप् । मञ्जिष्ठायाम्

**रागिणी** स्त्री रागोऽस्त्यस्या इनि । १गीताङ्गे स्वरभेदे रागपत्न्यां सङ्गीतदा० । २विदग्धनार्यां शब्दा० । ३मेनकाकन्यायां रागवति ४अनुरक्ते ५लालके त्रि० स्त्रियां रञ्ज–घिनुण् । ६रतियुक्ते च त्रि० । ७धान्यभेदे मेदि० । एकैकरागे षट् रागिण्य इति षट्सु रागेषु रागिणीभेदाश्च षट्त्रिंशत् यथा

"षट्त्रिंशद्रागिणीभेदाः क्रमशः कथिता मया । धानसी१ मालसी२ चैव रामकीरी३ च सिन्धुडा४ । आशावरी५ भैरवी६ च मालवस्य (१) प्रिया इमाः । वेलावली१ पुरवी२ च कानडा३ माधवी४ तथा । कोडा५ केदारिका६ चापि मल्लार(२)दयिता इमाः । गान्धारी१ सुभगा२ चैव गौरी३ कौमारिका४ तथा । वेलोयारी५ च वैरागी६ श्रीरागस्य (३) प्रिया इमाः । तुडी१ च प्रथमी२ चैव ललिता३ पटमञ्जरी४ । गुर्जरी५ च विभाषा६ च वसन्तस्य (४) प्रिया इमाः । मायूरी१ दीपिका२ चैव देशकारी३ च पाहिडी४ । बराडी५ मोरहाटी६ च हिन्दोलस्य(५) प्रिया इमाः । नाटिका चाथ भूपाली२ रामकेली३ गडा४ तथा । कामोदा५ चाथ कल्याणी६ कर्णाटस्य (६) प्रिया इमाः" ।

सङ्गीतदा० । तद्गानकालभेदाः तत्पुत्रादयश्च तत्रैव दृश्याः । —

**राघ** सक्तौ भ्वा० आ० सक० सेट् । राघते अराघिष्ट । ऋदित् चङि न ह्रस्वः ।

**राघव** पु० रघोर्गोत्रापत्यम् अण् । १रघोर्वंश्ये २तत्प्रधाने श्रीरामे च ३महासमुद्रभेदे ४समुद्रे च मेदि० ।

**राङ्कव** न० रङ्कोरयं विकारो वा तल्लोमजातत्वात् अण् । मृगविशेषलोमजाते वस्त्रभेदे अमरः ।

**राज** दीप्तौ भ्वा० उभ० अक० सेट् । राजति ते-अराजीत् अराजिष्ट फणादि० रेजतुः रराजतुः । ऋदित् चङि न ह्रस्वः ।

**राजक** न० राज्ञां समूहः कन् । १नृपसमुदाये अमरः । राजैव क । २नृपे पु० । राज–ण्वुल् । ३दीप्तिमति त्रि० । [भेदे पाठा० ।

**राजकदम्ब** पु० कदम्बानां राजा राजद० परनि० । कदम्ब-

**राजकर्ण्य** पु० दैवदत्तनाम्नो राजा राजन्+कर्ण्यण् । राज-तन्त्रे । [त्याम् राजनि० ।

**राजकर्कटी** स्त्री राजते राज–अच् कर्म० । चीनाकर्क-

**राजकशेरु** पु० कशेरूणाम् राजा राजद० । भद्रमुस्तायाम् राजनि० । [आदौ ।

**राजकीय** त्रि० राज्ञ इदम् छ कुक् च । राजसम्बन्धिका-

**राजकुमार** पु० राज्ञः कुमारः । अप्राप्तवयस्के युवराज-कार्यानर्हे राजपुत्रे । [त्याम् शब्दा०

**राजकुष्माण्ड** पु० राज्ञः कुष्माण्ड इव प्रियत्वात् । वार्त्ता-

**राजकोषातकी** स्त्री राजप्रिया कोषातकी । (घियाझिङ्गा) लताभेदे मदनविनोदः ।

**राजक्षवक** पु० क्षवथुनेन क्षु-अण् राजते राज–अच् कर्म० स्वार्थे क । राजसर्षपे (राइसर्षा) राजनि० ।

**राजखर्जूरी** स्त्री राजप्रिया खर्जूरी । खर्जूरीभेदे (पिण्ड-खेजुर) राजनि० । [२शाकभेदे राजनि० ।

**राजगिरि** पु० राजाश्रमो गिरिः । १मगधस्थे पर्वतभेदे

**राजघ** त्रि० राजानं हन्ति हन–क नि० । १राजहन्तरि, २तीक्ष्णे च शब्दा० "इराज नीरजनद्या स राजघः" नैष०

**राजजम्बू** स्त्री राज्ञः जम्बूरिव । १पिण्डखर्जूरे मेदि० राजते अच् कर्म० । २महाजम्बाम् राजनि० ।

**राजज(य)क्ष्मन्** पु० राज्ञः चन्द्रस्य क्षयकारको ज(य)क्ष्मा । रोगभेदे यक्ष्मनृपवद्‍ इत्युक्तम् "राज(य)क्ष्मेव रोगाणाम्" माघः । [हक्षे २आरग्वधे च राजनि० ।

**राजतरु** पु० तरूणां राजा राजद० परनि० । १कर्णिकार-

**राजताल** पु० राज्ञस्ताल इव प्रियः । १गुवाकवृक्षे शब्दर० । स्त्रीत्वमपि तत्र ङीप् । "राजतालीवनध्वनिः" रघुः ।

**राजदन्त** पु० दन्तानां राजा परनि० । अर्द्धपङ्क्तिस्थे मध्यवर्त्तिदन्तद्वये हेमच० । [वृक्षे राजनि० ।

**राजदेश्मीय** पु० ईषदूनो राजा राजन्+देशीयर् । राज-

**राजधुस्तूरक** पु० धुस्तूराणां राजा राज० पर० स्वार्थे क । कृष्णधुस्तूरे राजधुस्तूरकोऽप्यत्र पु० राजनि० ।

**राजधर्म** पु० राज्ञो धर्म्मः । राज्ञामवश्यकर्त्तव्ये प्रजापालनादौ कर्मणि । तमधिकृत्य कृतो ग्रन्थः अण् । भारतशान्तिपर्वान्तर्गते व्यासप्रणीते ग्रन्थभेदे । राजधर्माश्च तत्र मानवे ७ अ० च उक्ता द्रष्टव्याः ।

**राजधानी** स्त्री राजा धीयतेऽस्यां धा–आधारे ल्युट् ङीप् । राजावासे महानगर्य्याम् शब्दर० । [धान्ये राजनि० ।

**राजधान्य** न० धान्येषु राजा राज० पर० । (श्यामः) श्यामाक-

**राजन्** पु० राज–कनिन् रञ्जयति रन्ज–कनिन् नि० वा । १नृपे, "राजा प्रकृतिरञ्जनात्" रघुः । २चन्द्रे, ३प्रभौ, ४क्षत्रिये, ५यक्षे ६इन्द्रे, च मेदि० । उत्तरपदस्थः पूर्वपदस्य समभिव्याहृतपदार्थश्रेष्ठवाचकः । यथा राजमाषः सर्पिराज इत्यादि । ७पृथुनृपे च । "पित्रा न रञ्जितास्तस्य प्रजास्तेनानुरञ्जिताः । अनुरागात्ततस्तस्य नाम राजेत्यभाषत" विष्णु पु० ।

**राजनीति** स्त्री राज्ञां नीतिः । १राजकर्त्तव्ये सामाद्युपाये, २उपचारात् तत्प्रतिपादके शास्त्रे च । सा च कामन्दकीयनीतिशास्त्रादौ दृश्या ।

**राजन्य** पु० राज्ञोऽयम् यत्, जातौ नलोपः । राज–यत् वा । १क्षत्रिये अमरः । २राजपुत्रे ३वह्नौ, शब्दादिको० ४क्षीरिकावृक्षे जटा० । [५मुद्गे अमरः ।

**राजन्यक** न० राजन्यानां क्षत्रियाणां समूहः वुञ् । क्षत्रिय-

**राजन्वत्** त्रि० प्रशस्तो राजाऽस्त्यस्य प्राशस्त्ये मतुप् मस्य वः न नलोपः । सुन्दरराजयुते देशे अमरः अन्यत्र राजवद् इत्येव । [२मधुरपटोलस्यां राजनि० ।

**राजपटोल** पु० राजप्रियः पटोलः । १पटोले रत्नमा० ।

**राजपट्ट** पु० राज्ञः पट्ट इव । मणिभेदे त्रिका० ।

**राजपथ** पु० पथां राजा राजगमनयोग्यो वा पन्थाः अच् समा० । "धनूंषि इव विस्तारे चीणान् राजपथः स्मृतः । अश्वाजिरथनागानामसंबाधः सुसञ्चरः" इत्युक्ते राजमार्गे देवीपु० । [पर्वतवासिन्यां राजनि० ।

**राजपलाण्डु** पु० पलाण्डूनां राजा श्रेष्ठत्वात् राजद० । रक्त-

**राजपीलु** पु० राजप्रियः पीलुः । महापीलुवृक्षे राजनि० ।

**राजपुत्र** पु० राज्ञश्चन्द्रस्य, नृपस्य वा पुत्रः । १बुधग्रहे शब्दर० २नृपकुमारे ३वर्णसङ्करभेदे (रजपुत) "वैश्यादम्बष्ठकन्यायां राजपुत्रस्य सम्भवः" इति पराशरः । ४महाराजचूतवृक्षे राजनि० ।

**राजपुत्री** स्त्री राज्ञश्चन्द्रस्य पुत्रीव । १कटुतुम्ब्याम् २रेणुकायां ३जपरीतौ, ४जातौ ५छुछुन्दर्यां च । ५माल्त्याञ्च राजनि० । ६त० । ६नृपकन्यायाम् । कंसायां कन् । ७वराटिकायां जटा० ।

**राजपुष्प** पु० राजा चन्द्र इव शुभ्रत्वात् पुष्पमस्य । नागकेसरवृक्षे शब्दच० । २करणीवृक्षे स्त्री राजनि० ङीप् ।

**राजफणिज्झक** पु० राज–अच् कर्म० । नागरङ्गवृक्षे शब्दमा० ।

**राजफल** न० राजप्रियं फलमस्य । १पटोले त्रिका० । २राजप्रियं फलमस्याः । ३जम्ब्वाम् स्त्री राजनि० टाप् ।

**राजबदर** न० राज्ञो बदरमिव प्रियत्वात् । १रसाञ्जने २लवणे च मेदि० बदराणां राजा राजद० प० । ३उत्तमकोलौ पु० राजनि० । (भादार) लताभेदे अमरः ।

**राजबला** स्त्री राज–अच् राजं बलं यस्याः ५ब० । (गन्ध-

**राजभद्रक** पु० राज्ञो भद्रं यस्मात् कप् । १कुष्ठे (कुड़) २निम्बे च राजनि० ३पारिभद्रवृक्षे भावप्र० ।

**राजभूय** न० राज्ञो भावः राजन्+भू–क्यप् । राज्ञोऽसाधारणधर्मे राजत्वे ।

**राजभोग्य** न० राज्ञा भोक्तुं योग्यम् भुज–ण्यत् कुत्वम् । १जातीकोषे २पियालवृक्षे पु० शब्दच० ३नृपतेर्भोग्यवस्तुमात्रे त्रि० ।

**राजमार्ग** पु० राजयोग्यः मार्गः । १राजपथे राजनि० ।

**राजमाष** पु० माषेषु कलायेषु राजा श्रेष्ठत्वात् राजद० पर० । १माषभेदे हेमच० । (बरबटी) २व्रीहिभेदे राजनि० ।

**राजमुद्ग** पु० मुद्गेषु राजा राज० प० नि० । (सुगानि) मुद्गभेदे ।

**राजरङ्ग** न० राजयोग्यं रङ्गम् । रजते शब्दर० ।

**राजराज** पु० राज्ञामपि राजा प्रभूतधनत्वात् टच् समा० । १कुबेरे, अमरः । २सार्वभौमनृपे, ३चन्द्रे च मेदि० ।

**राजर्षि** पु० राजा ऋषिरिव श्रेष्ठत्वात् संयतत्वाच्च । १राजश्रेष्ठे, २यतात्मनि नृपे च । [भेदे पुंस्त्री० ।

**राजवंश्य** त्रि० राजवंशे भवः यत् । १राजवंशोद्भवे । २जाति-

**राजवर्त्मन्** न० राजयोग्यं वर्त्म । १राजपथे हेमच० । ६त० । राज्ञः २वर्त्तव्यवहार्येऽपि च ।

**राजवल्लभ** पु० ६त० । १प्रियाले २राजबदरे ३राजाम्रे

राजनि० कृष्णगुच्छमितपाटके तृखालपिटवकसौ ३पत्रभेदे च। ४राज्ञः पिढे त्रि०। [(डण्डा) वताभेदे रत्नमा०।

**राजवल्ली** स्त्री राजते राज–अच् राजा वल्ली कर्म०।

**राजवत्** त्रि० राजा राजमाने ऽस्यास्त्यस्मिन्वा मतुप् मस्य वः। राजनामन्वति देशे अमरः।

**राजवीजिन्** त्रि० राजा वीजी कारणं यस्य। राजवंश्ये।

**राजवृक्ष** पु० वृक्षाणां राजा राजद० परनि०। १आरग्वधे (सोन्दाल) अमरः। राजप्रियो वृक्षस्तत्फलवीजजातवृक्ष-कृतत्त्व राजप्रियत्वात्। २प्रियाले मेदि०। ३वक्राख्यायिवृक्षे (वङ्कापित्त) भावप्र०। [शब्दमा०।

**राजशण** पु० राज–अच् राज्ञः शणः कर्म०। पट्टे (पाट)

**राजशाक** पु० शाकानां राजा राज० परनि०। वास्तूकशाके राजनि०। [त्रिका०।

**राजशृङ्ग** न० राज्ञां शृङ्गमिव अर्ध्वस्थितत्वात्। राजचिह्ने

**राजस** त्रि० रजसा निर्मितः अण्। रजोगुणात् जाते १कर्मेन्द्रियादौ "येनाथिन् कर्मणा लोके ख्यातिमाप्नोति पुष्कलाम्। न च शोचत्यसम्पत्तौ तद्विज्ञेयन्तु राजसम्" इत्युक्ते ख्याते क्रियमाणे २कर्मणि च। रजः+ तयाऽस्त्यस्य अच्। ३रजःप्रधाने। सर्वेषां वस्तूनां त्रिगु-णात्मकत्वेऽपि "भूयस्त्वात्तद्व्यपदेशः" इत्युक्तेः कस्यचित् तत्प्रधानत्वेन व्यपदेशः। ४दुर्गायां स्त्री ङीप् शब्दमा०।

**राजसभ** न० राज्ञां नृपाणां सभा। नृपसभायां अमरः।

**राजसर्षप** पु० सर्षपाणां राजा श्रेष्ठत्वात् राजद०। (राइ-सर्षे) १सर्षपभेदे हेमच०। "तेऽष्टौ लिक्षा तु तास्तिस्रो राजसर्षप उच्यते" उक्ते ४परिमाणभेदे च विश्वः।

**राजसारस** पुंस्त्री० राजा सारस इव। मयूरे शब्दमा० स्त्रियां ङीष्।

**राजसूय** पु० राजा सूयते सु–कर्मणि क्यप्। राजमात्रकर्त्तव्ये यज्ञभेदे भवच०। "राजा राजसूयेन यजेत" श्रुतिः।

**राजस्व** न० राज्ञे देयं स्वं करहपम् धनम्। १राजदेये करे हृत०। २राजधने च। [हस्तिकुसूरे राजनि०।

**राजस्वर्ण** पु० स्वर्णानां धुस्तूराणां राजा० राजद० परनि०

**राजहंस** पुंस्त्री० हंसानां राजा श्रेष्ठत्वात् राजद० परनि०। रक्त-वर्णचञ्चुचरणयुक्ते श्वेतपक्षके हंसभेदे अमरः। २कलहंसे च मेदि०। उभयार्थे स्त्रियां ङीष्। राजा हंस इव सारपक्षत्वात्। ३नृपश्रेष्ठे। [नगरपुष्पे राजनि०।

**राजहर्षण** न० राज्ञः नृपान् हर्षयति हृष–णिच्–ल्यु।

**राजातन** पु० राजार्थमातनोति फलवीजम् आ+तन–अच्।

(चीरौञ्जीति) ख्यातवीजवृक्षफलके प्रियाले शब्दमा०।

**राजादन** पु० राजा अद्यते तत्फलवीजजातवृक्षतुल्यः अद–कर्मणि ल्युट्। १पियालवृक्षे अमरः। यस्य फलवीजं (चि-रौञ्जि) तेन हि वह्नुक क्षत्वा राजा भुङ्क्ते। २क्षी-रिकायां (खीरखे) ३किंशुके च मेदि०। ४कोविदारे स्त्री ङीप् भरतः। [राजनि०। ६न०। २नाफस्ताकारामभेदे च

**राजान्न** न० अन्नानां राजा राजद०। १अस्वेदशालिधान्यभेदे

**राजाम्र** पु० आम्राणां राजा श्रेष्ठत्वात् राजद०। १आम्रभेदे "राजाम्रं तुवरं स्वादु विशदं शीतलं गुरु। पाकि त्वथ पित्तवातघ्नं कफपित्तहरम्" भावप्र०। [राजनि०।

**राजाम्ल** पु० अम्लानां राजा श्रेष्ठत्वात् राजद०। अम्लवेतसे

**राजार्क** पु० अर्काणां राजा श्रेष्ठत्वात् राजद०। श्वेतार्क-वृक्षे (साद्दा आकन्द) राजनि०।

**राजार्ह** न० राजानमर्हति अर्ह–अण्। १अगुरुचन्दने २राज-योग्ये त्रि० राजनि० ३जम्ब्वां स्त्री मेदि०। [मदनवि०।

**राजालाबू** स्त्री राजते राजा अलाबूः कर्म०। मिष्टालाबुयाम्

**राजावर्त्त** पु० राजानमावर्त्तयति अनुवर्त्तयति आ–वृत–णिच् अण्। १उपरत्नभेदे राजनि०। २विराटदेशीय-हीरके हेमच०।

**राजाहि** पु० नित्यकर्म०। द्विमुखसर्पे शब्दर०।

**राजि(जी)** स्त्री राज–इन् वा ङीप्। १पङ्क्तौ पङ्क्तौ २रेखायां च मेदि०। स्वार्थे क। रेखायाम्। राजते राज–ण्वुल्। राजिका राजसर्षपे स्त्री मेदि०।

**राजिकाफल** पु० राजिकाया इव फलमस्य। श्वेतसर्षपे राजनि०।

**राजि(जी)फला** स्त्री राजिभूतानि श्रेणिभूतानि फलानि यस्याः। १चीनाकर्कट्याम् राजनि०। २पटोले पु० राजनि०

**राजिल** पुंस्त्री० राज–इलच्। डुण्डुभसर्पे (ढोँड़ासाप) अमरः स्त्रियां ङीष्।

**राजीव** न० राजी दलराजी अस्त्यस्य व। १पद्मे अमरः। "राजीवराजीवशलोलभृङ्गेति" माघः। २हरिणभेदे ३मत्स्य-भेदे च पुंस्त्री० मेदि० "राजीवपिङ्गहरिणांश्च" मनुः। ४गजे त्रिका० ५सारसपक्षिणि च पुंस्त्री० अमरः सर्वत्र जातौ स्त्रियां ङीष्।

**राजेन्द्र** पु० राजा इन्द्र इव श्रेष्ठत्वात्। "चतुर्योजनपर्यन्त-मधिकारी नृपो भवेत्। यो राजा तच्छतगुणः स एव मण्डलेश्वरः। तस्माद्दशगुणो राजा राजेन्द्रः" इत्युक्ता-धिकारवति भूपतिभेदे ब्रह्मवै० जं०ख० ८६अ०।

राधिवास पु० ६त० अलुक् स०। १गोष्ठ्यां, २रात्रौ, ३शृङ्गारे ४रसाभिज्ञे, ५रसाश्रये, ६भण्डीलागरे च मेदि०। ७उल्लासे शब्दच० ८परिहासे जटा०।

राधेश्वरी स्त्री ६त०। राधिकायाम्।

रास्ना स्त्री रस-णन्। १अनामक्षातायां लतायाम् (वाँटा आलरक)। तत्पर्य्यायगुणा भावप्र० उक्ता यथा "रास्ना युक्तरसा रसा सुवहा रसना रसा। एलापर्णी च सुरसा सुगन्धा श्रेयसी तथा। रास्नाऽऽमपाचनी तिक्ता गुरूष्णा कफवातजित्। शोथश्वासमीराणवातशूलोदरापहा। कासज्वरविषाशीतिवातिकास्रविभ्रुत्" भावप्र०। २नाकुल्यां भावप्र० तत्पर्य्यायगुणा उक्ता यथा "नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली। नकुलेष्टा भुजङ्गाक्षी सर्पाक्षी विषनाशिनी। नाकुली तुवरा तिक्ता कटुकोष्णा विनाशयेत्। भोगिमूषावृश्चिकाखुविषज्वरकृमिव्रणान्"।

राहु पु० रह-उण्। १ग्रहे, २स्वर्भानौ, ज्योतिषमते सूर्य्यकिरणसम्पर्काभावेन जायमानभूमिच्छायारूपे ३तमसि तदधिष्ठातरि ४ग्रहभेदे, ५सिंहिकासुते दानवे च। तमःशब्दे दृश्यम्।

राहुच्छत्र न० राहोश्छत्रमिव। आर्द्रके राजनि०।

राहुदर्शन न० राहोर्दर्शनं यत्र। चन्द्रसूर्य्ययोरुपरागरूपे १ग्रहणे "स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने" इति ति०त०। तेन उपरोक्ते एव चन्द्रे सूर्य्ये च तस्य दृश्यता नान्यदा तस्य छायारूपत्वात्।

राहुमूर्द्धभिद् पु० राहोः सिंहिकासुतस्य मूर्द्धानं भिनत्ति भिद्-क्विप्। विष्णौ। अमृतपानकाले देवपङ्क्तौ देवरूपेण स्थिताऽमृतं पिबन्तं दृष्ट्वा विष्णुस्तस्य शिरश्चिच्छेदेति भाग० ८।८ अ०।

राहुरत्न न० राहोः प्रियं रत्नम्। गोमेदमणौ राजनि०।

राहुस्पर्श पु० राहोः स्पर्शः साधितभूच्छायाद्वारा यत्र। चन्द्रसूर्य्ययोः उपरागरूपे ग्रहणे हलायुधः।

राहूच्छिष्ट पु० ६त०। लशुने त्रिका०।

राहूसृष्ट पु० ६त०। लशुने जटा०।

रि गतौ तु० पर० सक० अनिट्। रियति अरैषीत् रिराय।

रिक्त न० रिच-क्त। १शून्ये २वने मेदि०। ३निर्धने च त्रि० शब्दर०। स्वार्थे क। तत्रैव त्रि०।

रिक्तपाण्ड न० रिक्तं भाण्डम्। तैलादिशून्ये भाण्डे।

रिक्तहस्त त्रि० रिक्तो धनादिशून्यो हस्तो यस्य। १निर्धने, भूरिदानादिना २व्ययितधने च। [तिथिषु ज्यो०त०।

रिक्ता स्त्री रिच-क्त। चतुर्थीनवमीचतुर्दशी-

रिक्थ न० रिच-थक्। १धने अमरः। २पित्रादिमृतधनागते धने च "स्वामी रिक्थक्रयसंविभागेत्यादि" गौतमस्मृतिः।

रिक्थग्राहिन् त्रि० रिक्थं दायं गृह्णाति। ग्रह–णिनि। दायहारिणि पुत्रादौ। अण्। रिक्थग्राहोऽप्यत्र।

रिक्थिन् त्रि० रिक्थं पाण्डवेनास्त्यस्य इनि। दायहारिणि दायादे "उभयोरप्यसौ रिक्थी" इति मनुः।

रिख वर्णने भ्वा० पर० सक० सेट् इदित्। रिङ्खति अरिङ्खीत्। अनिदिदयमित्यन्ये रेखति अरेखीत्।

रिग गतौ भ्वा०पर०सक०सेट् इदित्। रिङ्गति अरिङ्गीत्।

रिङ्गण न० रिगि-ल्युट्। स्खलने। रिङ्गि ल्युट्। रिङ्गणमप्यत्र

रिच सम्पर्के वियोगे च वा चु०उभ० पक्षे भ्वा०पर०सक०सेट्। रेचयति ते रेचति। अरीरिचत् त अरेचीत्।

रिच विरेके (आंतमन पुरीषोत्सर्गे) रुधा०उभ०सक०अनिट्। रिणक्ति रिङ्क्ते इरित् अरिचत् अरैक्षीत् अरिक्त। अति+अतिक्रम्य स्थिते आधिक्येन स्थितौ अक०। अतिरेकः वि+अति भेदे तदभावे तदभावरूपे पदार्थे च व्यतिरेकः।

रिज भर्जने भ्वा० आ०सक० सेट्। रेजते अरेजिष्ट।

रिपु पु० रप-उन् पृषो०। १शत्रौ अमरः। २चोरनामगन्धद्रव्ये राजनि०। ज्योतिषोक्ते लग्नापेक्षया ३षष्ठस्थाने च। देहिकेषु षट्सु ४कामक्रोधादिषु। "कामः क्रोधश्च लोभश्च मात्सर्य्यं मदमोहकौ। देहिका रिपवश्चेति" पुरा०

रिपुघातिनी स्त्री रिपुं हन्ति हन–णिनि। (कुँचुइ) लताभेदे शब्दच०। २शत्रुघातके त्रि०। [१नृपभेदे पु०]

रिपुञ्जय त्रि० रिपुञ्जयति जि-खच् मुम्। १शत्रुजयिनि,

रिन्फ वधे तु० प० सक० सेट्। रिम्फति अरिम्फीत् रिम्फत

रिप्फ पु० रिन्फ-अच् पृषो०। लग्नापेक्षया द्वादशे स्थाने ज्यो०

रिफ कुत्सने भ्वा० पर० सक० सेट्। रेफति अरेफीत्।

रिफ हिंसायां निन्दायां योधने च सक० दानेऽपि अक० तु० पर० सेट्। रिफति अरेफीत्।

रिब गत्यां भ्वा०पर०सक०सेट् इदित्। रिम्बति अरिम्बीत्।

रिभ रवे भ्वा० पर० सक० सेट्। रेभति अरेभीत्।

रिव गतौ भ्वा०पर०सक०सेट् इदित्। रिण्वति अरिण्वीत्।

रिश हिंसायां तु०पर०सक०अनिट्। रिशति अरिक्षत्।

रिश्य(ष्य) स्त्री रिश्य(ष)ते रिश(ष)-क्यप्। मृगभेदे त्रिका० स्त्रियां योपधत्वात् ङीप्। ऋश्यशब्दार्थे शब्दर०।

तद्गुणेनारनालेन दाहशीतज्वरापहम्" । अरुन् यथा "लाक्षारसाढके प्रस्थं तैलस्य विपचेद्भिषक् । मस्तु-षड्गुणसंयुक्तं पिष्ट्वा चात्र समावपेत् । शतपुष्पां हरिद्रां च मूर्वां कुष्ठं हरेणुकाम् । कटुकां मधुकां रास्नामश्वगन्धां च दारु च । मुस्तकं चन्दनं चैव पृथक्पण-समानकैः । द्रव्यैरेतैश्च संसिद्धमभ्यङ्गात् सान्तताप्रहम् । विषमाख्यान् ज्वरान् सर्वानाश्वेवं प्रशमं नयेत् । कासं श्वासं प्रतिश्यायं कण्डूं दौर्गन्ध्यगौरवम् । त्रिकपृष्ठ-ग्रहं शूलं गात्राणां स्फुटनं तथा । पापालक्ष्मीप्रशमनं सर्वग्रहनिवारणम् । अश्विभ्यां निर्मितं सम्यक् तैलं लाक्षादिकं महत्" चक्रदत्तः । [राजनि०

**लाक्षाप्रसाद** पु० लाक्षायाः प्रसादो यस्य । पट्टिकालोध्रे

**लाक्षाप्रसाधन** न० प्रसाध्यते भूष्यतेऽनेन ल्युट् लाक्षा तद्रूप एव प्रसाधनमस्य । १रक्तलोध्रे अमरः ।

**लाक्षारस** पु० लाक्षानिःसृतो रसः द्रवः । अलक्तकरसे ।

**लाख** शोषे भूषणे दाने वारणे च सक० सामर्थ्ये अक० भ्वा० पर० सेट् । लाखति अलाखीत् ऋदित् चङि न ह्रस्वः ।

**लाघ** सामर्थ्ये भ्वा० आ० अक० सेट् । लाघते अलाघिष्ट । ऋदित् चङि न ह्रस्वः ।

**लाघव** न० लघोर्भावः अण् । १लघुत्वे २आरोग्ये च राजनि०

**लाङ्गल** न० लगि-कलच् पृषो० वृद्धिः । स्वनामख्याते १भूमिकर्षके पदार्थे अमरः । २लिङ्गे शिश्ना० ३पुष्पभेदे ४तालवृक्षे ५गृहदारुणि च मेदि० । [(हेल) अमरः ।

**लाङ्गलदण्ड** पु० ६त० । लाङ्गलमध्यस्थे काष्ठमये दण्डे

**लाङ्गलपद्धति** स्त्री लाङ्गलजाता पद्धतिः रेखा । सीतायाम् लाङ्गलपातजातस्थभूमिरेखायाम् अमरः ।

**लाङ्गलिकी** स्त्री लाङ्गलमिवाकारोऽस्त्यस्याः ठन् गौ० ङीष् (विषलाङ्गला) १वृक्षभेदे अमरः । तत्र भवः अण् २विषभेदे पु० हेमच० ।

**लाङ्गलिन्** पु० लाङ्गलं प्रहरणसाधनत्वेनास्त्यस्य इनि । १बल-रामे शब्दर० । लाङ्गलदण्ड इव दीर्घः आकारोऽस्त्यस्य इनि । २नारिकेलवृक्षे अमरः ।

**लाङ्गली** स्त्री लाङ्गलाकारः पुष्पमस्त्यस्याः अच् गौरा० ङीष् (काँचड़ा) शाकभेदे अमरः ।

**लाङ्गूल** न० लगि-ऊलच् पृषो० । पशूनां पश्चाद्देशस्थिते रोम-पुच्छे सारसुन्दरी २शेफे मेदि० ३कुसूले त्रिका० ।

**लाङ्गूलिका** स्त्री लाङ्गूलाकारोऽस्त्यस्याः ठन् । पृश्निपर्ण्याम् राजनि० । [तदाकारपुष्पयुते २वृषभौषधे च राजनि० ।

**लाङ्गूलिन्** पु० लाङ्गूलमस्त्यस्य इनि । १वानरे शब्दच०

**लाछि** लक्षणे भ्वा० पर० सक० सेट् इदित् । लाञ्छति अला-ञ्छीत् । [ऋषभकम् । लाञ्जति अलाञ्जीत् ।

**लाज** भर्जने भ्वा० पर० सक० सेट् । लाजति अलाजीत् । इदि

**लाज** न० लाज-अच् । १उशीरे २आर्द्रतण्डुले पु० मेदि० । ३भृष्टधान्ये (खइ) पु० ब० व० अमरः । स्त्रीत्वमप्यत्र मेदि० ।

**लाञ्छन** न० लाञ्छ्यते लाछि-कर्मणि ल्युट् । १चिह्ने २नामनि च मेदि० भावे ल्युट् । ३अङ्कने ।

**लाट** पु० लट-संज्ञायां घञ् । १देशभेदे २वस्त्रे अमरः ३जीर्णालङ्कारे शब्दर० । ४विदग्धपुरुषे च शा० र० ।

**लाटानुप्रास** पु० अलङ्कारोक्ते शब्दालङ्कारभेदे अनुप्रासशब्दे १७८पृ० अलङ्कारशब्दे च ३८८ पृ० दृश्यम् ।

**लाड** क्षेपे चु० उभ० सक० सेट् । लाडयति ते ।

**लाभ** पु० लभ्यते लभ-कर्मणि घञ् । १मूलधनादितोऽधिके लभ्यमाने धने अमरः । भावे घञ् । २प्राप्तौ ।

**लामज्जक** न० लायते ला-क्विप् लाः आदीयमानः मज्जा सारो यस्य कप् । वीरणमूले अमरः ।

**लालन** न० चु० लल-ल्युट् । स्नेहपूर्वकपालने ।

**लालसा** स्त्री लस-स्पृहायां यङ् लुक् भावे अ । १अतिप्र-णेच्छायाम् अमरः । २गर्भिणीदोहदे हेमच० ३याच्ञायां औत्सुक्ये च मेदि० । कर्त्तरि अच् । ४लोभे त्रि० हेमच० ।

**लाला** स्त्री चु० लल-णिच् अच्-टाप् । मुखजलस्रवे अमरः

**लालाटिक** त्रि० ललाटं प्रभोर्भाग्यं पश्यति ठञ् । १प्रभु-भाग्यापजीविनि कार्याक्षमे अमरः । ललाटात् ललाटस्थभाग्यात् आगतः तस्येदं वा ठञ् । २भाग्या-धीने त्रि० "प्राप्तिस्तु लालाटिकी" इत्युद्भटः । ३ललाट-सम्बन्धिनि त्रि० ।

**लालाविष** पु० लालायां विषमस्य । १लूतादौ कीटे हेमच० कीटशब्दे २०५८ पृ० दृश्यम् । [हेमच० ।

**लालास्राव** स्त्री लालां स्रावयति स्रु-णिच्-अण् । लूताकीटे

**लालित्य** न० ललितस्य भावः ष्यञ् । १सौन्दर्ये २मनो-हरत्वे "नैषधे पदलालित्यम्" इत्युद्भटः ।

**लाव** पुंस्त्री० लू-कर्त्तरि संज्ञायां घञ् । १पक्षिभेदे अमरः । स्त्रियां ङीष् । स्वार्थे क । तत्रैव भावे घञ् । २छेदने ।

**लावण** न० लवणेन संस्कृतम् अण् । लवणसंस्कृते औषधादौ

**लावणिक** न० लवणेन संस्कृतम् ठञ् । १लवणेन संस्कृतौषधादौ हेमच० । लवणं पण्यमस्य ठञ् । २लवणविक्रयोपजी-विनि वणिग्भेदे च ।

षिद्धिदां षिद्धसेविताम् । एवं ध्यात्वा वकारं तु तन्मन्त्रं दशधा जपेत्" वर्णोद्धारतन्त्रम् ।

**व** पु० वा—ड । १वायौ २वरुणे ३सान्त्वने ४मन्त्रणे मेदि० ५राहौ ६कल्याणे ७प्रचेतसि ८वसतौ ९वस्त्रे च शब्द-च० १०व्याघ्रे ११वपने १२शालूके १३वन्दने च एकाक्षर-को० । १४सादृश्ये अव्य० मेदि० "मालवं व यशः पटुः" रघुः । १५वरुणे न० मेदि० । १६वरुणवीजे मान्तमव्ययम् ।

**वंश** पु० वमति उद्गिरति वम-श तस्य नेत्त्वम् । १कुलपौत्रा-द्युपत्यवर्गे २तृणजातिभेदे (बाँश) अमरः ।

"वंशः सरो हिमः स्वादुः कषायो वस्तिशोधनः । छेदनः कफपित्तघ्नः कुष्ठास्रव्रणशोथजित् । तत्करीरः कटुः पाकरसे रूक्षो गुरुः सरः । कषायः कफकृत् स्वादुर्विदाही वातपित्तलः । तद्यवास्तु सरा रूक्षाः कषायाः कटुपाकिनः । वातपित्तकरा उष्णा बद्धमूत्राः कफापहाः" भावप्र० । ३पृष्ठावयवे ४वर्गे च मेदि० ५इक्षौ ६शालवृक्षे च राजनि० । ७वाद्यभेदे पुंस्त्री० धरणिः स्त्रीत्वे गौरा० ङीष् "वंशीरवेण पथिकेन" इति उद्धारणचम्पूः । तद्विवृतिर्यथा

"तालेन राजते गीतं तालो वाद्यसमाश्रयः । गरीयस्तेन वादित्रं तच्चतुर्विधमुच्यते । ततं शुषिरमानद्धं घनमित्थं चतुर्विधम् । ततं तन्त्रीगतं वाद्यं वंशाद्यं शुषिरं तथा । चर्मावनद्धमानद्धं घनं तालादिकं मतम्" । तत्र शुषिरं यथा "वंशोऽथ पारी मधुरी ती शङ्खकाहला । तोडही मुरली बुक्का शृङ्गिका स्वरनाभयः । शृङ्गं कापालिकं वंशचर्मवंशस्तथा परः । एते शुषिरभेदास्तु कथिताः पूर्वसूरिभिः । वर्त्तुलः सरलश्चैव सर्वदोषविवर्जितः । वैणवः खादिरो वापि रक्तचन्दनजोऽथ वा । श्रीखण्डजोऽथ सौवर्णो दन्तिदन्तमयोऽपि वा । राजतस्ताम्रजो वापि लौहजः स्फाटिकोऽथ वा । कनिष्ठाङ्गुलितुल्येन गर्भरन्ध्रेण शोभितः । शिल्पविद्याप्रवीणेन वंशः कार्यो मनोहरः । वंशेनैव मतःप्रीतिः मतङ्गमुनिनोदितम् । ततोऽन्येऽपि तदाकारा वंशा एव प्रकीर्त्तिताः । तत्र त्यक्त्वा शिरोदेशादधोद्विमितमङ्गुलम् । फुत्काररन्ध्रं कुर्वीत मितमङ्गुलिपर्वणा । पञ्चाङ्गुलानि संत्यज्य ताररन्ध्राणि कारयेत् । कुर्यात्तथान्यरन्ध्राणि सप्तसंख्यानि कौशलात् । बदरीबीजतुल्यानि संत्यज्यार्द्धमङ्गुलम् । प्रान्तयोरन्तरं कार्यं स्वराद्यैर्नादहेतवे । विवरैरेव कला देया तेन सुस्वरता भवेत् । पञ्चाङ्गुलोऽयं वंशः स्यादेकैकाङ्गुलिवर्द्धितः । षडङ्गुलानि नाम्ना स्यात् यावदष्टादशाङ्गुलम् । फुत्काराताररन्ध्रस्य यावदङ्गुलिकान्तरम् । तदेव नाम वंशस्य वांशिकैः परिकीर्त्यते । एकाङ्गुलोद्व्यङ्गुलश्च त्र्यङ्गुलश्चतुरङ्गुलः । अतितारतरत्वेन वांशिकैः समुपेक्षितः । त्रयोदशाङ्गुलो वंशोऽपरः पञ्चदशाङ्गुलः । निन्दितो वंशतत्त्वज्ञैस्तथा सप्तदशाङ्गुलः । महानन्दस्तथानन्दो विजयोऽथ जयस्तथा । चत्वार उत्तमा वंशा मतङ्गमुनिसम्मताः । दशाङ्गुलो महानन्दोऽनन्द एकादशाङ्गुलः । द्वादशाङ्गुलमानस्तु विजयः परिकीर्त्तितः । चतुर्दशाङ्गुलमितो जय इत्यभिधीयते । ब्रह्मा रुद्रो रविर्विष्णुः क्रमादत्र व्यवस्थिताः । नैविड्यं प्रौढ़ताचापि सुस्वरत्वञ्च शीघ्रता । माधुर्य्यमिति पञ्चामी फुत्कृतेषु गुणाः स्मृताः । सीत्कारबहुलः स्तब्धो विस्वरः स्फुटितो लघुः । अमधुरश्च विज्ञेयाः षड्दोषाः फुत्कृते क्रमात् । इत्थं प्रयोगबाहुल्यमल्पता गीतवादने । एभिर्दोषैर्युतोऽतीव निन्दितो वांशिको मतः । स्थानकाठिन्याभिज्ञो गमकाढ्यः स्फुटाक्षरः । शीघ्रहस्तः कलाभिज्ञो वांशिको रक्त उच्यते । प्रवृत्तिर्वर्त्तनामुक्तिश्च युक्तिश्चेत्यङ्गुले गुणाः । सुस्थानत्वं सुस्वरत्वमङ्गुलीचारणक्रिया । अमलगमकज्ञानं रागरागाङ्गवेदिता । क्रियाभाषाविभाषासु दक्षता गीतवादने । स्वस्थाने चापि दुःस्थाने नादनिर्वाहकौशलम् । गातृणां स्थानदातृत्वं तद्दोषाच्छादनं तथा । वांशिकस्य गुणा एते मया संक्षिप्य दर्शिताः" सङ्गीतदा० ।

**वंशक** पु० वंश इव कायति कै—क । (बोगयाडा) १इक्षुभेदे रत्नमा० २मत्स्यभेदे (राङत) शब्दमा० । ३अगुरुचन्दने न० हारा० । [वंशरोचनायाम् राजनि० ।

**वंशकर्पूररोचना** स्त्री कर्पूरमिव रोचते रुच—ल्यु ६त० ।

**वंशचोरी** स्त्री वंशस्य चोरमिवाच्छमस्या अच् गौरा० ङीष् । वंशरोचनायाम् राजनि० ।

**वंशज** पु० वंशात् जायते जन—ड । १वंशजाते यवाकारे वेणुयवे राजनि० २सत्कुलजाते त्रि० । ३वंशरोचनायां स्त्री टाप् शब्दर० । [राजनि० ।

**वंशतण्डुल** पु० ६त० । वेणुजाते तण्डुलाकारे वेणुयवे

**वंशधर** त्रि० वंशं धरति । कुलाविच्छेदकारके सन्ताने । धृ—णिच् ल्यु । वंशवर्द्धनोऽप्यत्र ।

**वंशनेत्र** न० वंशस्येव नेत्रमस्य । इक्षुमूले राजनि० ।

प्रति+विरुद्धतयोक्तौ पर० प्रतिवदति प्रतिवादः प्रतिवादी प्रत्युत्तरोक्तौ च ।

वि+विरुद्धोक्तौ पक्षप्रतिपक्षपरिग्रहेणोक्तौ आत्म० विवदन्ते पण्डिताः वादिप्रतिवादिनश्च ।

**वद** वाचि सन्देशे च सक० चुरा० उभ० सेट् । वादयति ते अवीवदत् । अभि+प्रणामे ।

**वद** त्रि० वदति वद–अच् । वक्तरि अमरः ।

**वदन** न० उद्यतेऽनेन वद–करणे ल्युट् । १मुखे अमरः । २वचनेन्द्रिये भावे ल्युट् । ३कथने न० । [अमरः ।

**वदा(द)न्य** पु० वद–अन्य पृषो० वा दीर्घः । भूरिदानशीले

**वदाम** न० वद–आमन् । (वादाम) वातादे फलभेदे भावप्र० । "वातादो वातवैरी स्यान्नेत्रोपमफलस्तथा । वातादः उष्णः सुस्निग्धो वातघ्नः शुक्रकृद्गुरुः । वातादमज्जा मधुरो वृष्यः पित्तानिलापहः । स्निग्धोष्णः कफकृत् श्रेष्ठो रक्तपित्तविकारिणाम्" भावप्र० ।

**वदाल** पुंस्त्री० वद–आल । पाठीनमत्स्ये (बोयाल) त्रिका० स्त्रियां ङीष् । स्वार्थे क तत्रार्थे । [अमरः ।

**वदावद** पु० अत्यन्तं वदति वद–अच् नि० । बहुवक्तरि

**वधू** स्त्री उह्यते पितृगेहात् पतिगृहं वह–ऊ धुकच् । १भार्य्यायाम् २नवोढायां ३पुत्रभार्य्यायाम् अमरः । ४शठ्यां च मेदि० । अस्य योष्यादित्वमित्यन्ये

**वधूजन** पु० कर्म० । नारीजने त्रिका० ।

**वधूटी** स्त्री अल्पा वधूः टी । अल्पवयस्कायाम् भार्य्यां "गोपवधूटी दुकूलेति" भाषापरि० । [नीत् अवनीत् अवनत्तः ।

**वन** सेवने सक० शब्दे अक० भ्वा० पर० सेट् । वनति अवानीत्

**वन** व्यापारे भ्वा० पर० सक० सेट् । वनति अवानीत् अवनीत् । ज्वला० वनः वाणः । घटा० वनयति । [निष्ट ।

**वन** याचने द्विक० तना० आ० सेट् क्त्वा वेट् । वनुते अव-

**वन** उपकारे उपतापे च सक० शब्दे अक० वा चु० उभ० पक्षे भ्वा० पर० सेट् । वानयति ते वनति । अवीवनत् त । अवनीत् अवानीत् ।

**वन** न० स्त्री वन–अच् । १दुमसमुदायात्मके अरण्ये अमरः स्त्रीत्वे ङीष् । "सुवनी वस्मवदवदृविकापि का" नैष० । २जले ३निवासे ४आलये च मेदि० । ५प्रस्रवणे हेमच० ।

**वनकदली** स्त्री ७त० । काष्ठकदल्याम् राजनि० ।

**वनकन्द** पु० वनजातः कन्दः । अरण्यजाते शूरणे राजनि०

**वनकार्पासी** स्त्री वनोद्भवा कार्पासी । (वनकापास) क्षुपभेदे रत्नमा० ।

**वनकोलि** पु० वनोद्भवः कोलिः । (वनकुल) वृक्षे ।

**वनचन्दन** न० वनजातं चन्दनम् शा०त० । १अगुरुचन्दने २देवदारुणि च विश्वः ।

**वनचन्द्रिका** स्त्री वने चन्द्रिकेव । मल्लिकायाम् राजनि० ।

**वनचम्पक** पु० ७त० । (वनचाँपा) चम्पकभेदे राजनि० ।

**वनच्छाग** पु० वने जातश्छागः । (वनछागल) १छागभेदे राजनि० । वने छाग इव । २शूकरे पुंस्त्री० शब्दमा० स्त्रियां ङीष् ।

**वनज** न० वने जलेऽरण्ये वा जायते जन–ड । १पद्मे २स्तम्बकभेदे ३वनशूरणे पु० राजनि० ४गजे त्रिका० । ५अश्वगन्धायां ६गन्धपत्रायां ७वनकार्पास्यां ८वनोपोदक्याम् ९मिश्रेयायां १०ऐन्द्र्यां स्त्री राजनि० । ११मुद्गपर्ण्यां च स्त्री मेदि० । १२वनजातमात्रे त्रि० ।

**वनतिक्त** पु० वनेषु वनजातेषु मध्ये तिक्तः । १हरीतक्याम् शब्दमा० । २पाठायां (आकनादि) च स्त्री रत्नमा० । स्वार्थे क तत्रैव अमरः ।

**वनदीप** पु० वनस्य दीप इव । वनचम्पके राजनि० ।

**वनपल्लव** पु० वनमिव निविड़ पल्लवोऽस्य । शोभाञ्जने जटा० ।

**वनपुष्पा** स्त्री वनमिव बहुलं पुष्पं यस्याः । शतपुष्पायाम् राजनि० । [पूरकः । वनबीजपूरके राजनि० ।

**वनपूरक** पु० पूरकः बीजपूरकः पूर्वपदलोपः वनोद्भवः

**वनप्रिय** पुंस्त्री० वनं वनस्थं प्रीणाति प्री–क । १कोकिले स्त्री मेदि० स्त्रियां योपधत्वात् टाप् २अरण्यप्रियमात्रे त्रि० । ३त्वचे न० राजनि० ।

**वनभुज** पु० वनं भुङ्क्ते भुज–क्विप् । १ऋषभे २तथाभौषधे शब्दच० । [अमरः ।

**वनमक्षिका** स्त्री वनोद्भवा मक्षिका । दंशे कीटभेदे (डाँस)

**वनमल्ली** स्त्री वनोद्भवा मल्ली । अरण्यमल्लिकायाम् शब्दर० ।

**वनमाला** स्त्री "आजानुलम्बिनी माला सर्वर्त्तुकुसुमोज्ज्वला । मध्ये स्थूलकदम्बाढ्या वनमालेति कीर्त्तिता" इत्युक्तायां मालायाम् ।

**वनमालिन्** पु० वनमालाऽस्त्यस्य इनि । १श्रीकृष्णे अमरः २वाराहीकन्दायाम् स्त्री मेदि० ङीप् ३द्वारकापुर्य्यां स्त्री त्रिका० । [४मुद्गपर्ण्यां स्त्री राजनि०गौरा० ङीष् ।

**वनमुद्ग** पु० वनोद्भवः मुद्गः । १मुद्गभेदे (मुगानि) अमरः ।

**वनमूर्द्धजा** स्त्री वनस्य मूर्द्धजं शृङ्गमिवाऽस्त्यस्याः अच् । (काकड़ाशिङ्गी) कर्कटशृङ्ग्याम् राजनि० ।

**वनमोचा** स्त्री वनोद्भवा मोचा । काष्ठकदल्याम् राजनि० ।

**वनलक्ष्मी** स्त्री वनस्य लक्ष्मीरिव तदधिष्ठानत्वात्। कद- लाम् राजनि०। [राजनि०

**वनवर्वर** पु० वनोद्भवः वर्वरः। कृष्णार्जके। (वनवावुइ) ख्याते

**वनवासिन्** पु० वनं वासयति सुरभीकरोति वासि–णिनि। १मुष्ककवृक्षे २वाराहीकन्दे ३मालूकन्दे ४गौल- गृञ्जनकन्दे ५मूषकपर्णीबघे च राजनि०। वने वसति वस-णिनि। ६वनवासकर्त्तरि त्रि० स्त्रियां ङीप्।

**वनवीज** पु० वीजो वीजपूरकः मध्यपदलोपः ७त०। वन- वीजपूरे राजनि०। [राजनि०

**वनवृन्ताकी** स्त्री वनस्य वृन्ताकी वार्त्ताकी। वृहत्याम्

**वनव्रीहि** पु० वनस्य व्रीहिः। नीवारे (उड़िधान) हेमच०।

**वनशूकरी** स्त्री वनस्य शूकरीव रोमशत्वात्। १कपिकच्छ्वाम् राजनि०।७त०। २वनवराहे पु०२वनशूकरयोषिति स्त्री।

**वनशृङ्गाट** पु० वनस्य शृङ्गाट इव कण्टकावृतत्वात्। गोक्षुरे अमरः। स्वार्थे क। तत्रैवार्थे। [शब्दच०।

**वनशोभन** न० वनं जलं शोभयति शुभ–णिच ल्यु। पद्मे

**वनसङ्कट** पु० सम्+कट-अच् ६त०। मसूरे शब्दच०।

**वनसरोजिनी** स्त्री वनस्य सरोजिनी पद्मिनीव शोभाकर त्वात्। वनकार्पासाम् शब्दर०।

**वनस्पति** पु० वनस्य पतिः नि० सुट्। पुष्पं विना जात- फलके १अश्वत्थादौ वृक्षे अमरः। २वृक्षमात्रे मेदि०।

**वनहास** पु० वनस्य हास इव प्रकाशकत्वात्। काशतृणे राजनि०।

**वनाखु** पु० वने आखुरिव। शशके त्रिका०।

**वनाम्लक** पु० अव+मल-ण्वुल् अकारलोपः। शत्रौ त्रिका०।

**वनाटु** पु० वनमटति अट-उन्। १वर्वणायां नीलमक्षिका- याम् शब्दर०। २कपालदेशे उज्ज्वल०।

**वनामल** पु० वनस्यामल आमलक इव। करमर्द्दे शब्दमा०।

**वनाम्र** पु० वनस्य आम्र इव। कोशाम्रे राजनि०।

**वनायु** पु० वन-आयुच्। प्रशस्तघोटकोद्भवदेशभेदे (आरव) राजनि०। [(आरवि) शब्दर०।

**वनायुज** पु० वनायुदेशे जायते जन-ड। प्रशस्तघोटके

**वनारिष्टा** स्त्री वनस्य न रिष्टं यस्याः। वनहरिद्रायाम् राजनि०। [शुक्लोच्चतायाम् हारा०।

**वनालिका** स्त्री वनमलति भूषयति अल-ण्वुल्। हस्ति-

**वनि** पु० वन-इन्। १वह्नौ सि०कौ० २रश्मौ उज्ज्वल०। ३याचने पु० ४याचके त्रि०। [रक्षायां स्त्रियाञ्च मेदि०।

**वनिता** स्त्री वन–याचने कर्म्मणि क्त० भा०द्रत।१योषिति २अनु-

**वनिन्** पु०वनम् आश्रयतयाऽस्त्यस्य इनि। वानप्रस्थाश्रमयुक्ते

**वनिष्णु** त्रि० वन–इष्णुच्। याचके।

**वनीपक** वनीयक+पृषो० यस्य पः। याचके उज्ज्वल०। "कृपण इव वनीपकोपसेवितपर्वतः श्रेयात्" पदाङ्कदूतम् च

**वनीयक** त्री वन–इन् आत्मनो वनिं याचनमिच्छति क्यच् ण्वुल्। याचके अमरः पृषो० यलोपः। वनीकोऽप्यत्र वाचस्पत्री।

**वनेक्षुद्रा** स्त्री ७त० अलुक्स०। करञ्जे रत्नमा०।

**वनेचर** त्रि० वने चरति चर–ट अलुक्स०। अरण्य- चारिणि व्याधादौ स्त्रियां ङीप्।

**वनेसर्ज** पु० सृजति–सृज–अच् ७त० अलुक्स०। असनवृक्षे रत्नमा०। [कार्पासाम् रत्नमा० २वनजाते त्रि०।

**वनोद्भवा** स्त्री वन एव उद्भवति उद्+भू–अच् ७त०। १वन-

**वनौकस्** पु० वनमेव ओकः स्थानं यस्य। १वानरे अमरः। २वनवासिनि त्रि०।

**वन्च** प्रतारणे भ्वा०पर०सक०सेट् क्त्वा वेट्। वञ्चति अवञ्चीत्

**वन्दन** न० वदि–ल्युट्। १स्तवने २प्रणामे च। युच्। वन्दनाप्यत्र, स्त्री। ३वदने न० शब्दच०।

**वन्दनीय** त्रि० वदि-अनीयर्। १नमनीये २स्तवनीये च ३पीतभृङ्गराजे पु०राजनि०।४गोरोचनायां स्त्री त्रिका०।

**वन्दा** स्त्री वदि-कर्मणि घञ्। (परगाछा) लताभेदे अमरः २भिक्षुक्यां ३लताभेदे च मेदि०।

**वन्दाका** स्त्री वदि-आकन्। वन्दायाम् शब्दच०। गौरा० ङीष् तत्रार्थे स्त्री शब्दर०। तत्रार्थे पु० भावप्र० "वन्दाकः शीतलस्तिक्तः कषायो मधुरो रसे। मङ्गल्यः कफवातास्ररक्षोव्रणविषापहः"।

**वन्दारु** त्रि० वदि–आरु। वन्दनशीले शब्दर०।

**वन्दि(न्दी)** स्त्री वदि–इन् वा ङीप्। १काराबद्धमनुष्यादौ (कएदी) शब्दर०२वन्दने ३स्तुतौ च।४सोपानके उणा०।

**वन्दिग्राह** पु० वन्दिमिव–हठाद्गृह्णाति ग्रह–अ। बलावष्टम्भेन मानवे (डाकाइत) मिता०। "वन्दिग्राहांस्तथा वाजि- कुञ्जराणां च हारिणः" मनुः।

**वन्दिपाठ** पु० ६त०। स्तुतिपाठे त्रिका०।

**वन्दिन्** पु० वन्दते स्तौति वदि–णिनि। राजादेः १स्तुति- पाठके अमरः। [भावप्र० २वन्दायां शब्दच०।

**वन्द्य** त्रि० वदि यत्। १वन्दनीये। २गोरोचनायाम् स्त्री

**वन्द्र** न० वन्द–रन्। १समृद्धौ सि०कौ०।२पूजके त्रि०उणादि०

**वन्य** न० वने भवः यत्। १त्वचे (दारचिनि) राजनि०।

२वनशूरणे ३वाराहीकन्दे ४देवनले पु० राजनि० । ५वनजातमात्रे त्रि० । ६मुद्गपर्ण्यां ७गोपालकर्कट्यां ८गुञ्जायां ९मिश्रेयायां १०भद्रमुस्तायां ११गन्धपत्रायां स्त्री राजनि० । वनानामरण्यानां जलानां वा समूहः यत् । १२जलसमूहे १३वनसमूहे च स्त्री मेदि० ।

वप बीजवपने तन्तुवयने मुण्डने च सक० भ्वा० उभ० अनिट् यजा० । वपति ते अवाप्सीत् अवप्त उवाप ऊपतुः । ड्वित् उप्त्रिमः । पित्रादिपिण्डदाने "पिण्डनिर्वपणं चरेत्" स्मृतिः ।

वपन न० वप-ल्युट् । १केशमुण्डने २बीजाधाने ३तन्त्वाधाने च मेदि० । "प्रयागे भास्करक्षेत्रे पितृमातृवियोगतः । आधाने सोमपाने च वपनं सप्तसु स्मृतम्" प्रा० त० ।

वपनी स्त्री उप्यतेऽनया अत्र वा वप-ल्युट् ङीप् । १नापितालये २तन्तुवायशालायां (तातघर) हेमच० ३तन्तुवयनयन्त्रभेदे (माकु) च ।

वपा स्त्री वप-अच् । १मेदसि (चर्वि) "वपाया हविषः" इति श्रुतिः । २छिद्रे च अमरः ।

वपुन पु० वप-उनन् । देवतायां शब्दर० ।

वपुषा स्त्री वप-बा उषन् । कुपाकायाम् भावप्र० ।

वपुष्टमा स्त्री अतिशयेन वपुः प्रशस्ताकृतिः तमप् प्रशस्तम् । १पद्मचारिण्याम् लतायाम् जटा० । २काशीपतिकन्यायां ३जनमेजयपत्न्यां च ।

वपुस् न० उप्यन्ते देहान्तरभोगसाधनबीजीभूतानि कर्माण्यत्र वप-उसि । १शरीरे अमरः । २प्रशस्ताकारे च मेदि० ।

वप्तृ पु० वप-तृच् । १जनके २कवौ च मेदि० ३बीजादिवापके त्रि० ।

वप्र पुंन० उप्यतेऽत्र रन् । १दुर्गनगरादौ परिखाया उद्धृतमृत्तिकाकूटे अमरः । २क्षेत्रे ३रेणौ ४तटे मेदि० । ५सीसके न० हेमच० । ६जनके ७प्राचीरे पु० विश्वः । ८प्रजापतौ च पु० संक्षिप्तसा० । ९मञ्जिष्ठायां स्त्री राजनि० । [१०वसुद्रे च संक्षिप्तसा० ।

वप्रि पु० वप-रि १क्षेत्रे केदारे सि० कौ० । २दुर्गतौ

वभ्र गतौ भ्वा० पर० सक० सेट् । वभ्रति अवभ्रीत् ।

वम उद्गारे भ्वा० पर० सक० सेट् । वमति अवमीत् । ड्वित् वमथुः । ज्वला० वमः वामः । वमयति वामयति उपसृष्टस्य नित्यं ह्रस्वः । फणा० वेमतुः ववमतुः । उदित् वमित्वा वान्त्वा वान्तः ।

वमथु पु० वम-अथुच् । वमने उद्गिरणे अमरकोषः ।

वमन न० वम ल्युट् । १मर्दने २छर्दने मेदि० ३आहुतौ विश्वः ४निःसारणे च "जगाभिघ्नन्त्वमनम्" कुमारः । ५शणे पु० । ६जलौकायां स्त्री राजनि० गौरा० ङीष् ।

वमि स्त्री वम-इन् । १छर्दौ छर्दिरोगे २६८० पृ० दृश्यम् । २अग्नौ पु० मेदि० ३धूर्ते त्रि० शब्दर० ।

वमित पु० वम-णिच् क्त । कृतोद्गारे । [वि(ढ)ध्वम् ।

वय गतौ भ्वा० आ० सक० सेट् । वयते अवयिष्ट । अय० ।

वयस् न० अज-असुन् वीभावः । १विहगे २बाल्याद्यवस्थायाम् अमरः "वयोऽतिपातोद्गतवातेति" नैष० । ३यौवने च विश्वः ।

वय(यः)स्थ पु० स्त्री० वयसि यौवने तिष्ठति स्था-क खर्परे शरि वा विसर्गलोपः । १तरुणे २विभीतक्यां स्त्री अमरः । "वयस्था नागरोत्पलात्" वैद्यकम् । ३आमलक्यां ४हरीतक्यां ५सोमवल्ल्यां स्त्री अमरः । ६गुडूच्यां ७सूक्ष्मैलायां ८काकोल्याम् ९ब्राह्मी स्त्री मेदि० । १०शाल्मल्यां स्त्री हेमच० । ११क्षीरकाकोल्याम् भावप्र० । १२मत्स्याक्षीपर्ण्यां मत्स्याक्ष्यां १३युवतौ च स्त्री राजनि० ।

वयस्य पु० वयसा तुल्यः यत् । १समानवयस्के अमरः । २सख्यां स्त्री अमरः ।

वयुन न० वय-उनन् । १ज्ञाने भाग० १०।८८० श्रीधरः । २देवागारे त्रिका० । देवागारे पु० उणादि० ।

वयोधस् पु० वयो यौवनं धत्ते धा-असुन् । तरुणे उणा० ।

वयोरङ्ग न० वयसा रङ्गमिव । सीसके राजनि० ।

वर ईप्से चुरा० उभ० सक० सेट् । वरयति ते अववरत् त ।

वर न० म्रियते वृ-कर्मणि अप्, वरि-अच् वा । १कुङ्कुमे २स्वाभीष्टे अमरः "वरं प्राणान् परित्यज्य" इति तन्त्रम् । भावे अप् अच् वा । ३इच्छायाम् ४याचने ५आवरणे ६वेष्टने च । वृ-कर्मणि अप् । ७अभीष्टे ८श्रेष्ठे च त्रि० अमरः । ९जारे १०जामातरि शब्दर० ११गुग्गुलौ शब्दच० १२पत्यौ च पु० हेमच० । "तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः" इत्युक्ते १३पदार्थे ।

वरक पु० वृ-वुन् । १वनमुद्गे हेमच० २पर्पटे ३क्षुद्रधान्यभेदे (चीना) च राजनि० । ४पोताच्छादनवस्त्रे न० हारा० ।

वरचन्दन न० कर्म० । १कालीये २देवदारुणि च मेदि० ।

वरट न० वृ-अटन् । १कुन्दपुष्पे शब्दर० । २कीटभेदे (बोलता) ३हंसे पुंस्त्री० मेदि० । स्त्रियाम् अजादि० टाप् अमरः ।

वहति पु० वह-अति । १वायौ उणा० । २गवि ३सचिवे च मेदि० । [४गमने च ।

वहन न० वह-भावे ल्युट् । १पुरभेदे त्रिका० २प्रापणे ।

वहन्त पु० वह-झ । वायौ त्रिका० २बाले उणा० ।

वहल पु० वह-अलच् । १पोते हारा० २दृढे त्रि० हेम० ।

वहलगन्ध न० वहलो दृढो गन्धो यस्य । श्वेतचन्दने राजनि० ।

वहलचक्षुस् पु० वहलानि चक्षूंषीव पुष्पाण्यस्य । मेषशृङ्ग्यां (माङ्गशिङ्गा) रत्नमा० । [राजनि० ।

वहलत्वच पु० वहला दृढा त्वचा यस्य । श्वेतलोध्रे

वहला स्त्री वहलानि पुष्पादीनि सन्त्यस्य अर्श आद्यच् । १शतपुष्पायां राजनि० । २स्थूलैलायां भावप्र० ।

वहित न० वह-क्त । १पोते जलयाने त्रिका० । प्राप्ते । वलेनार्थे ।

वहिरङ्ग न० वहिः प्रकृतेर्वाह्यमङ्गं यस्य । व्याकरणोक्ते प्रत्ययादिनिमित्तके प्रत्ययादिकार्ये । "असिद्धं वहिरङ्गमन्तरङ्गे" व्या० परिभाषा ।

वहिरिन्द्रिय न० वहिर्देशादुत्कस्य पदार्थस्य ग्राहकमिन्द्रियम् । चक्षुरादिबाह्यविषयग्राहकेषु नेत्रादिषु ।

वहिर्द्वार न० वहिःस्थं द्वारम् । तोरणे अमरः ।

वहिर्मुख त्रि० वहिः वाह्यविषये मुखं प्रवणता यस्य । बाह्यविषयासक्तमनस्के विषयासक्ते १जने २विमुखे च ।

वहिस् अव्य० वह-इसुन् । बाह्ये अमरः ।

वहेडक पु० वह-अच् वहः एडक इव इडत् कार्ष्णो यस्य । बिभीतकवृक्षे (वहेडा) राजनि० ।

वह्नि पु० वह-नि । १अग्नौ २चित्रकवृक्षे अमरः ३भल्लातके ४निम्बूके राजनि० । तन्त्रोक्ते ५रकारे च । "यगौदं वह्निसंस्थम्" इति ध्यानाद्युक्तम् ।

वह्निभेदादिकं यथा

"जृम्भको दाहकश्चैव विप्रस्वधयोषकाः । आवसथ्याहवनीयौ दक्षिणाग्निस्तथैव च । अन्वाहार्यो गार्हपत्य इत्येते दश वह्नयः" । अन्यैरन्यथोक्तानि यथा "स्नानको रञ्जकश्चैव क्लेदकः स्नेहकस्तथा । धारको बन्धकश्चैव द्रावकाख्यश्च सप्तमः । व्यापकः पावकश्चैव श्लेष्मको दशमः स्मृतः" । शरीरस्थवह्नेः नामानि यथा "वह्नयो दोषदुष्टेषु संक्षीणा दश देहिनः" । दोषदुष्टाश्च यथा "वातपित्तकफा दोषाः दुष्टा भूः सप्तकाश्च" भ० ति० । "तत्राग्नयो यथा "गार्हपत्यो दक्षिणाग्निस्तथैवाहवनीयकः । एतेऽग्नयस्त्रयो मुख्याः शेषाश्चोपसदस्त्रयः" वह्निपु० । तत्र निषिद्धकर्माणि यथा "नाशुचोऽग्निं परिचरेत् न देवान् कीर्तयेद्दषीन् । न चाग्निं लङ्घयेद्धीमान् नोपदध्यादधः क्वचित् । न चैनं पादतः कुर्यात् मुखेन न धमेद्बुधः । अग्नौ न निःक्षिपेदग्निं नाद्भिः प्रशमयेत्तथा । न वह्निं मुखनिश्वासैर्ज्वालयेन्नाशुचिर्बुधः । अग्निं नैव स्पृशेन्न पृष्ठेनापि चिरं वसेत् । नापस्थितेनोपधमेत् न च पर्णेन च धर्षिना । मुखेनाग्निं समुद्दीप्तं मुखादग्निरजायत" कूर्मपु० १५ अ० । अग्निवैकल्यं तत्र शान्तिश्च यथा "अनग्निर्दीप्यते यत्र राष्ट्रे यत्र निरिन्धनः । न दीप्यते चेन्धनवान् स राष्ट्रः पीड्यते नृपैः । प्रज्वलेदप्सु मांसं वा तथार्द्राण्यपि किंचन । प्रासादं तोरणद्वारं नृपवेश्म सुरालयम् । एतानि यत्र दह्यन्ते तत्र राजभयं भवेत् । विद्युता वा प्रदह्यन्ते तत्रापि नृपतेर्भयम् । धूमवानग्निजो यत्र तत्र विद्यान्महद्भयम् । विनाग्निं विस्फुलिङ्गाश्च दृश्यन्ते यत्र कुत्रचित् । त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः । समिद्भिः क्षीरवृक्षाणां सर्षपैस्तु घृतेन च । दद्यात् सुवर्णं च तथा द्विजेभ्यो गाश्च वस्त्राणि तथा भुवञ्च । एवं कृते पापमुपैति नाशं यदग्निवैकल्यभवं द्विजेन्द्र" ! वह्निपु० १०५ अ० । ६तद्देवताके कृत्तिकानक्षत्रे ज्योतिषम् ।

वह्निकरी स्त्री वह्निं देहस्थवह्निं करोति उद्दीपयति कृ-ट ङीप् । १धातकीवृक्षे (धाइफुल) शब्द० । २वह्निदीपके त्रि० । [दारुहरिद्रायां राजनि० ।

वह्निकाष्ठ न० वह्नेर्दीप्तदाहात्मकाष्ठं काष्ठम् भा० त० ।

वह्निगन्ध पु० वह्नौ दाहकाले गन्धो यस्य । यक्षधूपे शब्दच० ।

वह्निगर्भ पु० वह्निर्गर्भे यस्य । १वंशे २शमीवृक्षे स्त्री शब्दर० ।

वह्निज्वाला स्त्री वह्नेर्ज्वालेव पीडाकारकत्वात् । १धातकीवृक्षे राजनि० ६त० । २वह्निशिखायाम् ।

वह्निदीपक पु० वह्निं देहस्थवह्निं सेवनाद्दीपयति दीप-णिच्-ण्वुल् वह्निरिव दीप्यति दीप-ण्वुल् वा । १कुसुम्भे शब्दर० । २वह्न्युद्दीपके त्रि० । ३यवानीदायाम् स्त्री राजनि० । [ङीष् । अटामांस्याम् रत्नमा० ।

वह्निनी स्त्री वह्निं तत्कान्तिं नयति नी-ड गौरा० ।

वह्निपुष्पी स्त्री वह्निरिव तापकं पुष्पं यस्याः ङीप् । धातकीवृक्षे राजनि० ।

वह्निभोग्य न० ६त० । घृते शब्दच० ।

आसवाद्यैश्च हेतुभिः । दध्यारनालसौवीरशुक्ततक्रसुरासवैः । विरुद्धाध्यशनक्रोधदिवास्वप्नप्रजागरैः । प्रायशः सुकुमाराणां मिथ्याहारविहारिणाम् । स्थूलानां सुखिनां चापि प्रकुप्यत्यनिलशोणितम् । हस्त्यश्वोष्ट्रैर्गच्छतश्चाश्नतश्च विदाह्यन्नं संविदाह्यशनस्य" । क्षारो यवक्षारादिः । अजीर्णभोजनैः अजीर्णात् भोजनैः अतिमात्रभोजनैरित्यर्थः । क्लिन्नादीनि मांसस्य विशेषणानि । क्लिन्नं घटितम् । शुष्कमातपे शोषितम् । अम्बुजं मत्स्यादिमांसम् । आनूपं गौड़ादिपूर्वदेशजं मांसम् । पिण्याकं तिलखलिः । मूलकं प्रसिद्धमेव । निष्पावः (वोड़ा) शाकम् । शाकं पत्रशाकम् । आदिग्रहणेन हल्लकादीनि फलशाकानि गृह्यन्ते । पललं घटितत्वाद्दोषकारित्वमपि मांसं वातशोणितं प्रकोपयेत् । घटितादि तु मांसं विशेषतो वातशोणितं प्रकोपयेत् । आरनालं सन्धानभेदः । शुक्तं सन्धानभेदः । सौवीरं सन्धानभेदः । तक्रं चतुर्थांशजलयुक्तं मथितं दधि । सुरा सन्धानभेदः । आसवः सन्धानभेदः । विरुद्धं क्षीरमत्स्यादि । अध्यशनम् । "अजीर्णे भुज्यते यत्तु तदध्यशनमुच्यते" । अतिजागरो निशि । प्रायशः बाहुल्येन । सुकुमाराणाम् अल्पतरकायव्यापाराणाम् । अथ वा । मिथ्याहारविहारिणाम् अपथ्याहारविहाराभ्यां स्थूलानां सुखिनाम् रक्तदुष्ट्या हस्त्यश्वोष्ट्रैर्गच्छतः ततो वायुर्विवृद्धे ते रुधिरमार्गे गच्छति । हस्त्यादय उपलक्षणानि । पद्भ्यामप्यतिचलतः । अश्नतः विदाह्यन्नम् । विदाहि निष्पावकुलत्थमाषादि । संविदाह्यशनस्य । संविदाहेऽशनं यस्य भुक्ते विदग्धे तदुपरि भुञ्जानस्येत्यर्थः । अध्यशनशब्दाभ्यामेतदुक्तं विदग्धाजीर्णभोजनस्य विशेषतो हेतुत्वार्थम् । पश्चात् वातशोणितं प्रकुप्येदित्यनेनान्वयः । एतेषां कारणानां मध्ये केनचिदायुः केनचिदुभयमपि प्रकुप्येत् । संप्राप्तिमाह "कृत्स्नं रक्तं विदहत्याशु तच्च दुष्टं स्रस्तं पादयोश्चीयते तु । तत् संपृक्तं वायुना दूषितेन तत्प्राबल्यादुच्यते वातरक्तम्" । पूर्वोक्तैर्हेतुभिः कृत्स्नं समस्तं रक्तं विदहति अत्र दहधातुरविवक्षितकर्मकः । तेन विदहति विदग्धं भवतीत्यर्थः तच्च दुष्टरक्तम् । स्रस्तम् अधोगतम् पादयोश्चीयते सञ्चितं भवति । तद्रुधिरं दूषितेन वायुना संपृक्तं मिलितं वातरक्तम् उच्यते । अत्र चैतस्य संप्राप्तिरुक्ता सुश्रुतेन "मौलं रक्तं दुष्टिमायाति तत्र वायोर्मार्गे संरुद्धमार्गो वातः । क्रुद्धोऽत्यर्थं मार्गरोधात् स वायुरत्युल्बणं दूषयेद्रक्तमाशु" । अत्र प्रथमं रक्तस्य दुष्टत्वात् रक्तवातमिति व्यपदेष्टुमुचितं भवति तत्राह तत्प्राबल्यादिति । तत्र वातस्य दोषत्वेन प्राधान्याद्वातरक्तमिति व्यपदिश्यते । पूर्वरूपमाह "स्वेदोऽत्यर्थं न वा कार्ष्ण्यं स्पर्शाज्ञत्वं क्षतेऽतिरुक् । सन्धिशैथिल्यमालस्यं सदनं पिडकोद्गमः । जानुजङ्घोरुकट्यंसहस्तपादाङ्गसन्धिषु । निस्तोदः स्फुरणं भेदो गुरुत्वं सुप्तिरेव च । कण्डूः सन्धिषु रुग्भूत्वा भूत्वा नश्यति चासकृत् । वैवर्ण्यं मण्डलोत्पत्तिर्वातासृक्पूर्वलक्षणम्" । अथाधिकवातस्य रक्तस्य लक्षणमाह "वातेऽधिकेऽधिकं तत्र शूलस्फुरणतोदनम् । शोथस्य रौक्ष्यं कृष्णत्वं श्यावतावृद्धिहानयः । धमन्यङ्गुलिसन्धीनां सङ्कोचोऽङ्गग्रहोऽतिरुक् । शीतद्वेषानुपशयौ स्तम्भवेपथुसुप्तयः" । तत्र पादयोः शूलादिकमधिकम् यत आह सुश्रुतः "स्पर्शोद्विग्नौ तोदभेदप्रशोषौ स्वापोपेतौ वातरक्तेन पादाविति" । अत्र सुप्तिः स्वापोपेतता । अधिकरक्तं वातरक्तमाह "रक्ते शोथोऽतिरुक् तोदस्ताम्रश्चिमिचिमायते । स्निग्धरूक्षैः शमं नैति कण्डूक्लेदसमन्वितः" । अधिकपित्तं तदाह "पित्ते विदाहः संमोहः स्वेदो मूर्च्छा मदस्तृषा । स्पर्शाक्षमत्वं रुग्रागः शोथपाकौ भृशोष्मता" । विदाहश्च पादयोरेव शेषः यत आह सुश्रुतः "पित्तासृग्भ्यामाप्तदाहौ भवेतामत्युष्णौ रक्तशोथौ मृदू च" । पादाविति शेषः । अधिककफं तदाह "कफे स्तैमित्यगुरुता सुप्तिः स्निग्धत्वशीतता" । गुरुतादयः पादयोरेव यत आह सुश्रुतः "कण्डूमन्तौ श्वेतशीतौ सशोथौ पीनस्तब्धौ श्लेष्मदुष्टे तु रक्ते" । अप्रतिक्रियमाणवातरक्तस्य उपद्रवानाह "अस्वप्नारोचकश्वासमांसकोथशिरोग्रहाः । मूर्च्छा च मदरुक्तृष्णाज्वरमोहप्रवेपकाः । हिक्कापाङ्गुल्यवीसर्पपाकतोदभ्रमक्लमाः । अङ्गुलीवक्रतास्फोटदाहमर्मग्रहार्बुदाः" मांसकोथो मांसगलनम् । असाध्यत्वादिकमाह "एतैरुपद्रवैर्वर्ज्यं मोहेनैकेन वापि यत् । अकृत्स्नोपद्रवं याप्यं साध्यं स्यान्निरुपद्रवम् । एकदोषानुगं साध्यं नवं याप्यं द्विदोषजम् । त्रिदोषजमसाध्यं स्याद्यस्य च स्युरुपद्रवाः" ।

**वाराहाङ्गी** स्त्री वाराहस्येवाङ्गमस्याः ङीप् । दन्तीवृक्षे भावप्र० ।

**वाराही** स्त्री वराहस्येयमण् ङीप् । अष्टमातृकामध्ये १वराहशक्तौ "यज्ञवराहमतुलं रूपं या बिभ्रती हरेः । शक्तिः साप्याययौ तत्र वाराहीं बिभ्रती तनुम्" देवीमा० "वाराही नारसिंही च" मन्त्राभिधानम् । २योगिनीभेदे हस्यम्बिकेश्वरतु० । ३वराहक्रान्तायाम् अमरः ४वराहयोषिति च ५गृष्टिभेदे राजनि० ।

**वाराहीकन्द** पु० (चामराव) ख्याते कन्दभेदे "वाराहीकन्द एवान्यैश्चर्मकारालुको मतः । अनूपे स भवेद्देशे वराहइव लोमवान्" भावप्र० ।

**वारि** न० वृ-इञ् । १जले अमरः २ह्रीवेरे च हेमच० । वार्यतेऽनया वृ-णिच्-इन् वा ङीप् । ३गजबन्धन्याम् अमरः । "वार्यर्गलाभङ्ग इव प्रवृत्तः" रघुः । ४वाचि ५सरस्वत्याम् च स्त्री कोषान्तः ६कलश्यां धरणिः ७वन्दो च मेदि० ।

**वारिकण्टक** पुंन० वारिणः कण्टक इव । शृङ्गाटके जटा० ।

**वारिकर्णी** स्त्री वारिणि कर्ण इव पत्रमस्याः ङीप् । १कुम्भिकायाम् (पाना) शब्दर० स्वार्थे क । तत्रैव ।

**वारिकर्पूर** पुंस्त्री वारिणि कर्पूर इव । इल्लिशमत्स्ये त्रिका० स्त्रियां ङीप् ।

**वारिकुब्ज** पु० वारिणि कुब्ज इव वक्राकृतित्वात् । शृङ्गाटके शब्दर० । स्वार्थे क । तत्रैव त्रिका० ।

**वारिक्रमि** पु० ६त० । जलौकायां त्रिका० [कायाम् त्रिका० ।

**वारिचत्वर** पु० वार्य्येव चत्वरमस्याधारत्वात् । कुम्भि-

**वारिचर** पुंस्त्री० वारिषु चरति चर-अच् । १मत्स्ये २जलचरजन्तुमात्रे त्रि० स्त्रियां ङीप् । [शैवाले त्रिका०

**वारिचामर** न० वारिणश्चामरमिव शोभाहेतुश्चामराकृतित्वात् ।

**वारिज** न० वारिणि जायते जन-ड । १पद्मे २लवङ्गे ३गौरसुवर्णे ४लवणभेदे च राजनि० । ५शङ्खे हेमच० ६शम्बूके पु० शब्दच० । ७जलजातमात्रे त्रि० ।

**वारितस्कर** पु० वारिणः तस्कर इवापहारकत्वात् । १सूर्य्ये २मेघे शब्दमा० । ३मुसले च ।

**वारिला** स्त्री वारिवल्लायते लै-क । शङ्खे त्रिका० ।

**वारिद** न० वारि ददाति दा-क । १मेघे २मुस्तके च अमरः । ३जलदातरि त्रि० ४वार्त्तायां स्त्री शब्दच० ।

**वारिधि** पु० वारीणि धीयन्तेऽस्मिन् धा-आधारे कि । १समुद्रे शब्दर० वारिनिध्यादयोऽप्यत्र जलाधारे २घटादौ च

**वारिपर्णी** स्त्री वारिणि पर्णान्यस्याः ङीप् । कुम्भिकायाम् (पाना) अमरः ।

**वारिपालिका** स्त्री वारीणि पालयति आवरणेन पाल-ण्वुल् । कुम्भिकायाम (पाना) शब्दमा० ।

**वारिपृश्नी** स्त्री वारिणि पृश्निः पर्णमस्याः ङीप् । कुम्भिकायाम् (पाना) शब्दमा० । [त्रिका० ।

**वारिबदरा** स्त्री वारिसमीपभवा बदरेव । प्राचीनामलके

**वारिबालक** न० वारिणो बालक इव । ह्रीवेरे जटा० ।

**वारिभव** न० वारिणो नेत्रजलाय वारिणि वा भवति प्रभवति वा भू-अच् । १स्रोतोऽञ्जने राजनि० । २जलभवमात्रे त्रि०

**वारिमसि** पु० वारि जलं मसिरिव नीलतापादकं यस्य । १मेघे त्रिका० २हस्तके च । [(पाना) त्रिका० ।

**वारिमूली** स्त्री वारिणि मूलमस्याः ङीप् । कुम्भिकायाम्

**वारिरथ** पु० वारिणि रथ इव गमनसाधनत्वात् । भेलके त्रिका०

**वारिराशि** पु० वारीणां राशयोऽत्र । १समुद्रे त्रिका० । ६त० । २जलसमूहे च । [२जलजातमात्रे त्रि० ।

**वारिरुह** न० वारिणि रोहति रुह-क । १पद्मे राजनि०

**वारिवदन** न० वारियुक्तं वदनं यस्मात् । प्राचीनामलके तत्सेवने हि मुखे वारिनिस्रावः ।

**वारिवर** न० वारि वृणोति वृ-अच् । करमर्द्दे त्रिका० ।

**वारिवल्लभा** स्त्री वारि वल्लभमस्याः जलजत्वात् । विदार्य्याम् राजनि० । [च अमरः । स्त्रि । वारिवाहकोऽप्यत्र मेघे ।

**वारिवाह** पु० वारीणि वहति वह-अण् । १मेघे २मुस्तके

**वारिश** पु० वारिणि समुद्रजले शेते शी-ड । विष्णौ त्रिका० ।

**वारीश** पु० ६त० । १समुद्रे २वरुणे च । वारिनाथादयोऽप्यत्र ।

**वारु** पु० वारयति रिपून् वारि-उण् । विजयकुञ्जरे जटा० ।

**वारुण** न० वरुणस्येदमण् । १जले २वरुणसम्बन्धिनि त्रि० । स देवताऽस्य अण् । ३वरुणदेवताके त्रि० । ४शततारके न० ।

**वारुणि** पु० वरुणस्यापत्यम् इञ् । अगस्त्यमुनौ त्रिका० ।

**वारुणी** स्त्री वरुणो देवताऽस्य वरुणस्येदं वा अण् ङीप् । १पश्चिमदिशि २मदिरायाम् हेमच० । ३शतभिषातारायां । ४गण्डदूर्वायाम् ५दूर्वायां मेदि० । ६इन्द्रवारुण्यां राजनि० ७वरुणस्त्रियां ८शतभिषानक्षत्रयुक्तचैत्रकृष्णत्रयोदश्यां च स्कान्दपुराणे । "वारुणेन समायुक्ता मधौ कृष्णा त्रयोदशी । गङ्गायां यदि लभ्येत सूर्य्यग्रहशतैः समा" वारुणं शतभिषा । "शनिवारसमायुक्ता सा महावारुणी स्मृता । गङ्गायां यदि लभ्येत कोटि

विघटित त्रि० वि+घट-क्त । १वियोजिते २विशेषेण रचिते च ।
विघट्टित त्रि० वि+घट्ट-क्त । १चालिते २वियोजिते च ।
विघस पु० वि+अद-घञ् । भोजनशेषे मेदि० २आहारे च शब्दच० । ३सिक्थके न० राजनि० । ४देवपैत्रदत्तशेषे
विघसाशिन् त्रि० विघसं देवतादिदत्तावशेषमन्नादि अश-णिनि । देवपैत्रकार्य्यानन्तरं तदवशिष्टभोजिनि ।
विघात पु० वि+हन-क्त । १व्याघाते २आघाते च ।
विघातिन् त्रि० वि+हन-णिनि । १निवारके । २नाशके, ३नाशप्रतियोगिनि च "निजपादं वसुनिचितो विघाती" इति व्याकरणका० । ण्वुल् । विघातकोऽप्यत्र ।
विघ्न पु० वि+हन-क । १व्याघातके अन्तराये अमरः । २क-ण्टपाकफलायां शब्दच० । [गणेशे शब्दर० ।
विघ्ननायक पु० विघ्नानामुत्पत्त्युपशमयोः नायकः । विघ्नेशे
विघ्नकारिन् त्रि० विघ्नं करोति कृ-णिनि । १घोरदर्शने २विघ्नकर्त्तरि च मेदि० । स्त्रियां ङीप् । [ऽप्यत्र ।
विघ्ननाशक पु० ६त० गणेशे शब्दच० चतु० । विघ्ननाशनादयो-
विघ्नराज पु० विघ्ने राजते राज-अच् । गणेशे अमरः । ६त० । विघ्नेशादयोऽप्यत्र ।
विघ्नहारिन् पु० विघ्नं हरति हृ-णिनि । गणेशे त्रिका० ।
विघ्नित त्रि० विघ्नो जातोऽस्य इतच् । जातविघ्ने ।
विघ्नेशानकान्ता स्त्री ६त० । श्वेतदूर्वायाम् राजनि० ।
विच पृथक्करणे रु० उ० वा च० उभ० सक० अनिट् । विनक्ति वि-नेक्ति विङ्क्ते विविक्ते । इरित् अविचत् अवैक्षीत् ।
विचकिल पु० विच+क किल-क कर्म० । १मदनवृक्षे । २मल्लीभेदे मेदि० । [२नागदन्त्यां स्त्री राजनि० टाप् ।
विचक्षण पु० वि+चक्ष-ल्यु न ख्यादेशः । १पण्डिते अमरः
विचक्षुस् त्रि० वि+चक्ष-उसि न ख्यादेशः । १विमनस्के त्रिका० । विगतं चक्षुर्यस्य । २नेत्रशून्ये त्रि० । [चयने च ।
विचयन न० वि+चि-ल्युट् । १अन्वेषणे शब्दच० । २पुष्पादि-
विचर्चिका स्त्री वि+चर्च-ण्वुल् । पामनि रोगभेदे अमरः । सा च क्षुद्रकुष्ठविशेषः । "एकं कुष्ठं चर्म पूर्वं गजचर्म ततः स्मृतम् । ततश्चर्मदलं प्रोक्तं ततश्चापि विचर्चिका । विपादिकाभिधा चैव पामा कच्छुस्ततः परा । ततो दद्रुश्च विस्फोटः किटिभञ्च ततः परम् । ततश्चालसकं प्रोक्तं शताद्रुश्च ततः परम् । क्षुद्रकुष्ठानि चैतानि कथितानि भिषग्वरैः । सकण्डूः पिड़का श्यावा बहुस्रावा विचर्चिका पिड़का कुष्ठपिड़का । "दाल्यते त्वक् यदा रूक्षा-त्यर्थं सा विचर्चिका । पादे विपादिका ज्ञेया स्थान-भेदाद्विचर्चिका" । "वैचर्चिकाद्विपादिकां भिन्ना प्राहुः" सुश्रु० । कुष्ठशब्दे २१५४पृ० दृश्यम् ।
विचार पु० वि+चर-घञ् । १तत्त्वनिर्णये सन्दिग्धे वस्तुनि प्रमाणेन तत्त्वपरीक्षायां २तदनुगुणे वाक्यस्तोमे च । "विपरीतोद्भावकपरविजिगीषया न्यायप्रयोग इति" केचित् प्राहुः । यथा पदार्थानुमानस्थले पर्वतो वह्नि-मान् धूमवत्त्वादित्यादि । अत्र च पर्वते वह्नौ साधनीये प्रतिवादिना च पर्वतो न वह्निमानित्यादि विपरीतवाक्ये प्रयुक्ते मध्यस्थस्य संशयो जन्यते । तन्निरासार्थं वादिना पर्वतो वह्निमानित्यादिप्रतिवादिघटितवाक्यप्रयोगरूपः विचारः क्रियते इति । ४विगतचारो यस्मात् प्रा०ब० । चार-शून्ये च "विचारदृक्चारदृशप्यवर्त्तत" ।
विचारण न० वि+चर-णिच्-ल्युट् । १विचारे शब्दर० । युच् । तत्रैव स्त्री अमरः । २मीमांसाशास्त्रे हेमच० ।
विचारित त्रि० विचारो जातोऽस्य इतच् । कृतविचारे ।
विचाल त्रि० वि+चल-कर्त्तरि ण । १अन्तरे २अन्त-राले हेमच० । वि+चल-णिच् भावे अच् । ३अन्यथा स्थितस्य वस्तुनो विशेषरूपतापादने "अधिकरणविचाले च" पा० "द्रव्यस्य संख्यान्तरापादने संख्याया धा स्यात् । एकं राशिं पञ्चधा कुरु" सि०कौ० । [ङीप् ।
विचि(ची) पुंस्त्री विच-इन् । तरङ्गे भरतः । स्त्रीत्वपक्षे वा
विचिकित्सा स्त्री वि+कित स्वार्थे सन् अ । सन्देहे अमरः ।
विचित्र न० विशेषेण चित्रम् । १कर्बुरवर्णे । २तद्वति त्रि० शब्दच० ३आश्चर्ये त्रि० । ४मृगेर्वारौ स्त्री राजनि० । ५वर्णालङ्कारभेदे न० अलङ्कारशब्दे ४०२ पृ० दृश्यम् । संज्ञायां कन् । भूमिपलाशे पु० राजनि० ।
विचित्रवीर्य्य पु० शान्तनुनृपात्मजे नृपभेदे भा०आ०१०१अ० ।
विचित्राङ्ग पुंस्त्री० विचित्रमङ्गं यस्य । (चिते) १व्याघ्रभेदे शब्दच० २मयूरे पुंस्त्री० शब्दर० उभयत्र स्त्रियां ङीष् । ३आश्चर्य्यदेहे त्रि० ।
विचेतस् त्रि० विरुद्धं दुष्टं विशिष्टं वा चेतो यस्य । १दुष्ट-चित्ते २विशिष्टचित्ते च । ३दुर्मनस्के हेमच० ।
विचेष्टित त्रि० विगतं चेष्टितमस्य । १चेष्टाशून्ये, वि+चेष्ट-भावे क्त । २विशेषेण चेष्टायाम् न० ।
विच्छ दीप्तौ चु०उभ०सक०सेट् । विच्छयति ते अविविच्छत् त
विच्छ गतौ तु० पर० स्वार्थे आय, आयपक्षे भ्वा०सक० सेट् । विच्छायति विच्छायते विच्छति । अविच्छायीत् अविच्छा-यिष्ट अविच्छीत् ।

**विच्छन्दक** पु० विशिष्टः छन्दो यत्र कप्। देवगृहभेदे अमरः “उपर्युपरि बहूनि तद्विच्छन्दकसंज्ञितम्”।

**विच्छाय** न० वीनां पक्षिणां छाया नपुंसकत्वम्। पक्षिसमूहच्छायायाम् अमरः। विगता छाया यस्य। २छायारहिते त्रि० मेदि०। ३विशिष्टकान्तियुते मणौ भरतः।

**विच्छित्ति** स्त्री वि+छिद-क्तिन्। १अङ्गरागे २हारभेदे ३विच्छेदे मेदि०। ४छेदे ५विभागे ६स्त्रीणां चेष्टाभेदे च। “स्तोकाप्याकल्परचना विच्छित्तिः कान्तिपोषकृत्” सा०द०

**विच्छिन्न** त्रि० वि+छिद-क्त। १विभक्ते २समालब्धे च मेदि० ३कुटिले हेमच०। भावे-क्त। ४छेदने न०।

**विच्छेद** पु० वि+छिद-भावे घञ्। १वियोगे २कल्पान्तराच्छिन्ने ३विभागे च।

**विज** पृथग्भावे जु० उभ० सक० अनिट्। वेवेक्ति वेविक्ते इरित् अविजत् अवैक्षीत् अविक्त।

**विज** भये कम्पे च रु० पर० अक० सेट्। विनक्ति अविजीत्। ईदित् ओदित्त्व विग्नः। [ईदित् ओदित्व क्त-विग्नः।

**विज** भये कम्पे च तु० आ० अ० अनिट्। विजते अविजिष्ट।

**विजन** त्रि० विगतो जनो यस्मात् प्रा०ब०। निर्जने अमरः।

**विजनन** न० वि+जन-ल्युट्। १गर्भमोचने प्रसवे हेमच० २जनने शब्दच०।

**विजपिल** न० विज-क पिल-क कर्म०। पङ्के हलायुधः।

**विजन्मन्** त्रि० विरुद्धं जन्म यस्य। जारजे।

**विजय** पु० वि+जि-कर्त्तरि अच्। १अर्जुने मेदि०। “अभियामि संग्रामे यदहं युद्धदुर्मदान्। नाजित्वा विनिवर्त्तामि तेन मां विजयं विदुः” भा० वि० ४४अ०। २विमाने हेमच० ३यमे च। ४विष्णोरनुचरभेदे। जयशब्दे ३०५० पृ० दृश्यम्। तच्छन्दःशब्दे दर्शिते ५छन्दोभेदे ६धृतकिपुत्रभेदे मत्स्यपु० १२अ०। भावे अच्। ७जये ८परिभवपूर्वकपराक्रमे च।

**विजयकुञ्जर** पु० विजयाय कुञ्जरः। राजवाहनगजे त्रिका०।

**विजया** स्त्री १आश्विनशुक्लपक्षीयदशम्याम् २उमायाः सखीभेदे वामनपु० ४अ० “कथयतु विजया” इति मुद्राराक्षसम्। ३दुर्गायां हेमच० “विजित्य महानामानं दैत्यराजं महाबलम्। विजया तेन सा देवी लोके चैवापराजिता” देवीपु० ४५अ०। ४जयन्त्यां ५शेफालिकायां ६मञ्जिष्ठायां ७शमीभेदे, ८अग्निमन्थे राजनि०। ९भङ्गायाम् (सिद्धि) हेमच० तत्पर्य्यायगुणादि भावप्र० उक्तं यथा “भङ्गा गञ्जा मातुलानी मादिनी विजया जया। भङ्गा कफहरी तिक्ता ग्राहिणी पाचनी लघुः। तीक्ष्णोष्णा पित्तला मोहमदवाग्वह्निवर्द्धिनी” भावप्र०। अष्टद्वादशीमध्ये “यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत्। तदा सा तु महापुण्या द्वादशी विजया स्मृता” इत्युक्ते १०द्वादशीभेदे “शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो यदा भवेत्। सप्तमी विजया नाम” इत्युक्ते सप्तमीभेदे च। ११यमभार्य्यायां १२हरितक्यां जटा०। १३वचायां रत्नमा०। १४मन्त्रविद्याभेदे “विद्याप्रधैन विजयां जयाञ्च” भट्टिः।

**विजल्प** पु० “व्यक्तयाऽसूयया गूढमानमुद्रान्तरालया। अघद्विषि कटाक्षोक्तिर्विजल्पो विदुषां मतः” उज्ज्वलमण्युक्ते वाक्यभेदे।

**विजात** त्रि० विरुद्धं जातः। १जारजाते विशेषेण जाता। २जातापत्यायां स्त्रियां स्त्री हेमच०। अप्यविजन्मनि।

**विजातीय** त्रि० विभिन्नां जातिं धर्ममर्हति छ। विभिन्न-

**विजिगीषा** स्त्री विजेतुमिच्छा वि+जि-सन् भावे अ। १क्रोधादपूर्वेच्छया निन्दनीयकर्मादौ प्रवृत्तौ २तन्निन्दाऽभावे रमा० ३विजयेच्छायाञ्च। उ। विजिगीषु जयेच्छावति त्रि० शब्दच०।

**विजिगीषाविवर्जित** त्रि ३त०। औदरिके अमरः।

**विजिन(ल)** न० विज-इनच् इलच् किच्च। सरसव्यञ्जने “शाकरूपरसाचक्रे व्यञ्जने तु भवेत् लवम्। तैलपाकघसंस्कारे प्रयत्नसुपसंस्कृतम्। विजिनं कालशीकस्य विजिलं विच्छिलस्य तत्” शब्दर०।

**विजुल** पु० विज-उलच् किच्च। शाल्मलीकन्दे राजनि०।

**विजृम्भण** न० वि जृभि-ल्युट्। १विकाशे २मुखविकाशहेतुभूते वायुव्यापारभेदे (हाइतोला)। अ विजृम्भा स्त्री।

**विजृम्भित** त्रि० वि+जृभि-क्त। १विकसिते मेदि० २जृम्भायुक्ते भावे क्त। ३प्रकाशे ४चेष्टायां ५जृम्भायां च मेदि०।

**विज्जन** न० विद्-वेधनं जनयति जन-अच्। बाणे त्रिका०

**विज्जल** न० व्यध-ताड़ने क्विप् विधा जडयति जडि-अच् डस्य लः। १बाणे त्रिका०। २पिच्छिले हेमच०।

**विज्जुल** न० विज-उलच् जुट्। त्वचे (दारचिनि) राजनि०

**विज्जुलिका** स्त्री विज्जुल+संज्ञायां कन् कापि अत इत्वम्। जतुकायां राजनि०। [विज्जुले पु० राजनि०।

**विज्ञ** त्रि० विशेषेण जानाति वि+ज्ञा-क। १प्रवीणे अमरः। २प-

**विज्ञात** त्रि० वि+ज्ञा-क्त। १ख्याते अमरः। २ज्ञाते च।

**विज्ञान** न० वि+ज्ञा-ल्युट्। १ज्ञाने २कर्म्मणि मेदि० ३शि-

विद् ज्ञाने अदा० पर० सक० सेट् । वेत्ति-वेद । अवेदीत् ।

विद् पु० विद्-क्विप् । १पण्डिते अमरः २बुधग्रहे च ज्यो० ।

विद पु० विद्–क । १पण्डिते अमरः २बुधग्रहे च ज्यो० ।

विदंश पु० विदश्यतेऽनेन वि+दन्श करणे घञ् । अवदंशे (चाटनि) राजनि० ।

विदग्ध त्रि०वि+दह-क्त । १नागरे त्रिका० २निपुणे राजनि० ३पण्डिते च शब्दच० । ४नायिकाभेदे स्त्री रसमञ्जरी । परकीयाशब्दे ४२११ पृ०दृश्यम् । ५विशेषेण दग्धे त्रि० ।

विदथ पु० विद-अथच् । १योगिनि, २कृतिनि च मेदि० ।

विदर न०वि+दृ-अप् ।(फणिमनसा) वृक्षे शब्दर० । भावे अप् २विदारीकरणे पु० शब्दर० । प्रा०ब० । ३विगतभये त्रि० ।

विदर्भ पुंस्त्री० विगताः दर्भाः कुशा यतः । देशभेदे कुण्डिननगरे (वड़नागपुर) ।

विदल त्रि० विशेषेण दलति दल-पचाद्यच् च । १द्विधाभूते २दाडिमवल्कले ३वंशादिपात्रे ४स्वर्णादिरजते च न० । ५कषायादौ न० अमरभरतौ ६रक्तकाञ्चने ७पिष्टके न० शब्दच० । ८त्रिपुटि (तेवोड़ि) स्त्री राजनि० । प्रा०ब० । ९दलशून्ये त्रि० ।

विदा स्त्री विद-अङ् । १ज्ञाने २बुद्धौ च मेदि० ।

विदादि पु०अपत्यादौ "विदादिभ्योऽञ्" पा०अञ्प्रत्ययनिमित्ते शब्दगणे स च गणः पा० गणसूत्रे दृश्यः ।

विदार पु० वि+दृ-णिच भावादौ अच् । १विदारणे २जलोच्छ्वासे च मेदि० । ३युद्धे हेमच० । ४द्विधाकरणे ।

विदारक पु०वि+दृ-णिच्–ण्वुल् । १जलमध्यस्थतरुशिलादौ अमरः । २विदारणकर्त्तरि त्रि० ३शुष्कनद्यादेर्जलधारणयोग्ये गर्त्ते न० वर्द्धमानः । ४जलवल्मीके शब्दर० ।

विदारण न०वि+दृ णिच्–भावादौ ल्युट् ।१भेदने २विडम्बे च मेदि० । ३मारणे शब्दर० । ४युद्धे पुंस्त्री० मेदि० । ५कर्णिकारवृक्षे पु० शब्दच० ।

विदारिणी स्त्री वि+दृ-णिनि ङीप् । काश्मर्य्याम् राजनि० ।

विदारी स्त्री वि+दारि+कर्मणि अच् गौ० ङीष् । १शाल-पर्ण्याम् । (शालपान) मेदि० ।२भूमिकुष्माण्डे च अमरः "विदारी वातपित्तघ्नी मधुरा स्वादु रसायनी" राजव० । ३क्षुद्ररोगभेदे भावप्र० "यदाकृतोऽदं श्वयथुं सुताम्र-मनन्तरे पूतिविशीर्णमांसम् । पित्तेन विद्यात् वदने विदारीं पार्श्वे विशेषात् स तु येन शेते" स तु सुश्रुते येन पार्श्वेन विशेषात् सातत्येन शेते तस्मिन् पार्श्वे सा विदारी भवतीत्यर्थः" ।

विदारीगन्धा स्त्री विदार्य्याः भूमिकुष्माण्डस्येव गन्धो यस्याः । शालपर्ण्याम् (शालपान) अमरः ।

विदाव पु० वि+दु-अप् । १अवचयार्थे २प्रचयाथे हेमच० ।

विदाहिन् न० वि+दह-णिनि । दाहजनकद्रव्ये ।

विदित त्रि० विद-क्त । १ज्ञाते अमरः २प्रार्थिते च मेदि० ३कवौ पु० जटा० । भावे क्त । ४विज्ञातौ ५प्रतिज्ञाने शब्दच० ६ज्ञाने च । तदस्त्यस्य अच् । ७ज्ञातरि त्रि० । "विदितः समाधयत्विति" किरा० ।

विदिश् स्त्री विगता दिशौ । दिशोर्मध्ये अग्निनैरृतिवायवीशानकोणचतुष्टये अमरः ।

विदु पु० विद-कु । हस्तिकुम्भमध्यभागे अमरः ।

विदुर त्रि० विद-कुरच् । १नागरे २धीरे ३कौरवाणां जन्मनि दासीगर्भजाते धर्म्मावतारभेदे च मेदि० भा०आ० १०६ अ० । ४ज्ञातरि च अमरः ।

विदुल पु० विद-कुलच् । १वेतसे २अम्लवेतसे मेदि० ३गन्धरसे च रत्नमा० । ४क्षत्रियभेदे भा० उ० १३२ अ० ।

विदूर न० विशिष्टं दूरम् । १अतिदूरे २तत्रस्थे पदार्थे त्रि० "विदूरे केयूरे कुरु" इति सा०द० ३पर्व्व० । ३वैदूर्य्यमणिसमुद्भवस्थाने पु० "विदूरभूमिर्नवमेघशब्दात्" कुमारः ।

विदूरज न० विदूरे देशभेदे जायते जन-ड । वैदूर्य्यमणौ ।

विदूरथ पु०१द्वादशमनोः पुत्रभेदे २पौरवे नृपभेदे विष्णुपु०४अ० ।

विदूराद्रि पु० विदूरे देशेऽद्रिः पर्व्वतः । पर्व्वतभेदे । यत्र वैदूर्य्यमणिरुत्पद्यते ।

विदूषक पु० विदूषयति वि+दूष-णिच-ण्वुल् । १शृङ्गाररसस हायभेदे २परनिन्दके त्रि० मेदि० । "शृङ्गारस्य सहाया विटचेटविदूषकाद्याः स्युः । भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः । कुसुमवसन्ताद्यभिधाः कर्म्मवपुर्वेशभाषाद्यैः । हास्यकरः, कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः" सा० द० ३प० ।

विदेश ५० विभिन्नो देशः । देशान्तरे "को विदेशः सविद्यानाम्" चाणक्यः ।

विदेह पु० विगतो देहः देहसम्बन्धो यस्य । १जनकाख्ये नृपे "अयमात्मे तनो यस्य वशिष्ठशापनष्टधृतः । तं हृष्ट्वा कुपितः प्राह प्रत्याख्यातोऽसि पार्थिव! । यस्मात् तस्मात् समेवं त्वां विदेहस्त्वं भविष्यसि" वह्निपु० । तदीये २जनपदे च स च देशः मिथिलादेश इति ख्यातः । कूर्म्मविभागे दृ०सं०१४अध्या० । कूर्म्मविभागशब्दे दृश्यम् । इतश्च श्लोकम् न०व०प ३वेदेहस्त्रियाम् ४देहसम्बन्धशून्ये

स्थलस्थ तद्वारि कृत्वा विपाशं समपाहरत् । उत्ततार ततः पाशैर्विमुक्तः स महानृषिः । विपाशेति च नामास्याश्चक्रे नद्या महानृषिः" "शतद्रोर्विपाशायुजः सिन्धुः नद्याः सुवीर्णं वसु याद्दशीनयत्नम् । यत्र नियुक्तं दीपनं पापनाशं पदतौ वर्णं बुद्धिमेधायुष्यम्" राजनि०।

**विपिन** न० वप-इनन् पृषो०। वने अमरः।

**विपुल** त्रि० वि+पुल-विस्तारे क। १विस्तीर्णे अमरः। २अगाधे ३मेरुपश्चिमस्थे पर्वतभेदे पु० मेदि० ४मेरौ ५हिमालये च शब्दच०। ६आर्याछन्दोभेदे स्त्री। "संलङ्घ्य गणत्रयमादिमं शकलयोर्द्वयोर्भवति पादः। यस्यास्तां पिङ्गलनागा विपुलामिति समाख्याति" वृ०र०। विपुलाचलश्च मेरोर्विष्कम्भपर्वतभेदो यथोक्तम् विष्णु पु० "मेरोश्चतुर्दिशं तत्र नवसाहस्रविस्तृतम्। इलावृतं महाभाग! चत्वार उपपर्वताः। विष्कम्भा रचिता मेरोर्योजनायुतमुच्छ्रिताः। पूर्वेण मन्दरो नाम दक्षिणे गन्धमादनः। विपुलः पश्चिमे भागे सुपार्श्वश्चोत्तरे" तत्र चित्ररथादिकं तत्रास्ति यथा "कदम्बास्तेषु जम्बू२श्च पिप्पलो३ वट४ एव च। एकादशशतायामाः पादपा गिरिकेतवः। वनं चैत्ररथं१ पूर्वे दक्षिणा गन्धमादनम्२। वैभ्राजं३ पश्चिमे तद्वदुत्तरे नन्दनं४ स्मृतम्। अरुणोदं१ महाभद्रं२ शीतोदं३ च मानसम्४। सरांस्येव च चत्वारि देवभोग्यानि सर्वदा"। वाच्यलिङ्गत्वे दर्शितं दानार्थं कल्पितं तिलमये तत्पर्वतभेदे हेमा०दा०।

**विपुलास्रव** स्त्री विपुलं रसमास्रवति आ+स्रु-अच्। घृतकुमारीवृक्षे राजनि०।

**विपूय** पु० वि+पू-करणे नि० क्यप्। मुञ्जे शब्दचो०।

**विप्र** पु० वप-रन् पृषो० अत इत्त्वम् वि+प्रा पूर्त्तौ-क वा। १ब्राह्मणे अमरः "जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते। विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते" प्रा० वि० वाक्यम्। २अश्वत्थे राजनि० ३विशेषेण पूरके त्रि०।

**विप्रकार** पु० वि+प्र+कृ-घञ्। १अपकारे अमरः। २तिरस्कारे हेमच०। [यस्य। तूलवृक्षे राजनि०।

**विप्रकाष्ठ** न० विशेषेण प्राति प्रा-क विप्रं पूरकं काष्ठं

**विप्रकर्ष** पु० वि+प्र+कृष-घञ्। दूरत्वे हला०।

**विप्रकृत** त्रि० वि+प्र+कृ-क्त। १अपकृते, २तिरस्कृते च "त-त्येन विप्रकृताः चार्त्ते" कुमारः। [क्लेशार्थे अमरः।

**विप्रकृष्ट** त्रि० वि+प्र+कृष-क्त। दूरस्थे हला०। स्वार्थे क।

**विप्रचित्ति** पु० वि+प्र+चित-क्तिच्। दानवभेदे।

**विप्रतिपत्ति** स्त्री वि+प्रति+पद-क्तिन्। १विरोधे "परस्परं मतुलानां स्यादौ विप्रतिपत्तिषु" स्मृतिः। २संशयजनके वाक्ये "व्याहतमेकार्थदर्शनं विप्रतिपत्तिः" गौ० सू० व्याहतो विरोधोऽसहभाव इति। व्याहतः नास्तीत्येव दर्शनं नास्त्यात्मेत्यपरः" भा० भ०। ३विरुद्धकोटिद्वयोपस्थापके शब्दे च वादिना पर्वतो वह्निमान् प्रतिवादिना च पर्वतो वह्न्यभाववान् इति प्रतिपादिते मध्यस्थस्य पर्वतो वह्निमान् नवेति संशय उदेति अतस्तस्य संशयाधायकत्वात्तथात्वम्। स च विरुद्धार्थप्रतिपादकवाक्यद्वयात्मकः पर्वतो वह्निमान्नवेति संशयापादकः। "विपरीतायां निन्दितायां च ४प्रतिपत्तौ ५विज्ञतायनूहे च "शब्देऽविप्रतिपत्तिः" कात्या० श्रौ० अप्रतिपत्तिरनूहः" प्रतिनिषिद्धशब्दे ४४४९पृ० दृश्यम्। [विरोधे च।

**विप्रतिपन्न** त्रि० वि+प्रति+पद-क्त। १संदेहयुक्ते २कृत-

**विप्रति(ती)सार** पु० वि+प्रति+सृ-घञ् वा दीर्घः। १अनुतापे, अनुशये, २रोषे च मेदि०।

**विप्रयुक्त** त्रि० वि+प्र+युज-क्त। १वियुक्ते, २विरहिणि च

**विप्रयोग** पु० वि+प्र+युज-घञ्। १विप्रलम्भे अमरः २विरोधे ३विसंवादे ४वियोगे च। ५रागिणोर्विच्छेदे।

**विप्रलब्ध** त्रि० वि+प्र+लभ-क्त। वञ्चिते, हेमच० "प्रियः कृत्वाऽपि सङ्केतं यस्या नायाति सन्निधिम्। विप्रलब्धेति सा ज्ञेया" सा० द० उक्तलक्षणे नायिकाभेदे स्त्री।

**विप्रलम्भ** पु० वि+प्र+लभ-घञ् मुम् च। १विसंवादे, २वञ्चने, ३विरहे च अमरः। "यूनोरयुक्तयोर्भावो युक्तयोर्वाथ वा मिथः। अभीष्टालिङ्गनादीनामनवाप्तौ प्रहृष्यते। स विप्रलम्भो विज्ञेयः" इत्युक्तलक्षणे ४शृङ्गाररसभेदे।

**विप्रलाप** पु० वि+प्र+लप-घञ्। १विरोधोक्तौ परस्परविरुद्धार्थकथने अमरः। २अनर्थकवाक्ये हेमच०।

**विप्रलोभिन्** पु० विप्रलोभयति वि+प्र+लुभ+णिच्-णिनि। किंकिरातवृक्षे, अशोकवृक्षे। राजनि०।

**विप्रश्निका** स्त्री विशेषेण प्रश्नोऽस्त्यस्याः ठन्० अप् अत इत्त्वम्। दैवज्ञायां स्त्रियाम् अमरः। [धीनतायाम्।

**विप्रसात्** अव्य० विप्राधीनं करोति विप्र+साति। विप्रसा-

**विप्रस्व** न० ६त०। विप्रस्वामिके धने।

**विप्रिय** पु० विरुद्धं प्रियं वि+प्री-क वा। १अपराधे हेमच०। २अप्रिये च "कृतवानसि विप्रियं न मे" कुमारः प्रादि० ६त०। विगतप्रिये त्रि०।

विषारि पु॰ ६त॰। १हलकरञ्जे २महाचञ्चुशाके च राजनि॰

विषास्य पु॰ विषमास्ये यस्य। १सर्पे शब्दच॰ विषासनादयो-ऽप्यत्र। विषाक्तविषाक्तप्रभृतयः। २भल्लातके स्त्री शब्दच॰।

विषु अव्य॰ विष-कु। १साम्ये भरतः। २नानारूपे शब्दार्थचि॰

विषुव न॰ विषु दिनरात्र्योः साम्यं वाति वा-क। १अह-रात्रिसमकाले अमरः। अयनांशक्रमणे २रवेः तुला-मेषराशिसंक्रान्तिभेदे च

"मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने। विषुवती तुलामेषे गोलमध्ये तथापरा" ज्यो॰त॰। "भचक्रनाभौ विषुवद्वितयं समसूत्रगम्। अयनद्वितयं चैव चतस्रः प्रथितास्तु ताः" सू॰ सि॰। "भचक्रनाभौ भगोलस्य ध्रुवद्वयाभ्यां तुल्यान्तरेण मध्यभागे विषुवद्वितयं समसूत्रगं परस्परं व्यासत्रयान्तरितं वृत्तमध्ये विषुवद्वृत्त-स्थानात् तद्वृत्ते क्रान्तिवृत्तभागौ यौ स्तः तौ क्रमेण पूर्वापरौ विषुवत्संज्ञकौ मेषतुलाद्यौ चेत्यर्थः" रङ्ग॰। कालभेदे विषुवत्संक्रमणपर्यायभेदः अयनसंक्रान्तिशब्दे दर्शितः तत्कालस्तु ज्यो॰संमित्य कालभेदे विषुवारम्भणाद्युक्तं यथा "मेषसंक्रमणतः पूर्वं पश्चात्तरादिनान्तरे। प्राति-कोण्येन कार्ष्ण्येन विषुवारम्भणं भवेत्। तथोदयादिने चौरे चैत्रे शकाब्दिको १५२०शके। विषुवारम्भणं तत्र समं मानं दिवानिशोः। ततः प्रतिदिनं वेला चपादलिपका-त्मिका। वर्द्धते मेषविषांशपर्यन्तं श्रूयतामतः। तथा कर्कटान्तपर्यन्तं पादोनलिपकात्मिका। तारका-कादृपर्यन्तं पञ्चैकलिपिका मता। ततः कर्कटमिथांश-पर्यन्तं प्रत्यवक्रमात्। चपादपलमानेन वेला तु त्रुट्यति निश्चितम्। तावत्शाट्टान्तपर्यन्तं पादोनलि-पकात्मिका। दिवामानं दशपञ्चदण्डा रात्रेः प्रमा-णकम्। मेषादावादौ दिवामानं रात्रिमानं तुलादिषु। षट्पञ्चिमद्वरालेयं ततः स्यात् द्वादशांशके। पुनरायत् वर्द्धयेत् तत एकादशांशिके"। [विषुवत्संक्रान्तौ।

विषुवत् न॰ विषु साम्यं दिवानिशोरस्त्यस्मिन् मतुप् मस्य वः।

विषौषधी स्त्री ६त॰। नागदन्त्याम् राजनि॰।

विष्क हिंसायां चु॰ आ॰सक॰ सेट्। विष्कयते अविविष्कत दर्शने उभ॰ सेट्। विष्कयति ते अविविष्कत् त।

विष्कम्भ पु॰ वि+स्कन्भ-अच्। सप्तविंशतियोगान्तर्गतयोग-मध्ये प्रथमे १योगे ज्यो॰त॰ २विस्तारे ३प्रतिबन्धे ४रूप-कनाटकाङ्गभेदे "अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ। चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि। इत्यर्थक्षेप-काणां कथांशानां निदर्शकः। संक्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः। मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः। शुद्धः स्यात् स तु सङ्कीर्णो नीचमध्यम-कल्पितः" सा॰द॰। ५योगिनां बन्धभेदे मेदि॰ ६वृक्षे शब्दच॰ ७अर्गले अमरः। ८कीलकादौ च भरतः। ९पर्वतभेदे त्रिकूटशब्दे दृश्यम्।

विष्कल पुंस्त्री॰ विषं विष्ठां कलयति कल-अच् पृषो॰। ग्रामशूकरे राजनि॰ स्त्रियां ङीष्।

विष्किर पुंस्त्री॰ विकिरति वि+कॄ-क सुट् च। १विहगे अमरः स्त्रियां ङीष्। २विहगभेदे भावप्र॰ "वर्त्त-कालाववर्त्तिकतित्तिरकपिञ्जलकतित्तिराः। कुलिङ्गकुक्कुटा-द्याश्च विष्किराः समुदाहृताः। विकीर्य भक्षयन्त्येते यस्मात्तस्माद्धि विष्किराः। कपिञ्जल इति प्रोक्तः कपितो गौरतित्तिरः"। कुलिङ्गः (चटक) इति लोके। "वि-ष्किरा मधुराः शीताः कषायाः कटुपाकिनः। बल्या वृष्यास्त्रिदोषघ्नाः पथ्यास्ते लघवः स्मृताः"।

विष्टप न॰ विश-कपन् तुट् च। भुवने अमरः।

विष्टब्ध त्रि॰ वि+स्तन्भ-क्त। प्रतिरुद्धे अमरः

विष्टम्भ पु॰ वि+स्तन्भ-घञ्। १प्रतिबन्धे २आनाहे रोग-भेदे च आनाहशब्दे ७२८ पृ॰ दृश्यम्। [जगते च।

विष्टम्भिन् त्रि॰वि+स्तन्भ-णिनि। १प्रतिबन्धके २रोगविशेष-

विष्टर पु॰ वि+स्तॄ-अप् षत्वम्। "वृक्षासनयोः अर्थद्वयमञ्चा सम्वेशयस्तु विष्टरः" इति "धात्वावर्त्तस्तु विष्टर" इति च वामनेन दर्शनात् १आसनभेदे २आसनमात्रे ३वृक्षे ४कुशमुष्टौ च अमरः। [विष्णौ अमरः।

विष्टरश्रवस् पु॰ विष्टरः कुशमुष्टिरिव श्रवसी कर्णौ यस्य।

विष्टरुहा स्त्री विष्टा भूमौ प्रविष्टा सती रोहति रुह-क। शर्वरीतलायां राजनि॰। [शब्दे २९२८ पृ॰ दृश्यम्।

विष्टार पु॰ वि+स्तॄ-घञ् षत्वम्। पङ्क्तिच्छन्दोभेदे छन्दः-

विष्टि स्त्री विष-क्तिन् क्तिच् वा। वेतनं विना भारादिव-हनरूपे १कर्मणि अमरः। २वेतने ३कर्मणि ४प्रेषणे ५तिर्यग्गतिकरणमध्ये सप्तमे करणे विष्टिः। भद्राशब्दे ४६२७पृ॰ दृश्यम्। ६प्रेषणे हेमच॰। ७कर्मकरे अमरः ८वेतनं विना कर्मकरे च त्रि॰ मेदि॰।

विष्ठल न॰ विप्रकृष्टं स्थलम् प्रा॰स॰ षत्वम्। दूरस्थाने त्रि॰ शौ॰

विष्ठा स्त्री विविधं तिष्ठति स्था-क षत्वम्। १उदरे शब्दमाला २पुरीषे अमरः।

विष्णु पुं॰ विष-व्यापने नुक्। १व्यापके परमेश्वरे अमरः

मात्रहेतोः मद्यमद्यपानाद्यदनमध्याद्यानन्तुहेतोः । स्मा-
नमोचितं वस्त्रवर्षरत्नम् । उपद्रवानाह "ज्वरातिसारौ
वमथुस्त्वङ्मांसदरणक्लमाः । अरोचकविपाकौ च विसर्प-
स्योपद्रवाः" । माधवनिदानमाह "विसर्पन्ति वातकफ-
पित्तजाता विसर्पाः सर्वात्मकः क्षतजश्च न सिद्धिमेति ।
पित्तात्मकोऽच्छनवपुश्च भवेद्याध्यः कृच्छ्राश्च मर्मसु भवन्ति
हि सर्व एव" ।

**विसर्पण** न० वि+सृप-ल्युट् । प्रसारे अमरः ।

**विसल** न०विस-कलच् । पल्लवे त्रिका० [मरः स्त्रियां ङीप् ।

**विसार** पुंस्त्री० विसरति सर्पति वि+सृ-ण । मत्स्ये अ-

**विसारिन्** त्रि० वि+सृ-णिनि । १प्रसरणशीले २मत्स्ये
पु० ३मापपर्ण्यां स्त्री राजनि० ङीप् ।

**बिसिनी** स्त्री बिसानां समूहः तद्युक्तो देशो वा इनि ।
१पद्मसमूहे २पद्मलतायाम् ३पद्माकरे राजनि० ।

**विसूचिका** स्त्री विसिता सूचीव दुःखं यत्र । रोगभेदे
तल्लक्षणं निरुक्तिश्च यथा "सूचीभिरिव गात्राणि तुदन् सन्ति-
ष्ठतेऽनिलः । यस्याजीर्णेन सा वैद्यैर्विसूचीति निगद्यते ।
तस्य निदानमाह "न तां परिमिताहारा लभन्ते वि-
दितागमाः । मूढास्तामजितात्मानो लभन्तेऽशनलोलुपाः ।
विदितागमाः ज्ञातायुर्वेदाः । तल्लक्षणमाह "मूर्च्छा-
तिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः ।
वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति तस्यां शिरसश्च
भेदः" । उद्वेष्टनं हस्तपादयोः, शिरसोभेदः शिरः-
शूलम् । तस्या उपद्रवानाह "निद्रानाशोऽरतिः कम्पो
मूत्राघातो विसंज्ञता । अमी उपद्रवा घोरा विसूच्याः
पञ्च दारुणाः । अमी उपद्रवा घोराः अमी निद्रानाशा-
दय उपद्रवाः सर्वेषामेव रोगाणां घोराः भयङ्कराः ।
विसूच्याः पञ्च दारुणाः विसूच्यास्तु पञ्चापि यदि स्युस्तदा
दारुणाः प्राणभयङ्कराः । तस्या अरिष्टमाह "यः
श्यावदन्तौष्ठनखोऽल्पसंज्ञश्छर्द्यर्दितोऽभ्यन्तरयातनेत्रः ।
क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरः सोऽपुनरागमाय" ।
सर्वविमुक्तसन्धिः सर्वे विमुक्ताः शिथिलीभूताः सन्धयो
यस्य सः" भावप्र० ।

**विसृत** त्रि०वि+सृ-क्त । विस्तीर्णे अमरः । [स्त्रियां ङीप् ।

**विसृत्वर** त्रि० वि+सृ-क्वरप् । प्रसरणशीले अमरः ।

**विसृमर** त्रि० वि+सृ-क्मरच् । विसरणशीले अमरः ।

**विसृष्ट** त्रि० वि+सृज-क्त । १प्रेरिते "रजसे विसृष्टः" इति
रघुः । २विक्षिप्ते जटा० ३त्यक्ते च ।

**विस्त** पुं०न० विस-उत्सर्गे क्त नि० न इट् । १कर्षमाने २सु-
वर्णादिरक्तिकापरिमाणे च अमरः ।

**विस्तर** पु० वि+स्तॄ-अप् । १शब्दसमूहे अमरः । २वाक्यसमूहे
३विस्तारे ४प्रणये ५समूहे च । आधारे अप् । ६पीठे
शब्दरत्ना० ।

**विस्तार** पु० वि+स्तॄ-संज्ञायां कर्त्तरि घञ् । १विटपे भावे
घञ् । २विस्तीर्णतायाम् तथावयवाख्यो ३पदसमूहे च
अमरः । ४स्तम्बे मेदि० ।

**विस्तीर्ण** त्रि०वि+स्तॄ-क्त । १विपुले २विस्तारयुक्ते ३विशाले
च जटा० । [शब्दच० ।

**विस्तीर्णपर्ण** न० विस्तीर्णानि पर्णान्यस्य । माणके कन्दभेदे

**विस्तृत** त्रि० वि+स्तृ-क्त । विस्तारयुक्ते ।

**विस्फुलिङ्ग** पु० विस्फुरति वि+स्फुर-ड तादृशं लिङ्ग-
मस्य । १वह्निकणे २विषभेदे च हेमच० ।

**विस्फोट** पु० विस्फोटयति वि+स्फुट-णिच्-अच् । (विस-
फोड़ा) व्रणभेदे स्वार्थे क । स्फोटकभेदे "विस्फोटकभवा-
पहा" शीतलास्तोत्रम् । तद्रोगनिदानादि भावप्र० उक्तं
यथा "तत्र विस्फोटस्य विप्रकृष्टं निदानपूर्विकां संप्राप्तिमाह
"कट्वम्लतीक्ष्णोष्णविदाहिरूक्षक्षारैरजीर्णाध्यशनातपैश्च ।
तथर्त्तुदोषेण विपर्ययेण कुप्यन्ति दोषाः पवनादयस्तु ।
त्वचमाश्रित्य ते रक्तं मांसास्थीनि प्रदूष्य च । घोरान्
कुर्वन्ति विस्फोटान् सर्वान् ज्वरपुरःसरान्" । ऋतुदोषेण
ऋतुहेतुकशीतोष्णादीनामतियोगेन । विपर्ययेण ऋतु-
चिताहारविहारवैपरीत्येन । त्वचमाश्रित्य त्वचि विस्फो-
टान् कुर्वन्तीत्यर्थः । ज्वरपुरःसरान् ज्वरपूर्वान् । पूर्व-
रूपमाह "अग्निदग्धा इव स्फोटाः सज्वरा रक्तपित्तजाः ।
क्वचित् सर्वत्र वा देहे विस्फोटा इति ते स्मृताः" ।
रक्तपित्तजाः इतेन सर्वेषु विस्फोटकेषु रक्तपित्तयोः प्र-
धानकारणत्वम् तथा मुखेन वातस्य, तथा वातानुगति-
रपि बोद्धव्या । तथा च भोजः "यदा रक्तञ्च पित्तञ्च
वातेनानुगतं त्वचि । अग्निदग्धनिभान् स्फोटान् कुरुतः
सर्वदेहगान्" । अथ वातिकमाह "शिरोरुक्शूलभूयिष्ठं
ज्वरतृट्पर्वभेदनम् । सकृष्णवर्णता चेति वातविस्फोट-
लक्षणम्" । शूलं तोदरूपम् । अथ पैत्तिकमाह "ज्वर-
दाहरुजापाकस्रावतृष्णासमन्वितम् । पीतलोहितवर्णञ्च
पित्तविस्फोटलक्षणम्" । श्लैष्मिकमाह "छर्द्यरोचकजा-
ड्यानि कण्डूकाठिन्यपाण्डुताः । अवेदनश्चिरात्
पाकः स विस्फोटः कफात्मकः । वातश्लेष्मजमाह-

नात्। कफवैसर्पिकमाह "कण्डूशोफो ज्वरस्तृड्भ्रमैरेव कफवैसर्पिकः"। अथ वातपित्तजमाह "वातपित्तकृतोयस्तु तत्र स्यात्तीव्रवेदना"। वातश्लैष्मिकमाह "कण्डूसैमिन्यगुरुमभिजानीयात् कफवातिकम्"। सान्निपातिकमाह "मध्ये निम्नोन्नतान्तश्च कठिनः अल्पपाकवान्। दाहरागतृष्णामोहच्छर्दिमूर्च्छारुजाज्वराः। प्रलापो वेपथुर्मूर्च्छा सोऽसाध्यश्च त्रिदोषजः"। मोहो विपरीतं ज्ञानम् मूर्च्छा सर्वथा ज्ञानशून्यता। रक्तजमाह "वेदितव्यश्च रक्तेन पैत्तिकेन च हेतुना। गुञ्जाफलसमा रक्ता रक्तस्रावा विदाहिनः। न ते सिद्धिं समायान्ति सिद्धैर्योगशतैरपि"। पैत्तिकेन हेतुना पित्तस्य हेतुना कट्वादिनारक्तपित्तस्य तुल्यत्वात् सिद्धैर्योगैरपि ते सिद्धिं न च यान्ति। विस्फोटकभेदानाह "एते चाष्टविधा बाह्या आन्तरोऽपि भवेदयम्। तस्मिन्नन्तश्च तीव्रा ज्वरतृष्णाभिजायते। यस्मिन् बहिर्गते स्वास्थ्यं न चान्तश्च बहिर्गतिः। तत्र वातिकविस्फोटक्रिया कार्या विजानता" उपद्रवानाह "हृल्लासश्चारुचिश्चैव दाहो हिक्का मदज्वराः। विसर्पमर्मसंरोधास्तेषामुक्ता उपद्रवाः"। मांससङ्कोचः मांसस्य शटितम्। मर्मसंरोधो मर्मव्यथा। तेषां विस्फोटानां केचिदुपद्रवाणां स्थानान्तरे पठन्ति "हिक्काश्वासोऽरुचिस्तृष्णा चाङ्गमर्दो हृदिव्यथा। विसर्पज्वरहृल्लासाः विस्फोटानामुपद्रवाः"। साध्यत्वादिकमाह "एकदोषोत्थितः साध्यः कृच्छ्रसाध्यो द्विदोषजः। सर्वरूपान्वितो घोरो ह्यसाध्यो भूर्युपद्रवः"। २वृक्षभेदे "स्फोटाः स्याद्वाहजाभाता विस्फोटास्तु तदुत्थाः" भावप्र०।

विस्मय पु० वि+स्मि–अच्। १आश्चर्ये अमरः। २अद्भुतस्याभिभावके रसभेदे सा०द०। "विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु। विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः" सा०द०। ३दर्पे मेदि०४सन्देहे शब्दर० [अमरः।

विस्मयान्वित त्रि० ३त०। १विस्मययुक्ते २आश्चर्ययुक्ते च

विस्मापन पु० वि+स्मि–णिच्-ल्यु-आत् वा पुक् च स्मृ। १कुहके २कामदेवे च। ३गन्धर्वपुरे न० मेदि०। भावे विस्मापनमप्यत्र।

विस्मित पु० वि+स्मि–क्त। विस्मययुक्ते।

विस्मृत त्रि० वि+स्मृ–क्त। स्मरणाविषये अमरः।

विस्मृति स्त्री वि+स्मृ–क्तिन्। स्मरणाभावे।

विस्र न० विस–रक्। आमगन्धौ १चिताधूमादौ २अपक्वमांसगन्धे भरतः। ३आमगन्धे च

विस्रंस पु० वि+स्रन्स–भावे–घञ्। १पतने २ध्वंसे च।

विस्रगन्धा स्त्री विस्रो गन्धोऽस्याः। हपुषायाम् राजनि०।

विस्रगन्धि पु० विस्रस्येव गन्धोऽस्य इत्समा०। हरिताले हेमच०। [च अमरः।

विस्रम्भ पु० वि+स्रम्भ–घञ्। १विश्वासे २प्रणये ३परिचये

विस्रम्भिन् त्रि० वि+स्रम्भ–णिनि। १विश्वासयुक्ते २प्रणयिनि च।

विस्रसा स्त्री वि+स्रन्स–क। जरायाम् अमरः। [जनि०।

विस्रा स्त्री विस्रआमगन्धोऽस्त्यस्याः अच्। हपुषायाम् रा-

विहग पुंस्त्री० विहायसा गच्छति गम–ड नि०। १पक्षिणि अमरः स्त्रियां ङीप्। २बाणे ३सूर्य्ये ४चन्द्रे ५मेघे च पु० शब्दरत्ना०। ६सूर्य्यादिग्रहे पु० धरणिः।

विहङ्गम पुंस्त्री०विहायसा गच्छति गम–खच् नि०। पक्षिणि अमरः स्त्रियां ङीप्। २भारयष्टौ स्त्री (वाँक) शब्दच०।

विहङ्गराज पु० ६त०-टच् समा०। गरुडे हला० "विहङ्गराजाङ्कधरैरिवायतैः" माघः। [२हिंसायाञ्च मेदि०।

विहनन न०विहन्यते वि+हन–ल्युट्। १तूलविक्षेपे २विघ्ने

विहर पु०वि+हृ–अच्। विहारे ल्युट्। विहरण तत्रैव न०।

विहसित न० वि+हस–क्त। मध्यमहास्ये अमरः।

विहस्त त्रि० विगतो हस्तो हस्तावलम्बनं यस्य। १व्याकुले अमरः। २पण्डिते मेदि० ३षण्ढे च पुं शब्दच०। प्रा० ६ब०। ४हस्तशून्ये त्रि०।

विहा अव्य० वि+हा–आ। स्वर्गे सि०कौ०।

विहापित न० वि+हा–णिच्-क्त। दाने अमरः।

विहायस् पु०न० वि+हा–असुन् नि० युक्। १आकाशे २पक्षिणि पु० अमरः। स्वार्थे अण्। विहायसमप्याकाशे न० खगे पु०। आदन्तमव्ययम् आकाशे हेमच०।

विहार पु० वि+हृ–घञ्। क्रीडार्थं पादाभ्यां १गमने अमरः २भ्रमणे ३स्कन्धे ४लीलायां ५बौद्धदेवालये मेदि० ६वैजन्ते च शब्दमा० ७बिन्दुरेखकखगे पुंस्त्री०शब्दच०।

विहित त्रि० वि+धा–क्त। १कृते विधिना २बोधिते च।

विहीन त्रि० वि+हा–क्त। १त्यक्ते २वर्जिते च।

विहृत न० वि+हृ–भावे क्त। १विहारे २स्त्रीणां चेष्टाभेदे हेमचन्द्रे "लीलाविलासो विच्छित्तिर्विव्वोकः किलकिञ्चितम्। मोट्टायितं कुट्टमितं ललितं विहृतं तथा। विभ्रमश्चेत्यलङ्काराः स्त्रीणां स्वाभाविका दश" विहृतमित्यत्र पाठः" सा०द० स्त्रीणां सात्त्विकस्वाभाविकालङ्कारमध्ये विकृतमित्येव पठितम्। "वक्तव्यकालेऽप्य-

कान्ता मतिः" । "केचित् प्रक्रान्तवाक्यस्य साकाङ्क्षस्यैव निर्वर्तिताङ्केविरित्याहुः" । अन्ये च "अनेकस्य प्रश्नस्यैकमुत्तरम्" । "अन्योन्यवाक्याधिक्योक्तिः स्पर्धयाधिबलं मतम्" । यथा मम प्रभावत्यां वज्रनाभः "अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया । लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः" । प्रद्युम्नः । अरेरे असुराधम ! अलममुना वृथावाग्व्ययेन मम खलु "अद्य प्रचण्डभुजदण्डसमर्पितोरुकोदण्डनिर्गलितकाण्डसमूहपातैः । आस्तां समस्तदितिजक्षतकोऽस्रनेतं लोहितैः क्षणेन पिशिताशनतोषणीया" । "गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः" । यथा वेण्यां "राजा" अध्यासितं तव चिराज्जघनस्थलस्य पर्याप्तमेव करभोरु ! ममोरुयुग्मम्" । अनन्तरं प्रविश्य कञ्चुकी । "देव भग्नं भग्नमित्यादि" । अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम् । "व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत्" । यथा छलितरामे सीता । जाद काल्लं क्खु तुह्मेहिं अओज्झाए गन्तव्वं तहिं सो राआ विणएण पणमिदव्वो । लवः । अम्ब किमावाभ्यां राजोपजीविभ्यां भवितव्यं । सीता । जाद सो क्खु तुह्माणं पिदा । लवः । किमावयोः रघुपतिः पिता । सीता । साशङ्कं मा अण्णहा संकध । ण क्खु तुह्माणं सअलाए ज्जेव पुहवीए त्ति" । "प्रहेलिकैव हास्येन युक्ता भवति नालिका" । संवरणकार्युत्तरं प्रहेलिका । यथा रत्नावल्यां "सुसङ्गता "सहि जस्स कदे तुमं । सं चित्तफलअस्स" । अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृतः । "असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम् । अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः" । तत्राद्यं यथा मम प्रभावत्याम् प्रद्युम्नः "सहकारवल्लीमवलोक्य सानन्दम्" अहो या समपिहैव । "अलिकुलमञ्जुलकेशी परिमलबहुला रसावहा तन्वी । किसलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे" । एवमस्मत्तरेऽपि । तृतीयं यथा वेण्यां दुर्योधनं प्रति गान्धारीवाक्यम् । "व्याहारो यत्परस्यार्थे हास्यक्षोभकरं वचः" । यथा मालविकाग्निमित्रे । लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति । "विदूषकः । मा दाव उवदेससुद्धा गमिस्ससि इत्युपक्रमे गणदासः । विदूषकं प्रति आर्य ! उच्यतां यस्त्वया क्रमभेदो लक्षितः । विदूषकः । पढमं बम्हणपूआ भोदि सा इमाए लङ्घिदा । मालविका "स्मयते" (तत्र इति पाठान्तरम्) इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हास्यक्षोभकारिणा वचसा व्याहारः । "दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्" । क्रमेण यथा "प्रियजीवितता क्रौर्यं निःस्नेहत्वं कृतघ्नता । भूयस्तद्दर्शनादेव ममैते गुणतां गताः । तस्यास्तद्रूपसौन्दर्यं भूषितं यौवनश्रिया । सुखैकतायनं जातं दुःखायैव ममाधुना" । इति वीथ्यङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि । विस्पष्टतया नाटकादिषु निर्दिष्टान्यपीहोदाहृतानि नानारसानामत्र मालारूपतया स्थितत्वाद्वीथीयम्" सा० द० ६प० ।

वीथ्यङ्ग पु० वीथ्या इवाङ्गमस्य । १दृश्यकाव्यभेदे । ६त० । २तदङ्गे वीथिशब्दे दृश्यम् । [संक्षिप्तसा० ।

वीध्र त्रि० वि-इन्ध-रक् । १निर्मले २नभसि ३वायौ ४अग्नौ

वीनाह पु० वि-नह घञ् दीर्घः । कूपादिमुखबन्धनसाधने (पाट) ख्याते पदार्थे अमरः ।

वीप्सा स्त्री वि+आप-सन्-अच इत्-अ अभ्यासलोपश्च । व्याप्तौ

वीव गत्यर्थं अद०चु०आत्म० अक०सेट् । वीवयते अविवीवत ।

वीभ गौर्यं चेलके श्लाघने विकत्थने च भ्वा०आत्म०सेट् । ऋदित् चङि न ह्रस्वः । वीभते अवीभिष्ट ।

वीर न० वीर-अच् । १शृङ्ग्यां २नडे मेदि० ३मरिचे ४पद्ममूले ५काञ्जिके ६उशीरे ७आरुके राजनि० । ८शौर्यविशिष्टे शूरे त्रि० अमरः । ९जिने १०नटे पु० हेमच० । ११विष्णौ पु० विष्णुस० । तन्त्रोक्ते १२कुलाचाररते त्रि० कुलाचारशब्दे पु० दृश्यम् । १३तण्डुलीये १४वराहकन्दे १५लताकरञ्जे १६करवीरे १७अर्जुने पु० राजनि० १८यज्ञाग्नौ भरतः धीरवा । १९उत्तरे २०सुभटे च मेदि० । २१एके त्रि० हेमच० । २२पत्यौ २३पुत्रे च "अवीरा निष्पतिसुता" अमरः । २४रसभेदे "उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः । महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः । आलम्बनविभावास्तु विजेतव्यादयो मताः । विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः । अनुभावास्तु तत्र स्युः सहायान्वेषणादयः । सञ्चारिणस्तु धृतिमतिगर्वस्मृतितर्करोमाञ्चाः । स च दानधर्मयुद्धैर्दयया च समन्वितश्चतुर्धा स्यात्" । स च वीरः । दानवीरो धर्मवीरो दयावीरो युद्धवीरश्चेति चतुर्विधः" सा०द०३प० ।

वीरक पु० वीर+स्वार्थे कन् । करवीरे राजनि० ।

वीरण न० वि+ईर-ल्यु । उशीर (वेणारमूल) शब्दच० ।

“पश्यमल्यं भतिस्तुष्टा स्नेहात् प्रत्युपकारतः। स्त्री-
शुश्रूषानुग्रहार्थं च दत्तं दानविदो विदुः। अदत्तन्तु भय-
क्रोधशोकवेगरुजान्वितैः। तथोत्कोचपरीहासव्यत्यास-
च्छलयोगतः। बालमूढास्वतन्त्रार्त्तमत्तोन्मत्तापवर्जितम्।
कर्त्ता ममेदं कर्मेति प्रतिलाभेच्छया च यत्। अपात्रे
पात्रमित्युक्ते कार्ये वा धर्मसंहिते। यद्दत्तं स्यादवि-
ज्ञानाददत्तमिति तत् स्मृतम्” मिता॰ धृतनारदवाक्यम्।

**वृथामांस** न॰ वृथाभूतं मांसम् शाक॰। देवाद्युद्देशेन हतपशूनां मांसे।

**वृद्ध** न॰ वृध—क्त। १शैलजनामगन्धद्रव्ये अमरः। २वृद्धदारके वृक्षे पु॰ राजनि॰। ३वृद्धियुक्ते त्रि॰ ४गतयौवने वृद्धावस्थायुक्ते। बाल्यादिवयःकालभेदश्च भावप्र॰ उक्तो यथा “बाल्यादेरवधिमाह सुश्रुतः “वयस्तु त्रिविधं बाल्यं मध्यमं वार्द्धकं तथा। ऊनषोड़शवर्षस्तु नरो बालो निगद्यते। त्रिविधः सोऽपि दुग्धाशी दुग्धान्नाशी तथान्नभुक्। दुग्धाशी वर्षपर्यन्तं दुग्धान्नाशी शरद्द्वयम्। तदुत्तरं स्यादन्नाशी एवं बालस्त्रिधा मतः। मध्यो षोड़शसप्तत्योर्मध्यमः कथितो बुधैः। चतुर्धा मध्यमं प्राहुर्वा द्वात्रिंशतो मतः। चत्वारिंशत् समा यावत्तिष्ठेद्वीर्यादिपूरितः। ततः क्रमेण क्षीणः स्याद् यावद् भवति सप्ततिः”। वीर्यादीत्यादिशब्देन रसादिसर्वधात्विन्द्रियबलोत्साहा उच्यन्ते। क्षीणः सर्वधात्विन्द्रियबलोत्साहैर्हीनः “ततस्तु सप्ततेरूर्द्ध्वं क्षीणधातुरसादिकः। क्षीयमाणेन्द्रियबलः क्षीणरेता दिने दिने। वलीपलितखालित्ययुक्तः सर्वेषु कामसः। कासश्वासादिभिः क्लिष्टो वृद्धो भवति मानवः। बाल्ये विवर्द्धते श्लेष्मा पित्तं स्यान्मध्यमेऽधिकम्। वार्द्धक्ये वर्द्धते वायुर्विचार्यैतदुपक्रमेत्”। उपक्रमेत् चिकित्सेत्। तन्त्रान्तरे तु “बाल्यं वृद्धिश्छविर्मेधा त्वग्दृष्टिः शुक्रविक्रमौ। बुद्धिः कर्मेन्द्रियं चेतो जीवितं दशतो ह्रसेत्”। ५पण्डिते पु॰ मेदि॰।

**वृद्धकाक** पु॰ कर्म॰। द्रोणकाके हेमच॰।

**वृद्धगङ्गा** स्त्री कर्म॰। नदीभेदे “अस्ति नाटकशैले तु सरोमानसवच्छिवम्। तत्र सार्द्धं मेघपुत्र्या कामक्रीड़ां सदा हरः। कुरुते नरशार्दूल! स्वर्णपङ्कजशोभिते। तस्य पश्चान्मध्यपूर्वभागेभ्यश्च सरित्त्रयम्। अस्तीर्य प्रयातैव दक्षिणं सागरं प्रति। तत्र पश्चिमभागे तु नदी दिक्करिकाह्वया। दिग्गजाः सेकसंजाताः तेन दिक्करिका कृता। मध्यभागात् स्रुता या तु शङ्करेणावतारिता। वृद्धगङ्गाह्वया सा तु गङ्गेव फलदायिनी। या निःसृता पूर्वभागात् तस्माच्छिखरिराट् नदी। स्वर्णपोतेति विख्याता सा गङ्गासदृशी फले” कालिकापु॰ ८२अ॰।

**वृद्धदारक** पु॰ वृद्धं दारयति दृ—णिच्-ण्वुल्। वीरताड़वृक्षे अमर॰। वृद्धदार तत्रार्थे राजवल्लभः। “रसायनो वृद्धदारः शोथवातामवातजित्”।

**वृद्धदारु** न॰ वृद्धं दारयति दृ—णिच्-उण्। वृद्धदारकवृक्षे राजनि॰ “वृद्धदारुद्वयं तिक्तं पिच्छिलं कफवातनुत्। बल्यं कासामदोषघ्नं द्वितीयं रसवीर्यदम्” राजनि॰ [मरः।

**वृद्धनाभि** त्रि॰ वृद्धा नाभिरस्य। (गाँड़) वृद्धनाभियुक्ते

**वृद्धप्रपितामह** पु॰ वृद्धः प्रपितामहात् राज॰। प्रपितामहजनके। [महस्य पितरि।

**वृद्धप्रमातामह** पु॰ वृद्धः प्रमातामहात् राज॰। प्रमाता-

**वृद्धबला** स्त्री वृद्धं बलं यस्याः ब॰व॰। महासमङ्गायाम् राजनि॰। तस्यावलवृद्धिकरत्वात्तथात्वम्।

**वृद्धविभीतक** पु॰ वृद्धः विभीतक इव। आम्रातके शब्दचा॰

**वृद्धश्रवस्** पु॰ वृद्धेभ्यः शृणोति श्रु—असुन्, वृद्धेषु श्रवो यशो यस्येति वा। इन्द्रे अमरः। [कारात्।

**वृद्धसूत्रक** न॰ कर्म॰ संज्ञायां कन्। इन्द्रतूले (बुड़िरसूता)

**वृद्धा** स्त्री वृध—क्त। १गतयौवनायां स्त्रियाम्। २अङ्गुष्ठे शब्दच॰। ३महाश्रावणिकायां राजनि॰।

स्त्रीणां वयःकालविभागो यथा

“आषोड़शाद्भवेद्बाला तरुणी त्रिंशता मता। पञ्चपञ्चाशतः प्रौढ़ा वृद्धा भवति तत्परम्” इति काशिदासः। “बालेति गीयते नारी यावद्वर्षाणि षोडश। ततस्तु तरुणी ज्ञेया द्वात्रिंशद्वत्सरावधि। तदूर्द्ध्वमधिरूढा स्यात् पञ्चाशद्वत्सरावधि। वृद्धा तत्परतो ज्ञेया सुरतोत्सववर्जिता” भावप्र॰। तस्याः सम्भोगे दोषो यथा “बाला तु प्राणदा प्रोक्ता युवती प्राणहारिणी। प्रौढ़ा करोति वृद्धत्वं वृद्धा मरणमादिशेत्। निदाघशरदोर्बाला प्रौढ़ा वर्षवसन्तयोः। हेमन्ते शिशिरे योग्या न वृद्धा क्वापि शस्यते। नार्यास्तु षोडशादर्वाक् सप्तत्याः परतो न च। आयुष्कामो नरः स्त्रीभिः संयोगं कर्त्तुमर्हति। पञ्चपञ्चाशतो नारी सप्तसप्ततिकः पुमान्। द्वावेतौ न प्रसूयेते प्रसूयेते विपर्ययात्” राजवल्लभः। “शुष्कं मांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि। प्रभाते

वैदूर्यमुत्पन्नमनेकवर्णं शोभाभिरामं द्युतिवर्णबीजम्। अविदूरे विदूरस्य गिरेरुत्तुङ्गरोधसः। कामभूतिकसीमानमनु तस्याकरोऽभवत्। तस्य नादसमुत्थत्वादाकरः सुमहागुणः। आभूदुत्तरितो लोके लोकत्रयविभूषणः। तस्यैव दानवपतेर्निनदानुरूपप्रावृट्पयोदरवदर्शितचारुरूपाः। वैदूर्यरत्नमणयो विविधावभासास्तस्मात् स्फुलिङ्गनिवहा इव संबभूवुः। पद्मरागमुपादाय मणिवर्णा हि ये स्थिताः। सर्वांस्तान् वर्णशोभाभिर्वैदूर्यमनुगच्छति। तेषां प्रधानं शिखिकण्ठनीलं यद्वा भवेद्वेणुदलप्रकाशम्। चाषाग्रपत्रप्रतिमश्रियो ये न ते प्रशस्ता मणिशास्त्रविद्भिः। गुणवान् वैदूर्यमणिर्योजयति स्वामिनं वरभाग्यैः। दोषैर्युक्तो दोषैस्तस्माद् यत्नात् परीक्षेत। गिरिकाचशिशुपालौ काचस्फटिकाश्च भूमिनिर्भिन्नाः। वैदूर्यमणेरेते विजातयः सन्निभाः सन्ति। लिखाभावात् काचं लघुभावाच्छिशुपालकं विद्यात्। गिरिकाचमदीप्तित्वात् स्फाटिकं वर्णोज्ज्वलत्वेन। यदिन्द्रनीलस्य महागुणस्य सुवर्णसंख्याकलितस्य मूल्यम्। तदेव वैदूर्यमणेः प्रदिष्टं पलद्वयोन्मापितगौरवस्य। जात्यस्य सर्वेऽपि मणेस्तु यादृक् विजातयः सन्ति समानवर्णाः। तथापि नानाकरणानुमेयभेदप्रकारः परमः प्रदिष्टः। स्नेहोपचारस्य सदा विचार्यो ह्ययं प्रभेदो विदुषा नरेण। स्नेहप्रभेदो लघुता मृदुत्वं विजातिलिङ्गं खलु सार्वजन्यम्। कृमनाकृमणैः स्पृश्यमानाः प्रतिबद्धाः प्रतिघातक्रिया प्रयोगैः। गुणदोषसमुद्भवं लभन्ते मणयोऽर्थान्तरमूल्यमेव भिन्नाः। क्रमशः समतीतवर्णमानाः प्रतिबद्धा मणिबन्धतेन यस्मात्। यदि नाम भवन्ति दोषहीना मणयः षड्गुणमाप्नुवन्ति मूल्यम्। आकरान् समतीतानामुदधेस्तीरसन्निधौ। मूल्यमेतत् समीनाम्नु न सर्वत्र महीतले। सुवर्णो मनुना यस्तु प्रोक्तः षोड़शमाषकः। तस्य सप्ततिमो भागः संज्ञारूपं करिष्यति। माषकचतुर्थभागो मापकः पञ्चकृष्णलः। पञ्चस्य दशमो भागो धरणः परिकीर्त्तितः। इति मानविधिः प्रोक्तो रत्नानां मूल्यनिर्णये"। गारुड़े ७१ अ०। "सितधूम्रच्छायमीषत्कृष्णच्छवि भवेत्। वैदूर्यनाम तद्रत्नं रत्नविद्भिरुदाहृतम्। ब्राह्मणक्षत्रियविट्शूद्रजातिभेदाच्चतुर्विधाः। सितनीलो भवेद्विप्रः सितरक्तस्तु बाहुजः। पीतनीलस्तु वैश्यः स्यात् नील एव हि शूद्रकः"। अथ गुणाः "स्वच्छोरत्नवनप्रभं रणोमम-तिमं हि वा। कठिनं निर्मलं व्यङ्गं वैदूर्यं देवभूषणम्। सुतारं घनमत्स्यक्तं कठिनं व्यङ्गमेव च। वैदूर्याणां समाख्याता एते पञ्च महागुणाः"। "उद्गिरन्निव दीप्तिं योऽसौ सुतार इतीर्य्यते। प्रमाणतोऽल्पं गुरु यद् घनमित्यभिधीयते। कलङ्कादिविहीनं तदच्छमिति कीर्त्तितम्। ब्रह्मसूत्रकनाकारसूत्रो यत्र दृश्यते। कठिनं नाम तद्रत्नं सर्वसम्पत्तिकारकम्। विशिष्टाङ्गन्तु वैदूर्यं व्यङ्गमित्यभिधीयते। कर्करं कर्कशं भासः कलङ्को देह इत्यपि। एते पञ्च महादोषा वैदूर्याणामुदीरिताः। शर्करायुक्तमिव यत् प्रतिभाति च कर्करम्। स्पर्शेऽपि यत्साप्रतीतं च कर्कशं तत्तु नामतम्। भिन्नभान्तिकरस्त्रासः स कुर्यात् कुलनाशनम्। विदग्धवर्णो यस्याङ्गे कलङ्कः क्षयकारकः। मलदिग्ध इवाभाति देहो देहविनाशनः। जयति यदि सुवर्णत्यागहीनो यदा वा बहुविधमणिहारो भूपतिर्वा यतिर्वा। तदपि धृतदोषं जात्य वैदूर्यरत्नं प्रतिहतफलरूपः पातमेत्यवश्यम्"। युक्तिकल्पतरुः।

**वैदेह** पु० विशेषेण देहः उपचयो यस्य स्वार्थे प्रज्ञाद्यण् विदेहे भवः अण् वा। १वणिग्जने भरतः। शूद्रात् वैश्यजाते २जातिभेदे पुंस्त्री० मेदि० स्त्रियां ङीप्। ठक्। वैदेहिकोऽपि वणिजि। विदेहानां राजा अण्। ३विदेहराजे जनके नृपे।

**वैदेही** स्त्री विदेहेषु मिथिलादेशेषु भवा अण्। १सीतायाम् जनकात्मजायाम् २हरिद्रायाम् ३पिप्पल्यां ४वणिक्स्त्रियाञ्च मेदि०।

**वैद्य** पु० विद्याऽस्त्यस्य अण्। १पण्डिते "नाविद्यानान्तु वैद्येन देयं विद्याधनात् क्वचित्" दायभा०। २भिषजि अमरः। तदुपकारके ३वासकवृक्षे च शब्दच०। वैद्योत्पत्तिश्च "वैद्योऽश्विनीकुमारेण जातश्च विप्रयोषिति। वैद्यवीर्येण शूद्रायां बभूवुर्बहवो जनाः। ते च ग्रामगुणज्ञाश्च मन्त्रौषधिपरायणाः। तेभ्यश्च जाताः शूद्रायां ते व्यालग्राहिणो भुवि"। शौनक उवाच "कथं ब्राह्मणपत्न्यान्तु सूर्य्यपुत्रोऽश्विनीसुतः। अहो केन विपाकेन वीर्य्याधानं चकार सः"। सौतिरुवाच "गच्छन्तीं तीर्थयात्रायां ब्राह्मणीं रविनन्दनः। ददर्श कामुकः कान्तः पुष्पोद्याने मनोहरे। तया निवारितो यत्नात् बलेन बलवान् सुरः। अतीव सुन्दरीं दृष्ट्वा वीर्य्याधानं चकार सः। द्रुतं तत्याज गर्भं सा पुष्पोद्याने मनोरमे

ज्ञानमन्त्राणैरायुर्वेदप्रयोगविधिम्। ततस्तन्मथ्य दहरन् नवनीतानि कोविदाः। एतानि क्रमशो दृष्ट्वा दिव्यां भास्करसंहिताम्। आयुर्वेदसर्वस्वं सर्वं जानासि सुन्दरि!" ब्रह्मवै० पु० १६ अ०।

**वैद्यनाथ** पु० देवविशेषे "करवीरे महालक्ष्मीरुमा देवी विनायके। अरोगा वैद्यनाथे तु महाकाले महेश्वरी" मात्स्ये। "वैद्यनाथं समारभ्य भुवनेशान्तगं शिवे!। तावद्वङ्गाभिधो देशो यात्रायां न हि दुष्यति" शक्तिसङ्गमतन्त्रे उप०। २भैरवविशेषे "हार्दपीठं वैद्यनाथे वैद्यनाथस्तु भैरवः। देवता जयदुर्गाख्या नेपाले जाह्नवी मम" तन्त्रचूडा०। ३शिवलिङ्गभेदे "हरिद्रानगरे यत्र वैद्यनाथो महेश्वरः। तत्रागत्य विलक्षणः सर्पदष्टः इदाकृतः" इत्यर्धपु० ११ अ०। "झारखण्डे वैद्यनाथो वक्रेश्वरस्तथैव च। वीरभूमौ सिद्धिनाथो राढे च तारकेश्वरः" इति महालिङ्गेश्वरतन्त्रे।

**वैद्यबन्धु** पु० हृत०। आरग्वधवृक्षे शब्दर०।

**वैद्यमातृ** स्त्री वैद्यस्य मातेव। १वासके अमरः तस्य वैद्यजीविकाप्रयोजकरोगशान्तिकरत्वेन तत्पोषकत्वात् तन्मातृत्वम्।

**वैद्यसिंही** स्त्री वैद्यस्य सिंहीव। वासकवृक्षे शब्दच०।

**वैद्या** स्त्री वैद्यः प्राशस्त्येनास्त्यस्याः अच्। काकोल्याम् शब्दच०।

**वैध** त्रि० विधित आगतः अण्। विधिप्रतिपाद्ये।

**वैधहिंसा** स्त्री कर्म०। वेदविहितहिंसायाम् "या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे। अहिंसामेव तां विद्यात् वेदात् धर्मो हि निर्बभौ" मनुः। अत्र नियतेत्युपादानात् नित्ये सन्ध्यादौ हिंसाया अहिंसात्वं न तु काम्येऽपीति सम्प्रदायविदः। पिष्टपशुमीमांसायाम् तथैवोक्तं "कुर्यात् घृतपशुं सङ्गे कुर्यात् पिष्टपशुं तथा" मनुना सङ्गे कामनायां पिष्टपशुनामेव विधानात्। विशेषतः कलौ "मांसदानं तथा श्राद्धे" "अश्वालम्भं गवालम्भम्" इति च कलिवर्ज्यप्रकरणे काम्यपशुदानादिनिषेधः। हिंसाया अनर्थसाधनत्वेऽपि वैधहिंसाया अर्थसाधनत्वम् वेद्यप्रोक्षसंस्कारभेदेन विशेषेणेति बोध्यम्। नि०त०मतभेदेन च वैधहिंसा स्वमतरूपत्वं निरूपितं यथा "मा हिंस्यात् सर्वभूतानि" इत्यत्र सर्वशब्दस्य व्यापकार्थपरतया तदितिविधिमनुपपत्तेः "वायव्यं श्वेतमालभेत" इत्यादिविधेर्विषयान्तरपरतया वैधातिरिक्तविषयत्वं सर्वा सर्वापि इत्यपि वेत्यनेन तदुपदर्शितम्। यद्यपि नानादर्शनटीकाकृद्भिर्वाचस्पतिमिश्रैरुत्सर्गकौमुद्यामभिहितं "न च मा हिंस्यात् सर्वा भूतानि" इति सामान्यशास्त्रं विशेषशास्त्रेण "अग्नीषोमीयं पशुमालभेत" इत्यनेन बाध्यते इति वाच्यं विरोधाभावात् विरोधे हि बलीयसा दुर्बलं बाध्यते। न चास्ति विरोधः भिन्नविषयत्वात्। तथा हि मा हिंस्यादिति निषेधेन हिंसाया अनर्थहेतुभावो ज्ञाप्यते न पुनरक्रत्वर्थत्वमपि। अग्नीषोमीयं पशुमालभेतेत्यनेन तु पशुहिंसायाः क्रत्वर्थत्वमुच्यते न त्वनर्थहेतुभावाभावः इति वाक्यभेदप्रसङ्गात्। न चानर्थहेतुत्वक्रतूपकारकत्वयोः कश्चिदस्ति विरोधः। हिंसा हि पुरुषस्य दोषमावक्ष्यति क्रतोश्चोपकरिष्यतीत्यन्येन, तदपि सांख्यनये। मीमांसकमते तु विरोध एव तथा हि गुरुनये न खलु सर्वभूतहिंसाभावविषयकं कार्यम् इति निषेधविध्यर्थस्य बाधं विना अग्नीषोमीयपश्वालम्भनविषयकं कार्यमिति भावविध्यर्थं उपपद्यते। भट्टनये तु यथा तथास्तु। न च मुख्यपशुयागे पुरुषार्थपशुहिंसनस्यार्थसाधनत्वमनर्थसाधनत्वञ्चोपपद्यते विरोधात्। वस्तुतस्तु भट्टेऽपि विरोधोऽस्त्येव कुतो? विधेरेव स्वभावो यत् स्वविषयस्य साक्षात् परम्परया वा पुरुषार्थसाधनत्वमवगमयति अन्यथाऽङ्गानां प्रधानोपकारकत्वमपि नाङ्गीक्रियेत। अर्थसाधनत्वं बलवदनिष्टाननुबन्धीष्टसाधनत्वम् अनर्थसाधनत्वं बलवदनिष्टसाधनत्वं न चानयोरेकत्र समावेश इति। अतएवोक्तं "तस्माद्यज्ञे वधोऽवधः" इति। नन्वेवं "श्येनेनाभिचरन् यजेत" इत्यत्र श्येनस्य शत्रुवधरूपेष्टसाधनत्वम् "अभिचारो मूलकर्म च" इति मनुना उपपातकमध्ये पाठादनिष्टसाधनत्वमवगतम्। तदेतत् कथमुपपद्यतामिति चेन्नैवं "आततायिनमायान्तं हन्यादेवाविचारयन्" इत्यत्र वाक्यतया आततायिवधे इष्टसाधनत्वम् अनाततायिवधे तूपपातकत्वेन बलवदनिष्टसाधनत्वमित्यविरोध इति गुरुचरणाः"।

**वैधात्र** पु० विधातुरपत्यम् अण्। सनत्कुमारादौ १मुनिभेदे अमरः। २ब्राह्म्यां (थानकुनि) स्त्री राजनि०।

**वैधृति** पु० विगता धृतिर्यस्मात् पृषो० इकिः। विष्कम्भादिषु मध्ये १शान्तिमे योगे। सूर्यचन्द्रयोः क्रान्तिसाम्ये नानीते व्यतिपाते २वह्निभेदे तत्र वैधृतयज्ञोऽपि यथोक्तं

सु०सि० "एकायनगतौ स्यातां सूर्य्याचन्द्रमसौ यदा। तद्युते मण्डले क्रान्त्योस्तुल्यत्वे वैधृताभिधः"। पातशब्दे ४२८८ पृ० विस्तरो दृश्यः। व्यतीपातशब्दे १२६५ पृ० दृश्यम्। [मूर्खे अमरः।

वैधेय त्रि० विधीयतेऽसौ वि+धा–यत् ततः स्वार्थे ष्यञ्। वैधर्म्य न० विरुद्धो धर्मो यस्य तस्य भावः ष्यञ्। १विरुद्धधर्मत्वे २अन्यधर्मत्वे च। [अधम्यवेदनम्" इति कुमारः।

वैधव्य न० विधवाया भावः ष्यञ्। पतिविरहे "नववैधव्य-

वैनतेय पु० विनताया अपत्यं ढक्। १गरुडे अमरः २अरुणे च अरुणपु०। [हेमच०।

वैनयिक त्रि० विनये रतः ठक्। शास्त्रज्ञानादिना विनयरते

वैनायिक पु० विनायं खण्डनमधिकृत्य कृतो ग्रन्थः ठक्। १बौद्धागमे त्रिका० उपचारात् २तदभिज्ञे त्रि०।

वैनाशिक पु० विनाशमधिकृत्य कृतो ग्रन्थः ठक्। सर्वेषां क्षणभङ्गुरताप्रतिपादके १बौद्धागमे २तदभिज्ञे त्रि०। विनाशाय हितम् ठक्। ३ज्योतिषोक्ते नक्षत्रचक्रस्थे जन्मनक्षत्रावधिकयोर्विंशे २नक्षत्रे ४क्षपणके ५परतन्त्रे च त्रि० ६ऊर्णनाभे पु० मेदि०।

वैनीतक पु०न०। विशेषेण नीतं नयनं तेन कायति कै–क स्वार्थे अण्। परम्परया वाहने शिविकादौ अमरः।

वैपरीत्य न० विपरीतस्य भावः ष्यञ्। १विपर्य्यये हेमच०। २वज्राशौ लतायां स्त्री राजनि०।

वैभव न० विभोर्भावः अण्। १विभुत्वे २विभूतौ।

वैभ्राज न० विभ्राज इदम् अण्। देवोद्यानभेदे त्रिका०। तच्च मेरोः पश्चिमदिक्स्थविपुलपर्वतस्थं विपुलशब्दे ४८११ पृ० दृश्यम्। [२तथाभूतभगिन्यां स्त्री ङीप्।

वैमात्र पु० विमातुरपत्यम् अण्। १वैमात्रे भ्रातरि अमरः

वैमात्रेय पु० विमातुरपत्यं ढक्। १सापत्ने भ्रातरि अमरः २तथाभूतभगिन्यां स्त्री ङीप्।

वैमुख्य न० विमुखस्य भावः ष्यञ्। विमुखत्वे।

वैमेय पु० वि+मि–यत् स्वार्थे अण्। विनिमये हेमच०।

वैयधिकरण्य न० व्यधिकरणस्य भावः ष्यञ्। असमानाधिकरणत्वे। [भिन्ने।

वैयाकरण त्रि० व्याकरणं वेत्त्यधीते वा अण्। व्याकरण-

वैयाघ्र पु० व्याघ्रचर्म्मणा परिवृतो रथः अण्। व्याघ्रचर्म्मपरिवृते रथे अमरः।

वैयाघ्रपद्य पु० व्याघ्रपदस्यापत्यं यञ्। गोत्रकारके मुनिभेदे "वैयाघ्रपद्यगोत्रायेति" भीष्मतर्पणमन्त्रः।

वैयात्य न० वियातस्य भावः ष्यञ्। निर्लज्जत्वे "वैयात्य मुरतेष्वपि" माघः। [शुकदेवे।

वैयासकि पु० व्यासस्यापत्यम् इञ् अकङ् च। व्यासापत्ये

वैयासिकी स्त्री व्यासेन प्रोक्ता ठञ् ङीप्। व्यासप्रणीतायां संहितायाम्।

वैर न० वीरस्य भावः अण्। विरोधे विद्वेषे अमरः। "वैरं पञ्चसमुत्थानं मुनिभिः परिकीर्त्तितम्। स्त्रीकृतं वास्तुजं वाग्जं ससापत्न्यापराधजम्"। तत्र स्त्रीकृतं कण्वचेदिपयोः। वास्तुजं कुरुपाण्डवयोः। वाग्जं द्रोणद्रुपदयोः। सापत्नं नैसर्गिकमहिनकुलयोः। अपराधजं पूजनीब्रह्मदत्तयोः।

वैरकार त्रि० वैरं करोति कृ–ट। विरोधकारके।

वैरक्त्य न० विरक्तस्य भावः ष्यञ्। विरागे।

वैरङ्गिक त्रि० विरङ्गं विरागं नित्यमर्हति ठञ्। विरागार्हे हेमच०। वैरागिक तत्रार्थे सि०कौ०।

वैरनिर्यातन न०वैरस्य वैरकृतापकारस्य निर्यातनम् निर्+यत–णिच् ल्युट्। वैरकृतापकारप्रतीकारे अमरः।

वैरप्रतीकार पु० ६त०। वैरकृतापकारस्य तत्सदृशापकारकरणेन तस्य शोधने वैरप्रतिक्रियाप्यत्र स्त्री।

वैरशुद्धि स्त्री ६त०। वैरप्रतीकारे अमरः।

वैराग्य न० विरागस्य भावः ष्यञ्। १विषयवासनाराहित्ये ऐहिकामुष्मिकविषयरागराहित्ये च।

वैराग्यस्य मोक्षहेतुत्वादि विवेकचूडामणौ दर्शितं यथा "मोक्षस्य हेतुः प्रथमो निगद्यते वैराग्यमत्यन्तमनित्यवस्तुषु। ततः शमश्चापि दमस्तितिक्षा न्यासः प्रसक्ताखिलकर्मणां भृशम्। ततः श्रुतिस्तन्मननं सतत्त्वध्यानं चिरं नित्यनिरन्तरं मुनेः। ततो विकल्पं परमेत्य विद्वानिहैव निर्वाणसुखं समृच्छति। यद्बोद्धव्यं तवेदानीमात्मानात्मविवेचनम्। तदुच्यते मया सम्यक् श्रुत्वात्मन्यवधारय। मज्जास्थिमेदःपलरक्तचर्म्मत्वगाह्वयैर्धातुभिरेभिरन्वितम्। पादोरुवक्षोभुजपृष्ठमस्तकैरङ्गैरुपाङ्गैरुपयुक्तमेतत्। अहं ममेति प्रथितं शरीरं मोहास्पदं स्थूलमितीर्य्यते बुधैः। नभोनभस्वद्दहनाम्बुभूमयः सूक्ष्माणि भूतानि भवन्ति तानि। परस्परांशैर्मिलितानि भूत्वा स्थूलानि च स्थूलशरीरहेतवः। मात्रास्तदीया विषया भवन्ति शब्दादयः पञ्च सुखाय भोक्तुः। य एषु मूढा विषयेषु बद्धा रागोरुपाशेन सुदुर्दमेन। आयान्ति निर्यान्त्यध ऊर्द्ध्वमुच्चैः स्वकर्मदूतेन जवेन

नीताः । शब्दादिभिः पञ्चभिरेव पञ्च पञ्चत्वमापुः स्वगुणेन बद्धाः । कुरङ्गमातङ्गपतङ्गमीनभृङ्गा, नरः पञ्चभिरञ्चितः किम् ? । दोषेण तीव्रो विषयः कृष्णसर्पविषादपि । विषं निहन्ति भोक्तारं द्रष्टारं चक्षुषाप्ययम् । विषयाशा महापाशात् यो विमुक्तः सुदुस्त्यजात् । स एव कल्पते मुक्त्यै नान्यः षट्शास्त्रवेद्यपि । आपातवैराग्यवतो मुमुक्षून् भवाब्धिपारं प्रतियातुमुद्यतान् । आशाग्रहो मज्जयतेऽन्तराले निगृह्य कण्ठे विनिवर्त्य वेगात् । विषयाख्यग्रहो येन सुविरक्त्यसिना हतः । स गच्छति भवाम्भोधेः पारं प्रत्यूहवर्जितः । विषमविषयमार्गैर्गच्छतो नष्टबुद्धेः प्रतिपदमभियातो मृत्युरप्येष सिद्धिः । हितसुजनगुरूक्त्या गच्छतः स्वस्य युक्त्या प्रभवति फलसिद्धिः सत्यमित्येव विद्धि । मोक्षस्य काङ्क्षा यदि वै तवास्ति त्यजातिदूराद्विषयान् विषं यथा । पीयूषवत्तोषदयाक्षमार्जवप्रशान्तिदान्तीर्भज नित्यमादरात्" ।

**वैराट** त्रि०विराटस्येदम् अण् । १विराटसम्बन्धिनि । वीरं द्वाटति अट-अच् स्वार्थे अण् । २इन्द्रगोपकीटे हेमच० ।

**वैरातङ्क** पु० वीरस्य अर्जुनस्यातङ्काय यद्वाय साधु—अण् । अर्जुनवृक्षे राजनि० । [तत्प्रकारके २वैरानुगते च ।

**वैरानुबन्धिन्** त्रि०वैरं विद्वेषमनुबध्नाति णिनि । १विद्वेषा

**वैरिन्** त्रि० वैरमस्त्यस्य इनि । शत्रौ अमरः ।

**वैरूप्य** न० विरूपस्य भावः ष्यञ् । १विरूपत्वे २अननुरूपत्वे ३अयथाभावे ४वस्तुनोविकारभेदे च ।

**वैरोच(न)नि** पु० विरोचनस्यापत्यम् शिवाद्यण् इञ् वा । १अग्निपुत्रे २सूर्यपुत्रे ३बलिराजपुत्रे दानवभेदे च ४बुद्धभेदे ५सिद्धगणे शब्दर० ।

**वैलक्षण्य** न०विलक्षणस्य भावः ष्यञ् । विलक्षणत्वे वैशिष्ट्ये

**वैलक्ष्य** न० विलक्षस्य भावः ष्यञ् । १लज्जायाम् अमरः २स्वभाववैलक्षण्ये च "वैलक्ष्यहेतोर्गतिमेतदीयाम्" नैष० ।

**वै(बै)वधिक** त्रि० वी(बी)वधेन धान्यादिसंग्रहेण व्यवहरति ठक् । वार्त्तावहे नैगमे (टीकाणि) अमरः ।

**वैवर्ण्य** न० विवर्णस्य भावः ष्यञ् । विवर्णत्वे मालिन्ये ।

**वैवस्वत** पु०विवस्वतोऽपत्यम् तस्येदं वा अण् । १यमे अमर० २अग्नौ ३रुद्रभेदे च जटा० । ४तत्सम्बन्धिनि त्रि० "वैवस्वतकरक्रिया" इत्युद्भटः । ५दक्षिणदिशि स्त्री ङीप् । ६सप्तमे मनुभेदे "मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः । सप्तमो वर्त्तमानोऽयस्तदपत्यानि मे शृणु ! । इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च । नरिष्यन्तोऽथ नाभागः सप्तमो दिष्ट उच्यते । करूषश्च पृषध्रश्च दशमो वसुमान् स्मृतः । मनोर्वैवस्वतस्यैते दश पुत्राः परन्तप ! । आदित्या वसवो रुद्रा विश्वे देवा मरुद्गणाः । अश्विनौ ऋभवो राजन् ! इन्द्रस्तेषां पुरन्दरः । कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रश्च गोतमः । जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः । अत्रापि भगवज्जन्म कश्यपाददितेरभूत् । आदित्यानामवरजो विष्णुर्वामनरूपधृक् । संक्षेपतो मयोक्तानि सप्त मन्वन्तराणि ते" भाग० ८ १३अ० ।

**वैवाहिक** त्रि० विवाहाय हितं साधु वा ठक् । १विवाहयोग्ये "वैवाहिकीं तिथिं पृष्टाः" इति कुमारः । २विवाहेन सम्बद्धे कन्यापुत्रयोः श्वशुरे ३विवाहसम्बन्धिनि च त्रि० "पञ्चमे सप्तमे चापि येषां वैवाहिकी क्रिया" स्मृतिः ।

**वैशम्पायन** पु० व्यासशिष्ये भारतवक्तरि मुनिभेदे । स च व्यासादिष्टः जनमेजयाय भारतं श्रावितवान् यथोक्तं भा०आ०१अ० "जनमेजयेन पृष्टः सन् ब्राह्मणैश्च सहस्रशः । शशास शिष्यमासीनं वैशम्पायनमन्तिके । स सदस्यैः सहासीनः श्रावयामास भारतम् । कर्मान्तरेषु यज्ञस्य चोद्यमानः पुनःपुनः" । स च यजुर्वेदे तस्य शिष्यः यथाह "अथ शिष्यान् प्रजग्राह चतुरो वेदपारगान् । जैमिनिञ्च सुमन्तुञ्च वैशम्पायनमेव च । पैलं तेषां चतुर्थञ्च पञ्चमं मां महामुनिः । ऋग्वेदश्रावकं पैलं जग्राह स महायशाः । यजुर्वेदप्रवक्तारं वैशम्पायनमेव च" कौर्मपु० ४९अ० । [पक्षे च ।

**वैशस** न०विशसस्य भावः स्वार्थे वा अण् । १हिंसने २हिं-

**वैशाख** पु० विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा यत्र मासे पुनः अण् । अनामन्त्यान्ते चैत्रतो द्वितीये १चान्द्रमासे २वृक्षभेदे च कार्त्तिकशब्दे १९४९ पृ० दृश्यम् । चान्द्रवैशाखलक्षणं तु मेषस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तत्रिंशत्तिथित्वम् । मेषस्थरविके ३सौरमासे "तुलामकरमेषेषु प्रातःस्नानं विधीयते । हविष्यं ब्रह्मचर्यं च महापातकनाशनम्" । तन्मासस्य ४पौर्णमास्यां स्त्री ङीप् । विशाखा प्रयोजनमस्य अण् । ५मन्थानदण्डे पु० ६धनुर्द्धराणामवस्थानभेदे न० अमरः । [वस्त्राभिषक्ते नायकभेदे रत्न० ।

**वैशिक** पु०वेशे वेश्यालये उपचारात् वेश्यायां प्रसृतः ठक् ।

**वैशिष्ट्य** न० विशिष्टस्य भावः ष्यञ् । विशेषत्वविशेषण-

सम्बन्धिनि विशिष्टबुद्धिनिमात्मकौ १वस्त्रे २भेदे च।

**वैशेषिक** न० विशेषं पदार्थभेदमधिकृत्य कृतो ग्रन्थः ठञ्। कणादप्रणीते १शास्त्रभेदे। तदधीते अण्। २काणादशास्त्राभिज्ञे त्रि०। तस्येदम् अण्। ३काणादशास्त्रसम्बन्धिनि त्रि०। [शेषवाक्प्रहादः" शा०सू०।

**वैशेष्य** न० विशेषस्य भावः ष्यञ्। १वैशिष्ट्ये २भेदे च "वै-

**वैश्य** पुंस्त्री विशति उपभुङ्क्ते विश–क्विप् स्वार्थे ष्यञ्। वर्णभेदे ब्रह्मण ऊरुजाते जातिभेदे अमरः स्त्रियां टाप्। "विशत्याशु पशुभ्यश्च कृष्यादानरुचिः शुचिः। वेदाध्ययनसम्पन्नः स वैश्य इति संज्ञितः" पद्मपु०स्व०२६अ०।

**वैश्यवृत्ति** स्त्री ६त०। कृषिवाणिज्यादौ "वैश्यस्तु कृतसंस्कारः कृत्वा दारपरिग्रहम्। वार्त्तायां नित्ययुक्तः स्यात् पशूनाञ्चैव रक्षणे। प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे पशून्। ब्राह्मणाय च राज्ञे च सर्वाः परिददे प्रजाः। न च वैश्यस्य कामः स्यान्न रक्षेयं पशूनिति। वैश्ये चेच्छति नान्येन रक्षितव्याः कथञ्चन। मणिमुक्ताप्रवालानां लोहानां तान्तवस्य च। गन्धानाञ्च रसानाञ्च विद्यादर्घबलाबलम्। बीजानामुप्तिविच्च स्यात् क्षेत्रदोषगुणस्य च। मानयोगञ्च जानीयात् तुलायोगांश्च सर्वशः। सारासारञ्च भाण्डानां देशानाञ्च गुणागुणान्। लाभालाभञ्च पण्यानां पशूनां परिवर्द्धनम्। भृत्यानाञ्च भृतिं विद्याद् भाषाश्च विविधाम्नृणाम्। द्रव्याणां स्थानयोगांश्च क्रयविक्रयमेव च। धर्मेण च द्रव्यवृद्धावातिष्ठेद् यत्नमुत्तमम्। दद्याच्च सर्वभूतानामन्नमेव प्रयत्नतः" मनुः। "वैश्यस्य च प्रवक्ष्यामि यो धर्मो वेदसम्मतः। दानमध्ययनं शौचं यज्ञश्च धनसञ्चयः। पालयेच्च पशून् वैश्यः पितृवत्कर्मसंयतम्। विकर्म तद्भवेदन्यत् कर्म यत् स समाचरेत्। रक्षया स हि तेषां वै महत् सुखमवाप्नुयात्। प्रजापतिर्हि वैश्याय सृष्ट्वा परिददे प्रजाः। ब्राह्मणेभ्यश्च राज्ञे च सर्वाः परिददे प्रजाः। तस्य वृत्तिं प्रवक्ष्यामि यच्च तस्योपजीवनम्। षण्णामेका पिबेद्धेनुं शताच्च मिथुनं भवेत्। लब्धाच्च सप्तमं भागं तथा शृङ्गे कलाखुरे। शस्यानां सर्वबीजानि एषा सांवत्सरी भृतिः" पाद्मस्व०२६अ०।

**वैश्रवण** पु० विश्रवसोऽपत्यम् अण् विश्रवणादेशः। कुबेरे अमरः। [वैश्रवणावासादयोऽप्यत्र।

**वैश्रवणालय** पु० ६त०। १वटवृक्षे हेमच० २कुबेरपुर्याञ्च।

**वैश्वदेव** पु० विश्वेभ्यो देवेभ्यो देयो बलिः अण्। वैश्वदेवो द्देशेन दीयमाने बलौ।

**वैश्वानर** पु० विश्वेषां नराणामयम् कुक्षिस्थत्वात् अण् पूर्वदीर्घः। १वह्नौ २चित्रकवृक्षे। ३चेतने च विश्वानरस्यापत्यम् अण्। अग्निलोकाधिपे ४वह्नौ काशीख०।०अ०तत्कथा दृश्या। सर्वदेहाभिमानिनि ५सर्वात्मयामिनि परमेश्वरे तदुपासनप्रकारः छान्दो० ५प्र०दर्शितो यथा "एष वै र० विरात्मा वैश्वानरः" इत्युपक्रमे "तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वांसोऽन्नमत्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति" "तान् यथोक्तवैश्वानरदर्शनवतो ह उवाच। एते यूयं वै खल्वित्थं यथादर्शितं पृथगिवापृथक् सन्तमिममेकं वैश्वानरं विद्वांसोऽन्नमत्थ परिच्छिन्नात्मबुद्ध्या हस्तिदर्शन इव जात्यन्धाः। यस्त्वेतमेवं यथोक्तावयवैर्द्युमूर्द्धादिभिर्विशिष्टमेकं प्रादेशमात्रं प्रादेशैर्द्युमूर्द्धादिभिः पृथिवीपादान्तैरध्यात्मं मीयते ज्ञायत इति प्रादेशमात्रम्। मुखादिषु वा करणेष्वत्तृत्वेन मीयत इति प्रादेशमात्रः। द्युलोकादिपृथिव्यन्तप्रदेशपरिमाणो वा प्रादेशमात्रः। प्रकर्षेण शास्त्रेणादिश्यन्त इति प्रादेशा द्युलोकादय एव तत्परिमाणः प्रादेशमात्रः। शाखान्तरे तु "मूर्द्धादिश्चिबुकप्रतिष्ठः" इति प्रादेशमात्रं कल्पयन्ति। इह तु न तथाभिप्रेतः। "तस्य ह वा एतस्यात्मनः" इत्याद्युपसंहारात्। प्रत्यगात्मतयाऽभिविमीयतेऽहमिति ज्ञायत इत्यभिविमानस्तमेतमात्मानं वैश्वानरं विश्वान्नरान्नयति पुण्यपापानुरूपां गतिम्। सर्वात्मा च ईश्वरो वैश्वानरो विश्वो नर एव वा सर्वात्मत्वात्। विश्वैर्वा नरैः प्रत्यगात्मतया प्रविभज्य नीयत इति वैश्वानरः। तमेवमुपास्ते यः सोऽदनमन्नादी सर्वेषु लोकेषु द्युलोकादिषु सर्वेषु भूतेषु चराचरेषु सर्वेष्वात्मसु शरीरेन्द्रियमनोबुद्धिषु तेषु ह्यात्मकल्पनाव्यपदेशः प्राणिनामन्नमत्ति। वैश्वानरवित् सर्वात्मा सन्नन्नमत्ति। न यथाज्ञः पिण्डमात्राभिमानः सन्नित्यर्थः"।

**वैषम्य** न० विषमस्य भावः ष्यञ्। विषमत्वे वैलक्षण्ये।

**वैषयिक** त्रि० विषयेण निर्वृत्तः ठक्। विषयनिर्वृत्ते सुखादौ

**वैष्टुत** न० विष्टुत्या निर्वृत्तम् अण्। १होमभस्मनि हेमच०। २विष्टुतिसाध्ये यागादौ त्रि०। [३विष्णौ च संक्षिप्तसा०।

**वैष्ट्र** न० विष–ष्ट्रन् निपा०। १विष्टपे उणादि० २स्वर्गे ३वायौ

वैष्णव त्रि० विष्णुर्देवताऽस्य तस्येदं वा अण् । १विष्णूपासके २विष्णुसम्बन्धिनि च स्त्रियां ङीप् । ३वैष्णव्यां शक्तौ "वैष्णवी परमे चैनम्" देवीमा० । "गायत्री वैष्णवी ज्ञेया" स्मृतिः । ४विष्णुधामनि न० । विष्णुमधिकृत्य कृतो ग्रन्थः अण् । ५महापुराणभेदे न० विष्णुपुराणशब्दे ४९१६ पृ० दृश्यम् ।

वैसारिण पुंस्त्री० विसरति वि+सृ—णिनि स्वार्थे अण् । मत्स्ये अमरः स्त्रियां जातित्वात् ङीष् ।

वैहार्य्य त्रि० विहारं परिहासमर्हति ष्यञ् । परिहासार्हे श्यालकादौ "यथा बालेषु नारीषु वैहार्य्येषु तथैव च । सहृदेषु विपातेषु तथापद्व्रतनेषु च । यदुक्तं नोक्तपूर्वं मे" भा०उ० १२अ० ।

वैहासिक पु० विहासेऽभिरतस्य करोति वा ठक् । नाटकादौ प्रसिद्धे शृङ्गाररसनायकसहचरे १विदूषके हेमच० (भाँड़) इति २ख्याते लोके च ।

वोढ्र पुंस्त्री० वा—बा० ड्र । १गोनसर्पे (बोडावाप) त्रिका० । २मत्स्यभेदे मेदि० । स्त्रियां जातित्वात् ङीष् । सा च ३पञ्चवर्षीयायां (बुढि) मेदि० । [शब्दः ।

वोढु पु० वह-तृन् । मुनिभेदे "वोढुः पञ्चशिखस्तथा" तर्पण-

वोढृ त्रि० वह-तृच् । १वाहके २स्थानान्तरप्रापके "भागीरथी निर्झरसीकराणां वोढा" कुमारः । ३पाणिग्राहके पु० "पितृवदा वोढुरेव ते" स्मृतिः । ४भारवाहके ५मूढ़े च त्रि० शब्दच० । ६वृषभे पु० राजनि० ७सूते पु० मेदि० । [अवक्षालो कोपः । आर्द्रे त्रिका० ।

वोद त्रि० आर्द्रविकृतटकं यत्र पृ० व० उदकक्लोदादेशः

वोदाल पुंस्त्री० वोद आर्द्रः सन् अलति अल—अच् । मत्स्यभेदे (बोयाल) शब्दर० स्त्रियां ङीष् ।

वोरक पु० अवनतं लेखनकाले करो यस्य पृ० व० कप् अवक्षालो कोपः पृषो० वलोपः । लेखके त्रिका० । [इते त्रिका० ।

वोरट पु० वोरति रटन्ति भृङ्गा यत्र रट—अपर्थे क । कुन्द-

वोरव पु० वा—घञ् वोरं वाति वा—क । (बोरो) धान्यभेदे "वोरवस्तु बुधैः प्रोक्तस्त्रिदोषस्य प्रकोपणः । मधुराम्लपाकश्च श्रीष्मिः पित्तकरो गुरुः" राजवल्लभः ।

वोल पु० वा—उलच् । गन्धरसे गन्धद्रव्यभेदे । "वोलस्तु कटुतिक्तोष्णः कषायो रक्तदोषहृत् । कफापस्मारकासघ्नः प्रदरादिविकारनुत्" राजवल्लभः । स्वार्थे क । तत्रार्थे पु० अमरः ।

वोल्लाह पुंस्त्री० श्वेतकेशरपाण्डुवर्णे अश्वे हेमच० ।

वोशि स्त्री उभयचरशब्दे १२६१२पृ० दर्शिते अग्न्याधे सूर्य्यात् द्वितीयस्थे विचन्द्रपदे । तदपेक्षया द्वादशस्थे तु वेशी ।

वौषट् अव्य० वह—डौषट् । देवोद्देशेन हविस्त्यागे अमरः ।

व्यंशक पु० विशिष्टोंऽशोऽवयवोऽस्य । पर्वते त्रिका० ।

व्यंसक पु० विगतोंऽसः स्कन्धो यस्य कप् । १धूर्त्ते हेमच० २स्कन्धशून्ये । "मयूरव्यंसकादयश्च" पाणिनिसूत्रम् ।

व्यंसित त्रि० वि+अंस-क्त । १वञ्चिते २प्रतारिते त्रिका० ।

व्यक्त त्रि० वि+अञ्ज—क्त । १स्फुटे २प्रकाशिते मेदि० ३प्राज्ञे अमरः । ४स्थूले "व्यक्ताव्यक्तज्ञविज्ञानात्" सा० का० । ५विष्णौ पु० विष्णुस० । [साक्षिणि त्रिका० ।

व्यक्तदृष्टार्थ पु० व्यक्तं स्फुटं दृष्टोऽर्थो येन । साक्षाद्द्रष्टरि

व्यक्तरूप पु० व्यक्तानि स्थूलानि भूतान्येव रूपं यस्य । विष्णौ विष्णुस० । तस्य विराड्रूपेण सर्वभूतात्मकत्वात्तथात्वम् ।

व्यक्ति स्त्री वि+अञ्ज—क्तिन् । १प्रकाशे स्त्रिच् । २ज्ञाने हेम० । पृथगात्मताख्ये एकैकविशेषे च अमरः । अभिव्यक्तिशब्दे दृश्यम् । [विशिष्टमग्रं यस्य । ३विष्णौ पु० विष्णुस० ।

व्यग्र त्रि० विगततमग्रं यस्य । १व्याकुले २व्यासक्ते च अमरः ।

व्यङ्ग न० विगतं विकलं वा अङ्गं प्रादि कर्म० । १विकलाङ्गे विगतमङ्गं यस्य । २अङ्गहीने त्रि० ३भेके पुंस्त्री० मेदि० स्त्रियां ङीष् । ४क्षुद्ररोगभेदे तन्निदानादि माधवनिदाने उक्तं यथा "क्रोधायासप्रकुपितो वायुः पित्तेन संयुतः । सहसा मुखमागत्य मण्डलं विसृजत्यतः । नीरुजं तनुकं श्यावं मुखे व्यङ्गं तमादिशेत्" ।

व्यङ्ग्य त्रि० वि+अञ्ज—ण्यत् । १व्यञ्जनया वृत्त्या बोध्येऽर्थे "वाच्योऽर्थोऽभिधया बोध्यो लक्ष्यो लक्षणया मतः । व्यङ्ग्यो व्यञ्जनया ताः स्युस्तिस्रः शब्दस्य शक्तयः" सा० द० २प्रकाश्ये च । [विचीत् विव्याच विविचतुः व्यचाः ।

व्यच व्याजे अक० सम्बन्धे सक० तु० कु० पर० सेट् । विचति अ-

व्यजन न० वि+अज—ल्युट् न वा देशः । तालवृन्ते अमरः । "मूर्च्छादाहश्रमहरं व्यजनानिलः । तालव्यजनजो वायुस्त्रिदोषशमनो लघुः । वंशव्यजनजो वायुरुक्षोष्णो वातपित्तकृत् । वेत्रचामरकैकिपुच्छव्यजनोत्थस्त्रिदोषनुत् । वास्त्रव्यजनजो वायुर्ग्राहकादिविकारकः । तेष्वपि योऽसौ विज्ञेयो विद्वद्भिर्भिषजां वरैः" राजव० ।

व्यञ्जक पु० वि+अञ्ज—णिच्-ण्वुल् । १हृद्गतभावादिप्रकाशके अभिनये अमरः । २अलङ्कारादिबोधके शब्दे च सा० द० व्यञ्जनाशब्दे दृश्यम् । ३प्रकाशकमात्रे त्रि० ।

व्यञ्जन न० विशेषेणाज्यते वि+अञ्ज—ल्युट् १सूपशाकादौ

पायसाद्यैर्निराकाङ्क्षकृतैर्विवक्षितात्मवान् । विप्राय दक्षिणां दत्त्वा नक्तं भुञ्जीत वाग्यतः । तिष्ठन् व्रजन् प्रस्खलितश्च क्षुतप्रस्खलितादिषु । आदित्यनामस्मरणं कुर्य्यादुच्चारणं तथा । अनेनैव विधानेन मासान् द्वादश वै क्रमात् । उपोष्य पारणे पूर्णे समभ्यर्च्य जगद्गुरुम् । पुष्येण च रवेनेह प्रणमेत् पुष्टिमाप्नुयात् । एवं यः पुरुषः कुर्य्यादादित्याराधनं शुचिः । नारी वा स्वर्गमभ्येत्य चानन्त्यं फलमश्नुते" । शुक्लपक्षे समभ्यर्च्य पुष्पधूपादिभिः शुचिः । श्रावणे मासि सप्तम्यां देवाय चन्नवाहनम् । प्राप्येह विपुलं दिव्यं धर्मानन्तरसायम् । अमूत्र लोकमायाति दिव्यं गणपतेः शुभम्" । इत्यादि

अशून्यशयनद्वितीयाव्रतं भविष्यपु० "चातुर्मास्ये भवेद्राजन् ! यथोक्तं व्रतमुत्तमम् । श्रावणस्य द्वितीयायां कृष्णपक्षे नराधिप ! । श्रावणादिकार्त्तिकान्तं कुर्य्यात् तद् व्रतमुत्तमम् । पुष्पं धूपञ्च नैवेद्यं दीपमालां विशेषतः" । "ततो भाद्रपदे मासि अन्नदानं ददाति च । ततश्चाश्विद्वितीयायां शय्यादानं विशेषतः । न तस्य शून्यं शयनमशून्यो न भवेन्नरः । ततश्च कार्त्तिके मासि द्वितीयायां नराधिप ! । शर्कराखण्डखाद्यानि दधिक्षीरघृतानि च । उपहारं भगवते दद्यात् सर्वं प्रयत्नतः" इत्यादि ।

अशोकत्रिरात्रव्रतं भविष्योत्तरोक्तम् । "तच्छृणु त्वमशोकाख्यं त्रिरात्रव्रतमुत्तमम् । मासि मार्गशिरे चैव ज्यैष्ठे भाद्रपदे तथा । शुक्लपक्षे पञ्चदश्यामेकभक्तन्तु कारयेत् । ततः प्रातः समुत्थाय स्नानं कुर्य्यात् ततो व्रती" ।

अशोकपूर्णिमाव्रतं विष्णुधर्मोत्तरोक्तम् । "अशोकपूर्णिमामेतां शृणुष्व गदतो मम । यामुपोष्य नरः शोकं नाप्नोति स्त्री तथापि वा । फाल्गुनामलपक्षस्य पौर्णमास्यां नृपोत्तम ! । मृज्जलेन नरः स्नात्वा दत्त्वा शिरसि वै मृदम् । मृदुत्थापनं ततः कृत्वा कृत्वा च स्थण्डिलं मृदा । पुष्पैर्गन्धैः समभ्यर्च्य भूधरं नाम नामतः । धरणीञ्च तथा देवीमशोकेति च कीर्त्तयेत् । यथा विशोका धरणी कृतवत्या जनार्दनात् । तथा मां सर्वशोकेभ्यो मोचयाशेषधारिणि !" ।

अशोकप्रतिपद्व्रतं भविष्योत्तरोक्तम् "चैत्रस्य शुक्लपक्षस्य प्रथमेऽह्नि दिनोदये । अशोकं पूजयेत् सम्यक् मङ्कुशुपल्लवम् । मङ्कुरैः सप्तधान्यैश्च सुपक्वैर्मोदकैः शुभैः । फलैः कालोद्भवैर्दिव्यैर्नारिकेलैः सदाडिमैः । धूपदीपादिना तत्र पूजयेत्तरुमुत्तमम् । अशोकं पाण्डवश्रेष्ठ ! शोकं नाप्नोति कुत्रचित् । पितृभ्रातृपतिश्वश्रूसुत जामातृणां तथा" ।

अशोकाष्टमीव्रतं लिङ्गपुराणोक्तम् "अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्वसौ । चैत्रे मासि तथाष्टम्यां न ते शोकमवाप्नुयुः" । अत्र पुनर्वसुयोगः प्राशस्त्यार्थः । कूर्म्मपुराणेऽपि "अशोकस्याष्टकलिका मन्त्रेणोक्तेन भक्षयेत् । शोकं नैवाप्नुयाज्जन्तुर्रूपवानपि जायते" । "शुक्लाष्टम्यां तु संप्राप्ते मासि भाद्रपदे तथा । दूर्व्वामृतान् श्वेतमुत्तराग्राभिगामिनम् । पूजयेद्गन्धपुष्पाणि गन्धमाल्यानुलेपनैः । फलमूलैस्तथा चैव दीपं धूपैर्विसर्जयेत् । अग्निपक्वं तथा सर्वं निवेद्य च कथञ्चन । भोक्तव्यञ्च तथा ब्रह्मन् ! वह्निपक्वविवर्जितम् । दूर्वाङ्कुरस्यां समभ्यर्च्य विधिना यौवने प्रियम् । यौवनं स्थिरमाप्नोति यत्र यत्राभिजायते । अष्टमीषु च सर्वासु पूजनीयाप्यशोकिका । गन्धमाल्यनमस्कारदीपधूपाक्षतस्तदा । तस्मिन्नहनि या भुङ्क्ते नक्तमिन्दुविवर्जिते । भवत्यथो विशोका सा यत्र यत्राभिजायते । अष्टमीषु च सर्वासु न चेच्छक्नोति वै, शुभे । प्रोष्ठपद्यामतीतायां या स्यात् कृष्णाष्टमी द्विज ! । तस्यामवश्यं कर्त्तव्यं देवीं पूज्य यथाविधि" । इदं व्रतान्तरम् ।

अहिंसाव्रतं पद्मपु० "वर्ज्जयित्वा पुमान्मांसमब्दान्ते गोप्रदो भवेत् । तद्वद्धेममृगं दत्त्वा सोऽश्वमेधफलं लभेत् । अहिंसाव्रतमित्युक्तं कल्पान्ते भूपतिर्भवेत्" ।

आग्नेयव्रतं भविष्योत्तरोक्तम् । "शतसप्तम्यां भक्त्या पूजयेद् विन्ध्यवासिनीम् । पुष्पैर्धूपैस्तथा दीपैर्नैवेद्यैर्विविधैरपि । पूजयित्वा ततो विद्यात् पञ्चरं शकसंयुतम् । हेमं त्रिप्राय दद्याद् यः स वाग्मी जायते नरः । एतद्व्रतेन मन्त्रेण अग्निलोकप्रदायकम्" ।

आर्द्रासंक्रान्तिव्रतं स्कन्दपु० "सङ्क्रान्तिदिवसे पुण्ये प्रारभेच्चैतद् व्रते । पद्ममष्टदलं कृत्वा कुङ्कुमेन तु भास्करम् । पूजयेन्मन्त्रमुच्चार्य विधिवद् गुरुसन्निधौ । आर्द्रा तेजस्करी सर्वे प्रसादीप्रियसत्करी । आर्द्रां सर्वगमां देव ! मम देहि नमोऽस्तु ते । पूजयेत् कुङ्कुमेनाथ दद्याद् विप्राय भोजनम् । उद्यापने तु चन्द्रांशुं सौवर्णं चरुं तथा । एकचक्रं सप्ताश्वरथेन समन्वितम् । यः कुर्याद्विधिमानेन आर्द्रासंक्रान्तिमुत्तमाम् । यथात्माऽस्खलिता लोके सर्वं तस्य जायते" ।

आदित्यव्रतं भविष्यपुराणोक्तम् "योऽब्दमेकं प्रकुर्वीत नक्त

एकभक्तव्रतं विष्णुधर्मोक्तम्। "चैत्रं विष्णुपरो मासमेकभक्तेन यः क्षिपेत्। सुवर्णमणिमुक्ताढ्यं गार्हस्थ्यं समवाप्नुयात्। अहिंसः सर्वभूतेषु वासुदेवपरायणः। नमोऽस्तु वासुदेवायेत्यहन्यष्टशतं जपेत्। अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात्। यस्तु संवत्सरं पूर्णमेकभक्तो भवेन्नरः। अहिंसः सर्वभूतेषु वासुदेवपरायणः। नमोऽस्तु वासुदेवायेत्यहन्यष्टशतं जपेत्। पौण्डरीकस्य यज्ञस्य ततः फलमवाप्नुयात्। दश वर्षसहस्राणि स्वर्गलोके महीयते। तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते"।

ऐश्वर्यतृतीयाव्रतं विष्णुधर्मोक्तम्। "तृतीयायां तथाभ्यर्च्य ब्रह्मविष्णुमहेश्वरान्। पृथक् पृथक् नाममन्त्रैर्नैवेद्यादि निवेदयेत्। त्रीन् लोकांश्च तदा नाम सम्यक् संपूजयेन्नरः। ऐश्वर्यं महदाप्नोति गतिमग्र्यां च विन्दति"।

कदलीव्रतं भविष्योत्तरोक्तम्। "शुक्ले पक्षे चतुर्दश्यां मासि भाद्रपदे नृप!। देवरूपां वरस्त्रीभिः फलैर्नानाविधैस्तथा। विरूढैः सप्तधान्यैश्च दीपालक्तकचन्दनैः। दधिदूर्वाक्षतैर्वस्त्रैर्नैवेद्यैश्च तथाचितैः। जातीफलैः पूगफलैर्नवखर्जूरकदलीफलैः। तच्चाह्नि दातव्यं स्त्रीभी रम्याभिरव्ययम्। मन्त्रेणानेन चैवार्च्यं तच्छृणुष्व नराधिप!। चित्तस्था कदली नित्यं कदली कामदायिनी। शरीरारोग्यलावण्यं देहि देवि! नमोऽस्तु ते"।

कन्दुचतुर्थीव्रतं देवीपु० "माघमासे तु संप्राप्ते चतुर्थी कन्दुसंज्ञिता। सोपोष्या तु सुरश्रेष्ठ! ततो राज्यं भविष्यति। सर्वोपहारसम्पन्नं सर्वोपस्करमाहरेत्। कन्दुपक्वं फलं शाकं लवणं गुडशर्करा। वस्त्रं कुसुम्भरीं क्षीरं धान्यानि विविधानि च। दातव्यानि रघुश्रेष्ठ! कन्यकानान्तु भक्तितः"।

कपिलाषष्ठीव्रतं स्कन्दपु० "प्रौष्ठपदेऽसिते पक्षे षष्ठी भौमेन संयुता। व्यतीपातेन रोहिण्या सा षष्ठी कपिला स्मृता"। प्रौष्ठपदो, भाद्रपदश्च स चात्र दर्शान्तोपात्तः, रोहिणीयोगस्य तत्रैव सम्भवात्"।

"द्वितीया (कन्या) तु महापुण्या दुर्लभा व्रतिनः क्वचित्। षष्ठी संवत्सरस्यान्ते सा पुनर्योगसंयुता। चैत्रवैशाखयोर्मध्ये सिते पक्षे शुभोदया। वैशाखेऽपि च राजेन्द्र! द्वारवत्यां परा स्मृता। यदि स्यात् सहस्रांशुस्तदा कार्यं व्रतं बुधैः। कल्पां चैव कृतं दत्तं सर्वविश्रुत प्रतिपादितम्। तस्य धर्मस्य पुण्यस्य संख्यां वक्तुं न शक्यते। यस्मिन् काले भवेदेतैर्गुणैः षष्ठी युता तदा। पञ्चम्यामेकभक्तन्तु कुर्यात्तत्र विचक्षणः। षष्ठ्यां प्रातः समुत्थाय कृत्वादौ दन्तधावनम्" इत्यादि।

करणव्रतं ब्रह्माण्डपु० "शृणु राजन्! प्रवक्ष्यामि करणव्रतसत्तमम्। ववाख्यं बालवश्चैव कौलवन्तैतिलन्तरम्। वणिजं विष्टिरित्याहुः करणानि पुराविदः। फाल्गुने तु सम्प्राप्ते शुक्लपक्षे यदा भवेत्। ववाभिधानकरणमुपवासस्तदा भवेत्। एवं सप्त विधेयानि ववाद्यान्यथ सप्तमे। ववे तु करणे प्राप्ते पूर्वं पूर्वं समाचरेत्। ब्राह्मणान् भोजयेत्तत्र सप्तसंख्यान् सदक्षिणम्। अथैवं बालवादीनि विष्ट्यन्तानि यथाक्रमम्। उषित्वा सप्त सप्तैव पूर्वोक्तविधिना नृप!। समापनेद्व्रतं भूरिगोभूहेमादिदानतः। एवंकृते व्रते राजन्! राजसूयाश्वमेधयोः। समग्रं फलमाप्नोति सुखं कीर्त्तिं महाश्रियम्"।

कमलसप्तमीव्रतं मत्स्यपु० "अतःपरं प्रवक्ष्यामि व्रतं कमलसप्तमीम्। यस्य संकीर्त्तनादेव तुष्यतीह दिवाकरः। वसन्तामलसप्तम्यां स्नातः सन् गौरसर्षपैः। तिलपात्रे तु सौवर्णं निधाय कमलं रविम्। वस्त्रोपवीताभरणगन्धपुष्पैरथार्चयेत्"।

कल्किद्वादशीव्रतं धरणिव्रतोक्तम् "नभस्याद्रपदे मासि शुक्लपक्षे तु द्वादशीम्। सङ्कल्प्य विधिना देवमर्च्चयेत् परमेश्वरम्। नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम्। म्लेच्छप्रध्वंसनायेति जगन्मूर्त्तिं तथोदरम्। श्रीकण्ठायेति कण्ठन्तु खड्गपाणीति वै भुजौ। सुनाम्ना शङ्खचक्रे तु विश्वमूर्त्तेस्तथा शिरः। एवमभ्यर्च्य मेधावी प्रागवस्थापितो घटम्। विन्यस्य कल्किनं देवं सौवर्णं तत्र धारयेत्"।

कल्पवृक्षव्रतं पद्मपु० "मत्रकं पयोव्रते स्थित्वा काञ्चनं कल्पपादपम्। पलादूर्द्ध्वं यथाशक्त्या तण्डुलं प्रस्थसंस्थितम्"। प्रस्थं द्रोणद्वयम् "दत्त्वा ब्रह्मपदं याति कल्पवृक्षव्रतं स्मृतम्"।

कल्याणसप्तमीव्रतं पद्मपु० "सौरधर्मं प्रवक्ष्यामि पार्थ! कल्याणसप्तमीम्। तस्या विधानं वक्ष्यामि यथावदनुपूर्वशः। यदा तु शुक्लसप्तम्यामादित्यस्य दिनं भवेत्। सा तु कल्याणिनी नाम विजया च निगद्यते। प्रातर्गव्येन पयसा स्नानमस्यां समाचरेत्। शुक्लाम्बरधरः पद्ममक्षतैः परिकल्पयेत्। प्राङ्मुखोऽष्टदलं मध्ये तद्वृत्तश्च

भवेत्सुधीः । काकोव्रतमिदं ख्यातं कर्त्तव्यं सत्कुलो-द्भवैः” । काकराशि काकी ।

कालाष्टमीव्रतं वामनपु० “नभस्ये मासि च तथा या स्यात् कृष्णाष्टमी शुभा । युक्ता मृगशिरेणैव सा तु कालाष्टमी स्मृता । तस्यां सर्वेषु लिङ्गेषु तिथौ स्वपिति शङ्करः । वसन्तसन्निधाने तु तत्र पूजाऽक्षया स्मृता” । इदं व्रतं भाद्रादिवर्षसाध्यम् ।

कीर्त्तिव्रतं पद्मपु० “अश्वत्थं भास्करं गङ्गां प्रणम्यैकत्र वाग्यतः । एकभक्तं नरः कुर्य्यादब्दमेकं विमत्सरः । व्रतान्ते विप्रमिथुनं पूज्य धेनुत्रयान्वितम् । वृक्षं हिरण्मयं दद्यात् सोऽश्वमेधफलं लभेत् । दिवि देवविमानस्थो गीयतेऽप्सरसाङ्गणैः । एतत्कीर्त्तिव्रतं नाम भूतिकीर्त्तिप्रदायकम्” ।

कुक्कुटीव्रतं भविष्योक्तं २०६२ पृ० ति०त० द्रष्टव्यम् ।

कुबेरतृतीयाव्रतं भविष्यपु० “तृतीयायान्तु वित्तेशं वित्ताढ्यो जायते ध्रुवम्” । पूजयित्वेति शेषः “क्रयादिव्यवहारे च लाभो द्विगुणो भवेत्” ।

कुमारषष्ठीव्रतं कालोत्तरोक्तम् । “चैत्रशुक्लात् समारभ्य व्र-तार्थमधुनोच्यते । उपोष्य विधिना षष्ठीं विशेषात् षण्-मुखं यजेत्” ।

कृष्णीव्रतं स्कन्दपु० “एकादश्यां कार्त्तिकस्य शुक्लपक्षे तु कारयेत् । कुष्माण्डिनरकेभ्यस्तु उद्धरेत् स्वमेधतः । म-यत्नात् कार्त्तिके मासि विष्ण्वग्रे तु जागरम् । सप्त-कलेकादशीं रात्रौ विशेषाद्दर्शयन्ति च । चतुरङ्गं चतु-द्वारं गोमयेनोपलिप्य च । चतुर्भिः शालिनोधूमवर्णकै-रुपशोभितम् । स्नात्वा नारायणं पूज्य स्वस्तिके प्रति-ष्ठाप्य च । कृत्वा दिशां बलिं दत्त्वा विधानमवधारयेत् । दीपमालान्वितं गन्धपुष्पाद्यैः पूजयेत्ततः । कृष्णीं देव-मर्चीं ध्यात्वा मुच्यते सर्वकिल्बिषैः” ।

कूर्मद्वादशीव्रतं वराहोक्तम् “पौषमासस्य या पुण्या द्वादशी शुक्लपक्षतः । तस्यां प्रागेव सङ्कल्पं कुर्य्यात् स्नानादिकाः क्रियाः । निर्वर्त्याराधयेद्धीमानेकादश्यां जनार्दनम् । पृथङ्मन्त्रैर्हि अच्युत ! देवदेवं जनार्दनम् । कूर्माय पादौ प्रथमन्तु पूज्य नारायणायेति कटिं हरेस्तु । सङ्कर्षणायेत्युदरं हरेस्तु उरो विशोकाय भवाय क-ण्ठम् । सुबाहवे चैव भुजौ शिरश्च नमो विशालाय रथाङ्गयुक्तौ । स्वनाममन्त्रैश्च सुधूपगन्धैर्नानाविधैर्नैवेद्यै-र्विविधैः फलैश्च । अभ्यर्च्य देव कलशं तदग्रे संस्थाप्य माल्याम्बराद्यमलङ्कृतम् । तं रत्नगर्भन्तु पुरैव कृत्वा स-मन्वितो हेमयवस्य देवम् । समन्दरं कूर्मरूपेण कृत्वा संस्थापयेत्ताम्रपात्रे घृतस्य । पूर्णे घटे पश्य च सन्निवे-श्याथो माल्यवाधैश्च वस्त्रं तु दद्यात्” । एतच्च पूर्वं ता-म्रपात्रे समन्दरं कूर्मरूपं निधाय घटोपरि निवेश्य प्रभाते दद्यादित्यर्थः” ।

कृच्छ्रव्रतानि विष्णुरहस्ये “सुपुण्ये कार्त्तिके मासि देवर्षि-पितृसेविते । कृच्छ्रमात्रे व्रते नृणां स्वल्पेऽपि स्यान्महा-फलम् । अतः सम्वत्सरः पुण्यस्तस्मादपि तु पूजितः । तथैवाः कार्त्तिकः पुण्यः कार्त्तिकान्नीचपञ्चकम् । नैवेद्यं पुष्पधूपञ्च चन्दनं सुविलेपनम् । दत्त्वैकका-र्त्तिके विष्णोः फलं सांवत्सरं लभेत् । अतः कार्त्ति-कमासाद्य यदेव शुभकाङ्क्षिभिः । परिगृह्य कर्त्तव्यं यथाशक्त्या सुचरं व्रतम् । कार्त्तिकस्यासिते पक्षे यावु-भयावतर्दशीम् । सतपोऽत्र नरो भक्त्या पूजयेद् गरु-डध्वजम् । उपवासस्तु कर्त्तव्यो वारिमध्ये स्थितेन च । जलकृच्छ्रमिदं कृत्वा विष्णुलोकं व्रजेन्नरः । दशम्यां प-ञ्चगव्याशी एकादश्यामुपोषितः । अर्चयेदच्युतं देवं नियतश्च व्रतञ्चरेत् । कार्त्तिकस्यासिते कृत्वा नरो देव-व्रतञ्चरेत् । दामोदरं समभ्यर्च्य देवो वैमानिको भवेत् । पयः क्षीरं दधि घृतं सप्तम्यादिचतुर्दिनम् । कार्त्तिक-स्यासिते पीत्वा एकादश्यामुपोषितः । कृच्छ्रं पैतामहं नाम कुर्वन् संपूजयेद्धरिम् । प्राप्नोति परमं विष्णोः स्थानं त्रैलोक्यपूजितम् । त्रिरात्रं त्र्यहः पाकमुपवास-परश्च च । पद्मादौ कार्त्तिके शुक्ले कृच्छ्रो माहेन्द्र उच्यते” इत्यादि ।

कृच्छ्रचतुर्थीव्रतं स्कन्दपु० “मार्गशीर्षे शुभे मासि सिते पक्षे तु चण्मुखम् । चतुर्थ्यां नियमं कृत्वा विघ्नेशं पूज्य भक्तितः । पुष्पैर्गन्धैश्च नैवेद्यैः लड्डुकैश्च सुसं-स्कृतैः । पञ्चवैकारपटैश्च तथा षोडशकैः प्रभुम् । पूजयित्वा विधानेन प्रार्थयेत्तत्र मानवः” ।

कृत्तिकाव्रतं भविष्योत्तरोक्तम् । “कार्त्तिक्यां पौर्णमास्यान्तु कुर्य्याच्च कृत्तिकाव्रतम् । षट् मासांस्तु व्रतं याव-दिदं सञ्चिन्त्य चेतसि । पारणे पारणे चापि पुराणज्ञे द्विजोत्तमे । प्रदापयं प्रयच्छत यथा विभवसारतः । कृत्तिकासु स्वयं सोमः कृत्तिकासु वृहस्पतिः । यदा स्यात् योगसारेण सा महाकार्त्तिकी स्मृता । देवानां बहुभि-र्वर्षैर्बहुपुण्यैर्न लभ्यते । तथापि न तथा नेया च-

पुत्रो भवेत् । पुत्रवान् देवलोकेषु पूज्यो भवति मानवः"। इति ब्रह्मे "श्रावण्यां समतीतायां प्रतिपत्प्रभृति क्रमात्। पूर्ववत् पूजयेद्विष्णुं देवं सङ्कर्षणं विभुम्" इत्यादि।

धन्यव्रतं वराहपु० "अथातः सम्प्रवक्ष्यामि धन्यव्रतमनुत्तमम्!। येन सद्यो भवेद्धन्यो ह्यधन्योऽपि हि यो भवेत्। मार्गशीर्षेऽमले पक्षे प्रतिपद्या तिथिर्भवेत्। तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुञ्च पूजयेत्" इत्यादि।

धराव्रतं पद्मपु० "यो विंशतिपलादूर्द्ध्वं धरीं कृत्वा तु काञ्चनीम्। दिनं पयोव्रतं दद्याद्रुद्रलोके महीयते। धराव्रतमिदं प्रोक्तं सप्तकल्पशतानुगम्"। दिनं देवाभ्युत्तरायणम्। पयोव्रतमित्यनन्तरं कृत्वेत्याद्यपाठः। अत्रो देवता धरादानं पारणम्" इत्यादि.

धर्मव्रतं विष्णुधर्म्मोत्तरे "शुक्लपक्षे दशम्यां तु सोपवासस्तु मानवः। धर्मं सम्पूजयेद्देवं सर्वलोकसुखावहम्"।

धान्यव्रतं स्कन्दपु० "अथातः संप्रवक्ष्यामि धान्यव्रतमनुत्तमम्। यत् कृत्वा हि नरो राजन्! सर्वकामानवाप्नुयात्। अयने विषुवे चैव स्नानं कृत्वा विचक्षणः। व्रतस्य नियमं कुर्य्याद्ध्यात्वा देवं दिवाकरम्। हविष्याशी ततो दद्याद्धान्यप्रस्थं द्विजातये। प्रतिमासं कुर्व्वतस्तु पूज्यो देवः सदक्षपात्। एवं सदा प्रदातव्यं धान्यप्रस्थं दिनक्षये। एवं संवत्सरे पूर्णे कुर्य्यादुद्यापनक्रियाम्"।

धान्यसप्तमीव्रतं भविष्यपु० "संपूज्य सितसप्तम्यां भानुं धान्यानि सप्त च। ददाति नक्तभुक् पात्रं कलशेन समन्वितम्"। पात्रं स्नानोपकरणम् "स तारयति सप्तान्यान् कुल्यानात्मानमेव च। सुत! धान्यव्रतं नाम व्रतं धान्यसुखप्रदम्"।

धामत्रिरात्रव्रतं पद्मपु० "त्रिरात्रोपोषितो दद्यात् फाल्गुन्यां भवनं शुभम्। आदित्यलोकमाप्नोति धामव्रतमिदं स्मृतम्"।

धाराव्रतं भविष्योत्तरोक्तम् "चैत्रारम्भात् पिबेच्चीयज्जलधारां प्रपातयेत्। वर्षान्ते घृतसंपूर्णान्दद्याद्दश नियां सदाम्। घृतधाराव्रतं नाम सर्वोद्वेगहरं परम्। कान्तिसौभाग्यजननं सपत्नीदर्पनाशनम्"।

जिनवमीव्रतं भविष्योत्तरे "पौषस्य शुक्लपक्षे तु नवमी शङ्करी स्मृता। तस्यां स्नात्वा शुभैः पुष्पैरर्च्चनीया करैः सदा। कुमारी भगवान् देवी सिंहस्कन्धनगामिनी। ध्वजान् नानाविधान् कृत्वा पुरतश्चापि पूजयेत्। पाशतोऽङ्कुशमेदीपैर्गन्धधूपविलेपनैः। बलिभिः पशुभिर्मेध्यैः सुरामांसफलैरपि। दधिचन्दनचूर्णैश्च फलैश्चानग्निपाचितैः। देवीं सर्वमयीं कृत्वा सिंहारूढां चतुर्भुजाम्। खड्गपात्रधरां शूलधरां नेत्रत्रयान्विताम्"। (पूजयेत्)

ध्वजव्रतं विष्णुधर्मोत्तरोक्तम् "चैत्रे तु प्रत्यहं मासि गरुडं पूजयेन्नरः। पीतेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज!। वैशाखे च तथा मासि तालं संपूजयेत्सदा। नीलेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज!। ज्यैष्ठे च प्रत्यहं मासि मकरं पूजयेत् सदा। श्वेतेन गन्धनैवेद्यमाल्यवस्त्रादिभिर्द्विज!। ऋश्यं संपूजयेद्देवं आषाढाद्ये यथाविधि। रक्तेन गन्धनैवेद्यमाल्यवस्त्रादिना द्विज!। बहिः स्नानं तथा कुर्य्याद्वह्निसंपूजनं तथा। नित्यञ्च कुर्य्याद्धर्मज्ञ! तथा ब्राह्मणभोजनम्। पारणार्थं तथा कुर्य्यान्नक्तं तैलविवर्जितम्। अधःशायी तथा च स्याद् ब्रह्मचारी सदा भवेत्। व्रतमेतन्नरः कुर्य्यात् सम्यङ्मासचतुष्टयम्। ब्राह्मणान् पूजयेत्पश्चात् आषाढे चरमेऽहनि। वस्त्राण्युग्राणि धर्मज्ञ! दद्याद्विप्रे तु दक्षिणाम्। कृत्वैकं पारणं राजन्! स्वर्गलोके महीयते। द्वितीयं पारणं कृत्वा शक्रलोके महीयते। तृतीयं पारणं कृत्वा ब्रह्मलोके महीयते। कृत्वा तुर्य्यं पारणन्तु रुद्रलोके महीयते। विष्णुलोकमवाप्नोति कृत्वा द्वादशपारणम्। ध्वजव्रतं द्वादश वत्सराणि कृत्वा नरो भार्गववंशमुख्य!। सायुज्यमायाति जनार्दनस्य देवस्य विष्णोः परमेश्वरस्य"।

नक्तचतुर्थीव्रतं स्कन्दपु० "विनायकचतुर्थ्यास्तु व्रतं वक्ष्यामि तेऽनघ!। धन्यं यशस्यमायुष्यं समीहितफलप्रदम्। विघ्नापशमनायालं सर्वसिद्धिप्रदायकम्। सिद्धं गणपतेर्नित्यमृषिभिश्चाप्युपासितम्। मार्गशुक्लचतुर्थ्यान्तु प्राज्ञं व्रतमिदं चरेत्। नक्ताहारेण विप्रेन्द्र! तिलाद्यं पारणं स्मृतम्। तदेव वह्नौ होतव्यं ब्राह्मणाय ददेत् सदा। वर्षान्ते यदि वा कैकं विघ्नराजाय संयमी। पूजयेद् गणपतिं रात्रौ गन्धैः पुष्पैर्यथाक्रमम्"

नक्षत्रपुरुषव्रतं मत्स्यपु० "नक्षत्रपुरुषं नाम व्रतं नारायणात्मकम्। पादौ हि कुर्य्याद्विधिवद्विष्णुनामानि कीर्त्तयेत्। प्रतिमां वासुदेवस्य मूलर्क्षाद्यभिपूजयेत्। चैत्रमासे समारभ्य कृत्वा ब्राह्मणवाचनम्। मूले नमो विश्वधराय पादावनन्तदेवाय च रोहिणीषु। जङ्घे च पूज्ये वरदाय चैव द्वे फाल्गुनी चाश्विकुमारकर्त्त्रे। पूर्वोत्तराषाढयुगे च जानू नमः शिवायेत्यभिपूजनीये" इत्यादि।

नक्षत्रार्चव्रतं देवीपु० "अतःपरं प्रवक्ष्यामि रूपसौभाग्यकारकम्। नक्षत्रविधिना वत्स! यथा तुष्यति शङ्करी। मृगादारभ्य मूलेन पादौ जातिफला पुरा। पूजयेत्सोपवासस्तु नक्षत्रान्ते तु पारणम्। यवान्नं हविषा सिद्धं ब्राह्मणे अह्नि प्रपूजयेत्" इत्यादि।

नदीव्रतं विष्णुधर्मोत्तरे "चैत्रशुक्लादथारभ्य प्रत्यहं दिनसप्तकम्। नलिनीं ह्लादिनीं चैव पावनीं चैव पूजयेत्। सीतां चक्षुं तथा सिन्धुं तथा भागीरथीं क्रमात्। बहिःस्नानं तथा कुर्यान्नित्यं नक्ताशनो भवेत्। जले च जुहुयात् क्षीरं स्नातात्मा च दिने दिने। क्षीरपूर्णाश्च दातव्या वारिधान्यो द्विजातिषु। क्षीराशनश्च तिष्ठेत तथा दिनसप्तकम्। एवं संवत्सरं कृत्वा पूर्णे संवत्सरे नरः। द्विजातिषु ततो दद्याद्रजतस्य घटं शुभम्। फाल्गुनस्यासिते पक्षे सप्तम्यां दिवसे क्रमात्। तं लोकमवाप्नोति नरो यत्र पापकर्दमाः" इत्यादि।

नन्दव्रतं विष्णुधर्मोत्तरे "शुक्लपक्षे महाराजं नवम्यामुपोषितः। फाल्गुनात्तु समारभ्य नित्यं संपूजयेन्नरः"। महाराजस्तु धनदम्। "गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा। सुवर्णं ब्राह्मणेन्द्राय व्रतान्ते प्रतिपादयेत्। कृत्वा व्रतं वत्सरमेतदिष्टं पार्थिव राजन्! सुचिरं सुखोष्य। आढ्यत्वमासाद्य धनान्वितः स्यात् सौभाग्ययुक्तश्च तथा विरोगः"।

नन्दादित्यव्रतं भविष्योत्तरे "यस्त्वादित्यमहेशस्य वारो देवस्य सुव्रतः। पूजयेत् स प्रियो नित्यं स्नातो गोमुतिभूषणः(शिवः)। यस्तु संपूजयेन्नित्यं पतङ्गं पद्मगाधिपम्। गन्धपुष्पादिधूपैस्तु स्तोत्रैर्वा विविधैस्तथा। सोपवासो महाराज! आदित्यमहेशे शुचिः। जपमानो महाश्वेतां गणाध्यक्षमहाधिपम्। ब्राह्मणान् भोजयित्वा तु ततो भुञ्जीत वाग्यतः। आदित्यमहेशयुक्तेऽस्मिन् वारे त्रिपुरसूदनः। तत्र कृतं व्रतं पुण्यं तत्सर्वं सुखदं भवेत्"।

नन्दाव्रतं देवीपु० "मासे नभसि संप्राप्ते ब्रह्मचारी जितेन्द्रियः। प्रातःस्नायी सदाध्यायी अग्निकार्यपरायणः। देवीं संपूजयेद्वत्स! बिल्वपुन्नागचम्पकैः। धूपन्तु गुग्गुलं दद्यान्नैवेद्यं घृतपाचितम्। क्षीरान्नं दधिभक्तञ्च अथवा शाकयावकम्। जपञ्च कुर्यान्मन्त्रस्य सहस्रमथवा शतम्। देव्यास्तत्र समर्प्यैतत् यावत् पूर्णं व्रतम्भवेत्"।

नन्दसप्तमीव्रतं भविष्योत्तरे "या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी। नन्दा सा कथिता वीर! सर्वानन्दकरी शुभा। पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्त्तितम्। सप्तम्यामुपवासञ्च कीर्त्तयन्ति मनीषिणः। मालतीकुसुमानीह सुगन्धं चन्दनं तथा। कर्पूरागुरुसंमिश्रं धूपञ्चात्र विनिर्दिशेत्। दध्योदनं सघृतञ्च नैवेद्यं भास्करप्रियम्। तदेव दद्याद्विप्रेभ्यो ह्यश्नीयाच्च स्वयं तथा"।

नयनप्रदसप्तमीव्रतं भविष्यपु० "यो मार्गशीर्षे सितसप्तमेऽह्नि हस्तर्क्षयोगे जगतः प्रसूतिम्। संपूज्य भानुं विधिनोपवासी स्रग्गन्धधूपान्नवनोपहारैः। गृहीतगव्यप्रतिपक्षपूजादानादियुक्तं व्रतमब्दमेकम्" इत्यादि।

नरकपूर्णिमाव्रत विष्णुधर्मोत्तरोक्तम् "प्रतिमासन्तु नामानि पञ्चदश्यां जगत्पतेः। व्रतोपवासः सुस्नातः पूजयित्वा जगद्गुरुम्। उच्चारयन्नरो याति नरकं नैव गच्छति। यद्वा मासगतं नाम प्रीयतामिति कीर्त्तयेत्। केशवं मार्गशीर्षे तु पौषे नारायणं तथा। माधवं माघमासे तु गोविन्दमपि फाल्गुने। चैत्रे विष्णुं वैशाखे कीर्त्तयेन्मधुसूदनम्। ज्यैष्ठे त्रिविक्रमं देवं तथाषाढे च वामनम्। श्रीधरं श्रावणे मासि हृषीकेशं ततःपरम्। नाम भाद्रपदे तद्वत् ध्यायते पुण्यकाङ्क्षिभिः। तद्वदश्वयुजे मासि पद्मनाभेति कीर्त्तयेत्। दामोदरं कार्त्तिके च सर्वान्तरति दुर्गतिम्। एवं मासक्रमेणैव यदि दातुं न शक्यते। तदा संवत्सरस्यान्ते दद्याच्चैव समागतम्"।

नरसिंहचतुर्दशीव्रतं नरसिंहपु० "वैशाखशुक्लपक्षे तु चतुर्दश्यां समाचरेत्। मज्जन्मसम्भवं पुण्यं व्रतं पापप्रणाशनम्। वर्षे वर्षे तु कर्त्तव्यं मम सन्तुष्टिकारकम्। महागुह्यमिदं श्रेष्ठं मानुषैर्भवभीरुभिः। तेनैव क्रियमाणेन सहस्रद्वादशीफलम्। जायते मत्सखा मध्ये मानुषाणां महात्मनाम्। स्वातीनक्षत्रयोगेन शनिवारेण संयुते। सिद्धियोगस्य संयोगे वाणिजे करणे तथा। पुंसां सौभाग्ययोगेन लभ्यते दैवयोगतः। सर्वैरेतैस्तु संयुक्तं हत्याकोटिविनाशनम्। एतदन्यतरे योगे तद्दिनं पापनाशनम्। केवले तत् प्रकर्त्तव्यं मद्दिने व्रतमुत्तमम्। अन्यथा नरकं याति यावच्चन्द्रदिवाकरौ। यथा यथा प्रवृत्तिः स्यात् पातकस्य कलौ युगे। तथा तथा प्रणश्यन्ति तद्व्रतस्य प्रभावतः। मद्व्रतस्य प्रभावेण मतिर्न स्याद् दुरात्मनाम्। विचार्येत्थं प्रकर्त्तव्यं माधवे मासि मद्व्रतम्"।

कृत्वा दन्तधावनं तु स्वपेद्रात्रौ जितेन्द्रियः । ततः प्रभाते विमले कारयित्वा तु काञ्चनम् । कमलञ्च फलन्त्वेकं यथाशक्त्या शाठ्यवर्जितः । ततस्तु सङ्गमे स्नातो मध्याह्ने कृतनिश्चयः । आगत्य भवनं देवं पूजयित्वा जगद्गुरुम् । कृत्वा तु कमलं पात्रे सफलं शर्करान्वितम् । ओदनान्तरे स्वर्णमये वा यथाशक्त्या कुरूत्तम ! । पूजयेत् पुष्पधूपाद्यैर्नैवेद्यैर्विविधैः फलैः” इत्यादि ।

फलसंक्रान्तिव्रतं स्कन्दपु० “अथान्यामपि ते वच्मि फलसंक्रान्तिमुत्तमाम् । संक्रान्तिवासरं प्राप्य स्नानं कृत्वा तु पूर्ववत् । संपूज्य पूर्ववद्भानुं पुष्पधूपादिना तथा । शर्करापूरितं पात्रं फलाष्टकसमन्वितम् । संक्रान्तिवासरं प्राप्य ब्राह्मणाय निवेदयेत् । तदन्ते तु रविं कुर्य्यात् सुवर्णेन च नारद ! । कुम्भस्योपरि संस्थाप्य गन्धपुष्पैः प्रपूजयेत् । फलाष्टकं ततो दद्याद् भक्ष्यभोज्यसमन्वितम्” ।

फलसप्तमीव्रतं भविष्यपु० “अथ भाद्रपदे मासि सिते पक्षे महीपते ! । कृत्वोपवासं सप्तम्यां विधिवत् पूजयेद्रविम् । माहेश्वरेण विधिना पूजयेदथ भास्करम् । अष्टम्यां तु पुनः प्रातः पूजयित्वा दिवाकरम् । दद्यात् फलानि विप्रेभ्यो मार्त्तण्डः प्रीयतामिति । खर्ज्जूरं नारिकेलञ्च मातुलुङ्गफलानि च । ब्राह्मणान् भोजयित्वा तु फलाहारः स्वयं भवेत् । पूर्व्वमेकन्तु समादाय उत्तमं फलमादरात् । मन्त्रेण भरतश्रेष्ठ ! ततः शेषाणि भक्षयेत्” । पद्मपु० “अन्यामपि प्रवक्ष्यामि नाम्ना तु फलसप्तमीम् । यामुपोष्य नरः पापैर्विमुक्तः स्वर्गभाग्भवेत् । मार्गशीर्षे शुभे मासि पञ्चम्यां नियतव्रतः । षष्ठ्यामुपोष्य कमलं कारयित्वा तु काञ्चनम् । शर्करासंयुतं दद्यात् ब्राह्मणाय कुटुम्बिने । रूपन्तु काञ्चनं कृत्वा फलस्यैकस्य धर्म्मवित् । दद्याद्विकालवेलायां भानुर्मे प्रीयतामिति । भक्त्या तु विप्रान् संपूज्य सप्तम्यां क्षीरभोजनम् । कृत्वा कुर्य्यात् फलत्यागं यावत्स्यात् कृष्णसप्तमी । तामुपोष्य विधिं कुर्य्यादनेनैव क्रमेण तु । तद्वद्धेमफलं दद्यात् सुवर्णकमलान्वितम् । शर्करापात्रसंयुक्तं वस्त्रमालाविभूषितम् । संवत्सरमनेनैव विधिनोभयसप्तमीम् । उपोष्य दद्यात् क्रमशः सूर्य्यमन्त्रमुदीरयेत्” इत्यादि ।

फाल्गुनव्रतं महाभारते “भगदैवन्तु यो मासमेकभक्तेन निक्षिपेत् । ऐश्वर्य्यमतुलं चोग्रं पुमान् स्त्री वा प्रपद्यते । स्त्रियो वल्लभतां यान्ति तस्माच्चैव भवन्ति ते” । विष्णुधर्म्मे “क्षपयेदेकभक्तेन शुक्लपूर्व्वस्य फाल्गुने” । शुश्रूषुः विष्णुशुश्रूषापरः “सौभाग्यं स्वजनानाञ्च सर्व्वासामेव कीर्त्तितः । अहिंसः सर्व्वभूतेषु वासुदेवपरायणः । नमोऽस्तु वासुदेवायेत्यष्टोत्तरशतं जपेत् । अतिरात्रस्य यज्ञस्य ततः फलमवाप्नुयात्” ।

वाणिज्यलाभव्रतं विष्णुधर्म्मोत्तरे “काम्यं कर्म्म समाचक्ष्व वाणिज्यं येन सिध्यति । कथञ्च बहुलाभश्च कर्म्मणा केन वाप्यते” । पुष्कर उवाच “मूलेनोपोषितः कुर्य्यादिदं कर्म्म पुरोहितः । उपोषितस्य धर्म्मज्ञ ! यजमानस्य नित्यशः । प्राप्तासु पूर्व्वाषाढासु प्राङ्मुखं स्नापयेन्नरम् । कुम्भैर्वैतसमूलैश्च शङ्खमुक्ताफलैस्तथा । रश्मिभिश्च यथालाभं कनकेन तथैव च । अकालमूलैः कलशैश्चतुर्भिर्भृगुनन्दन ! । कृत्वैतत् सिद्धिमाप्नोति वाणिज्ये नात्र संशयः । समुद्रयाने च तथा कर्षणे च न सीदति । गीतानि सप्त वासांसि दक्षिणा चात्र गद्यते । शङ्खं सुवर्णं रूप्यञ्च तथा मुक्ताफलानि च । हैमं कांस्यं द्विजेभ्यस्तु सर्व्वमेतद्विधीयते” ।

बुद्धद्वादशीव्रतं धरणीव्रते “एवमेव श्रावणे तु मासि संकल्प्य द्वादशीम् । अर्च्चयेत् परमेशानं गन्धपुष्पनिवेदनैः । बुद्धाय पादौ संपूज्य श्रीधरायेति वै कटिम्” । “एवमभ्यर्च्च्य मेधावी तस्याग्रे पूर्व्ववद्घटम् । स्थापयेत्तत्र सौवर्णं बुद्धं कृत्वा विचक्षणः” । बुद्धस्वरूपमुक्तं पुराणान्तरे “बुद्धस्तु द्विभुजः कार्य्यो ध्यानस्तिमितलोचनः” इति । “तमभ्यर्च्च्य तु संपूज्य ब्राह्मणाय निवेदयेत् । अनेन विधिना पूर्व्वं द्वादशी समुपोषिता । शुद्धोदनेन, बुद्धोऽभूत् स्वयं पुत्रो जनार्द्दनः । महतीञ्च श्रियं प्राप्तः पुत्रपौत्रसमन्वितः । भक्त्या राज्यश्रियं सोऽथ गतिं परमिकां गतः” ।

बुधव्रतं भविष्योत्तरे “विशाखासु बुधं प्राप्य सप्त नक्तानि चाचरेत् । बुधं हेममयं कृत्वा स्थापितं कांस्यभाजने । शुक्लमाल्याम्बरधरं शुक्लगन्धानुलेपनम् । गुडौदनोपहारन्तु ब्राह्मणाय निवेदयेत्” ।

बुधाष्टमीव्रतं भविष्योत्तरे “शृणु पाण्डव ! यत्नेन बुधाष्टम्यां विधिं शुभम् । यदा यदा सिताष्टम्यां बुधवारो भवेद्यदि । तदा तदैव सा ग्राह्या एकभक्ताशनैर्नृभिः । स्नात्वा नद्यां तु पूर्व्वाह्णे गृहीत्वा करकं नवम् । जलपूर्णं सहेमं च कृत्वा धान्यैः समन्वितम् । दद्याद्विप्राय तं गत्वा अष्ट चैव क्रमेण तु । अष्टम्यष्टविधानेन विधिमासैः पृथक् पृथक् । प्रथमा मोदकैर्भक्ष्यैः द्वितीया धानकैस्तथा । तृतीया घृतपूरैश्च चतुर्थी वटकैरपि ।

नरोत्तम !" । पुष्कर उवाच "पूर्वोत्तरे तु दिग्भागे विलिखेत् वास्तुमनोहरे । भद्रकालीं महच्छृङ्गं त्रिपाणवस्रैः करद्वृतम् । भद्रकालीं पटे कृत्वा तत्र सम्पूजयेद् द्विज !"।

भद्रचतुष्टयव्रतं भविष्यपु० "शृणु राजन्नवहितो भद्राणां विस्तरं परम् । कथयिष्ये न कथितं यन्मया कस्यचित् पुरा । शुक्ला मार्गशिरस्यादौ चतस्रस्तिथयो वराः । द्वितीया च तृतीया च चतुर्थी पञ्चमी तथा । एकभक्ताशनस्तिष्ठेत् प्रतिपदि जितेन्द्रियः । प्रभाते तु द्वितीयायां कृत्वा सत् सरस्वीयकम् । प्रहरे वै समधिके गते स्नानं समाचरेत् । तद्वोमजं तु संस्थाप्य मन्त्रैरेभिर्विचक्षणः" । "स्नात्वा चैव ततो नाम द्वितीयादौ चतुर्दिने । नमः कृष्णाच्युतानन्त हृषीकेशेति च क्रमात् । चतुर्दिने द्वितीयादिदेवमभ्यर्चयेद् व्रती । प्रथमेऽह्नि स्मृता पूजा पादयोः कमलार्चनैः । नाभिपूजा द्वितीयेऽह्नि कर्त्तव्या विविधाम्बरैः । तुरीयहस्ततीयेऽह्नि पूजां वक्षसि विन्यसेत् । चतुर्थेऽह्नि जगन्नाथः पूजां शिरसि विन्यसेत्" इत्यादि ।

भद्रातृतीयाव्रतं पद्मपु० "कार्त्तिकादि तृतीयायां प्राश्य गोमूत्रयावकम् । नक्तञ्चरेदब्दमेकं तदन्ते गोप्रदो भवेत् । गौरीलोके वसेत् कल्पं ततो राजा भवेदिह । एतद्ध भद्राव्रतं नाम सर्वकल्याणकारकम्" ।

भद्रासप्तमीव्रतं भविष्यपु० "शुक्लपक्षे तु सप्तम्यां यदाह्न संविहुर्भवेत् । तदा प्राप्यमयोरेव यदा तां भद्रतां व्रजेत् । हविर्द्वन्दखात्म हुत्वा । "चतुर्थ्यामेकभक्तन्तु पञ्चम्यां नक्तमादिशेत् । षष्ठ्यामयाचितं प्रोक्तं उपवासस्ततः परम्" । "अनेन विधिना यस्तु कुर्य्याद्वै भद्रसप्तमीम् । भद्रा ददाति सप्तम्यां भद्रं तस्य व्रतं भवेत् । तस्य भद्राः सर्व एव गच्छन्ति भ्रातरः सदा । तदर्यक्षः फलं तस्यां विधिना केन दीयते । श्वोमभद्रमिति प्रोक्तं देवपिच्छं मनोरमम् । शालिपिष्टमयं प्रोक्तं चतुःकोणं मनोरमम् । गव्येन सर्पिषा युक्तं खण्डशर्करयान्वितम् । चतुर्जातकचूर्णेन द्राक्षाभिश्च विशेषतः" ।

भवानीतृतीयाव्रतं इन्द्रपु० "आलेपनञ्च यः कुर्य्यात् तृतीयायां शिवालये । समान्ते धेनुदो याति भवानीव्रतमित्युत" ।

भवानीव्रतं विष्णुपु० "पौर्णमास्याममावस्यां वर्षमेकमतन्द्रिता । उपवासरता नारी नरो वा द्विजसत्तमाः ! । वर्षान्ते सर्वगव्याद्यां प्रतिमाञ्च निवेदयेत् । सा भवान्यास्तु सायुज्यं सारूप्यं वाथ सुव्रता । लभते नात्र सन्देहः सत्यं सत्यं मुनीश्वराः !"

भाद्रपदव्रतं महाभारते "प्रौष्ठपादन्तु यो मासमेकाहारो भवेन्नरः । धनाढ्यस्फीतमतुलमैश्वर्य्यं प्रतिपद्यते । राजसूयस्य यज्ञस्य फलं दशगुणं लभेत्" ।

भानुव्रतं पुष्पपु० "सप्तम्यां नक्तभुक् दद्यात्समान्ते गां सकाञ्चनाम् । सूर्य्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम्" ।

भास्करव्रतं कालिकापु० "कृतोपवासः षष्ठ्यान्तु सप्तम्यां यस्तु मानवः । करोति विधिवत् श्राद्धं भास्करः प्रीयतामिति । सर्वरोगविनिर्मुक्तः स्वर्गलोकमवाप्नुयात्" ।

भीमद्वादशीव्रतं पद्मपु० "यद्यष्टम्यां चतुर्दश्यां द्वादश्यामथ भारत ! । अन्येष्वपि दिनर्क्षेषु न शक्तस्तदुपोषितुम् । ततः पुण्यामिमां भैमीं सर्वपापप्रणाशनीम् । उपोष्य विधिमानेन गच्छ विष्णोः परं पदम् । माघमासस्य दशमी यदा शुक्ला भवेत्तदा । घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं समाचरेत् । तथैव विष्णुमभ्यर्च्य नमो नारायणेति च" इत्यादि । "शृणु राजन् ! प्रवक्ष्यामि व्रतानामुत्तमं व्रतम् । यामुपोष्य न दुःखानां भाजनं भजते जनः । माघमासे सिते पक्षे द्वादशी पावनी स्मृता । तस्यां समाहृतस्तत्र उपोष्य कृपाभाग् भवेत्" । "भीमाख्या द्वादशी चेति ख्याता नरा यतः । एषा पुण्यप्रमुनिना कथिता कुरुनन्दन ! । यथैनां कथितां यत्नात् कुर्य्याद्वा भक्तिभावतः । सर्वपापविनिर्मुक्तो विष्णुलोके महीयते । दरिद्रेणापि वा पार्थ ! वित्तशाठ्यं विवर्जयेत् । विष्णुभक्तेन कर्त्तव्या संसारभयभीरुणा । भीमेन या कृता पुरा समुपोषितसाङ्गाली गतवृष्टिरनुमीतवारिधारा । तां द्वादशीं त्रिदशवेद्यसुधां चरेद् यः सम्यक् समाचरति याति स विष्णुलोकम्" ।

भीमव्रतं पद्मपु० "मासोपवासी यो दद्याद्धेनुं विप्राय शीलिनाम् । स ईश्वरपदं याति भीमव्रतमिदं स्मृतम्" ।

भीष्मपञ्चकव्रतं नारदपु० "प्रवक्ष्यामि महापुण्यं व्रतं व्रतवतां वर ! । भीष्मेणैतद्यतः प्राप्तं व्रतं पञ्चदिनात्मकम् । सकाशाद्वासुदेवस्य तेनोक्तं भीष्मपञ्चकम् । व्रतस्यास्य गुणान् वक्तुं कः शक्तः केशवादृते । व्रतञ्चैतन्महापुण्यं महापातकनाशनम् । अतो नरैः प्रयत्नेन कर्त्तव्यं भीष्मपञ्चकम् । कार्त्तिकस्यामले पक्षे स्नात्वा सम्यग्यतव्रतः । एकादश्यान्तु गृह्णीयाद् व्रतं पञ्चदिनात्मकम् । प्रातः स्नात्वा विधानेन मध्याह्ने च तथा व्रती । नद्यां निर्झरगर्त्ते वा समादाय तु गोमयम् । यवव्रीहितिलैः सम्यक

अनेन विधिना स्नात्वा पूजयेद्व्रतमत्सरा" इत्यादि ।

वरचतुर्थीव्रतं स्कन्दपु० "चतुर्थ्यां मार्गशीर्षे तु शुक्लपक्षे भटोत्तम ! । प्रारभ्य प्रतिमासञ्च चतुर्थ्यां गणनायकम् । संपूज्य विधिना कुर्य्यादेकभक्तं समाहितः । अथारब्धं त्वेवं पूर्णसंवत्सरे ततः । द्वितीये वत्सरे चाथ नक्तं प्रतिचतुर्थि च । कुर्य्याद्गणेशमभ्यर्च्य तृतीयेऽयाचितं तथा । एवमेव प्रकुर्वीत चतुर्थे स्यादुपोषणम् । ततश्चतुर्थं संप्राप्य तदुद्यापनमाचरेत् । इदं वरचतुर्थ्याख्यं व्रतं सर्वार्थसाधकम्" ।

वरव्रतं पद्मपु० "त्रिरात्रोपोषितो दद्यात् हेमकुम्भं द्विजातये । वरव्रतमिदं प्रोक्तं ब्रह्मलोकप्रदायकम्" ।

वराटिकासप्तमीव्रतं भविष्यपु० "या काचित् सप्तमी प्रोक्ता ततो वक्ष्यामि शोभनम् । वराटिकात्रयक्रीतं यत् किञ्चित् प्राप्यते नरः । अनेन देहि मूल्येन यद्वस्तु तच्च भक्षयेत् । अभक्ष्यं वापि भक्ष्यं वा नात्र कार्य्या विचारणा । अनेन विधिना कार्य्या वराटकाख्यसप्तमी" ।

वराहद्वादशीव्रतं धरणीव्रते "एवं माघे सिते पक्षे द्वादशी धरणीभृतः । वराहस्य त्वत्प्रोक्ता पुण्या परमधार्म्मिकः । प्रागुक्तेन विधानेन सङ्कल्प्य स्नानमेव च । कृत्वा देवं समभ्यर्च्य एकादश्यां विचक्षणः । पुष्पैर्नैवेद्यगन्धैश्च सम्पूज्याच्युतं नरः । पश्चात्तस्याग्रतः कुम्भमक्षपूर्णन्तु विन्यसेत् । एवं विधानतो दत्त्वा हरिं वाराहरूपिणम् । ब्राह्मणाय च तद् दद्यात् फलं तस्य निशामय । इह जन्मनि सौभाग्यं श्रीः कान्तिस्तुष्टिरेव च । धनवान् वित्तवान् भोगी जायते पुत्रवान् भवेत्" ।

वरुणव्रतं पद्मपु० "निशि कृत्वा जले वासं प्रभाते गोप्रदो भवेत् । वारुणं लोकमाप्नोति वरुणव्रतमुच्यते" ।

वसुव्रतं विष्णुधर्म्मोत्तरे "ध्रुवोऽध्वरश्च सोमश्च आपश्चैवानिलोऽनलः । प्रत्यूषश्च प्रभासश्च अष्टौ ते वसवः स्मृताः । अष्टात्मा वासुदेवोऽयं प्रभावेनोद्भवेन च । अष्टम्यां पूजयेद्वस्तु सोपवासो नराधिप ! । चैत्रमासादथारभ्य शुक्लपक्षात् यादव ! । मासद्वयेऽप्यथ वापोच्च तपेश्च मनुजाधिप ! । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । ब्रह्मैःस्नानेन राजेन्द्र ! तथाधःशयनेन च । व्रतान्ते तु सदा दद्याद्धेनुं विप्राय शक्तितः" । पद्मपु० "वसोर्व्रतवर्ती दद्यात् सवत्सकाञ्चिताम् । दिनं पयोव्रती तिष्ठेत् स याति परमं पदम् । एतद्वसुव्रतं नाम पुनरावृत्तिदुर्लभम्" ।

वस्तिरात्रव्रतं भविष्योत्तरोक्तम् "चैत्रे तु शुक्लदेवं त्रिभिः प्रयतमानसः । त्रिरात्रं तत्र सन्नायी नद्यां स्नात्वा द्विजातये । पयस्विनीश्चतस्रः पञ्च प्रदद्यात् च सुवर्णकाः । न जायते पुनरसौ जीवलोके कदाचन । एतद्वस्तव्रतं प्रोक्तं सर्वव्याधिविनाशनम्" ।

वह्निव्रतं विष्णुपु० "कृष्णपक्षे पञ्चदश्यां चैत्रादारभ्य यादव ! । वह्निसंपूजनं कृत्वा गन्धमाल्यान्नसम्पदा । तिलहोमस्तथा कुर्य्यान्नाम्ना वह्नेर्नराधिप ! । संवत्सरान्ते दद्याच्च सुवर्णं ब्राह्मणाय च । कृत्वा व्रतं वत्सरमेतदिष्टं प्राप्नोति वित्तं सतत यशश्च । स्वर्गे सतीक्ष्णमनुत्तमञ्च कामान् यथेष्टान् पुरुषप्रधानः" ।

वामनद्वादशीव्रतं धरणीव्रते "एवमेव मुने ! माघे चैत्रे संकल्प्य द्वादशीम् । उपोष्य धारयेद्भक्त्या देवदेवं जनार्दनम् । वामनायेति पादौ तु विष्णवे कटिमर्चयेत् । वासुदेवाय जठरं उरः सङ्कर्षणाय च । कण्ठं विश्वभृते पूज्य शिरो वै व्योमरूपिणे । बाहू विश्वजिते पूज्य सनाम्ना शङ्खचक्रके । अनेन विधिनाभ्यर्च्य देवदेवं जनार्दनम् । प्राग्वत् सोदकं कुम्भं सयुग्मं पुरतो न्यसेत्" । युग्मं वस्त्रयुग्मम् । "प्राग्वत्तत्पात्रे संस्थाप्य वामनं काञ्चनं बुधः । यथाशक्ति कृतं शुभ्रं सितयज्ञोपवीतिनम् । कुण्डिकां स्थापयेत् पार्श्वे छत्रिकापादुके तथा । अक्षमालाञ्च संस्थाप्य वृषिकां च विशेषतः । एतैरुपस्करैर्युक्तं प्रभाते ब्राह्मणाय तु । दापयेत् प्रीयतां विष्णुः ह्रस्वरूपीति कीर्त्तयेत् । भावनाम्ना तु तं युक्तं प्रादुर्भावाभिधानकम् । प्रीयतामिति सर्वत्र विधिरेष प्रकीर्त्तितः । भावनाम्ना मार्गशीर्षादिमासभेदवतादिनाम्ना प्रादुर्भावाभिधानकं मत्स्यरूपी कूर्मरूपीत्येवमादि" ।

वायुव्रतं विष्णुधर्म्मोत्तरे "शुक्लपक्षे चतुर्दश्यां ज्यैष्ठादारभ्य यादव ! । वायुं सम्पूजयेद्देवं सोपवासो जितेन्द्रियः । गन्धमाल्यनमस्कारदीपधूपान्नसम्पदा । संवत्सरान्ते दातव्यं वस्त्रयुग्मं द्विजातये । कृत्वा व्रतं वत्सरमेतदिष्टमासाद्य लोकं सुचिरं मरुत्त्वः । सुखानि भुक्त्वा सुचिरं मनीषी मानुष्यमासाद्य भवेदरोगः" ।

वारिव्रतं पद्मपु० "चैत्रादिचतुरो मासान् जले कुर्य्यादयाचितम् । आषाढादौ तथा माघे पौषे वा राजसत्तम ! । व्रतान्ते मणिकं दद्यादन्नवस्त्रसमन्वितम् । तिलपात्रं

गमात् विवर्जितं, प्राश्याच्च पाण्यमङ्कवमन्नम् । "द क्षिणार्द्धं हरत्यायेहामोर्हन्त हरिं विभुम्" । इत्यादि "षष्ठ्यां पितरावर्च्य विधिमानेन सुव्रत !" । पितरौ तावेव देवीदेवौ "वसन्ते तु मदन्ते तु कर्त्तव्यं यथिवोधत । प्रागुक्तविधिना पूज्य सितं पीतं युगद्वयम् । दद्या दितानके चैव पताकाचषिट्ठके तथा । धूपदक्षारणे चापि दीपदत्तौ सुयोभिनौ" । भविष्यपु० "ताम्रपात्रं पयःपूर्णं कृत्वा तद्वस्य यद्गरम् । प्रच्छाद्योपरिवस्त्रेण गन्धपुष्पार्चितं भवेत् । शिवभक्ते द्विजे दद्याद्भोजयित्वा विधानतः । प्राच्यां समुदिते सोमे प्रतीच्यां तु रवौ गते । पौर्णमास्यां तु वैशाख्यां स्कन्दपात्रं निधाय तु । प्रीयतां मे महादेवः सोममूर्त्तिर्जगत्पतिः । तस्मै विप्राय तत्पात्रमर्पयेद्भक्तितः शनैः । एवं सोमव्रतं नाम कृत्वा सोमात्मिकं व्रजेत्" ।

सोमवारव्रतं भविष्योत्तरे "तदविलासु संप्राप्य सोमवारं विचक्षणः । नक्तोक्तविधिना सर्वं कुर्य्यात् पूजादिकं विभोः । सप्तमे तु ततः प्राप्ते कृत्वा ब्राह्मणभोजनम् । कांस्यपात्रे तु संस्थाप्य सोमं रजतमव्ययम्" । सोमरूपन्तु चतुर्दशीस्वमहाराजव्रतोक्तं वेदितव्यम् "पात्रे कृत्वा सोमराजं चेतवस्त्रैः सपूजितम् । पादुकोपानहच्छत्रभाजनासनसंयुतम् । होमं घृततिलैः कुर्य्यात् सोमनाम्ना तु मन्त्रवित् । संमिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा । होमान्ते मधुसर्पिर्भ्यां दध्ना चैव घृतेन तु" इत्यादि ।

सोमाष्टमीव्रतं स्कान्दपु० "वारे सोमस्य चाष्टम्यां पक्षयोरुभयोरपि । विधिवच्चन्द्रचूडाख्यं सोमं सम्पूजयेद्यदि" । सोमं उमासहितम् रूपन्तु क्षमाध्यानेन व्याख्यातम् । "तिलसर्षपकल्केन स्नातोऽमलजलाशये । स्वगृहे चायतने वापि शिवैकाहितमानसः । अष्टाङ्गैर्न देवेशं प्राशयित्वा ततो व्रती" । अष्टाङ्गं पञ्चगव्यम् "नानाविधानमन्त्रैश्च देवं देवीं तथार्चयेत् । चन्दनेनेन्दुयुक्तेन दक्षिणार्द्धं विलेपयेत्" इत्यादि ।

सौख्यव्रतं भविष्यपु० "एकादश्यां माघमासे चतुर्दश्यष्टमीषु च । एवमन्नेन यो दद्यात् चेलकान्यर्जुनानि च । उपानहौ कम्बलञ्च पात्रं चित्रं तथोदकम् । करपात्रादिकं वत्स ! यथाशक्त्यार्थिने नृप ! । आर्त्तत्राणपरो नित्यमश्वमेधफलं लभेत् । एतत्सौख्यव्रतं नाम आर्त्तत्राणकरं परम्" ।

सौगन्ध्यव्रतं पद्मपु० "वर्जयेद्यस्तु पुष्पाणि हेमन्तशिशिरे व्रती । पलत्रयस्य फाल्गुन्यां कृत्वा शक्त्या च काञ्चनम् । दद्याद्वेकालवेलायां प्रीयेतां शिवकेशवौ । शिरःसौगन्ध्यजननं सदानन्दप्रद स्मृतम् । कृत्वा परं पदं याति सौगन्ध्यव्रतमुत्तमम्" ।

सौभाग्यतृतीयाव्रतं वराहपु० "अतःपरं महाराज ! सौभाग्यकरणं व्रतम् । शृणु येनाशु सौभाग्यं स्त्रीपुंसामभिजायते । फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षतः । उपोषितेन नक्तेन शुचिना सत्यभाषिणा । सश्रीकस्य हरिं पूज्य रुद्रं वा उमया सह" इत्यादि । गरुडपु० "फाल्गुनादितृतीयायां लवणं यस्तु वर्जयेत् । समाप्ते शयनं दद्यात् गृहं चोपस्करान्वितम्" । समाप्ते वत्सरान्ते "संपूज्य विप्रमिथुनं भवानी प्रीयतामिति । गौरीलोकप्रदं नित्यं सौभाग्यव्रतमुच्यते" ।

सौभाग्यव्रतं भविष्यपु० "पौर्णमास्यां तु यः सोमं पूजयेद्भक्तिमान्नरः । सौभाग्यस्य भवेत्तस्य इति मे निश्चिता मतिः । मूलमन्त्राः स्वसंज्ञाभिरङ्गमन्त्राश्च कीर्त्तिताः" इत्यादि ।

सौभाग्यशयनव्रतं मत्स्यपु० "तथैवान्यत् प्रवक्ष्यामि सर्वकामफलप्रदम् । सौभाग्यशयनं नाम यत् पुराणविदो विदुः" । इत्युपक्रमे "वसन्तमासमासाद्य तृतीयायां जनप्रियाम् । शुक्लपक्षस्य पूर्वाह्णे तिलैःस्नानं समाचरेत् । तस्मिन्नहनि सा देवी किल विश्वात्मना सती । पाणिग्रहणकैः मन्त्रैरुद्वाहा वरवर्णिनी । तया सहैव देवेशं तृतीयायां समर्चयेत्" इत्यादि । "एवं संवत्सरं यावत् तृतीयायां सदा मुने ! । प्राशने दानमन्त्रे च विशेषोऽयं निबोध मे । गोशृङ्गोदकमाद्ये स्यात् वैशाखे गोमयं पुनः । ज्यैष्ठे मन्दारपुष्पं बिल्वपत्रं शुचौ स्मृतम् । श्रावणे दधि सम्प्राश्य नभस्ये च कुशोदकम् । क्षीरमाश्वयुजे मासि कार्त्तिके पृषदाज्यकम्" । पृषदाज्यं दधिमिश्रं घृतम् "मार्गशीर्षे तु गोमूत्रं पौषे सम्प्राशयेद् घृतम् । माघे कृष्णतिलांस्तद्वत् पञ्चगव्यञ्च फाल्गुने । ललिता विजया भद्रा भवानी कुमुदा शिवा । वासुदेवी तथा गौरी मङ्गला कमला सती । उमा च दानकाले तु प्रीयतामिति कीर्त्तयेत् । मल्लिकाऽशोककमलकदम्बोत्पलमालतीम् । कुब्जकं करवीरञ्च बाणमम्लानकुङ्कुमम् । सिन्दुवारञ्च सर्वेषु मासेषु क्रमतः स्मृतम्" इत्यादि ।

सौभाग्यकान्तिव्रत स्कन्दपु० "दशम्यां प्रवक्ष्यामि सौ:

**व्रश्च** छेदे तु०पर०सक०अदित् वेट्। व्रश्चति अव्रश्चीत् अव्राक्षीत्।

**व्रश्चन** पु० वृश्च्यतेऽनेन व्रश्च-ल्युट्। (करणे) १लघ्वादिच्छेदनार्थे शस्त्रभेदे अमरः। भावे ल्युट्। २छेदने न० अमरः।

**व्रात** पु० वृ-अतच् पृषो०। समूहे अमरः।

**व्रातीन** त्रि० व्रातेन चरति ख। संघजीविनि। "व्रातीनव्यालदीप्तास्त्रः" भट्टिः।

**व्रात्य** पु० व्रातात् समूहात् च्यवति यत्। अध्ययनार्थे, संस्कारहीने, जातिमात्रोपजीविनि, "अत ऊर्द्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः। सावित्रीपतिता व्रात्या भवन्त्यार्य्यविगर्हिताः" मनुः। तत्र प्रायश्चित्तं मिता०उक्तं यथा तत्र व्रात्यतायां मनुनेदमुक्तम् "येषां द्विजानां सावित्री नानूच्येत यथाविधि। तांश्चारयित्वा त्रीन् कृच्छ्रान् यथाविध्युपनाययेदिति"। यम यमेनोक्तम् "सावित्रीपतिता यस्य दश वर्षाणि पञ्च च। सशिखं वपनं कृत्वा व्रतं कुर्य्यात् समाहितः। एकविंशतिरात्रञ्च पिबेत् प्रसृतियावकम्। हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च वा। ततो यावकशुद्धस्य तस्योपनयनं स्मृतम्" इति। तदुभयमपि याज्ञवल्कीयमासपयोव्रतविषयम्। यत्तु वशिष्ठेनोक्तम् "पतितसावित्रीक उद्दालकव्रतञ्चरेत्। द्वौ मासौ यावकेन वर्त्तयेन्मासं पयसा पक्षमामिक्षयाष्टरात्रं घृतेन षड्रात्रमयाचितेन त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेदश्वमेधावभृथगच्छेद्व्रात्यस्तोमेन वा यजेतेति"। तदेवं व्यवस्था षष्ठोपनयने आपद्भावेन तत्कालातिक्रमस्तत्र याज्ञवल्कीयव्रतानामन्यतमत् शक्त्यपेक्षया भवति अनापद्यतिक्रमे तु मानवं त्रैमासिकम्। तत्रैव षोडशवर्षादूर्द्ध्वमपि कियत्कालातिक्रमे तूद्दालकव्रतम् व्रात्यस्तोमो वेति। येषान्तु पितादयोऽप्यनुपनीतास्तेषामापस्तम्बोक्तम् "यस्य पिता पितामहश्चानुपनीतौ स्यातां तस्य संवत्सरं त्रैविद्यकं ब्रह्मचर्य्यम्। यस्य प्रपितामहादेर्नानुस्मर्य्यते उपनयनं तस्य द्वादश वर्षाणि त्रैविद्यकं ब्रह्मचर्य्यमिति"।

**व्रात्यस्तोम** पु० व्रात्ययोग्यः स्तोमः। यज्ञभेदे "स च यज्ञश्चतुर्विधः" कात्या० श्रौ० २२।४।१ सूत्रादौ दर्शितो यथा

"व्रात्यस्तोमाश्चत्वारः" सू० "व्रात्यस्तोमसंज्ञकाश्चत्वारः क्रतवो भवन्ति व्रात्याः प्रसिद्धा एव त्रिपुरुषं पतितसावित्रीकाः। प्रायश्चित्तार्थत्वान्न लौकिकेऽग्नौ भवन्ति न श्रौतेराधानं प्रयुज्यते अतदङ्गत्वात् तदुक्तमाचार्य्येण स्मपतैर्हि प्रकृता लौकिक इति। "द्वितीय उक्थ्याः" सू० "व्रात्यगणस्य ये सम्पादयेयुस्ते प्रथमेन यजेरन्" सू० सम्पादनं च गायनवर्त्तकादीनाम् तेषां प्रथमेऽधिकारः। ये व्रात्या नृत्यगीतवाद्यसूत्रधारत्वादौ स्वयं प्रवीणाः सन्त उपदेष्टारो भूत्वा तां विद्यां व्रात्यसमूहस्य सम्पादयेयुः शिक्षयेयुः पाठयेयुः ते प्रथमेन यजेरन्। "द्वितीयेन निन्दिता नृशंसाः" सू०। नृशंसत्वेन ये निन्दितास्तेषां द्वितीयेऽधिकारः" सं०। ये नृशंसा निन्दितास्त्वभिशंसनैरभिशंसनेन पापाध्यारोपणेन निन्दिताः गर्हिताः ज्ञातिभिर्बहिष्कृताः ते द्वितीयेन यजेरन्" कर्कः "तृतीयेन कनिष्ठाः" सू० कनिष्ठाः लघवः। "ज्येष्ठाश्चतुर्थेन" सू० अधिक्रियन्ते। ज्येष्ठशब्दार्थमाह "अपेतप्रजननाः स्थविराः तदाख्यास्तेषां ये नृशंसतमः स्याद्रुद्यवसमो वानूचानतमो वा तस्य गार्हपत्ये दीक्षेरन्" सू०। "स स्थपतिः कर्त्तव्यः" सं०। अपगतप्रजननेन्द्रियसामर्थ्या यौवनापगमे। निर्वीर्य्यप्रजनाः स्थविरा वृद्धास्तदाख्याः। नृशंसतमः अत्यन्तं क्रूरकर्मा" भा०। [अव्रैषीत्।

**व्री** वृतौ क्र्या० प० पर० सक० अनिट्। व्रि(व्री)णाति

**व्री** गतौ दिवा० आ०सक० अनिट्। व्रीयते अव्रेष्ट। ओदित् व्रीणः। [अव्रीडिट।

**व्रीड्** क्षेपे दिवा० पर० अक० लज्जायां सक० सेट्। व्रीड्यति

**व्रीड** पु० व्रीड-घञ्। लज्जायाम्। अ। तत्रैव स्त्री अमरः।

**व्रीस** वधे वा चु० उभ० पक्षे भ्वा० पर० सक० सेट्। व्रीसयति ते व्रीसति।

**व्रीहि** पु० व्री-हि किच्च। १धान्यभेदे २आशुधान्ये च अमरः। तद्भेदादिकं भावप्र० उक्तं यथा

"वार्षिकाः कथिताः शुक्लाः व्रीहयश्चिरपाकिनः। कृष्णव्रीहिः पाटलश्च कुक्कुटाण्डक इत्यपि। शालामुखो जतुमुख इत्याद्याः व्रीहयः स्मृताः। कृष्णव्रीहिः स विज्ञेयो यः कृष्णतुषतण्डुलः। पाटलः पाटलापुष्पवर्णको व्रीहिरुच्यते। कुक्कुटाण्डाकृतिर्व्रीहिः कुक्कुटाण्डक उच्यते। शालामुखः कृष्णशूकः कृष्णतण्डुल उच्यते। लाक्षावर्णं मुखं यस्य ज्ञेयो जतुमुखस्तु सः। व्रीहयः कथिताः पाके मधुरा वीर्य्यतो हिमाः। अल्पाभिष्यन्दिनो बद्धवर्चस्काः षष्टिकैः समाः। कृष्णव्रीहिर्वरस्तेषां तस्मादल्पगुणाः परे"। ततः अस्त्यर्थे व्रीह्या० इनिठनौ। व्रीहिन् व्रीहिक तद्विशिष्टे त्रि० बिल्वा० प्राण्यादिभिन्ने अवयवार्थे अण्। व्रैह तदवयवे।

विजयाभिनन्दनादयस्त्रयो भविष्यन्ति । तथा हि कलौ षट् शककर्त्तारः तत्स्वरूपादि ज्योतिर्वि० १० अ० उक्तं यथा "कलौ भविष्यन्त्यथ भारतावनौ महीभुजो बाहुल्यतोऽप्यनेकशः । शकास्तथैषामभिषेचनादिकं स्थितं यदोदीरितकालबाधितम् । धराधिभूर्भिक्षुशकादिजातिजच्छेदादनल्पोऽभिजनैर्नमस्कृतः । स्वतः स राजाधिजनैः प्रतिष्ठितो न जन्मभेदाद्यभिषेचनोचितः । तिष्ठन्ति ये भूतलवल्लभे शकान् यथाक्रमोऽवशस्तमयान् कलौ । स राजपुत्रः शककारको भवेत् नृपाधिराजो ह्युतयाकर्त्तुं वा" । (तत्र शककारकस्य विक्रमादित्यस्य कथनात् शालिवाहनस्य शककर्त्तृत्वम्) "युधिष्ठिरो विक्रमशालिवाहनौ नराधिनाथौ विजयाभिनन्दनः । इमेऽनु नागार्जुनमेदिनीविभुर्बलिः क्रमात् षट् शककारकाः कलौ" । तत्प्रवृत्तिकालांस्तत्राह "युधिष्ठिरात् वेदयुगाम्बराग्नयः (३०४४) बाणाग्निविधौ (१३५) ऽभ्रखखाष्टभूमयः १८००० । ततोऽयुतं १०००० खखचतुष्टयं क्रमात् धराद्विगष्टाविति (८२१) शाकवत्सराः । युधिष्ठिरोऽभूत् विहस्तिनापुरे तथोज्जयिन्यां पुरि विक्रमाह्वयः । शालेन्द्रभूमौ दृति शालिवाहनश्चाम्बकूटे विजयाभिनन्दनः । नागार्जुनो रोहितके स्थितो बलिर्भविष्यतीन्द्रो भृगुकच्छपत्तने । ततप्रवृत्तिस्तदनन्तरं भवेत्तदा भविष्यन्त्यवनीभृतोऽर्कतः" । अत्र युधिष्ठिरात् प्राक् कलौ शककर्त्रन्तराभावात् कलियुगारम्भकालादेव तस्य शककाल उक्तः वराहसंहितायां १३ अ० तु तद्राज्यावधित एव तच्छककाल इत्यभिप्रायेण "आसन् मघासु मुनयः शासति पृथ्वीं युधिष्ठिरे नृपतौ । षड्द्विकपञ्चद्वियुतः (२५२६) शककालस्तस्य राज्ञश्च" तेन कलेः (६५३) वर्षेषु गतेषु युधिष्ठिरस्य राज्यप्रवृत्तिः । षट्कर्त्तृवत्सरसमष्टिश्च

युधि० ३०४४ । इति न कलिमानसंख्याविरोधः
विक्र० १३५ अतएव ज्योतिर्विदाभरणग्रन्थे ग्रन्था-
शालि० १८००० कृतेव "वर्षैः सिन्धुरदर्शनाम्बरगुणै-
विजया० १०००० र्याते कलौ सम्मिते:" इति कलि-
नागा० ४००००० युगस्यैव ३०६८ वर्षेषु गतेषु ग्रन्थ-
बलि० ८२१ कृत्यमुक्तम् ।

४३२०००

**शकट** पु० न० शक-अटन् । १यानभेदे (गाड़ि) अमरः । २असुराधिष्ठिते नन्दालयस्थे शकटविशेषे शकटभञ्जनः कृष्णः । ३द्विसहस्रपलपरिमाणे हेमच० । स्वल्पार्थे ङीप् । क्षुद्रशकटे स्वार्थे क । शकटिका तत्रैव स्त्री ।

**शकटहन्** पु० शकटमसुराधिष्ठितशकटभेदं हतवान् हन-भूते क्विप् । श्रीकृष्णे तत्कथा हरिवं० ६२अ० ।

**शकटाह्वा** स्त्री शकटाकारत्वात् तदाह्वा यस्याः । रोहिणीनक्षत्रे तस्याः शकटाकारपञ्चताराश्मकत्वेन तथात्वम् ।

**शकन्धु** पु० ६त० शकन्ध्वा० । पररूपतः शकानां कूपे ।

**शकल** पु० न० शक-कलच् । १खण्डे २एकभागे । ३त्वचि ४वल्कले मेदि० ५शल्के (आँश) च न० ।

**शकलिन्** पु० शकलं शल्कमस्यास्ति इनि । मत्स्ये अमरः ।

**शकाब्द** पु० शककर्त्तृनृपसंबन्धी अब्दः । १शकप्रवर्त्तकनृपराज्यावधिवत्सरे २तत्संख्यायाञ्च ।

**शकार** पु० "मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः । सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः" सा०द० उक्तलक्षणे १राज्ञोऽनूढभार्य्याभ्रातरि । श+स्वरूपे-कार । शस्वरूपे २वर्णे च ।

**शकारि** पु० शकानां म्लेच्छजातिभेदानामरिः । विक्रमादित्ये

**शकुन** न० शक-उनन् । १शुभाशुभसूचकनिमित्ते-काकस्पन्दनकाकादिदर्शनादौ । दुःशकुनशब्दे ३६१४पृ० दृश्यम् २पक्षिमात्रे ३पक्षिभेदे गृध्रे च पुंस्त्री० मेदि० ।

**शकुनज्ञ** त्रि० शकुनं जानाति ज्ञा-क । १निमित्ताभिज्ञे २ज्येष्ठ्यां स्त्री त्रिका० ।

**शकुनि** पु० शक-उनि । १पक्षिमात्रे अमरः । २चिल्लपक्षिणि हेमच० । ३सुबलराजपुत्रे दुर्य्योधनमातुले च । ३श्यामापक्षिणि स्त्री ङीप् राजनि० । ४ववादिषु करणभेदे पु० ५दुःसहज्येष्ठपुत्रे पु० मार्कण्डेयपु० । विकुक्षिनृपपुत्रभेदे पु० वह्निपु० ।

**शकुनिप्रपा** स्त्री० ६त० । पक्षिणां पानीयशालायाम् हारा० ।

**शकुन्त** पु० शक-उन्त । १पक्षिमात्रे । २भासपक्षिणि ३कीटभेदे च मेदि० ।

**शकुन्तला** स्त्री० शकुन्तैः लायते ला-कर्मणि-क । मेनकागर्भजातायां विश्वामित्रसुतायाम् सा च जातमात्रा मात्रोत्सृष्टा शकुन्तपालिता पश्चात् कण्वमुनिना प्रतिपालिता दुष्मन्तनृपेण गान्धर्वविधिना व्यूढेति "निर्जने तु वने यस्मात् शकुन्तैः परिपालिता । शकुन्तलेति नामास्याः कृतं चापि ततो मया" भा० आ० ७२अ० । शकुन्तलामधिकृत्य कृतो ग्रन्थः । अण् आख्यायिकायां तस्य वा लुक् । कालिदासप्रणीते शकुन्तलाधिकारेण कृते २नाटकभेदे न अणोऽलुकि तु शाकुन्तलं तत्रार्थे न० ।

अथ वा प्रतिज्ञाद्युपन्यासौ अपेक्ष्य तथा धर्माधर्मौ जन्येते ताभ्याञ्च जयपराजयौ तत्रावस्थाप्रतिबन्धाभिधानात् तदारोपणश्चेदानिष्टफलत्वेनार्थतो विधिनिषेधात् । अभियुक्तः सत्यप्रतिज्ञो विजयकामस्तुलामारोहेदसत्यप्रतिज्ञो न तुलामारोहेदिति श्रुतेश्चवचनात् । यदा तदा देवतापरिचिधिः क्रियते तत्र धर्मोत्कर्षविशेषमभिव्यञ्जयन्ति" । तत्र च शक्तिपदार्थस्वरूपादिकमुक्तं यथा

"अथाहि शक्तिपदार्थः कारणत्वं तच्च स्वव्याप्येतरयावत्संपत्तौ कार्याभावव्यापकाभावाप्रतियोगित्वम् । अथ वा यत्र कार्याभावव्याप्यता इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतरसमवधाने सति बीजादङ्कुरोत्पत्तेः, किन्तु इतराभावेनावच्छिद्यते इतराभावावच्छिन्ना तत्कारणबीजे अङ्कुराभावव्याप्यता न बीजत्वेनावच्छिद्यते इतराभावे बीजसत्त्वेऽङ्कुराभावनियमात् । शिलाशकलेऽङ्कुराभावव्याप्यता शिलात्वेनैवावच्छिद्यते । यद्वा अन्यासमवधानावच्छिन्नकार्यानुत्पत्तिव्याप्यत्वं कारणत्वं, रासभादेः कार्याभावव्याप्यता अन्यासमवधानस्य वैयर्थ्येनानवच्छेदकत्वात् । अनन्यथासिद्धनियतपूर्ववर्त्तिजातीयत्वं वा तत्त्वम् । अन्यथासिद्धञ्च त्रिधा येन सहैव यस्य यं प्रति पूर्ववर्त्तित्वमवगम्यते, यथा घटं प्रति दण्डरूपस्य,(१) अन्यं प्रति पूर्ववर्त्तित्वे ज्ञाते एव यं प्रति यस्य पूर्ववर्त्तित्वमवगम्यते यथा शब्दं प्रति पूर्ववर्त्तित्वे ज्ञात एव ज्ञानं प्रत्याकाशस्य(२) । अन्यत्र क्लृप्तनियतपूर्ववर्त्तिन एव कार्यसम्भवे तत्सहभूतत्वम्(३) यथा गन्धवति गन्धोत्पादाद्गन्धं प्रति तत्प्रागभावस्य नियतपूर्ववर्त्तित्वकल्पनात् पाकजस्थले गन्धं प्रति रूपादिप्रागभावादीनामन्यथासिद्धत्वम् एतत्त्रितयव्यतिरेके नियतपूर्ववर्त्तित्वं कारणत्वम् । यागापूर्वयोस्तु यागपूर्ववर्त्तित्वेऽवगते न त्वनन्यथाने यत्र अन्यस्य पूर्ववर्त्तित्वेऽवगते जनकस्य पूर्वभावोऽवगम्यते तत्र अन्येन जनकस्यान्यथासिद्धिः । यत्र च जनकस्य तथात्वेऽवगते अन्यस्य पूर्वभावावगतिस्तत्र तद्द्वारा तस्य जनकत्वमेव । दण्डसंयोगभ्रमणयोस्तु युगपदेव पूर्वभावितत्वपक्षः । अत्राजनकदोत्पत्तिकस्यसमवधाने सत्यपि यस्याभावात् कार्यं न जायते सति च जायते तज्जातीयं प्रति तदनन्यथासिद्धम् । अनन्यथासिद्धनियतपूर्ववर्त्तित्वं कारणत्वमित्यत्र तत्र ईश्वरतद्गुणादीनामसंग्रहात् तद्व्यतिरेकस्य तत्सम्भवः व्यतिरेकस्य वाऽभावात् । कार्यस्यान्यथानुपपद्यमानतावच्छेद्यत्वं वाऽनन्यथासिद्धत्वम् । नन्वेवमतिरिक्तशक्तौ बाधकाबाधकप्रमाणाभावाच्छक्त्वं संशयः न च बाधकाभावस्य साधकत्वं बाधकाभावस्य साधकत्वादिति चेन्न बाधकाभावेन वह्न्यादेस्तु सिध्यतीन्द्रियधर्माभावसाधने साधकं बाधकाभावेनातीन्द्रियधर्मसाधने गौरवमिति बाधकाभावात्तदभाव एव सिध्यतीति" ।

"इच्छा क्रिया तथा ज्ञानं गौरी ब्राह्मी तु वैष्णवी । त्रिधा शक्तिः स्थिता यत्र तत्परं ज्योतिरोमिति" गोरक्षसं० । सत्त्वरजस्तमोगुणत्रयाधीने ईश्वरस्य क्रमेण ज्ञानेच्छाक्रियारूपे ७शक्तित्रये । "एषा त्रिशक्तिरुद्दिष्टा सर्वविद्यान्तगामिनी । एषा श्वेता परा सृष्टिः सात्त्विकी ब्रह्मसंस्थिता । एषैव रक्ता राजसि वैष्णवी परिकीर्त्तिता । एषैव कृष्णा तमसि रौद्री देवी प्रकीर्त्तिता । परमात्मा यदा देव एक एव त्रिधार्पितः । प्रयोजनवशाच्छक्तिरेकैव त्रिविधाऽभवत्" वराहपु० । प्रकृतिशक्तिश्च ईश्वरस्य सृष्टिकर्तृत्वप्रवर्त्तिता "शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुम्" आनन्द० । तन्त्रोक्ते ५पीठाधिष्ठातृदेवताभेदे देवभेदे पीठशक्तयो भिन्नास्तन्त्रसारादौ ज्ञेयाः । राज्ञां प्रभावोत्साहमन्त्रजाते ६सामर्थ्ये च अमरः । ८गौर्यां मेदि० ९लक्ष्म्यां शब्दमा० ।

१०शक्तिभेदशक्तिश्च अर्थबोधानुकूलः पदपदार्थसम्बन्धः स च इदं पदमेतमर्थं बोधयतु, अस्मात् शब्दादयमर्थो बोद्धव्य इत्येवंरूपः इच्छात्मकः सङ्केतः, घटादिपदार्थविशेष्यकघटादिपदजन्यबोधविषयताप्रकारकेच्छाविषयो वा । मीमांसकास्तु अभिधा नाम पदार्थान्तरं सङ्केतग्राह्यं शक्तिरित्याहुः । पदपदार्थयोः सम्बन्धान्तरं शक्तिरिति शाब्दिकाः । सा च शक्तिस्त्रिविधा रूढिर्योगः योगरूढिश्चेति तत्राद्या घटादिपदेषु, द्वितीया पाचकादिपदेषु, तृतीया पङ्कजादिपदेषु । प्राभाकरमते शक्तिर्द्विविधा अनुभाविका स्मारिका च तत्राद्या कार्य्यत्वान्विते, द्वितीया तु जातौ । तत्र गवादिपदानां जात्याकृतिविशिष्टव्यक्तौ शक्तिरिति नैयायिकाः । व्यक्तावेव शक्तिरिति नव्याः । जात्याकृतिव्यक्तिषु तिसृषु शक्तिरिति वैयाकरणाः । जातावेव शक्तिर्व्यक्तिभानं त्वाक्षेपादिति भाट्टादयः । जातौ व्यक्तौ चोभयत्र शक्तिः किन्तु जात्यंशे ज्ञाता व्यक्त्यंशे स्वरूपसती प्रमाविषयेति । कार्यान्वितव्यक्तौ शक्तिरिति प्राभाकराः । धातोस्तु फलावच्छिन्नव्यापारे शक्तिरिति

**शङ्खमुख** पुंस्त्री० शङ्खस्य इव मुखमस्य । कुम्भीरे हेमच० । स्त्रियां ङीष् । [ (शङ्खचका) तृणभेदे शब्दच० ।

**शङ्खिका** स्त्री शङ्खवत्तदाकारं पुष्पमस्त्यस्याः ठन् । (चोरका-

**शङ्खिन्** पु० शङ्ख+अस्त्यर्थे इनि । १विष्णौ, २समुद्रे च मेदि० ।

**शङ्खिनी** स्त्री शङ्खवत्तदाकारं पुष्पमस्त्यस्याः इनि । १चोरपुष्प्याम्, अमरः । २श्वेतपद्मायां शब्दर० । ४श्वेतवृहत्यां ५श्वेततुलस्यां, ६यवतिक्तायां, राजनि० । ७स्त्रीभेदे, ८उपदेवताभेदे, (शाङ्खिनी) ९शङ्खयुक्तायां स्त्रियाञ्च । स्त्रीभेदलक्षणं रतिमञ्जर्य्युक्तं यथा "दीर्घा सुदीर्घनयना वरसुन्दरी या कामोपभोगरसिका गुणशीलयुक्ता । रेखात्रयेण च विभूषितकण्ठदेशा सम्भोगकेलिरसिका किल शङ्खिनी सा" । "शशके पद्मिनी तुष्टा चित्रिणी रमते मृगे । वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हये" । "पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी । शङ्खिनी क्षारगन्धा स्यात् मदगन्धा च हस्तिनी" । [राजनि० ।

**शङ्खिनीफल** पु० शङ्खिन्या इव फलमस्य । शिरीषवृक्षे

**शङ्खिनीवास** पु० ६त० । शाखोटवृक्षे शब्दच० ।

**शच** गतौ भ्वा० आत्म०सक० सेट् इदित् । शञ्चते, अशञ्चिष्ट ।

**शच** वाचि भ्वा० आत्म० सक० सेट् । शचते अशचिष्ट ।

**शचि(ची)** स्त्री शच-इन् वा ङीप् । १इन्द्रपत्न्याम् अमरः । २करणान्तरे मेदि० ।

**शचीपति** पु० ६त० । इन्द्रे अमरः । शचीभर्त्रादयोऽप्यत्र ।

**शट(ठ)** श्लाघायां चु० उभ० सक० सेट् । शाट(ठ)यति अशीशट(ठ)त । [ शटति । अशाटीत् अशटीत् ।

**शट** शादे अक० रोगजनने गतौ भेदे च सक० पर० भ्वा० ।

**शट** पु० शटति रुजति इत्यर्थं शट-अच् । १कण्ठे सि०कौ० । २किञ्जल्केसरे ३जटायाञ्च स्त्री अमरः टाप् ।

**शटि(टी)** स्त्री शट-इन् वा ङीप् । (शट आदा) ख्याते ओषधिभेदे "शटी पलाशी षड्ग्रन्था सुव्रता गन्धमूलिका । गन्धारिका गन्धवधूर्वधूः पृथुपलाशिका । भवेद्गन्धपलाशी तु कषाया ग्राहिणी लघुः । तिक्ता तीक्ष्णा च कटुकाऽनुष्णास्यमलनाशिनी । शोथकासव्रणश्वासशूलहिध्माग्रहापहा" भावप्र० ।

**शट्क** न० शट-क्विप् टक-अच् कर्मधा० । घृतजलमिश्रितशालिचूर्णे । "शालिचूर्णं घृतं तोयं मिश्रितं शट्कं भवेत्" भावप्र० ।

**शठ** वधे सक० कैतवे क्लेशे च अक० भ्वा० पर० सेट् । शठति अशाठीत् अशठीत् ।

**शठ** श्लाघायां चु०पर०सक०सेट् । शाठयति ते अशीशठत् त ।

**शठ** दुष्टवचने अद०चु०उभ०सक०सेट् । शठयति ते अशशठत् त

**शठ** न० शठ-अच् । १तगरे २कुङ्कुमे ३लौहे च राजनि० । ४धूस्तूरे ५मध्यस्थपुरुषे च पु० । "प्रियं वक्ति पुरोऽन्यत्र विप्रियं कुरुते भृशम् । व्यक्तापराधचेष्टश्च शठोऽयं कथितो बुधैः" विष्णुपु० उक्ते ६धूर्त्ते त्रि० मेदि० ७नायकभेदे पु० तल्लक्षणं यथा "शठोऽयमेकत्र बद्धभावो यः । दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति" सा० द० ।

**शठता** स्त्री शठस्य भावः तल् । शाठ्ये वञ्चनायाञ्च । [राजनि०

**शठम्बा** स्त्री शठ-अच् अम्बि-अच् कर्म० सम० । अम्बष्ठायाम्

**शड** संघाते रोगे च अक० भ्वा० पर० सेट् इदित् । शण्डति अशण्डीत् । [शमाणे शेषवृः ।

**शण** दाने भ्वा० पर०सक० सेट् । शणति अशाणीत् अशणीत्

**शण** पु० शण-अच् । शणनामख्याते तृणभेदे हेमच० ।

**शणघण्टिका** स्त्री शणः घण्टेव तत्तुल्यरवफलकत्वात् इवार्थे कन् । घण्टारवतुल्यफलायाम् शणपुष्प्यां राजनि० ।

**शणपर्णी** स्त्री शणस्येव पर्णान्यस्याः ङीप् । अशनपर्ण्याम् राजनि० । [शणे स्वार्थे क । तत्रैव ।

**शणपुष्पी** स्त्री शणस्येव पुष्पमस्याः ङीप् । (झनझने) वन-

**शणसूत्र** न० शणाज्जातं सूत्रम् । शणजाते जाले अमरः ।

**शणालुक** पु० शण इवालुकः । आरेवतवृक्षे (सोन्दालु) शब्दर०

**शणिका** स्त्री शणवत्पुष्पमस्त्यस्याः ठन् । शणपुष्प्यां राजनि०

**शण्ड** न० शडि-अच् । १पद्मादिसमूहे शब्दर० । २नपुंसके ३वृषे च हिकण्डको० । [तस्यापत्यं गर्गा० यञ् शाण्डिल्य ।

**शण्डिल** पु० शडि-इलच् । शाण्डिल्यस्य पितरि मुनिभेदे

**शण्ढ** न० शम-ढ तस्य नेत्वम् । १अन्तःपुररक्षके कृत्रिम-क्लीबे २क्लीबमात्रे भरतः । ३वृषे मेदि० ४बन्ध्यपुरुषे जटा० ५उन्मत्ते धनञ्जयः ।

**शत** न० एक०व० शो-कतच् । १स्वनामख्यातसंख्यायाम् २बहुसंख्यायां ३तत्संख्याते च । स्वार्थे क । तत्रैव न० । शतवाचकशब्दाश्च यथा "रुद्रः१ शतभिषा तारा२ धृत-पायुष्मद्३ रावणाङ्गुलिः४ पद्मदलं५ इन्द्रयज्ञः६ कक्षियो-जनम्७" कविकल्पलता । [अवयवे कन् । २शतसंख्यायां न० ।

**शतक** त्रि० शतं परिमाणमस्य कन् । १शतसंख्यायुक्ते ।

**शतकुम्भ** पु० शतं कुम्भा यत्र । स्वर्णखनिपर्वतभेदे भरतः ।

**शतकोटि** पु० शतं कोटयोऽग्राणि यस्य । १वज्रे अमरः । शतगुणिता कोटिः शाक० । २शतगुणितकोटिसंख्यायां स्त्री ।

**शतक्रतु** पु० शतं क्रतवोऽस्य । इन्द्रे अमरः ।

**शतग्रन्थि** स्त्री शतं ग्रन्थयोऽस्य । दूर्वायाम् राजनि० ।

**शतघ्नी** स्त्री शतं हन्ति हन-टक् । १अस्त्रभेदे "अयःकण्टकसंछन्ना शतघ्नी महती शिला" विजयरक्षितः । २वृश्चिकाल्यां ३करञ्जे च मेदि० ।

**शततम** त्रि० शतस्य पूरणः तमप् । शतसंख्यापूरणे ।

**शततारा** स्त्री शतगुणिता ताराः शाक०। शतभिषानक्षत्रे ।

**शतदन्तिका** स्त्री शतं दन्ता इव पत्राण्यस्याः ठन् । नागदन्त्याम् राजनि० ।

**शतद्रु** पु० शतधा द्रवति-द्रु-कु नि० । नदीभेदे तन्नामनिरुक्तिर्यथा "शोके बुद्धिं तदा चक्रे नचैवात्मानमत्यजत । सोऽगच्छत् पर्वतांश्चैव सरितश्च सरांसि च । ततः स(वशिष्ठः) पुनरेवाथ नदीं हैमवतीं तदा । चण्डग्राहवतीं भीमां तस्याः स्रोतस्यपातयत् । सा तमग्निसमं विप्रमनुचिन्त्य सरिद्वरा । शतधा विद्रुता यस्माच्छतद्रुरिति विश्रुता । ततः स्थलगतं दृष्ट्वा तत्राप्यात्मानमात्मना । मर्तुं न शक्यमित्युक्त्वा पुनरेवाश्रमं ययौ" भा० आ० १७७ अ० ।

**शतधा** स्त्री शतं धन्वीन् धत्ते धा-क । १दूर्वायाम् । शत+प्रकारे धाच् । २शतप्रकारे अव्य० ।

**शतधामन्** पु० शतं धामानि यस्य । विष्णौ जटा० ।

**शतधार** पु० शतं धारा अग्राणि यस्य । १वज्रे त्रिका० । २शतधारायुक्ते त्रि० "वसोः पवित्रमसि शतधारम्" यजुर्वेदः १।३६ । [१स्वर्गे च विश्वः ।

**शतधृति** पु० शतं धृतयोऽस्य । १इन्द्रे २ब्रह्मणि मेदि०

**शतपत्र** नं० शतं बहूनि पत्राणि सुमस्तदलान्यस्य । १पद्मे अमरः । २मयूरे ३सारसखगे ४दार्वाघाटखगे मेदि० ५राजकीरे हेमच० ।

**शतपत्री** स्त्री शतं पत्राणि दलान्यस्याः ङीप् । (सेओति) पुष्पवृक्षभेदे । स्वार्थे क । तत्रैव । [चालकपत्रभेदे ।

**शतपथ** पु० शतं पन्थानो यत्र अच्समा०। यजुर्वेदीयब्राह्मण-

**शतपथिक** त्रि० शतपथं वेत्त्यधीते वा ठन् । शतपथब्राह्मणाध्यायिनि ।

**शतपद** न० शतं पदानि यत्र । ज्योतिषोक्ते नक्षत्रपादाक्षरैश्च नामकरणोपयोगिप्रथमवर्णसूचके १चक्रभेदे चक्र-शब्दे २८१७ पृ० दृश्यम् । शतं पादाः यस्याः बाहुभावः

कृषा० ङीप् पद्भावः । शतपदी २कीटभेदे (काणकोटार) स्त्री अमरः । ३शतमूल्यां राजनि० । [रत्नमा० ।

**शतपद्म** न०शतदलयुक्तं पद्मम् । १शतदलकमले २श्वेतपद्मे च

**शतपर्वन्** पु० शतं पर्वाणि ग्रन्थयो यस्य । १वंशे अमरः २इक्षुभेदे च "शतपर्वा भवेत् किञ्चित् कोशकारगुणान्वितः । विशेषात् किञ्चिदुष्णश्च सक्षारः पवनापहः" भावप्र० । ३कटुकायां राजनि० । ४वचायां ५दूर्वायां च स्त्री ६भार्यां मेदि० । ७कोजागरपूर्णिमायां शब्दरत्ना० । कप् । तत्र मेदि० दवेशे शब्दर० ।

**शतपाद्** स्त्री शतं पादा यस्याः पाद्भावः । कीटभेदे (कानकोटार) जटा० । [जटा० । २जलौकायां च शब्दर० ।

**शतपादिका** स्त्री शतं पादा मूलान्यस्याः कप् । १काकोल्यां

**शतपुष्पा** स्त्री शतं पुष्पाणि यस्याः । ( शुलफा ) १शाकभेदे (मौरी) २क्षुपभेदे च । कप् । तत्रैव ।

"शतपुष्पा कटुः स्निग्धा तिक्तोष्णा कफवातजित् । रूक्षाग्निदीपिका मेध्या बलविट् क्रमिशुक्रहृत् । संग्राहिणीतला तिक्ता दाहनुत् वातला लघुः" भावप्र०। किरातार्जुनीयग्रन्थकारके भारविकवौ पु०त्रिका०। [राजनि०।

**शतप्रसूना** स्त्री शतं प्रसूनानि यस्याः । ( शुलफा ) शाके

**शतप्रास** पु०शतं प्रासा इव फलानि यस्य । करवीरवृक्षे अमरः

**शतभिषज्** स्त्री शतं भिषज इव ताराः यत्र । शततारात्मके अश्विन्यादिषु चतुर्विंशे नक्षत्रे । शतभिषाप्यत्र स्त्री

**शतभीरु** स्त्री शतं बहवो वियोगिनो भीरवो यस्याः ५त० । मल्लिकायाम् अमरः तद्दर्शने हि बहुवियोगिनां कामोद्दीपनात् ततो भीरुत्वम् । [२देवके च ।

**शतमख** पु० शतं मखा यज्ञा यस्य । १इन्द्रे हलायुधः ।

**शतमन्यु** पु० शतं मन्यवो यज्ञा यस्य शते दैत्येषु मन्युः क्रोधो वा यस्य । १इन्द्रे अमरः । २पेचके च ।

**शतमान** पुं०न० शतेन मीयते मि-ल्युट् । १रूप्यपले २आढके ३तत्परिमिते च अमरः । [चिकित्सके ।

**शतमारिन्** पु० शतं मारयति मृ-णिच्-णिनि । विशिष्ट-

**शतमुखी** पु० शतं मुखानि यस्याः ङीप् । १संमार्जन्यां २शतमुखयुक्ते त्रि० ।

**शतमूला** स्त्री शतं मूलान्यस्याः टाप् । १दूर्वायां २वचानामख्यातायां लतायाञ्च स्त्रीवत्त्वः अमरः । [भेदे अमरः ।

**शतयष्टिक** पु० शतं यष्टयो गुच्छा यस्य । शतगुच्छके हारे०

**शतरुद्रीय** न०शतं रुद्रानधिकृत्य कृतो ग्रन्थः छ । १शुक्लयजुर्वेदोक्ते "नमस्ते रुद्र ! मन्यव इत्यादिके रुद्राध्याये ।

**शतरूपा** स्त्री शतं रूपाण्यस्याः । १ब्रह्मणः पत्न्यां २तत्कन्यायां सावित्र्यां च "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् । स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् । शतरूपा च सा ख्याता सावित्री च निगद्यते । सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप । दृष्ट्वा तां व्यथितस्तावत् कामबाणार्दितो विभुः । उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् । ततः कालेन महता ततः पुत्रोऽभवन्मनुः । स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम्" मात्स्ये ३अ० ।

**शतवीर्य्या** स्त्री शतं वीर्य्याणि यस्याः ५ब० । १श्वेतदूर्वायाम् २शतावर्य्यां ३कपिलद्राक्षायां च राजनि० ।

**शतवेधिन्** पु० शतं विध्यति विध–णिनि । अम्लवेतसे अमरः

**शतसहस्र** न० शतगुणितं सहस्रं शाक० । लक्षसंख्यायाम् ।

**शतसाहस्र** त्रि० शतं सहस्राणि परिमाणमस्य अण् उत्तरपदवृद्धिः । लक्षसंख्याते ।

**शतह्रदा** स्त्री शतं ह्रादाः शब्दा अस्याः पृषो० ह्रस्वः । १विद्युति अमरः । २वज्रे मेदि० ३दक्षकन्याभेदे वाङ्कपु०

**शताक्षी** स्त्री शतमक्षीणीव पुष्पाण्यस्याः षच् समा० ङीष् । १रात्रौ २शतपुष्पायाम् । शब्दच० ३दुर्गायाञ्च "भूयश्च शतवार्षिक्यामनावृष्ट्यामनम्भसि । मुनिभिः संस्तुता भूमौ सम्भविष्याम्ययोनिजा । ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन् । कीर्त्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः" देवीमाहात्म्ये । [दूर्वायां च राजनि० ।

**शताङ्ग** पु० शतमङ्गान्यवयवा यस्य । १रथे अमरः २तिनिश·

**शतानन्द** पु० शतमानन्दयति अच् । गौतमपुत्रे अहल्यागर्भजे १मुनिभेदे । स च जनकराजपुरोहितः । २देवकीनन्दने मेदि० ४ब्रह्मणि हेमच० ५विष्णुरथे त्रिका० । ६शतजनानन्दके त्रि० ।

**शतानीक** पु० शतमनीकानि यस्य । १व्यासशिष्ये मुनिभेदे २चन्द्रवंश्ये नृपभेदे मेदि० । ३सुदासराजपुत्रे भाग० ९ १२ अ० ।

**शतार** न० शतमराण्यस्य । वज्रे त्रिका० ।

**शतारुस्** न० शतं अरूंषि यत्र । कुष्ठभेदे "रक्तं श्यावं सदाहार्त्ति शतारुः स्याद् बहुव्रणम्" भावप्र० ।

**शतायुस्** त्रि० शतमायुर्वर्षाण्यस्य । शतवर्षमितवयस्के "शतायुर्वै पुरुषः" श्रुतिः ।

**शतावरी** स्त्री शतमावृणोति आ+वृ–अच् गौरा० ङीष् । १शतमूल्याम् अमरः । "शतावरी गुरुः शीता तिक्ता स्वाद्वी रसायनी । मेधाग्निपुष्टिदा स्निग्धा नेत्र्या गुल्मातिसारजित् । शुक्रस्तन्यकरी बल्या वातपित्तास्रशोथजित्" भावप्र० । २इन्द्रभार्य्यायां शब्दच० । ३शच्यां त्रिका० । [वर्त्तते णिनि । तत्रैव । शतावर्त्तिन् ।

**शतावर्त्त** पु० शतमावर्त्ता यस्य । विष्णौ हेमच० । शतधा

**शताह्वा** स्त्री शतं शतमूली शतपुष्पा वेति आह्वा यस्याः मध्यपदलोपः । १शतमूल्यां राजनि० २शतपुष्पायाञ्च जटा०

**शतिक** त्रि० शतेन क्रीतः, तस्य विकारः तस्येदं वा ठन् । १शतेन क्रीते पदार्थे । २तद्विकारे ३तत्सम्बन्धिनि च । शतमस्मै वृद्धिः आयः लाभः शुल्कम् उपदा वा दीयते ठन् । ४वृद्ध्यादिरूपेण शतदानसम्प्रदाने । पक्षे यत् शत्य तदर्थे । [श्चेव क्रीतादौ शतिकशब्दार्थे ।

**शत्य** त्रि० शतेन क्रीतः शतिकशब्दवत् यत् । शतसंख्यातद्र०

**शत्रु** पु० शद–त्रुन् । १रिपौ राज्ञां २विजयानन्तरस्थे नृपे अमरः ३ज्योतिषोक्ते लग्नावधिषष्ठस्थाने ४कामादिषु च । ५शातके त्रि० । [शत्रुघातके २रिपुनाशके त्रि० ।

**शत्रुघ्न** पु० शत्रून् हन्ति हन–क । दशरथात्मजे सुमित्रागर्भजे

**शद** शातने शीर्णतायां भ्वा०पर०अक०अनिट् लृदित् । शीयते अशदत् । शत्स्यति

**शद** गतौ भ्वा०पर०सार्वधातुके आत्म० सक०अनिट् । शीयते

**शद** पु० शद–अच् । फलमूलादौ सिद्धान्तकौ० ।

**शद्रि** पु० शद–क्रि । १मेघे २जिष्णौ मेदिनी० ३गजे उज्ज्वला०

**शद्रु** त्रि० शद–क्रु १पतनकर्त्तरि २गन्तरि च ।

**शनकावलि(ली)** स्त्री शनैः कायति कै–क पृषो० तेषामावलिर्यत्र वा ङीप् । गजपिप्पल्यां शब्दच० ।

**शनपर्णी** स्त्री शणस्येव पर्णान्यस्याः पृषो० णस्य नः । कटुक्याम् शब्दच० ।

**शनि** पु० शो–अनि किच्च । १सूर्य्यपुत्रे छायागर्भजाते ग्रहभेदे "शनिर्निकृष्टोऽनिलरूक्षवर्ष्मा शूद्रात्मना धातुःप्रमोऽस्थिरश्च । क्रूरः प्रशान्तोऽतिपरोऽतिदृष्टोऽकरः शितोष्ट् दीर्घदन्तोऽलकोत्कम्" नील० ताज० । "मन्दोऽलसः कपिलदृक्कृशदीर्घगात्रः स्थूलद्विजः परुषरोमकचोऽनिलात्मा" बृहज्जा० । २तत्स्वामिकदिने च "शनौ वन्ध्यां विजानीयात्" ज्यो० त० । [वारे ।

**शनिवार** पु० शनिस्वामिको वारः । सूर्य्यादिवारमध्ये सप्तमे

**शनैश्चर** पु० शनैश्चरति चर–अच् । शनिग्रहे तस्य ग्रहाणां मध्ये सर्वोपरिकक्षास्थितत्वात् बहुकालेनैकैकराशिभोगात् मन्दगतित्वम् । [अमरः ।

**शनैस्** अव्य० शण–डैस् पृषो० हक् च । मन्दे २स्वैर्य्ये च

**शंस** हिंसायां स्तुतौ कथने च भ्वा० पर० सक० सेट् क्त्वा वेट् । शंसति अशंसीत् । [शप्यति ते अशाप्सीत् ।

**शप** आक्रोशे वा भ्वा०पक्षे दिवा०उभ०सक०अनिट् । शपति ते

**शपथ** पु० शप-अथन् । सत्यताकरणाय दिव्यभेदकरणे यथा एतत् यदि मिथ्या स्यात् तदा मे एतदनिष्टं स्यादित्यादि

**शपन** पु० शप-ल्युट् । १शपथे अमरः । २गालौ त्रिका० ।

**शप्त** त्रि० शप-क्त । १अभिशापप्राप्ते २कृतशपथे तृणभेदे पु० शब्दच० । [च मेदि० ।

**शफ** न०शम-अच् पृषो०पस्य फः । १गवादीनां खुरे २वृक्षमूले

**शफर** पुंस्त्री० शफं राति रा-क । (पुँटी) मत्स्यभेदे अमरः स्त्रियां ङीप् ।

**शफराधिप** पु० ६त० । इल्लिशमत्स्ये त्रिका० । [शब्दय ते ।

**शब्द** शब्दकरणे अ०चु०उभ० सक० सेट् । शब्दयति ते अश-

**शब्द** पु० शब्द-घञ् । १ध्वन्यात्मके २वर्णात्मके च श्रोत्रे-न्द्रियग्राह्ये आकाशस्य गुणभेदे ।

**शब्दग्रह** पु० शब्दं गृह्णाति ग्रह-अच् । १श्रोत्रेन्द्रिये कर्णे अण् ६त० । २शब्दग्रहणे ।

**शब्दतन्मात्र** न० कर्म० । सांख्यमतसिद्धे आकाशकारणे सूक्ष्मभूतभेदे तन्मात्रशब्दे ३२२८ पृ० दृश्यम् ।

**शब्दन** त्रि० शब्द-ल्यु । शब्दकारके अमरः ।

**शब्दब्रह्मन्** न०शब्दात्मकं ब्रह्म । १वेदात्मके २स्फोटात्मके च नित्ये शब्दरूपे ब्रह्मणि । [१वाणभेदे २अर्जुने त्रिका० ।

**शब्दभेदिन्** पु०शब्दानुसारेण भिनत्ति लक्ष्यम् भिद-णिनि ।

**शब्दवेधिन्** पु० शब्दानुसारेण विध्यति लक्ष्यं विध-णिनि । १वाणभेदे २अर्जुने च धनञ्जयः ।

**शब्दशक्ति** स्त्री ६त० । शब्दानामर्थाद्यबोधकताख्ये अभि-धालक्षणादौ वृत्तिरूपे सामर्थ्ये ।

**शब्दाधिष्ठान** न० ६त० । कर्णे हेमच० ।

**शब्दानुशासन** न० अनुशिष्यतेऽनेन अनु+शास-ल्युट् ६त० । शब्दसाधुतासाधके व्याकरणे । "अथ शब्दानुशा-सनम्" महाभाष्यम् ।

**शब्दालङ्कार** पु० शब्दमात्रकृतोऽलङ्कारः । अलङ्कारशास्त्र-प्रसिद्धेऽनुप्रासादौ अलङ्कारे । अलङ्कारशब्दे तद्भेदा-दिकं दृश्यम् ।

**शब्दित** त्रि० शब्द-क्त । आहूते ।

**शम** शान्तौ अक० शान्तीकरणे सक० दि० शमा० पर० सेट् । शाम्यति इरित् अशमत्-अशमीत् । उदित् क्त्वा वेट् । शान्तः । शमयति शामयति ।

**शम** आलोचने चु० उभ० सक० सेट् । शामयति ते शम-यति ते अशीशमत् त ।

**शम** पु० शम-घञ् । १शान्तौ अन्तरिन्द्रियदमने अमरः । २मोक्षे त्रिका० ३पाणौ राजनि० । ४उपचारे राजनि० ।

**शमथ** पु० शम-अथच् । १शान्तौ अमरः । २मन्त्रिणि मेदि० ।

**शमन** पु० शमयति शम-णिच्-ल्यु । लोकानां पुण्यापुण्य-फलदायकत्वेन दण्डकारके १यमे अमरः । शम-णिच्-भावे ल्युट् । २शान्तीकरणे न० । ३यज्ञार्थपशुघाते अमरः ४चर्वणे धरणिः ५हिंसायां हेमच० ६मृगभेदे शब्दच० ।

**शमनस्वसृ** स्त्री ६त० । यमुनायाम् अमरः ।

**शमल** न०शम-कलच् । १विष्ठायाम् अमरः । २पापे संक्षिप्त०

**शमि(मी)** स्त्री शम-इन् वा ङीप् । (शाइ) १वृक्षभेदे "शमी तिक्ता कटुः शीता कषाया रेचनी लघुः । कफ-कासश्वासकुष्ठार्शःकृमिजित् कथिता" भावप्र० । २शिम्बायाम् (सुँटि) हेमच० । ३बाकुच्यां मेदि० ।

**शमिन्** त्रि० शाम्यति शम-घिनुण् । शान्ते ।

**शमीक** पु०शम-बा० ईक । मुनिभेदे । [२विप्रे च शब्दच० ।

**शमीगर्भ** पु० शमीगर्भं आधारत्वेनास्त्यस्य अच् । १वह्नौ

**शमीधान्य** न० शमी शिम्बैव धान्यम् । शिम्बात्मके माष-मुद्गादौ धान्ये अमरः ।

"शमीजाः शिम्बिजाः शिम्बा नराः स्युर्माष वैदलाः । वैदला मधुरा रूक्षाः कषायाः कटुपाकिनः । वातलाः कफपित्तघ्ना बद्धमूत्रमला हिमाः । ऋते मुद्गमसूराभ्या-मन्ये त्वाध्मानकारकाः" । मुद्गमसूरयोरनाध्मानकारि-त्वमन्यवैदलापेक्षया न तु सर्वथा एतयोरपि किञ्चिदा-ध्मानकारित्वदर्शनात्" भावप्र० "शूकधान्यं शमीधान्यं समातीतं प्रशस्यते । पुरतो धान्यशूकं प्रायेणाभिनवं गुरु । यवगोधूममाषाश्च तिलाश्चाभिनवा हिताः । पुराणा विरसा रूक्षा न तथार्थकरा मताः" राजवल्लभः ।

**शमीपत्री** स्त्री शम्या इव पत्रमस्याः ङीप् । लज्जालु-लतायां जटा० ।

**शमीर** पु० अल्पा शमी अल्पार्थे र "क्वचित् स्वार्थिका अपि प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते" इति भा-ष्योक्तेः पुंस्त्वम् । क्षुद्रायां शम्याम् अमरः ।

**शम्पा** स्त्री शं पाति पा-क । विद्युति अमरः ।

**शम्पाक** पु० शं सिद्धं पाके फले वा यस्य । १आरग्वधे अमरः । २विपाके ३यावके च हेमच० ।

**शम्ब** गतौ भ्वा० पर० सक० सेट् । शम्बति अशम्बीत् ।

नाकाशे पर्वते शून्ये न च चैत्यद्रुमे तथा। न तु द्वारेऽभ्युक्षाकीर्णे नार्द्रपादस्त्वधावितः। पाषाणे शयने नैव वङ्कदारुकृते न च। न दग्धे विद्युता चैव वज्रिकृष्टे जले तथा। न स्वपेत् सन्ध्ययोर्नित्यं न श्मशानगते तटे। एवं स्वपन् नरो नित्यं सुखस्येह परत्र भाक्। अन्यथे च भवेद्दुःखी मृतो नरकमश्नुते" वह्निपु०। सति सूर्ये शय्या न पातनीया सूर्योदयात् पूर्वमुत्तोलनीयेत्याह स्मृतिः "भास्करालङ्कशय्यानि नित्याग्निवर्जितानि च। सूर्यावलोकिदीपानि लक्ष्मीर्या वेश्मानि भाजनम्। आसनं वसनं शय्या जायापत्यं कमण्डलुः। आत्मनः शुचिरेतानि न परेषां कदाचन"। न कदाचन इत्यनुमतिं विना अन्यथाऽऽतिथ्यानुपपत्तेः रघु०। व्यासः "शुचौ देशे विविक्ते तु गोमयेनोपलिप्तके। प्रागुदक्प्रवणे चैव संविशेत्तु सदा बुधः। माङ्गल्यं पूर्णकुम्भञ्च शिरःस्थाने निधापयेत्। वैदिकैर्गारुडैर्मन्त्रै रक्षां कृत्वा स्वपेत्ततः"। गर्गः "स्वगेहे प्राक्शिराः शेते श्वाशुरे दक्षिणाशिराः। प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः" मार्कण्डेयपु० "प्राक्शिरःशयने विद्याद् धनमायुश्च दक्षिणे। पश्चिमे प्रबलां चिन्तां हानिं मृत्युं तथोत्तरे" तथा "नमस्कृत्याव्ययं विष्णुं समाधिस्थः स्वपेन्निशि" मार्कण्डेयपु० "शून्यागारे श्मशाने च एकवृक्षे चतुष्पथे। महादेवगृहे चापि शर्करालोष्टपांशुषु। धान्यगोविप्रदेवानां गुरूणाञ्च तथोपरि। न चापि भग्नशयने नाशुचौ नाशुचिः स्वयम्। नार्द्रवासा न नग्नश्च नोत्तरापरमस्तकः। नाकाशे सर्वशून्ये च न च चैत्यद्रुमे तथा"। न स्वपेदित्यर्थः आ० त०। "भुक्त्वा च विधिवत्सन्ध्यौहिको भुक्त्वाऽवशिष्टकम्। शुद्धहृद्वाक्यवदनः स्वपेत् शुभ्मपदो निशि। नोत्तराभिमुखः स्वप्यात् पश्चिमाभिमुखो न च। न चाकाशे न नग्नो वा नाशुचिर्नासने क्वचित्। न शीर्णायान्तु खट्वायां शून्यागारे न चैव हि। नापि वंशे च पालाशे शयने वा कदाचन" कौर्मपु० १८अ०। "क्षतपादादिशौचश्च भुक्त्वा धान्यं ततो व्रजेत्। गच्छेत् शय्यां शयन्यास्य अथवा दारुनिर्मिताम्। शाल्मलस्य कदम्बस्य नीपमन्दारकस्य च। किंशुकस्य वटस्याथ तथा कुशमयस्य च। आरोहणात् भवेत् पापं तस्मात्तेषु न च स्वपेत्। शरोह शय्यां द्रुते वा अर्पिते परमेश्वरि!। न शुक्रे नापविद्धे च न दग्धे न च भूतले। लक्ष्मीकाङ्क्षी तथा वस्त्रे शय्याभावे स्वपेद्व्रती। स्वपेद्वा पङ्क्तिरूपे च कनकोऽन्यतेषु च" मत्स्यपु० ४४अ०। "स्वासामष्टौ धनधान्यरतान् दिक्षु पार्श्वे च दक्षिणे। ततस्तद्दिशुणान् २२ वामे पर्यङ्के स्वप्यात् यथासुखम्। वामदिशायामनलो नाभेरूर्ध्वोऽस्ति जन्तूनाम्। तस्मात्तु वामपार्श्वे शयीत भुक्तप्रपाकार्थम्" भावप्र०। [तल्पे च।

**शयनीय** न० शी-आधारे अनीयर्। शय्यायाम् स्वार्थे क।

**शयनैकादशी** स्त्री कर्म०। आषाढशुक्लैकादश्याम्।

**शयालु** त्रि० शी-आलुच्। निद्राशीले अमरः। २अजगरे, ३कुक्कुरे च पु० शब्दार०। [द्रायां न०।

**शयित** त्रि० शी-कर्त्तरि क्त। १निद्रिते। भावे—क्त। नि-

**शयु** पु० शी—उ। १अजगरे सर्पे अमरः। उणा०। शयुकोऽप्यत्र उणादिको०।

**शय्या** स्त्री शी-आधारे क्यप्। १खट्वायाम् अमरः। भावे क्यप्। २शयने ३गुम्फने मेदि०। "त्रिदोषशमनी खट्वा तूली वातकफापहा। भूशय्या बृंहणी वृष्या काष्ठफली तु वातला"। "भूशय्या वातलातीव रूक्षा पित्तास्रनाशिनी। सुशय्याशयनं हृद्यं पुष्टिनिद्राधृतिप्रदम्। श्रमानिलहरं वृष्यं विपरीत मतोऽन्यथा" भावप्र०। शयनविधानं यथा "क्षतपादावशौचश्च भुक्त्वा वार्यं ततो व्रजेत्। गच्छेत् शय्यामस्फुटितामेव दारुमयीं नृप!। नातिशालां न वै भग्नां नासमां मलिनां न च। न च जन्तुमयीं शय्यामधितिष्ठेदनास्तृताम्"। विष्णुपु० ३अंशे ११अ०।

**शर** न० शॄ-अच्। १जले २नीरे ३दधिदुग्धाग्रसारे पु० मेदि० ४इषुसाधने तृणभेदे पु०। "मद्गुरुः शरो बाणस्तेजनश्चक्षुवेष्टनः। मुञ्जो मुञ्जातको बाणः स्थूलदर्भः सुमेखलः। मुञ्जद्वयन्तु मधुरं तुवरं शिशिरं तथा। दाहतृष्णाविसर्पास्रमूत्रवस्त्यक्षिरोगजित्। दोषत्रयहरं वृष्यं मेखलास्तूपयुज्यते" भावप्र०। भावे अप्। ५हिंसायाम्।

**शरकाण्ड** पु० ६त०। १शरस्तम्बे २तन्निर्मितकाण्डे च।

**शरज** न० शरात् दधिदुग्धसारात् जायते जन-ड। १हैयङ्गवीने हेमच०। शरवणे जाते २कार्त्तिकेये पु०। अग्निकुमारशब्दे ५४१पृ० दृश्यम्।

**शरजन्मन्** पु० शरवणे जन्म यस्य। कार्त्तिकेये अमरः।

**शरट** पु० शॄ-अटन्। १कृकलासे अमरः २कुसुम्भशाके च भरतः

**शरण** न० शॄ-ल्युट्। १गृहे २रक्षके अमरः। ३रक्षणे ४वधे

**शाकुन्तलेय** पु० शकुन्तलाया अपत्यं ढक्। दुष्मन्तात्मजे शकुन्तलागर्भजे भरते नृपे शब्दा०।

**शाक्त** त्रि० शक्तिर्देवताऽस्य अण्। तन्त्रोक्ते शक्तिदेवतोपासके तस्य प्रशंसा मुण्डमालात० २पटले उक्ता "शाक्तं सर्वं च पाताले नास्ति शाक्तात् परः प्रियः। शैवानां गाणपत्यानां वैष्णवानां तथैव च। शैवानां चैव शाक्तश्च श्रेष्ठः श्रेष्ठतमः प्रिये!" "शाक्ता एव द्विजाः सर्वे न शैवा न च वैष्णवाः। उपासते यतो देवीं गायत्रीं परमाक्षराम्" निर्वाणत० २पटले। "शक्तावाराधनं कृत्वा नान्यस्याराधनं चरेत्। अन्यथा सुरवाहे त्वि! योगिनी शापमाप्नुयात्" गन्धर्वत०। "तर्जन्या रजतं धार्यं स्वर्णं धार्यमनामया। एष एव क्रमः शाक्तो न दर्भो वनमस्तकः" स्मृतिसार०।

**शाक्तीक** पु० शक्तिः प्रहरणमस्य ईकक्। शक्त्या योद्धरि [अमरः।

**शाक्य** पु० शक-घञ् तत्र साधुः यत्। बुद्धे।

शाक्यवंशनिरुक्तिरश्वघोषोक्ता यथा

"शाकवृक्षप्रतिच्छन्नं वासं यस्मात् प्रचक्रिरे। तस्मादिक्ष्वाकुवंश्यास्ते भुवि शाक्या इति श्रुताः" भरतधृतवचनम्। इक्ष्वाकुवंशायिका पितृयत्नाः केचिदिक्ष्वाकुवंशजा गोतमवंशजकपिलमुनेराश्रमे योगाभ्यासाय शाकवृक्षच्छन्नवासाः शाक्या इति ख्यातिमापन्नाः।

**शाक्यमुनि** पु० शाक्यो मुनिः। बुद्धभेदे अमरः।

**शाक्यसिंह** पु० शाक्यवंशे सिंह इव। बुद्धभेदे अमरः।

**शाक्र** त्रि० शक्रस्येदं स देवताऽस्य वा अण्। १इन्द्रसम्बन्धिनि २इन्द्रदेवताके हविरादौ। स्त्रियां ङीप्। शक्रस्येव पराक्रमः अस्त्यस्याः अण्। ३शक्रतुल्यपराक्रमायां दुर्गायाम् "इन्द्राणी इन्द्रजननी शाक्री शक्रपराक्रमा" देवीपु०।

**शाक्वर** पु० शक–ष्वरप् स्वार्थे अण्। वृषे हेमच०।

**शाख** व्याप्तौ भ्वा० पर० सक० सेट् ऋदित् चङि न ह्रस्वः। शाखति अशाखीत्।

**शाख** पु० शाख–अच्। कृत्तिकापुत्रे स्कन्दानुजे १कुमारानुचरगणभेदे "अग्निपुत्रः कुमारस्तु शरस्तम्बे व्यजायत। तस्य शाखो विशाखश्च नैगमेयश्च पृष्ठजाः" मत्स्यपु०५अ०। २ग्रन्थपरिच्छेदे वर्गस्यामीवे ग्रन्थांशभेदे शब्दच०। ३वृक्षांशभेदे (डाल) स्त्री अमरः। ३पक्षान्तरे ४राजौ ५वेदैकदेशे च स्त्री मेदि०। ६अन्तिके विश्वः। ७देहांशभेदे च।

**शाखाकण्ट** पु० शाखाव्यापी कण्टः कण्टको यस्य। स्नुही वृक्षे राजनि०। [पुरे अमरः। शाखापुरादयोऽप्यत्र

**शाखानगर** न० शाखेव नगरम्। मूलनगरसमीपस्थे नगर-

**शाखापित्त** पु० शाखासु पित्तं यतः। पाणिपादादिदेहशाखादाहे राजनि०। [स्त्रियां ङीष्।

**शाखामृग** पुंस्त्री० शाखासु मृगः पशुः। वानरे अमरः।

**शाखाम्ला** स्त्री शाखाम्लवृक्षा। वृक्षाम्ले राजनि०।

**शाखारण्ड** पु० शाखायां वेदशाखायां रण्डः तद्विहितकर्मानाचरणात्। स्वशाखात्यागेनापरशाखोक्तकर्मकर्त्तरि हेमच०। [राजनि०।

**शाखाल** पु० शाखाः बाहुल्येन सन्त्यस्य अच्। वानीरवृक्षे

**शाखाशिफा** स्त्री शाखाकृता शिफा मूलम् शाक०। वटादीनां शाखाजाते १मूले अमरः। २शिफाशाखस्य शाखा युतायां गुडूच्यादिलतायाम् भरतः।

**शाखिन्** पु० शाखाऽस्त्यस्य इनि। १वृक्षे अमरः। २वेदैकदेशवति, ३नृपभेदे, ४ वेदभेदे च मेदि०।

**शाखोट** पु० शाख–व्याप्तौ ओटन् (शेओड़ा) वृक्षे सिद्धा० स्वार्थे क। तत्रैव।

**शाङ्खिक** पुंस्त्री० शङ्खस्य विकारवलयनिर्माणं शिल्पमस्य ठञ्। जातिभेदे (शाँखारी) अमरः स्त्रियां ङीष्। [रत्नमा०।

**शाङ्कुष्ठा** स्त्री शव्राति गो–क सः अङ्कुश इव यस्याः। गुञ्जायां

**शाट** पु० शट–घञ्। वस्त्रे अमरः। स्त्रीत्वमपि गौरा० ङीष्।

**शाटक** पु०न० शट–ण्वुल्। वस्त्रे अमरः स्त्रीत्वमपि टाप्।

**शाट्यायन** पु० १मुनिभेदे, तेन प्रोक्तम् अण्। २प्रमत्तहोमकर्मणि वैगुण्यसमाधानार्थं विहिते होमभेदे न० आश्व०।

**शाठ्य** न० शठस्य भावः ष्यञ्। शठतायाम्। [illegible]

**शाड** श्लाघायां भ्वा० आ० सक० सेट्। शाडते अशाडिष्ट ऋदित्

**शाण** न० शणेन निर्वृत्तम् अण्। शणसूत्रनिर्मिते १वस्त्रादौ शण–दाने(तेजने) घञ्। (कष्टिपाथर) २कषपाषाणे ३शस्त्रादीनां निकषणे तीक्ष्णकरणयन्त्रभेदे मेदि० ४करपत्रे (करात) विश्वः। ५माषचतुष्टयमाने भावप्र०।

**शाणाजीव** पु० शाणमाजीवति आ+जीव–अच्। अस्त्रतीक्ष्णताकारके शिल्पिनि हेमच०।

**शाणि** पु० शण–इञ्। १पट्टवस्त्रे शब्दच०। शणेन निर्वृत्ता इञ् वा ङीप्। २शणनिर्मिते पट्टिकाद्ये ३छिन्नदूष्ये च हेमच० ४हस्तकटाक्षादिसूचनायां शब्दर०। ५वस्त्रगृहे (ताँबु) मेदि०।

**शाणित** त्रि० शण–दाने (तेजने) णिच्–क्त। तीक्ष्णीकृते।

**शाणीर** न० शण–भा० ईरन्। शोणनदमध्यस्थतटे विश्वः।

**शाण्डिल्य** त्रि० शण्डिलस्यापत्यम् यञ्। गोत्रप्रवर्त्तके भक्तिशास्त्रकारके १मुनिभेदे मेदि०। भक्तिशब्दे तन्मतं दिग्मात्रं दर्शितम्। तत्प्रियत्वात् २बिल्वे अमरः ३वह्निभेदे च मेदि०।

**शात** न० शो-क्त। १सुखे २तद्वति त्रि० अमरः। ३छिन्ने ४कृशे त्रि० विश्वः। ५दुर्बले ६निशिते च त्रि० मेदि०। ७धुस्तूरे पु० अमरः। [अमरः २धुस्तूरे ३करवीरे च पु० मेदि०।

**शातकुम्भ** न० शतकुम्भे गिरौ भवः अण्। १हिरण्ये

**शातकौम्भ** न० शतकुम्भे भवम् अण् हेमचन्द्रः। १हिरण्ये २धुस्तूरे च द्विरूपकोषः।

**शातन** न० शो-णिच्-तुक् च ल्युट्। १तनूकरणे २विनाशने च "यदर्थं सर्वसत्त्वानां जायते पक्षशातनम्" इति चाधिकरणमाला। [चन्द्रप्रकाशे शब्दच०।

**शातपत्रक** पु० शतपत्राणीव श्यति कै-क स्वार्थे अण्।

**शातभीरु** पु० शाता दुर्बलाः यान्ति भीरवो यस्याः ब०। १मल्लिकाभेदे रत्नमाला। [त्रि०श्री०।

**शातमान** त्रि० शतमानेन क्रीतम् अण्। शतमानेन क्रीते

**शातला** स्त्री शातं कायरं लाति ला-क। ( चामकसा ) इति भरतः।

**शातातप** पु० स्मृतिकारके मुनिभेदे। तेन प्रोक्तं छ। शातातपीय तत्प्रोक्ते कर्मविपाकग्रन्थे।

**शात्रव** पु० शत्रुरेव स्वार्थेऽण्। १रिपौ अमरः। तस्य भावः तेषां संघो वा अण्। २वैरे ३रिपुसमूहे च न०।

**शाद** पु० शद-घञ्। १कर्दमे २हरिततृणे च अमरः।

**शादहरित** पु० शादेन हरितत्तृणेन युक्तः। शाद्वले देशे अमरः

**शाद्वल** पु० शादाः सन्त्यत्र ड्वलच्। बहुलहरिततृणयुक्ते देशे अमरः। [शमीगर्भवत् शमीगर्भादिवत्।

**शान** तेजने भ्वा० उभ०सक०सेट् स्वार्थे सन्। शीशांसति ते

**शान** पु० शान-अच् शो निशाने इत्युक्तेरपि वा घञ्। खड्गादीनां तीक्ष्णताकारके यन्त्रभेदे भरतः।

**शानी** स्त्री शान-इन् ङीप्। इन्द्रवारुण्यां शब्दच०

**शान्त** त्रि० शम-क्त। १शमयुक्ते २अभियुक्ते च शम-णिच्-क्त त्रि०। ३शान्तिं प्रापिते त्रि०। ४निर्वेदस्थायिभावके रसभेदे पु० मेदि०। ५लोमपादराजकन्यायाम्, ऋष्यशृङ्गपत्न्यां ६शमीभेदे च स्त्री राजनि०।
शान्तरसनिरूपणं सा०द० ३प० यथा
"शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः। कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः। अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या। परमात्मस्वरूपं वा तस्यालम्बनमिष्यते। पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः। महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः। रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः। निर्वेदहर्षस्मरणमतिभूतदयादयः। निरहङ्काररूपत्वाद्दयावीरादिरेष नो"। दयावीरादौ हि जीमूतवाहनादौ अन्तरा मलयवत्याद्यनुरागादेरन्ते च विद्याधरचक्रवर्त्तित्वाद्यप्राप्तेर्दर्शनादहङ्कारोपशमो न दृश्यते। शान्तस्तु सर्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम्"। ननु "न यत्र दुःखं न सुखं न चिन्ता न द्वेषरागौ न च काचिदिच्छा। रसः स शान्तः कथितो मुनीन्द्रैः सर्वेषु भावेषु शमप्रधानः" इत्येवंरूपस्य शान्तस्य मोक्षावस्थायामेवात्मरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्यादीनामभावात् कथं रसत्वमित्युच्यते। "युक्तवियुक्तदशायामवस्थितो यः शमः स एव यतः। रसतामेति तदस्मिन् सञ्चार्यादेः स्थितिश्च न विरुद्धा"। यश्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः। उक्तं हि "यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्। सर्वाकारमहङ्काररहितत्वं व्रजन्ति चेत्। अत्रान्तर्भावमर्हन्ति दयावीरादयस्तदा"। आदिशब्दात् धर्मवीरदानवीरदेवताविषयरतिप्रभृतयः"। [नव" इति तत्संख्यमन्तः।

**शान्तनव** पु० शान्तनोरपत्यम् अण्। भीष्मे "भीष्मः शान्त-

**शान्तनु** पु० द्वापरयुगभवे चन्द्रवंश्ये प्रतीपराजपुत्रे नृपभेदे

**शान्तम्** अव्य० शान्ति+वा० डम्। निवारणे मेदि०।

**शान्ति** स्त्री शम-क्तिन्। १कामक्रोधादिजये २विषयेभ्यो मनसो निवारणे अमरः। ३उपद्रवनिवारणे ४निवारणे च "यत्किञ्चिद्वस्तु संप्राप्य स्वल्पं वा यदि वा बहु। या तुष्टिर्जायते चित्ते सा शान्तिः कथ्यते बुधैः" पद्मपु० क्रियायो० ख० ५छन्दोभेदे ६दुर्गायाम् "सर्वदा सर्वभेदात् शान्तिस्त्वाच्छान्तिरुच्यते" देवीपु०। ७पूजाहोमजपदानादिद्वारा गोचरविरुद्धादिस्थग्रहदोषस्य दुःस्वप्नादिसूचितैहिकानिष्टहेतुपापनिवृत्तौ च "यथा शस्त्रप्रहाराणां कवचं विनिवारकम्। तथा दैवोपघातानां शान्तिर्भवति वारणम्" मत्स्यपुराणवाक्यम्। सा च मलमासेऽपि कार्य्या नैमित्तिकत्वात् "नैमित्तिकानि काम्यानि निपतन्ति यथा यथा। तथा तथैव कार्य्याणि

**शाम्भव** पु० शम्भोरयम् अण्। १गुग्गुलौ २कर्पूरे ३शिवमल्लिकायां राजनि०। ४विषभेदे शब्दच० ५शम्भुपुत्रे पु० ६देवदारुण्यपि च न० त्रि० ७शिवसम्बन्धिनि ८तदुपासके च त्रि०। ९दुर्गायां स्त्री "शाम्भवी कुपिता तस्येति" तन्त्रम्।

**शा(सा)यक** पु० शो(सो) वा-ण्वुल्। १बाणे २खड्गे च जटा०।

**शार** दौर्बल्ये अद० चु० उभ० सक० सेट्। शारयति-ते अशशारत् त।

**शार** न० शार-अच्, शॄ-घञ् वा। १कर्बूरवर्णे २तद्वति त्रि० अमरः ३वायौ पु० अमरः ४अक्षोपकरणे मेदि०।

**शारङ्ग** पुंस्त्री० शारं कर्बुरमङ्गं यस्य यस्य। १चातकपक्षिणि २हरिणे ३गजे ४भृङ्गे ५मयूरे च। रायमुकुटः जातित्वात् स्त्रियां ङीप्। ६हिंसे ७वाद्ययन्त्रभेदे स्त्री ङीप् शब्दार्थचि०।

**शारद** न० शरदि भवम्-अण्। १श्वेतपद्मे राजनि०। २काशे ३बकुले ४हरिमुद्गे च पु० राजनि०। ५शरत्कालजाते त्रि० स्त्रियां ङीप्। शारदं श्वेतपद्ममस्त्यस्याः अच्। ६सरस्वत्यां स्त्री त्रिका०। ७नूतने ८अप्रतिभे त्रि० मेदि०। ९शालीने त्रि० विश्वः। १०दुर्गायां स्त्री टाप् "शरत्काले पुरा यस्मात् नवम्यां बोधिता सुरैः। शारदा सा समाख्याता पीठे लोके च नामतः" ति०त०। ११वानरभेदे शब्दर०। १२तोयपिप्पल्यां १३सप्तच्छदे स्त्री मेदि० ङीप्। एवं १४कोजागरपूर्णिमायां स्त्री शब्दरत्ना०। शरत्कालीने पूजादौ त्रि० स्त्रियां ङीप्। "शारदी चण्डिकापूजा त्रिविधा परिकीर्त्तिता। सात्त्विकी राजसी चैव तामसी चेति तां शृणु" भविष्यपु०।

**शारदिक** न० शरदि भवं श्राद्धं रोगो वा ठञ्। शरत्काले [भवे १श्राद्धे २शरत्कालजे रोगे पु०

**शारदीय** त्रि० शरदि भवः छण्। १शरत्काले भवे तत्कालभवादौ तथाभूतायां दुर्गापूजायां स्त्री "शङ्करे जगदम्बायाः शारदीयो महोत्सवः"। "शारदीया महापूजा चतुःकर्ममयी शुभा" ति०त०।

**शारि(री)** स्त्री शॄ-इञ् वा ङीप्। १पाशकादिगुटिकायां २अक्षोपकरणे च मेदि०। ३पक्षिभेदे च "शारी चरन्ती सखि! मारयेति" नैषधम्। ४युद्धार्थगजपर्य्याणे ५व्यवहारभेदे मेदि०। ६कपटे शब्दचि०। शार्य्यं च। पक्षिभेदे वीणावादने च हेमच०।

**शारिफल** पु० न० शारेः फलमिवाधारः। शारिफलके पाशकक्रीडाधारे १द्रव्ये (छक) अमरः शार्य्यं च। तत्रैव।

**शारिवा** स्त्री शारिरिव वनति वन-ड। श्यामालतायाम् अमरः। "एकं वै शारिवामूलं सर्वग्रहविमोक्षणम्" वैद्य०।

**शारिशृङ्खला** स्त्री शारेः शृङ्खलेव। पाशकभेदे तन्त्रे दाय "चतुरी तित्तिरी द्यूतं पञ्चमी शारिशृङ्खला। नव पीठी पाटकाशी नवः शाक्यमयुग्मकः। एते पाशकभेदाः स्युर्जवनो वाहकोऽपि च" शब्दर०।

**शारीर** त्रि० शरीरस्येदम् अण्। १देहसम्बन्धे सुखदुःखादौ तस्येदमस्य पुनः अण्। २वृषे पु० मेदि०। शरीरमात्मत्वेनाभिमन्यते अण्। ३जीवे। शार्य्यं च। तत्रार्थे, शारीरं जीवं दुःखं वा अधिकृत्य कृतो ग्रन्थः कन्। व्याख्याते वेदान्तशास्त्रे चिकित्साशास्त्रे सुश्रुतग्रन्थाद्येकदेशे च शारीरञ्च दुःखं रोगादिकं यथोक्तं विष्णुपु० ६५अ०। "आध्यात्मिकोऽपि द्विविधः शारीरो मानसस्तथा। शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः। शिरोरोगप्रतिश्यायज्वरशूलभगन्दरैः। गुल्मार्शःश्वयथुश्वासच्छर्द्यादिभिरनेकधा। तथाक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञकैः। भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि" सुश्रुतान्तर्गतशारीरस्थानस्य तत्र ग्रन्थम्।

**शारीरिक** त्रि० शरीरे भवः ठञ्। देहजाते दुःखादौ।

**शारुक** त्रि० शॄ-उकञ्। हिंसके।

**शार्कर** त्रि० शर्करा अस्त्यस्य अण्। १शर्करायुक्ते देशे शर्कराया विकारः अण्। २भाषिते ३दुग्धफेने च पु० मेदि०। शर्करीअस्त्योऽस्य अण्। शर्करीखण्डोयुक्ते ४अश्मादौ।

**शार्ङ्ग** त्रि० शृङ्गस्य विकारः अण्। १शृङ्गजाते धनुषि। २विष्णुधनुषि ३धनुर्मात्रे च पु० मेदि० ४आर्द्रके न० राजनि०।

**शार्ङ्गिन्** पु० शार्ङ्गः धनुरस्य इनि। १विष्णौ अमरः। २धनुर्धामे त्रि०।

**शार्दूल** पुंस्त्री० शॄ-ऊलच् दुक् च। १व्याघ्रभेदे अमरः। २पशुभेदे ३शरभे ४राक्षसभेदे च मेदि० उत्तरपदस्थः ५श्रेष्ठार्थे अमरः। ६पक्षिभेदे शब्दचि० ७चित्रके राजनि०। स्त्रियां जातित्वात् ङीष्।

**शार्दूलललित** न० अष्टादशाक्षरपादके छन्दोभेदे तल्लक्षणं यथा "मः सौ जः सतसा दिनेशऋतुभिः शार्दूलललितम्" छन्दोम०।

**शार्दूलविक्रीडित** न० ऊनविंशत्यक्षरपादके छन्दोभेदे तल्लक्षणं यथा "सूर्य्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्" छन्दोम०।

**शार्वर** न० शर्वर्य्यां भवम् अण्। १अन्धकारे।

**शिखिताबल** पु० शिखितान्यबलानीव येन। १शाले २शिखादातरि पुरुषे च त्रिका०।

**शिख** गतौ भ्वा०पर०सक०सेट् इदित्। शिखति अशिखीत्।

**शिखण्ड** पु० शिखामणति अण–ड तस्य नेत्त्वम्, इत०। शक० वा। १मयूरपिच्छे अमरः। २चूड़ायाञ्च मेदि०।

**शिखण्डक** पु० शिखण्ड इव कन्। १काकपक्षे अमरः। (काकजुल्फी) स्त्रीत्वमपि तत्र। सा च २चूड़ायाञ्च हेमच०। [स्त्रियां ङीप्।

**शिखण्डिक** पुंस्त्री० शिखण्डोऽस्त्यस्य ठन्। कुक्कुटे हेमच०

**शिखण्डिन्** पु० शिखण्डोऽस्त्यस्य इनि। १मयूरे २द्रुपदराजस्य पुत्रभेदे मेदि०। ३मयूरपुच्छे ४कुक्कुटे ५वाणे च हेमच०। ६गुञ्जायां ७स्वर्णयूथिकायां राजनि०। ८विष्णौ विष्णु स० ९यूथिकायां स्त्री ङीप् मेदि०।

**शिखर** न० शिखा अस्त्यस्य अरच् अलोपः। १पर्वताग्रे २वृक्षाग्रे च। ३कक्षाग्रे पुंन० अमरः। ४पुलके ५कुन्दकाद्ये पक्वदाड़िमबीजाभे ६रत्नभेदे ७अग्रमात्रे मेदि०। ८कोटौ त्रिका०। ९मूर्वायां स्त्री शब्दच०।

**शिखरवासिन्** त्रि०शिखरे वसति वस–णिनि ७त०। १पर्वताग्रवासिनि स्त्रियां ङीप्। "देवी शिखरवासिनी" चण्डी। सा च हिमालयवासिन्यां २दुर्गायां त्रिका०।

**शिखरिन्** पु० शिखराऽस्त्यस्य इनि। १पर्वते २वृक्षे ३अपामार्गे मेदि० ४कोह्वे ५कोयष्टौ हेमच०। ६वन्दाके ७कुन्दुरुके ८यावनाले ९वर्वटमहुन्त्र्यां राजनि०। १०रसालायां मार्ज्जितायां स्त्री। ११सप्तदशाक्षरपादके छन्दोभेदे स्त्री "रसैः रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" छ०र०। १२नवमल्लिकायां १३रोमावल्यां १४नारीरत्ने च स्त्री मेदि० सर्वत्र ङीप्। [(कुकरङा) क्षुपभेदे रत्नमा०।

**शिखलोहित** पु०शिखाग्रस्य अच् तत्र भूतः सन् लोहितः।

**शिखा** स्त्री शी–खक् तस्य नेत्त्वम् पृषो०। १अग्निज्वालायां २मयूरकलापमध्यवर्तिपुच्छे च अमरः। "ज्वलतेव सर्वमाशापि कक्षोपकण्ठशिखां वह्निः" शा०त०। ३शाखायां ४बर्हिचूड़ायां ५लाङ्गलिक्याम् ६प्रपदाग्रे ७चूड़ामात्रे ८प्रपदे च मेदि०। ९प्रधाने शिखायां १०ज्वरौ हेमच०। ११कामज्वरे शब्दच०।

"शिखी शिखावान् कर्म कुर्वीत तस्मा शिखावत एव कर्म्माधिकारः तथापि बद्धशिखस्य कर्मण्यधिकारः न मुक्तशिखस्य यथोक्तं "गायत्र्या तु शिखां बद्धा नैर्ऋत्यां ब्रह्मरन्ध्रतः। जूटिकाञ्च ततो बद्धा ततः कर्म समारभेत्"। "विनष्टशिख आसीनो हि च आचमनं चरेत्। यज्ञोपवीतं सर्व्वेऽङ्गे वाङ्मनःकायसंयतः"। मुक्तशिखस्य आचमने दोषो यथा "शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा। अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत्" आ०त०।

**शिखाकन्द** न० शिखेव कन्दोऽस्य। गृञ्जने राजनि०।

**शिखातरु** पु० शिखाया दीपशिखायास्तरुरिव। दीपवृक्षे (देरको) त्रिका०।

**शिखाधर** पुंस्त्री० शिखां चूडां धरति धृ–अच्। १मयूरे शब्दमा० स्त्रियां ङीष्। २शिखाधारके त्रि० स्त्रियां टाप्। ३मञ्जुघोषे पु० त्रिका०।

**शिखामूल** न०शिखेव मूलमस्य। गृञ्जने (गाँजर) राजनि०

**शिखालु** पु०शिखाऽस्त्यस्य आलुच्। मयूरशिखावृक्षे राजनि०

**शिखावत्** पु० शिखा ज्वालाऽस्त्यस्य मतुप् मस्य वः। १वह्नौ २चित्रकवृक्षे च अमरः। ३केतुग्रहे शब्दच०। ४शिखायुते त्रि०स्त्रियां ङीप्। सा च ५मूर्वायां शब्दच०

**शिखावर** पु० शिखां वृणोति वृ–अच्। पनसवृक्षे शब्दच०

**शिखावल** पुंस्त्री० शिखाऽस्त्यस्य वलच्। १मयूरे अमरः। स्त्रियां ङीष्। २मयूरशिखावृक्षे स्त्री राजनि० टाप्।

**शिखावृद्धि** स्त्री प्रतिदिनग्राह्यवृद्धौ हलिवल्के दृश्यम्।

**शिखिकण्ठ** न० शिखिनो मयूरस्य कण्ठस्तद्वर्णोऽस्त्यस्य अर्श आद्यच्। तुत्थे (तुँते) रत्नमा०।

**शिखिग्रीव** पु० शिखिनो मयूरस्य ग्रीवा तद्वर्णोऽस्त्यस्य अच्। तुत्थे (तुँते) अमरः।

**शिखिध्वज** शिखिनो वह्नेर्ध्वज इव। १धूमे त्रिका०। शिखी मयूरो ध्वजो यस्य। २कार्त्तिकेये शब्दच०।

**शिखिन्** पु०शिखा अस्त्यस्य इनि। १मयूरे २वह्नौ ३चित्रकवृक्षे अमरः। ४केतुग्रहे ५कुक्कुटे ६वृषे ७वृक्षे ८शरे च मेदि०। ९अश्वे हेमच० १०अजलोम्नि रत्नमा० ११पर्वते १२ब्राह्मणे १३सितावरे १४मेथिकायां राजनि० १५शिखायुक्ते त्रि० १६मयूरशिखावृक्षे राजनि० स्त्री ङीप्।

**शिखिप्रिय** पु०शिखिनं प्रीणयति प्री–क। लघुबदरे राजनि०।

**शिखिमण्डल** पु० शिखिनां मण्डलमिव यत्र। वरणवृक्षे शब्दर०। [अजमोदायां राजनि०।

**शिखिमोदा** स्त्री शिखिनः अजलोम्न इव मोदो यस्याः।

**शिखियूप** पु०शिखी शिखावान् यूप इव। स्त्रीकारिणि मृगे राजनि०। [कुष्माण्डे शब्दर०

**शिखिवर्द्धक** पु० शिखिनं वर्द्धयति वृध–णिच्–ण्वुल्।

हरस्याथ चक्रेश्वरम्। तं शिप्रसंज्ञकासारं मनोज्ञं चक्र-देशिनाम्। शीतामलजलं पवैःशु चैवाभिपापाचितम्। ह्रदा यत्र ४परस्यास्य सौवृत्तक्योऽभूद्देवखे, शिप्रां नाम नदीं तस्माच्चित्सृता दक्षिणोदधिम्। गच्छन्तीं ददृशौ पावयन्तीं जनव्रजान्। तत्रैव १६ अ०।

**शिफा** स्त्री शि–फक्। वृक्षाणां १जटाकारे मूले। (शिकड़) अमरः। २नद्यां ३मांसिकायां ४मातरि मेदि०। ५शत-पुष्पायां ६हरिद्रायां राजनि०। ७पद्मकन्दे मुकुटः। जटाकारे मूले पु० विद्याविनोदः।

**शिफाक** पु० शिफेव इवार्थे कन्। पद्ममूले शब्दच०।

**शिफाकन्द** पु० शिफेव कन्दः। पद्ममूले अमरः।

**शिफाधर** पु० शिफा अधरा यस्मात्। शाखायां शब्दच०।

**शिफारुह** पु० शिफायां रोहति रुह–क। वटवृक्षे राजनि०

**शिमुड़ी** स्त्री (चकोनि) ख्याते क्षुपभेदे राजनि०।

**शि(सि)म्बा** स्त्री शाम्यति वमति वा शम-वम–वा वा० बम्बच् पृषो०। (शिमी) ख्याते १पदार्थे शब्दच०। २चक्र-मर्दे पु० शब्दच०।

**शि(म्बि)म्बी** स्त्री शम–कि नि० वा ङीप्। १शिम्बायां (शिम) लतायां हेमच० "महापापहरी शिम्बी" ति०त० २एरकायाञ्च भावप्र०। स्वार्थे क। तत्रैव।

**शिम्बीधान्य** न० शिम्बीजातं धान्यं शा०त०। मुद्गादौ धान्यभेदे भावप्र०। [शब्दर० कप् तत्रैव।

**शिम्बीपर्णी** स्त्री शिम्बीव पर्णमस्याः ङीप्। मुद्गपर्ण्यां

**शिर** न० शॄ–क। १मस्तके जटा० "पिण्डं दद्यात् गयाशिरे" वायुपु०। २पिप्पलीमूले मेदि०। ३शय्यायाम् ४अजगरे च संक्षिप्तसा०।

**शिरःफल** पु० शिर इव फलमस्य। नारिकेले त्रिका०। [शब्दच०

**शिरःशूल** न० शिरसः शूलमिव तापकत्वात्। शूलरोगभेदे

**शिरज** पु० शिरे जायते जन–ड। केशे शब्दच०।

**शिरस्** न० शॄ–असुन् नि०। १मस्तके २शिखरे अमरः। ३प्रधाने ४सेनाग्रे मेदि०।

**शिरसिज** पु० शिरसि जायते जन ड वा अलुक् समासः। केशे जटाध० कुक् शिरोजोऽप्यत्र। [केशे शब्दच०।

**शिरसिरुह** पु० शिरसि रोहति रुह–क वा अलुक् समा०।

**शिरस्क** न० शिरसि कायति प्रकाशते कै–क। शिरस्त्राणे हेमच०

**शिरस्त्र** न० शिरस्त्रायते त्रै–क। शिरोरक्षके उष्णीषे अमरः

**शिरस्त्राण** न० शिरस्त्रायते अनेन त्रै–करणे ल्युट्। शिरो-रक्षके उष्णीषे हेमच०।

**शिरस्य** पु० शिरसि भवः यत्। १निर्मलकेशे अमरः २शिरो-भवमात्रे त्रि०। [भव इत्यादिरन्यपीत्यन्ये।

**शिरा** स्त्री शॄ–क। नाड्यां (शिर) मेदि०। शॄ–किरच् [illegible]।

**शिरापत्त्र** पु० शिरेव पत्त्रं यस्य। हिन्तालवृक्षे राजनि०।

**शिराल** न० शिरोऽस्त्यस्य लच्। १कर्मरङ्गे शब्दच०। तत् फलस्य शिरायुक्तत्वात्तथात्वम्। २शिरायुक्ते त्रि०।

**शिरालक** पु० शिराभामलति पर्याप्नोति अल–ण्वुल्। (हाड़योड़ा) वृक्षभेदे शब्दच०।

**शिरावृत्त** न० शिरेव वर्त्तते वृत–क्त। सीसके राजनि०।

**शिरि** पु० शॄ–कि। १खड्गे २शरे ३हिंस्रे त्रि० उणादि०। ४शलभे सि०कौ०।

**शिरीष** पु० शॄ–ईषन् किच्च। स्वनामख्याते वृक्षे अमरः। "शिरीषो मधुरोऽनुष्णस्तिक्तश्च तुवरो लघुः। दोषशोथ विसर्पघ्नः कासव्रणविषापहः" भावप्र०।

**शिरीषपत्त्रिका** स्त्री शिरीषस्येव पत्त्रमस्याः कप् कापि अत इत्त्वम्। श्वेतकिणिहीवृक्षे राजनि०।

**शिरोगृह** न० शिरःस्थगृहपरिभं गृहम्। (चिलेघर) चन्द्र-शालायां हेमच०।

**शिरोग्रह** पु० "रक्तमाश्रित्य पवनः कुर्य्यात् मूर्द्धधराः शिराः। रूक्षाः सवेदनाः कृष्णाः सोऽसाध्यः स्याच्छिरोग्रहः" भावप्र० उक्ते वातरोगभेदे "मूर्द्धधरा धीवाशताः च पवनः शिरोग्रहः स्यादितिजन्ययः" भावप्र०. [हेमच०।

**शिरोधरा** स्त्री शिरोमस्तकं धरति धृ–अच्। ग्रीवायां

**शिरोधि** स्त्री शिरो धीयतेऽत्र धा–कि। ग्रीवायाम् अमरः

**शिरोमणि** पुंस्त्री० शिरसि धार्य्यो मणिः शा०त०। शिरोधार्य्य रत्ने चूड़ामणौ शब्दच०। स्त्रीत्वे वा ङीप्। शिरो-रत्नादयोऽप्यत्र न०।

**शिरोमर्म्मन्** पु० शिरसि मर्म्म यस्य। शूकरे हेमच०।

**शिरोरुजा** स्त्री शिरो रुजति भञ्जयति रुज–क। १वृन्ता-कवृक्षे त्रिका०। ६त०। २मस्तकरोगे च।

**शिरोरुह** पु० शिरसि रोहति रुह–क। केशे अमरः।

**शिरोरोग** पु० ६त० सुश्रुतोक्ते मस्तकरोगभेदे तल्लक्षणं यथा "अथातः शिरोरोगविज्ञानीयमध्यायं व्याख्यास्यामः। शिरो रुजति मर्त्यानां वातपित्तकफैस्त्रिभिः३। सन्निपा तेन४ रक्तेन५ क्षयेण६ क्रिमिभि७स्तथा। सूर्य्यावर्त्ताद नन्तवाता८र्द्धावभेदक१०शङ्खकैः११। एकादशप्रकारस्य चास्य लक्षणमुच्यते। यस्यानिमित्तं शिरसो रुजश्च भवन्ति तीव्रा निशि चातिमात्रम्। बन्धोपतापैश्च भवेद्विशेषः शिरो-

राजनि० ३अतिबलायां स्त्री टाप्। शैलेये न० अर्क-
वृक्षे पु० राजनि०।

शीतप्रभ पु० शीतस्य हिमस्येव प्रभा यस्य। कर्पूरे राजनि०

शीतप्रिय पु० ६त०। पर्पटे राजनि०। [च राजनि०।

शीतफल पु० शीतं शीतवीर्यकरं फलमस्य। १उदुम्बरे २पीलौ

शीतबला स्त्री शीतं बलं वीर्यं यस्याः ५ब०। महासम-
ङ्गायां राजनि०। [च शब्दर०।

शीतभानु पु० शीताः शीतलाभानवोऽस्य। १चन्द्रे २कर्पूरे

शीतभीरु स्त्री ५त०। १मल्लिकायाम् अमरः। २शीतभीते त्रि०

शीतमञ्जरी स्त्री शीतकाले मञ्जरी यस्याः न कप्। शेफा-
लिकायां राजनि०।

शीतमयूख पु० शीता मयूखा यस्य। १चन्द्रे २कर्पूरे च
मेदि०। शीतमरीच्यादयोऽप्यत्र शब्दर०।

शीतमूलक न० शीतं शीतवीर्यकरं मूलमस्य कप्। १उशीरे
(वेणारमूल) राजनि०। २शीतलमूलयुते त्रि०।

शीतरश्मि पु० शीता रश्मयोऽस्य। १चन्द्रे २कर्पूरे च ज्यो०त

शीतल पु० शीतं लाति ला-क शीतमस्त्यस्य लच् वा। १शी-
तस्पर्शे २तद्वति त्रि०। ३असनोद्भवे चन्दने न० ४शैलेये-
५पुष्पकासीसे च मेदि०। ६पद्मके ७मौक्तिके राजनि०।
८उशीरमूले न० शब्दच०। ९सप्तपर्णे अमरः। १०कु-
वारके ११चम्पके १२राले १३चन्द्रे १४कर्पूरे
पु० राजनि०। [पु० राजनि०।

शीतलक न० शीतलमिव इवार्थे कन्। १श्वेतोत्पले २मरुवके

शीतलच्छद पु० शीतलः शीतलस्पर्शवान् छदोऽस्य। १चम्पके-
राजनि०। कर्म०। २शीतले पत्रे पु०।

शीतलजल न० शीतलं जलं यस्मात् ५ब०। १पद्मे
राजनि०। कर्म०। २शीतले वारिणि न०।

शीतलवातक पु० शीतलो वातो धातुभेदो यस्मात् कप्।
अश्मपर्ण्यां शब्दच०। तत्सेवने हि वायोः शीतलता।

शीतला स्त्री १देवीभेदे "नमामि शीतलां देवीं रासभस्थां
दिगम्बरीम्। मार्जनीकलशोपेतां शूर्पालङ्कृतमस्तकाम्"
स्कन्दपु०। सा च विस्फोटकभेदनाशिनी। २अजशृङ्गक-
भेदे रत्नमा० तत्र ङीप्। ३कुट्टिमीवृक्षे ४आरा-
मशीतलायां ५बालुकायां स्त्री राजनि० टाप्।

शीतवल्क पु० शीतः शीतकरः वल्कोऽस्य। उदुम्बरे राजनि०

शीतवीर्य्यक पु० शीतं शीतकरं वीर्यं यस्मात् ५ब०। कप्।
१प्लक्षवृक्षे राजनि०। २शीतलवीर्य्यकरे त्रि०।

शीतशिव न० शीतं शीतलमपि शिवम्। १सैन्धवलवणे २शैले-
यनामगन्धद्रव्ये अमरः। ३मिश्रेयायां ४शमीवृक्षे च स्त्री
राजनि० ५शक्तुफलवृक्षे मेदि० ६मधुरिकायां पु० अमरः।

शीतसह पु० शीतं सहते सह-अच्। १पीलुवृक्षे शब्दच०।
२सिन्धुवारे ३वासन्त्यां स्त्री राजनि० टाप्।

शीता स्त्री श्यै-क्त संप्र०। १लाङ्गलपद्धतौ भरतः २राम-
पत्न्यां शब्दच० ३अतिबलायां ४कुटुम्बिन्यां ५दूर्वायां
६शिलिकावृक्षे राजनि०।

शीतांशु पु० शीताः अंशवो यस्य। १चन्द्रे २कर्पूरे च राजनि

शीताङ्गी स्त्री शीतमङ्गमस्याः ङीष्। १हंसपदीवृक्षे रा-
जनि० २शीतलदेहयुते त्रि० स्त्रियां ङीष्।

शीताद पु० शीतमादत्ते आ+दा-क। दन्तमूलगते रोगभेदे
दन्तरोगशब्दे ३४६६ पृ० दृश्यम्।

शीतार्त्त त्रि० शीतेन ऋतः। शीतार्ते जटा०।

शीतालु त्रि० शीत+असह्यार्थे आलुच्। शीतबाधायुक्ते जटा०।

शीतावला स्त्री शीतमावलयति आ+वल-णिच्-अच्।
महासमङ्गायां राजनि०।

शीताश्मन् पु० कर्म०। चन्द्रकान्तमणौ राजनि०।

शीतीभाव पु० शीत+अभूततद्भावे च्वि-भू-भावे घञ्। मोक्षे
त्रिका०। तत्र तापत्रयशून्यत्वात्तथात्वम्।

शीतोत्तम न० शीतमुत्तमं यत्र। जले शब्दच०।

शीत्कार पु० शीदित्यस्य कारः शीत्+कृ-घञ्। स्त्रीणां रति-
काले अव्यक्ते ध्वनिभेदे जटा०। [अमरः।

शी(सी)त्य त्रि० शी(सी)ताम् अर्हति यत्। हलकृष्टे क्षेत्रादौ

शीधु पु०न०। शी-धुक्। इक्षुरसजाते मद्यभेदे अमरः।

शीधुगन्ध पु० शीधोरिव गन्धोऽस्य। बकुलवृक्षे त्रिका०।

शीन त्रि० श्यै-क्त संप्र० तस्य नः। १घनीभूते घृतादौ २मूर्खे
३अजगरे च पु० मेदि०। [शीभते अशीशिभत्।

शीभ कत्थने भ्वा० आत्म०सक० सेट्। ऋदित् चङि न ह्रस्वः।

शीर पुं स्त्री० शी-रक्। अजगरसर्पे शब्दच० स्त्रियां ङीष्।

शीरिन् पु० शीरस्याकारोऽस्त्यस्य। हरिदर्भे राजनि०।

शीर्ण त्रि० शॄ-क्त। १क्षीणे २शुष्कताप्राप्ते च मेदि०। ३स्थौ-
णेयके भावप्र०।

शीर्णपत्र पु० शीर्णं पत्रमस्य। १कर्णिकारवृक्षे शब्दच०।
२निम्बे ३पट्टिकालोध्रे च राजनि० ४विशीर्णपत्त्रयुक्ते
त्रि०। कर्म०। ५विशीर्णे पर्णे न०।

शीर्णपर्ण पु० शीर्णं पर्णमस्य। १निम्बे राजनि० २विशी-
र्णपत्त्रयुक्ते त्रि० कर्म०। ३विशीर्णे पत्त्रे न०।

शीर्णपाद पु० शीर्णः पादोऽस्य [illegible]। शनैश्चरे

कर्पूराः । नारदः पारदः कुन्दस्फटिकास्फटिकादयः” ।

**शुक्लकण्ठ** पुंस्त्री० शुक्लः कण्ठो यस्य । दात्यूहखगे शब्द-माला । स्त्रियां ङीष् ।

**शुक्लकन्द** पु० शुक्लः कन्दो यस्य । १पद्मिमकन्दे २अतिवि-षायां स्त्री राजनि० । कर्म० । ३श्वेते कन्दे ।

**शुक्लचीरा** स्त्री शुक्लं चीरं निर्यासो यस्याः । काकोल्यां राजनि० । [जटा० ।

**शुक्लकर्म्मन्** त्रि० शुक्लं शुद्धं कर्म यस्य । पवित्रे शुभचरित्रे

**शुक्लकुष्ठ** न० कर्म०। श्वेतकुष्ठे (धवल) । [निर्यासयुते त्रि० ।

**शुक्लदुग्ध** पु० शुक्लं दुग्धमस्य । १शृङ्गाटके शब्दच० २श्वेत-

**शुक्लधातु** पु० कर्म०। कठिन्यां (खड़ि) हेमच० २श्वेतधातौ च

**शुक्लपक्ष** पु० कर्म० । १दर्शानुगुणचन्द्रकलाक्रियापक्षदशकालके चान्द्रमासार्द्धे श्वेतच्छदे २वके पुंस्त्री०। स्त्रियां ङीष् ।

**शुक्लपुष्प** पु० शुक्लं पुष्पमस्य । १कलायवृक्षे २कुन्दवृक्षे ३मरु-वके च रत्नमा०। ४श्वेतपुष्पयुते त्रि०। ५नागदन्त्यां ६शी-तकुम्भ्यां स्त्री रत्नमा० ङीप् । कर्म०। ७शुभ्रे पुष्पे न०।

**शुक्लपृष्ठक** पु० शुक्लं पृष्ठमस्य कप् । शिम्बुकवृक्षे शब्दच०।

**शुक्लयजुस्** न० कर्म० । इषेत्वोर्जेत्वादि चत्वारिंशदध्यायात्मके यजुर्वेदभेदे । [२तद्वति त्रि०। ३तथाभूतवृक्षे पु०राजनि०।

**शुक्लरोहित** पु० वर्णोत्तर्वर्णेनेति कर्म० । १श्वेतरक्ते वर्णे

**शुक्लला** स्त्री शुक्लं लाति ला—क । कच्चुटायां रत्नमा० ।

**शुक्लवायस** पुंस्त्री० कर्म० । १बके त्रिका० २श्वेतकाके च । स्त्रियां ङीष् ।

**शुक्लशाल** पु० कर्म० । १गिरिनिम्बे राजनि० २श्वेतवर्णवृक्षे च

**शुक्ला** स्त्री शुक्ल+अर्श आद्यच् टाप् । १सरस्वत्यां त्रिका० । २शर्करायां शब्दच० । ३काकोल्यां ४विदार्यां ५स्नुह्यां राजनि० । ६श्वेतवर्णवत्यां स्त्रियाञ्च ।

**शुक्लाङ्गी** स्त्री शुक्लमङ्गमस्याः ङीष् । १शेफालिकायां रा-जनि० । २श्वेताङ्गयुक्ते त्रि० । [स्त्रियां ङीष् ।

**शुक्लापाङ्ग** पुंस्त्री० शुक्लः अपाङ्गो यस्य । मयूरे हेमच० ।

**शुक्लाम्ल** न० कर्म० । चक्रशाके राजनि० ।

**शुक्लार्म्मन्** न० नेत्ररोगभेदे भावप्र० ४४२८पृ० दृश्यम् ।

**शुक्लिमन्** पु० शुक्लस्य भावः इमनिच् । श्वेतवर्णे ।

**शुक्लोपला** स्त्री कर्म० व बहुव्रीह्याः अच् । शर्करायां रत्नमा०

**शुङ्ग** पु० शम-ग तस्य नेत्त्वं नि० अत उत्त्वञ्च । १वटवृक्षे २आम्रातके ३प्लक्षे च मेदि० । ४पर्कटीवृक्षे ५धान्या-दिशूके च स्त्री राजनि० ।

**शुङ्गाकर्म्मन्** न० शुङ्गैः वटपल्लवैः या क्रियते कर्म० यत्र ।

गर्भाधानसंस्कारभेदे “पुंसवने चान्द्रमासा शुङ्गाकर्मणि शोभनः” ति०त० । [२शुङ्गवति त्रि० ।

**शुङ्गिन्** पु० शुङ्गोऽस्त्यस्य इनि । १वटवृक्षे २प्लक्षवृक्षे शब्दा०

**शुच** शोके क्लेदे च दिवा० उभ० अक० सेट् । शुच्यति ते इरित् अशुचत्-अशोचीत् अशोचिष्ट ईदित् शुक्तः । अनु+विशिष्टदुःखेन पश्चात्तापे सक० । अनुशोचति ।

**शुच** शोके भ्वा० पर० सक० सेट् । शोचति अशोचीत् ।

**शुच्** स्त्री शुच–क्विप् । शोके अमरः । वा टाप् । तत्रैव ।

**शुचि** पु० शुच–कि । १अग्नौ २चित्रकवृक्षे ३आषाढ़मासे ४शृङ्गाररसे अमरः । ५ज्येष्ठमासे मेदि० ६शुक्राचार्ये ७ग्रीष्मे ऋतौ ८शुद्धमन्त्रिणि मेदि० । १०अग्निभेदे “पावकः पवमानश्च शुचिरग्निश्च ते त्रयः । निर्मथ्यः पवमानः स्यात् वैद्युतः पावकः स्मृतः । यश्चासौ तपते सूर्यः शुचिरग्निस्त्वसौ स्मृतः” कूर्मपु० १२अ०। ११श्वेत-वर्णे १२तद्वति त्रि० अमरः । शुचित्वञ्च शौचं शुद्धता वैदिककर्म्मार्हत्वप्रयोजकः संस्कारविशेषः । “शुचिस्तत्-कालजीवी कर्म कुर्यात्” श्रुतौ शौचस्य कर्माङ्गत्वं, स च स्नानादिजन्यः गुणभेदो वा । १३सूर्ये च “तपनस्तापन-श्चैव शुचिः सप्ताश्ववाहनः” सूर्यस्तवः । १४अर्कवृक्षे १५काश्यपपत्न्यास्ताम्रायाः कन्याभेदे स्त्री “षट्सुतास्तु महा-सत्त्वास्ताम्रायाः परिकीर्त्तिताः । शुकी श्येनी च भासी च सुग्रीवी शुचिगृध्रिके” गरुड़पु० ६अ० । १६शुद्धे १७अनुपहते त्रि० मेदि० ।

**शुचिद्रुम** पु० कर्म० । अश्वत्थवृक्षे राजनि० ।

**शुचिमल्लिका** स्त्री कर्म०। नवमल्लिकायां राजनि० ।

**शुच्य** स्नाने अक०अभिषवे सन्धाने पीड़ने मद्याने च सक०भ्वा० पर० सेट् ईदित् निष्ठा अनिट् । शुच्यति अशुच्यीत् ।

**शुटीर** पु० शौटीर+पृषो० । वीरे त्रिका० ।

**शुठ** गतिविघाते भ्वा०पर०अक० सेट् । शोठति अशोठीत् ।

**शुठ** आलस्ये चु०उभ०अक०सेट् । शोठयति ते अशूशुठत् त ।

**शुठ** शोषणे वा चु० उभ० पक्षे भ्वा०पर० सक० सेट् इदित् । शुण्ठयति ते शुण्ठति अशुशुण्ठत् त अशुण्ठीत् ।

**शुण्ठि(ण्ठी)** स्त्री शुठि–इन् वा ङीप् । (सुँट) शुष्काद्रके “शुण्ठी रुच्यामवातघ्नी पाचनी कटुका लघुः । स्नि-ग्धोष्णा मधुरा पाके कफवातविबन्धनुत् । हृद्या स्वर्या च निःश्वासमूत्रकासहृदामयान् । हन्ति श्लीपदशोथार्श-श्चोर्यांश्च परिशोधयेत्” भावप्र० ।

**शुण्ठ्र** न० शठि-क्रन् । शुष्कद्राक्षे शब्दच० ।

च पुंस्त्री० शब्दर० स्त्रियां ङीप्। ५शिवात्मके शब्दर०। ६पार्वत्यां स्त्री ङीप्।

**शैलोद्भवा** स्त्री शैलं पर्वतमुद्दिश्य भवति उद्+भू-अच्। १गुड़पाषाणभेदिनि हल्के राजनि० २पार्वत्याञ्च।

**शैव** न० शिवमधिकृत्य कृतो ग्रन्थः अण्। वेदव्यासप्रणीते शिवप्रभाववर्णनात्मके १महापुराणभेदे। शिवो देवताऽस्य अण्। २शिवभक्ते त्रि०। तस्येदमण्। ३शिवसम्बन्धिनि त्रि० ४शैवले न० शब्दच०।

शैवञ्च महापुराणं वायुना प्रोक्तत्वात् वायवीयनाम्नाख्यातम् अतएव "अष्टादश पुराणानि पुराणज्ञाः प्रचक्षते। ब्राह्मं पाद्मं वैष्णवञ्च शैवं भागवतं तथा" हेमा० व्र० विष्णुपु० "शैवं यदायुना प्रोक्तम्" तत्रैव कालिकापु० उक्तम्। हेमा०दा० मत्स्यपुराणे तु चतुर्थं वायवीयत्वेन पठितम् "श्वेतकल्पप्रसङ्गेन धर्मान् वायुरिहाब्रवीत्। तत्र यद्वायवीयं स्याद्रुद्रमाहात्म्यसंयुतम्। चतुर्विंशतिसाहस्रं पुराणं तदिहोच्यते। श्रावण्यां श्रावणे मासि गुड़धेनुसमन्वितम्। यो दद्याद्दधिसंयुक्तं ब्राह्मणाय कुटुम्बिने। शिवलोके स पूतात्मा कल्पमेकं वसेन्नरः" तथा च शिवमाहात्म्यवेदकत्वाच्छैवमिति तस्य नामान्तरं विष्णुपु०उक्तम्। वायुना प्रोक्तत्वाच्च वायवीयमिति नामान्तरमिति बोध्यम्। तत्प्रतिपाद्यविषयाश्च नारदीयपु० उक्ता यथा "शृणु वत्स! प्रवक्ष्यामि पुराणं वायवीयकम्। यस्मिन् श्रुते लभेद्धाम रुद्रस्य परमात्मनः। चतुर्विंशतिसाहस्रं तत्पुराणं प्रकीर्त्तितम्। श्वेतकल्पप्रसङ्गेन धर्मान् यत्राह मारुतः। तद्वायवीयमुदितं भागद्वयसमाचितम्" तत्र पूर्वभागे "सर्गादिलक्षणं यत्र प्रोक्तं विप्र! सविस्तरम्। मन्वन्तरेषु वंशाश्च राज्ञां ये तत्र कीर्त्तिताः। गयासुरस्य हननं विस्तरात् यत्र कीर्त्तितम्। मासानां चात्र माहात्म्यं माघस्योक्तं फलाधिकम्। दानधर्मा राजधर्मा विस्तरेणोदितास्तथा। भूपातालककुब्व्योमचारिणां तत्र निर्णयः। व्रतादीनां च पूर्व्वोऽयं विभागः समुदाहृतः"। उत्तरभागे "उत्तरे तस्य भागे तु नर्मदातीर्थवर्णनम्। शिवस्य संहिताख्या वै विस्तरेण मुनीश्वर!। यो देवः सर्वदेवानां दुर्विज्ञेयः सनातनः। स तु सर्वात्मना यस्यास्तीरे तिष्ठति सन्ततम्। इदं ब्रह्मा हरिरिदं साक्षादेवं परो हरः। इदं ब्रह्म निराकारं कैवल्यं नर्मदाजलम्। ध्रुवं लोकहितार्थाय शिवेन स्वशरीरतः। शक्तिः कापि सरिद्रूपा रेवेयमवतारिता। ये वसन्त्युत्तरे कूले रुद्रस्यानुचरा हि ते। वसन्ति याम्यतीरे ये लोकं ते यान्ति वैष्णवम्। ओङ्कारेश्वरमारभ्य यावत् पश्चिमसागरम्। सङ्गमाः पञ्च च त्रिंशन्नदीनां पापनाशनाः। दशैकमुत्तरे तीरे त्रयोविंशतिर्दक्षिणे। पञ्चत्रिंशत्तमः प्रोक्तो रेवासागरसङ्गमः। सङ्गमैः सहितान्येवं रेवातीरद्वयेऽपि च। चतुःशतानि तीर्थानि प्रसिद्धानि च सन्ति हि। षष्टितीर्थसहस्राणि षष्टिकोट्यो मुनीश्वर!। सन्ति चान्यानि रेवायास्तीरयुग्मे पदे पदे। संहितेयं महापुण्या शिवस्य परमात्मनः। नर्मदाचरितं यत्र वायुना परिकीर्त्तितम्। लिखित्वेदं पुराणन्तु गुड़धेनुसमन्वितम्। श्रावण्यां यो ददेत् भक्त्या ब्राह्मणाय कुटुम्बिने। रुद्रलोके वसेत् सोऽपि यावदिन्द्राश्चतुर्दश। यः श्रावयेद्वा शृणुयात् वायवीयमिदं नरः। नियमेन हविष्याशी स रुद्रो नात्र संशयः"। ५वकुले ६धुस्तूरे पु० राजनि० ७आचारभेदे पु० "अष्टाङ्गयोगसंयुक्तो यत्ने-हेदी विशान्ततः। यावद्ध्यानं समाधिस्तु तावत् शैवं प्रचक्षते" [illegible]। तदुपासकभेदाश्च शिवविष्णुशब्दे वाचस्प० उक्ता दृश्याः।

**शैवल** न० शी-वलच्। १जलजाते २शैवाले च पु० मेदि०। "वहतो बकुलशैवलताम्" नैषधम्

**शैवलिनी** स्त्री शैवलानि सन्त्यस्याः इनि। नद्याम् अमरः

**शैवाल** न० शी-वालञ्। (शेओयाला) जलजाते पदार्थभेदे अमरः। अस्य पृषो० दन्त्यादित्वमपि "सैवालजालदलताप्रधुना बिभर्त्ति" इति माघात्।

**शैव्य** पु० शिवेर्गोत्रापत्यम् ञ्य। १शिबिगोत्रजे राजभेदे "शैव्यश्च नरपुङ्गवः" इति गीता। शिबिनोऽधिगतः अञ्। २षोडशमात्रे ३श्रीकृष्णस्य घोटके च त्रिका०।

**शैशव** न० शिशोर्भावः अण्। शिशुत्वे वयस्यभेदे अमरः

**शैशिर** पुंस्त्री० शिशिरमधिकृत्य अण्। १कृष्णचटके राजनि० स्त्रियां ङीप्। शिशिरे भवः ऋत्वण्। २शिशिरजाते त्रि०। स्वार्थे अण्। ३शिशिरे न०। "तपस्तपस्यौ शैशिरावृतू" श्रुतिः। ४स्थापनायां सि०कौ०।

**शैष्योपाध्यायिका** स्त्री शिष्योपाध्याययोः कर्म वुञ्। शिष्या०

**शो** तीक्ष्णीकरणे दि०प०सक०अनिट्। श्यति अशात् अशासीत्।

**शोक** पु० शुच-घञ्। इष्टवियोगजाते दुःखानुगुणे चित्तवृत्तिभेदे अमरः। ल्युट्। शोचनमप्यत्र न०।

**शोकनाश** पु० शोकं नाशयति नश-णिच्-अण्। १अशोकवृक्षे राजनि०। नश-भावे घञ् ६त०, २शोकध्वंसे।

**श्रवणशीर्षिका** स्त्री श्रवणमिव शीर्षमस्याः कप् अत इत्वम्। श्रावणीवृक्षे राजनि०। [वधि। १कीर्तौ।

**श्रवस्** न० श्रूयतेऽनेन श्रु—करणे असि। १कर्णे अमरः। कर्माणि

**श्रवाय्य** पु० श्रु-आय्य। यज्ञियपशौ सि०कौ०। मन्त्रकल्पद्रुमे श्रवाय्य इति पाठकल्पनं प्रामादिकमेव।

**श्रविष्ठा** स्त्री श्रूयते श्रु—अप् श्रवः प्रसिद्धिरस्त्यस्याः मतुप् ङीप् अतिशयेन श्रववती इष्ठन् मतुपो लुक्। १धनिष्ठानक्षत्रे अमरः २श्रवणनक्षत्रे च।

**श्रविष्ठाज** पु० श्रविष्ठायां श्रवणनक्षत्रे जायते जन—ड। बुधग्रहे त्रिका०। भगदैवतशब्दे ४६४१पृ० दृश्यम्।

**श्रा** विक्लित्तौ अदा०पर०अनिट्। श्राति अश्रासीत्।

**श्रा** पाके अदा०पर०सक० अनिट् घटा०। श्राति अश्रासीत् श्रपयति। [२यवाग्वां स्त्री अमरः।

**श्राण** त्रि० श्रा—क्त। १घृतादिभिः पक्वे मांसादौ जटा०।

**श्राद्ध** न० श्रद्धा-हेतुत्वेनास्त्यत्र अच्। "श्रद्धया दीयते यस्मात् श्राद्धं तेन निगद्यते" इत्युक्ते पित्रादिभ्यः श्रद्धया देये १द्रव्ये। अस्त्यर्थे अच्। २श्रद्धायुक्ते त्रि०।

श्राद्धलक्षणं तत्प्रयोजनञ्च मयाश्राद्धादिपद्धतौ हेमाद्रि श्राद्धकल्पानुसारेणास्माभिः प्रदर्शितं यथा "सम्बोधनपदोपनीतान् पित्रादीन् चतुर्थ्यन्तपदेनोद्दिश्य पुत्रादिभिर्मन्त्रद्वारा श्रद्धयान्नादेर्दानं श्राद्धम्" "यदेतन्मनुः श्राद्धशब्दं कर्म प्रोवाचेति" श्राद्धविवेकधृतापस्तम्बवचनेन श्राद्धशब्दस्य कर्मसामान्यवचनतावगमात् "संस्कृतं व्यञ्जनाद्यं च पयोदधिघृतान्वितम्। श्रद्धया दीयते यस्मात् तेन श्राद्धं निगद्यते" इति श्राद्धतत्त्वधृतपुलस्त्यवचनेन श्रद्धाहेतुकदानरूपकर्मविशेषस्य श्राद्धपदार्थतावगमाच्च। श्राद्धमिति शब्दो वाचको यस्य तत्कर्मेत्यर्थ इति श्राद्धविवेकः। तस्मिंश्च कर्मणि यागादाविन्द्रादीनामिव पित्रादेर्देवतात्वं तदुद्देशेन मन्त्रद्वारा द्रव्यत्यागात्। तथा च यागादौ मन्त्राहूता इन्द्रादयः शक्तिमात्रेण तत्तत्स्थले आविर्भूता यजमानत्यक्तद्रव्यदर्शनेन तृप्यन्तस्तेभ्यस्तमभीष्टफलं यथा साधयन्ति तथा श्राद्धेऽपि मन्त्राहूताः पित्रादयः समागताः पुत्रादित्यक्तद्रव्यभोगेन तृप्यन्तो विशिष्टफलप्रदा इत्येव कल्पनीयम्। किन्तु सर्वो हि लोकः सफले कर्मण्येव प्रवर्त्तते नाफले। तत्र यागादौ यथा देवानां फलदातृत्वमेवं श्राद्धदेवानां पित्रादीनां फलदातृत्वे सत्यवश्यमेव श्राद्धस्य सफलत्वं भवेत्तदेव नोपपद्यते। तथा हि इन्द्रादयो हि देवाश्चेतना विशिष्टज्ञानक्रियाशक्तिमन्तो मन्त्रमात्राहूताः शक्तिविशेषेण तत्तद्देशे आविर्भवितुं शक्नुवन्ति आविर्भूय च यजमानत्यक्तद्रव्यदर्शनमात्रेण तृप्यन्तो विशिष्टफलदानाय समर्थाः। नैवं पित्रादयो भवितुमर्हन्ति। ते हि स्वस्वकर्मानुसारेण नानायोनिगततया अतिविप्रकृष्टदेशस्थिताः विशिष्टशक्तिरहिताश्च कथं मन्त्रमात्राहूताः श्राद्धदेशे आगच्छेयुः। आगता वा कुतो न दृश्येयुः देवानामिव तेषामतीन्द्रियभावात् दर्शनमात्रेण तृप्तेरभावाच्च। भोजनेनैव तेषां तृप्तिसम्भवाच्च भोजनमन्तरेण कथं तृप्येयुः। अतृप्ताश्च कुतो वा फलं दद्युः। पश्वादिगता वा कुतो विशिष्टफलप्रदाः स्युः। अपरञ्च इह दत्तस्य अन्नादेरचेतनतया नेतृपुरुषाभावेनान्यत्र गमनासम्भवः। श्राद्धदत्तद्रव्यस्य यथापूर्वमवस्थानाच्च भोक्तृदेशगमनमित्यनुमीयते। एवमिह दत्तेनान्नेनान्यत्र स्थितानां भोगस्तु नैव सम्भवी। पात्रीयब्राह्मणेन श्राद्धान्नस्य भोजनात् पित्रादितृप्तिसम्भवः भोगतृप्त्योः सामानाधिकरण्यनियमात्। किञ्च देवयोनिगतानाममृताशिनां मानुषयोग्येनान्नेन कथं तृप्तिः कथं वा पशुयोनिगतानां तृणाहारयोग्यानां तेन तृप्तिः। तेषां पश्वादिभावप्राप्ते-र्वा फलदातृत्वासम्भवस्तु विशिष्टशक्तेरभावात् सर्वानुभवसिद्धः। एतेन "यथा गोषु प्रनष्टो वै वत्सो विन्दति मातरम्। एवं श्राद्धेऽन्नमुद्दिष्टं मन्त्रः प्रापयते पितॄन्। नाम गोत्रं पितॄणान्तु प्रापकं हव्यकव्ययोः। नाममन्त्रैस्तथोद्देशो भवान्तरगतानपि। प्राणिनः प्रीणयन्त्येते तदाहारत्वमागताः। देवो यदि पिता जातः शुभकर्मानुसारतः। श्राद्धान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति। दैत्यत्वे भोग्यरूपेण पशुत्वे च तृणं भवेत्। श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति। पानं भवति यक्षत्वे राक्षसत्वे तथामिषम्। दनुजत्वे तथा मांसं प्रेतत्वे रुधिरोदकम्। मानुषत्वेऽन्नपानादि नानाभोगरसं तथेति च" हेमाद्रिश्राद्धकल्पादिधृतमार्कण्डेयवचनैरिह दत्तान्नादेरेव मन्त्रशक्त्या विप्रकृष्टदेशगमनं पितृप्राप्तयोनियोग्याहृतादिरूपेण परिणामश्च कल्प्यते इत्यपि न विचारचारु अचेतनानामपि मन्त्राणां चेतनधर्मकल्पनापि तदैव साधीयसी स्यात् यदि दत्तान्नादेरिह यथापूर्वमवस्थितिर्न स्यात् स्याच्च पूर्वरूपान्यथाभावः। तथा च एतमादिवचनानां स्तुत्यर्थवादपरताया अर्थे दृष्टविरुद्धापत्त्याद्यधिककल्पना। किञ्च पात्र-

मैत्त्वेन भोगादिना विनष्टस्य वस्तुनः कथं स्थानान्तरनयनं कथं वा तत्तदाहारतारूपेण परिणामः धर्मिणि सत्येव स्थानान्तरगमनादिसम्भवो न विनष्टस्यातः श्राद्धस्य कथं प्रयोजनवत्त्वमित्येवं स्थिते। उच्यते। ब्राह्मणादिसम्प्रदानक्रियाया इव श्राद्धकर्मण एव स्वजन्यपुण्यद्वारा विशिष्टफलजनकता तत्र च कालान्तरभावितत्तत्फलदानाय तत्कर्माराधितः परमेश्वरस्यैव तत्साधनत्वम्। अतएव भगवद्गीतायाम् "यो यो यां यां तनुं भक्तः श्रद्धयार्च्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान् मयैव विहितान् हि तान्" इति भक्तानां तत्तदिष्टोत्पादनस्य स्वकर्त्तृकत्वं भगवतोक्तम्। युक्तञ्चैतत् श्रुतिस्मृत्योरीश्वरानुशासनरूपतया तत्तदर्थानुष्ठानेन तदाज्ञाप्रतिपालने ईश्वरस्य प्रसन्नतारूपा तृप्तिस्तत्तयाभीष्टलाभः। तथैवोक्तं गीतायाम् "स्वे स्वे कर्म्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्म्मनिरतः सिद्धिं यथा विन्दति तच्छृणु। यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्। स्वकर्म्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः" इति। स्वकर्म्मणा स्वस्ववर्णाश्रमविहितकर्मानुष्ठानेन, तम् परमेश्वरम् अभ्यर्च्य तदाज्ञाप्रतिपालनेन प्रसाद्य तत्प्रसादेन च तत्कृतां सिद्धिम् तत्तदभीष्टसिद्धिं लभते इति तदर्थः। अस्मिन् पक्षे च पित्रादीनां श्राद्धान्नादेर्वा न स्थानान्तरनयनकल्पना। अथ वा देवदत्तादिशब्दस्य यथा न केवलं देहमात्रं, न वा जीवमात्रमर्थः किन्तु तत्तद्देहाभिमानी जीव एवार्थः। तथा पित्रादिशब्दस्य तत्तद्देहाभिमानी केवलं जीवोऽपि नार्थः किन्तु वस्वादिरूपदेवाधिष्ठितत्तादृशजीव एवार्थः, "वसवः पितरो ज्ञेया रुद्रा ज्ञेयाः पितामहाः। प्रपितामहास्तथादित्याः श्रुतिरेषा सनातनी। प्रेतानुद्दिश्य यत् कर्म क्रियते मानुषैरिह। तृप्यन्ति देवतास्तेन न प्रेताः पितरः स्मृताः"। इति श्राद्धकल्पधृतदेवलवचने पित्रादिपदानां पारिभाषिकत्वोक्तेः। प्रेताः मृताः न पितरः न केवलपितृपदाभिधेयाः किन्तु तदधिष्ठितवस्वादय एव पितृपदाभिधेयास्त एव तृप्यन्तीत्यर्थः। अतएव श्राद्धकाले पित्रादीनां तेन तेन रूपेण ध्येयताऽप्यभिधास्यमानोपपद्यते। एवञ्च वस्वादिदेवानामिन्द्रादिवत् विशिष्टशक्तिमत्त्वश्रुतया नानादेशावस्थानेऽपि यागादाविन्द्रादिवदाग-मनसम्भवात् त्यक्तद्रव्यदर्शनमात्रेण तृप्तिः, "न वै देवा अश्नन्ति पिबन्ति एतदेवामृतं दृष्ट्वा तृप्यन्तीति" छान्दोग्यवाक्यात्। अतएव भगवद्गीतायाम् "सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः। अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्। देवान् भावयतानेन ते देवा भावयन्तु वः। परस्परं भावयन्तः श्रेयः परमवाप्स्यथेति" प्रजाजनयज्ञेन तृप्तानां देवानां यजमानफलदातृत्वम् प्रजाः प्रति प्रजापतिवचनत्वेनोक्तम्। अनेन यज्ञेन देवान् भावयत तर्पयत ते च यज्ञतर्पिता देवाः वः युष्मान् भावयन्तु तर्पयन्त्वित्यर्थः। यज्ञपदस्य कर्ममात्रोपलक्षणम्। एवञ्च यथा काचित् गर्भिणी दत्तं दोहदं भुञ्जाना स्वयं तृप्यति स्वाश्रयं गर्भञ्च तर्पयन्ती दोहददातारमप्युपकरोति तथा वस्वादयोऽपि श्राद्धान्नदर्शनमात्रतृप्ताः स्वाधिष्ठितपित्रादिरूपान् तर्पयन्तः श्राद्धकर्त्तुरभीष्टदातारो भवन्ति। प्राग्युक्तवचनजातेष्वपि अन्नमन्त्रनामादेर्देशान्तरनयनकथनस्यापि स्वस्वकर्मानुसारेण पश्वादिभावापन्नपित्रादीनां तदुपभोगयोग्यत्वाकारादिसम्पत्तृप्तिर्वस्वादिकृता तद्द्वारा भवतीत्येतत्परत्वमात्मप्रसादपरत्वयोः कल्पने न वैयर्थ्यम्। अत्र च काम्याविषयत्वेन पित्रादीनां मुक्तत्वम् तत्र पश्वादिभावस्यैव तृप्तेर्विशिष्टस्य, विशेषणस्याभावे विशेष्यस्यैव विशिष्टकारित्वात् कुष्ठविशिष्टस्य नरस्य कुष्ठापगमेऽपि मनुष्यकर्मकारित्वव्याहतिवत्। तथा च त एव तृप्ता विशिष्टफलं दद्युरिति दिक् श्राद्धस्यावश्यता"।

श्राद्धभेदाश्च विश्वामित्राद्युक्ताः श्रा॰वि॰ दर्शिता यथा "नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम्। पार्वणञ्चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम्। कर्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम्। यात्रास्वेकादशं प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम्"। एतच्च भविष्यपुराणे विवृतम्। यथा "अहन्यहनि यत् श्राद्धं तन्नित्यमभिधीयते। वैश्वदेवविहीनं तदशक्तावुदकेन तु। एकोद्दिष्टन्तु यत् श्राद्धं तन्नैमित्तिकमुच्यते। तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद्द्विजान्। कामाय तु हितं काम्यमभिप्रेतार्थसिद्धये। पार्वणेन विधानेन तदप्युक्तं खगाधिप!। वृद्धौ यत् क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते। सर्वं प्रदक्षिणं कार्य्यं पूर्वाह्णे तूपवीतिना। गन्धोदकतिलैर्युक्तं कुर्य्यात् पात्रचतुष्टयम्। अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत्। ये समाना इति द्वाभ्यामेतज्ज्ञेयं

कण्ठे तच्चारर्णविषसत्त्विदर्शे शोभाधिक्यात्तथात्वम् । २ह-स्तिनापुरस्य उत्तरपश्चिमस्थे कुरुजाङ्गलाख्ये देशे च हेमच०

**श्रीकण्ठपदलाञ्छन** पु० भवभूतौ शब्दमाला ।

**श्रीकन्द** स्त्री श्रीः शोभा तया युक्तः कन्दोऽस्याः । वन्ध्याकर्कोट्यां राजनि० ।

**श्रीकर** न०श्रियं शोभां करोति कृ-अच् । १रक्तोत्पले त्रिका० २विष्णौ पु० ३दायनिबन्धभेदकारके पण्डितभेदे च पु० ४शोभाकारके त्रि० । [शब्दच० ।

**श्रीकरण** न०श्रीयुक्तं क्रियतेऽनेन कृ-करणे ल्युट् । लेखन्यां

**श्रीकान्त** पु० ६त० । विष्णौ शब्दच० श्रीनाथश्रीपत्यादयोऽप्यत्र । श्रीपतिस्तु भूमिपाले च मेदि० ।

**श्रीकारिन्** पु०श्रियं करोति कृ-णिनि । अङ्कोले महाजने १मृगभेदे राजनि० । २शोभाकारिणि त्रि० स्त्रियां ङीप् ।

**श्रीखण्ड** न०श्रियः शोभायाः खण्ड इव यत्र । चन्दने त्रिका०

**श्रीगर्भ** पु० श्रीर्गर्भेऽस्य । १विष्णौ त्रिका० २खड्गे च "श्रीगर्भो विजयश्चैव" इति खड्गनामाष्टकम् ।

**श्रीग्रह** पु० श्रियः गृह इव यत्र । पक्षिणां पानीयपात्रायां हारा० । [जटा० ।

**श्रीघन** पु०श्रिया युक्तः घनः । १बुद्धभेदे अमरः । २दध्नि न०

**श्रीचक्र** न० श्रियाः चक्रं यन्त्रभेदः । "बिन्दुत्रिकोणवसुकोणदशारयुग्मं मन्वस्रनागदलसङ्कुतषोडशारम् । वृत्तत्रयञ्च धरणीसदनत्रयञ्च श्रीचक्रमेतदुदितं परदेवतायाः" इति तन्त्रोक्ते त्रिपुरासुन्दरीपूजाङ्गे यन्त्रभेदे । [पत्न ।

**श्रीज** पु० श्रियो जायते जन-ड । कामदेवे श्रीनन्दनादयोऽ-

**श्रीताल** पु० श्रीयुक्तस्तालः शाक० । तालसदृशवृक्षभेदे राजनि० । [दातरि त्रि० ।

**श्रीद** पु० श्रियं धनं ददाति दा-क । १कुवेरे अमरः २धन-

**श्रीधर** पु० श्रियं धरति धृ-अच् । १विष्णौ "अतिशुद्धं हिमस्फटिकं घनमालाविभूषितम् । श्रीधरं देवि ! विज्ञेयम्" इत्युक्ते २शालग्राममूर्त्तिभेदे न० ।

**श्रीनिकेतन** पु० श्रियं निकेतयति नितरां वासयति नि+कित-णिच्-ल्यु । १विष्णौ शब्दच० ६त० । २श्रीलक्ष्मीनिवासे । [त्रि० ६त० । २श्रिय आलये च ।

**श्रीनिवास** पु० निवसत्यस्मिन् नि+वस-घञ् ६त० । १विष्णौ

**श्रीपञ्चमी** स्त्री श्रियः पूजाङ्गं पञ्चमी शाक० । माघशुक्लपञ्चम्याम् । माघोपक्रमे "चतुर्थी वरदा शुक्ला तत्र गौरी सुपूजिता सौभाग्यमतुलं कुर्यात् पञ्चम्यां श्रीरपि श्रियम्" । सरस्वतीपूजादिनेऽप्यत्रैव गौडाचारः । अत्र श्रीपञ्चम्यामारभ्य प्रतिमासं पञ्चवत्सरमाप्य श्रीपञ्चमीव्रतं स्त्रियः कुर्वन्ति तत्प्रमाणं संवत्सरकौमुदीधृतभविष्यपु० । [हारा० ।

**श्रीपथ** पु० श्रीयुक्तः पन्थाः अच् समा० शाक० । राजपथे

**श्रीपर्ण** न० श्रीर्लक्ष्मीः पर्णे इवेऽस्य । १पद्मे श्रीयुक्तं पर्णमस्य । २अग्निमन्थवृक्षे पु० मेदि० ।

**श्रीपर्णिका** स्त्री श्रीयुक्तं पर्णमस्याः संज्ञायां कन् अत इत्त्वम् । कट्फलवृक्षे अमरः ।

**श्रीपर्णी** स्त्री श्रीयुक्तानि पर्णान्यस्याः ङीप् । १गाम्भारीवृक्षे अमरः । २कट्फलवृक्षे मेदि० । ३शाल्मलीवृक्षे ४हठवृक्षे हेमच० । ५अग्निमन्थवृक्षे राजनि० ।

**श्रीपिष्ट** पु० श्रियै शोभायै पिष्यते पिष-क्त । सरलवृक्षे रा-मानाथः । [२वृक्षे:श्ववित पर्वे त्रिका० ३चन्द्रे च ।

**श्रीपुत्र** पु०६त० । १कामदेवे श्रियः पुत्रो भ्राता सहजत्वात् ।

**श्रीपुष्प** न० श्रीयुक्तं पुष्पम् शाक० । १लवङ्गे राजनि० । २पद्मकाष्ठे रत्नमाला ।

**श्रीफल** पु० श्रीयुक्तं फलमस्य । १बिल्ववृक्षे अमरः । २राजादन्याञ्च राजनि० । ३नील्यां ४क्षुद्रकारवेल्ल्यां स्त्री राजनि० टाप् । स्वार्थे क अत इत्त्वम् । ५तत्रार्थे राजनि० । ६धात्रीवृक्षे मेदि० स्त्री गौरा० ङीष् ।

**श्रीभद्रा** स्त्री श्रीयुक्तं भद्रमस्याः । भद्रमुस्तायां शब्दच० ।

**श्रीभागवत** न० श्रीमत् भागवतम् शाक० । अष्टादशपुराणेषु मध्ये द्वादशस्कन्धयुक्ते अष्टादशसाहस्रे व्यासप्रणीते पुराणे भागवतशब्दे दृश्यम् । श्रीमद्भागवतमप्यत्र "श्रीमद्भागवते महामुनिकृते" भाग०१.१। [राजनि० २चन्द्रे च ।

**श्रीभ्रातृ** पु० श्रियः लक्ष्म्याः भ्राता सहजत्वात् । १अश्वे

**श्रीमत्** पु० श्रीरस्त्यस्य मतुप् । १तिलकवृक्षे अमरः । २अश्वत्थवृक्षे राजनि० । ३विष्णौ शब्दर० । ४शिवे त्रिका० । ५कुवेरे शब्दच० । ६शोभायुक्ते धनिनि च त्रि० स्त्रियां ङीप् । सा च दशाधिकायां कुमारिकायाम् अपि पूजोपाधिकायाम् नारदपञ्चरात्रम् ।

**श्रीमलापहा** स्त्री श्रिया शोभया मलमपहन्ति अप+हन-ड । भूम्याम्लायां लतायां राजनि० ।

**श्रीमस्तक** पु०श्रीयुक्तं मस्तकमस्य । रसोने (लसुन)राजनि० ।

**श्रीमूर्त्ति** स्त्री श्रीपूर्वकलक्षणयोग्या मूर्त्तिः । देवताप्रतिमायां राजनि० । विष्णोर्मूर्त्तिभेदाश्चतुर्विंशति मूर्त्तिशब्दे दृश्याः । श्रीमूर्त्तयश्चाष्टविधाः भाग०११स्कन्धे दर्शिता यथा "शैली दारुमयी लौही लेप्या लेख्या च सैकती । मनोमयी मणिमयी प्रतिमाष्टविधा मता । चलाचलेति द्वि-

किल्बिषम् आप्नोति इत्यनेनापि पापाभावो गम्यते। उच्यते न पूर्वपापकर्तृत्वोऽन्यतमत्वेन पापवत्त्वमुपादानसम्बन्धः सम्भवति शुद्धस्य तदुपादर्शनेनायोग्यत्वात् किन्तु तत्र स्वव्यक्तिसम्बन्धे गौणोऽयं संक्रान्त्यादिशब्दः। तथा च देवलः "बान्धवोऽपि पृथग् भूत्वा तत्पापं नाप्नुयात् क्वचित्। पृथग्जनोऽपि संयोगात् भजते तत्प्रदोषताम्"। तत्पापं तज्जातीयं पापमित्यर्थः। तत्प्रदोषतां तत्तुल्यपापतामित्यर्थः। "शुद्धोऽशुद्धन्तु योधयेदिति" यत्र प्राप्तश्चादिवर्ज्जं एव पापक्षयहेतुत्वमत्र बोद्धव्यम्। तथोशनाः "अनन्तरगैर्दर्शनस्पर्शनसम्भाषणानि वर्ज्जयेत्" इत्युक्त्वा "सम्भाषणे प्राणायामत्रयमित्यादि"। अतः सम्भाषणे प्राणायाम इत्यपापाचक्षः। किञ्च यदि पापिष्ठसम्भाषणस्पर्शः पापजनकहेतुस्तदेतत्प्रायश्चित्तवदिदमपि तेनापि मुनिना प्रायश्चित्तरूपतया पठितः स्यात् प्रत्युत निषेध एव श्रूयते यथा मनुः "प्रायश्चित्तीयतां प्राप्य दैवात् पूर्वकृतेन वा। न संसर्गं व्रजेत् सद्भिः प्रायश्चित्तेऽकृते द्विजः" इति। किञ्च "निन्दितस्तेन योऽब्दान्तं संवत् पतितो भवेदिति" देवलवचने सम्बन्धानां तत्पापकर्तृत्वेऽपि पापित्वनिरवगम्यते भूतपापकर्त्ता पतितः स्वयमपि पतति इत्यर्थः। इदानीञ्च कियता कालेन कतमस्य संसर्गस्य पतितसाम्यापादनमिति निरूप्यते। तत्र देवलः "पतितेन सहोषित्वा जानन् संवत्सरं नरः। निन्दितस्तेन योऽब्दान्तं संवत् पतितो भवेत्। याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्। कृत्वा सद्यः पतत्येव पतितेन न संशयः"। यानादिसंसर्गैः कालतः संवत्सरेण पतति याजनादिभिर्द्वाभिः सद्यः पततीत्यर्थः। तथा बौधायनः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद् यौनात् सद्यो न यानाशनात्"। यानादिना सद्यःपातनिषेधात् यानादिना संवत्सरेण पततीत्यर्थः यानादिना सम्बन्धः। याजनादिपदं सहभोजनस्याप्युपलक्षकम्। विष्णुः। "आसंवत्सरात् पतति पतितेन सहाचरन्। एक-यानासनाभ्यां यौनात् स्रौवात् मौखात् सम्बन्धात् सद्य एव"। यानासनाभ्यामिति सहभोजनस्याप्युपलक्षणम्। यौनात् इत्यादि एकभोजनमोऽप्युपलक्षणम्। कूर्मपुराणे चापि "अब्दात् पतति पतितेन सह एव च। एकपात्रे तिष्ठन्ति ये च तैः सह संवसेत्। संवत्सरेण पतितैः संसर्गं कुरुते तु यः। यानशय्यासनैर्नित्यं जा-नन् वै पतितो भवेत्"। एभिर्वचनैर्याजनादिना सद्यःपातो यानादिना कालतः संवत्सरेणेत्यवगम्यते। ननु याजनादिना संवत्सरेण पतति न तु यानादिनेत्याह मनुर्विष्णुश्च "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद् यौनात् न तु यानाशनासनात्"। यानासनाशनादुत्पन्नसंयोगमाचरन्नित्यर्थः। तथा पैठीनसिः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनात् यौनात् नत्वेकं यानाशनात्"। अत्र मनुदेवलप्रभृतिकाराद्याः देवलबौधायनादिवचनैर्याजनादीनां सद्यःपातहेतुत्वावगतेः मनुपैठीनसिवचनयोर्नञिति मध्यपठितस्य पूर्वेण याजनादिना सम्बन्धो न तु परेण यानादिना, याजनाध्यापनात् न तु संवत्सरेण पतति किन्तु यानादिभिरित्याहुः। तदसङ्गतम् सुमन्तुवचनविरोधात् यथा पतितानभिधायाह सुमन्तुः "एतैस्तैर्यौनमौखस्रौवाणां सम्बन्धानामन्यतमेन सह संवत्सरं सम्यक्कर्मियात् तत्साम्येनैव प्रायश्चित्तं विदध्यात्" इत्यात् कुर्यात् एतदेव द्वादशवार्षिकव्रतम् इत्यर्थः। अत्र याजनादीनामन्यतमेन संवत्सरेण पततीत्यवगम्यते। तथा हारीतः "संवत्सरेण पतति पतितेन सहाचरन्। याजनाध्यापनाद् यौनादेकयाने च भोजनात्"। एकभोजनमेकपात्रे कालभेदेन भोजनं सहपानञ्च। तथा बृहस्पतिः "पापाभिषिक्ते तु संयोगे याजनाध्यापनादिना। एकग्रामनिवासाभिः प्रायश्चित्तार्द्धमाचरेत्। तथा वत्सरसंसर्गे योनियुक्ते विशेषतः। पूर्वोक्तेन विधानेन पतितव्रतमाचरेत्"। अनेन याजनादिना पापाभिषिक्तसंसर्गे प्रायश्चित्तार्द्धं वदता वत्सरेण सम्पूर्णप्रायश्चित्तमपौहुक्तम् उत्तरवचने पुनः स्फुटीकृतम्। योनियुक्तपदेन याजनादीनामप्युपलक्षः। एकत्रासनशयनादिति पाठोऽनाकारः रामाऽलिखितत्वात्। शिवस्वामिनस्तु यदि प्रत्येकं विभक्तिनिर्देशात् भोजनं कृत्वा पतति योनिसम्बन्धं कृत्वा पततीति एवं सम्बन्धोऽभिधीयते तदा कृत्वा पततीति पदयोरन्ययाहत्तिताप्रत्यावृत्तिभ्याम् आहत्तौ वाक्यभेदः चत्वारि वाक्यानि स्युः। अतः कृत्वेति पदेन तन्मध्ये याजनादिकर्मचतुष्टयमादाय पततीति सम्बन्धे बोध्यते न वाक्यभेदः संवत्सरपदेन पृथगुपहीतानामपि कृत्वेति पदेन तन्मध्योपनयनात्। दर्शयोर्म्माचाभ्यां भागेभ्यो यस्तेषामेवादिशागपटूवामानिव। अत एतद्वाक्याद्विरोधाद्याजनादीनां तन्मध्ये

प्रेतसूतके। त्रिरात्रेण सकुल्यास्तु स्नात्वा शुध्यन्ति बान्धवाः" शुद्ध०। सपिण्डशब्दे दृश्यम्। [अन्ते।

सकृत् अव्य० एक+सुच् नि०। १एकवारे अमरः। २विष्ठायां स्त्री

सकृत्प्रज पुंस्त्री० सकृत् एकवारं प्रजायते प्र+जन–ड। १काके अमरः स्त्रियां ङीष्। २एकवारजातापत्ये च।

सकृत्फला स्त्री सकृत् फलति फल–अच्। कदलीवृक्षे राजनि०

सकृद्गर्भ पु० सकृत् गर्भो यस्य। वेसरे राजनि० एकवार गर्भवत्यां स्त्रियां स्त्री।

सकृद्वीर पु० कर्म०। एकवीरवृक्षे राजनि०।

सक्त त्रि० सन्ज–क्त। १आसक्ते २अविरते च हेमच०।

सक्तु पु० सन्ज–तुन् किच्च। भ्रष्टयवादिचूर्णे (छातु) शब्दच० "सिन्धौ सक्तवो देवा वारिपूर्णा च गर्गरी" ति०त०।

सक्तुफला(ली) स्त्री सक्तव इव सूक्ष्माणि फलान्यस्याः वा ङीप्। शमीवृक्षे अमरः ङीबन्तः तन्मार्थे शब्दर०।

सक्थि न० सन्ज–क्थिन्। १ऊरौ अमरः २शकटावयवभेदे च उणादि०। बहु० स्वाङ्गे षच्-समा०। अग-सक्थ इत्यादि। [इन्द्रियत्वैकत्वादिधर्मः।

सखण्डोपाधि पु० कर्म०। अनेकपदार्थघटिते धर्मे यथा

सखि त्रि० सह समानं ख्यायते ख्या-डिन् नि०। सौहार्द-युक्ते अमरः। सखायौ सखायः सख्युरित्यादि।

सखी स्त्री सखि+स्त्रीत्वे ङीप्। १सहचर्यां हेमच० २वयस्यायाम् अमरः।

सख्य न० सख्युर्भावः यत्। १मित्रतायां २सौहार्दे च।

सगन्ध पु० सह गन्धेन लेशेन वा सहस्य सः। १ज्ञातौ त्रिका० २गन्धयुते त्रि०।

सगर पु० सह गरेण विषेण जातः। १सूर्यवंश्ये नृपभेदे "सगरात् सागरो जातः" इति पुराणम्। स च इक्ष्वाकुवंशराजतः यादव्यां जातः सपत्न्या गरदानेऽपि स न ममार तत्कथा "तस्या (और्वस्य) आश्रमे च सा गर्भं सुषुवे च्यवनप्रभम्'। व्यजायत महाबाहुं गरेणैव सह द्विज!। सगरो नाम तेनाभूत् बालकोऽतिमनोहरः" पद्मपु० ११अ०। २विषयुक्ते त्रि०।

सगर्भ पु० सह समानो गर्भोऽस्य। १सहोदरे भ्रातरि शब्दर०। सह गर्भेण। २गर्भयुक्ते मध्यवर्त्तिलक्षणापत्ययुक्ते कुष्माण्डादौ त्रि० स्त्रियां टाप्। [भ्रातरि।

सगर्भ्य पु० समाने गर्भे भवः यत् सहस्य सः। सहोदरे

सगोत्र न० सह समानं गोत्रम् सहस्य सः। १कुले शब्दच० सह समं गोत्रमस्य। २ज्ञातौ त्रि० अमरः।

सग्धि स्त्री अद-क्तिन् नि० सह ग्धिः सहस्य सः। सहभोजने अमरः।

सङ्कट त्रि० सम+कटच् सम्+कट-अच् वा। १अल्पावकाशे स्थाने अमरः। २संबाधे ३दुःखे "नरोऽमुच्येत सङ्कटादिति" देवीमा०। ४देवीभेदे स्त्री ज्योतिषोक्ते दशाभेदे च स्त्री टाप्। दशाशब्दे ३४८४पृ० दृश्यम्।

सङ्कथा स्त्री सम्+कथ–भावे अ। परस्परकथने हेमच०।

सङ्कटाक्ष पु० सङ्कटं संबाधमक्षति अक्ष–अच्। धववृक्षे विश्वः

सङ्कर पु० सम्+कृ–कर्मणि अप्। १सम्मार्जन्यादिभिः क्षिप्ते रजसि अमरः। इतरजातिपुरुषेण इतरजातिस्त्रियां २जाते जातिभेदे। भावे अप्। ३मेलने ४परस्पराभावसामानाधिकरण्ये सत्येकाधिकरणवृत्तित्वे च स च जातिबाधकः "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" सि० मु०। यथा भूतत्वाभाववति मनसि मूर्त्तत्वस्य सत्त्वात् मूर्त्तत्वाभाववति च गगने भूतत्वस्य सत्त्वात् भूम्यादिभूतचतुष्टये चोभयोः सामानाधिकरण्यात् तयोर्न जातित्वम्। वर्णसङ्करजातिश्च नानाविधा दिङ्मात्रमत्रोच्यते "वक्ष्ये सङ्करजात्यादि" इत्युपक्रमे "विप्रान्मूर्द्धाभिषिक्तो हि क्षत्रियायां, विशः स्त्रियाम्। जातोऽम्बष्ठस्तु शूद्रायां निषादः पार्शवोऽपि च" इत्यादि गरु० ९६अ०। "स्त्रीषु दुष्टासु वार्ष्णेय! जायते वर्णसङ्करः" गीता। ५अलङ्कारभेदे अलङ्कारशब्दे ४०५पृ० दृश्यम्। ६संसर्गे स्पर्शादिसम्बन्धे भाण्डादिसङ्करे भवनादिदहनादि तत्र च प्रायश्चित्तादि प्रा० वि० उक्तं यथा

"अथ भाण्डादिसङ्करप्रायश्चित्तम्। तत्र व्यासः "भाण्डादिसङ्करेषु भवनदहनं पूरणं मृद्भाण्डभेदनं दारवाणाम् तक्षणं ताम्ररजतसौवर्णानामद्भिः प्रक्षालनं कांस्यताम्राणामाकरशुद्धिः सौवीरपयोदधितक्राणां परित्यागः शेषवस्त्रवसद्रव्याणां गोमूत्रयावकाहारो मासं क्षपयेत् बालवृद्धस्त्रीणामर्द्धं प्रायश्चित्तम् आषोडशाद्बालः सप्तत्यूर्द्ध्वं स्थविरः चीर्णे प्रायश्चित्ते ब्राह्मणभोजनं गोयुगस्य दद्यादभावे सर्वस्वम्"। पूरणं पूर्वस्थितमृत्कर्षणेन मृत्तिकान्तरदानम् तक्षणं वास्यादिनांशवियोजनम् भाण्डभेदनं मृण्मयभाण्डभेदनम्। आकरे अग्न्यादिभिः अग्निसंयोगात्तीक्ष्णादीनामुत्पत्तेः। शेषद्रव्याणां वासादीनां यवदूष्मायां च धान्यानां रक्षणम्। तथा च पराशरः "आकरे तु भवेच्छुद्धिरारकूटे तथा-

तदा प्राग्दिन एव पुण्यकालो नोत्तरदिने । तथा यद्य-स्तसन्ध्यामतिक्रम्य मकरसंक्रान्तिस्तदोत्तरदिन एव पुण्यकालो नोत्तरदिने इति निष्कृष्टोऽर्थः । अतो वृद्धगार्ग्यादिवाक्यनारदवाक्ययोः प्रदोषसन्ध्यापदोपादानेन सामान्यविषयत्वावोऽयमगमकः । यत्तु हेमाद्रौ स्कन्दपुराणीयं वाक्यम् "धनुर्मीनावतिक्रम्य कन्यां च मिथुनं ततः । पूर्वापरविभागेन रात्रौ संक्रमते यदा । दिनान्ते पञ्च नाड्यस्तु तदा पुण्यतमाः स्मृताः । उदये च तथा पञ्च दैवे पित्र्ये च कर्मणि" इति । तदपि सन्ध्याविषयकमेवेत्याहुरभियुक्ताः । विषुवे तु यथाश्रुतम् एवेति, अन्यदपि सन्ध्याकालप्रयोजनं प्राक्सन्ध्यागर्जित इत्यादिषु वक्ष्यति । ननु नायमयनपुण्यकालोक्त्युद्यमः सफलः शास्त्रान्तरविरुद्धत्वात्तथा हि "अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् । रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः । अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया । ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम् । पूर्णे चेदर्द्धरात्रे च यदा संक्रमते रविः । प्राहुर्दिनद्वयं पुण्यं मुक्त्वा मकरकर्कटौ" इति वृद्धवशिष्ठेनायनव्यतिरिक्तेषु दशसु संक्रमेषु रात्रिगतेषु "याः याः सन्निहिता नाड्यस्ताः पुण्यतमाः स्मृताः" इति कश्यपोक्तसामान्यवाक्याद्रात्रावेवानुष्ठाने प्रसक्तमहः संक्रम इत्यादिनाप्येतदेवानुष्ठानं विहितं तत्रापि पर्युदासः क्रियते मुक्त्वा मकरकर्कटाविति तस्मात् मकरकर्कटयोः संक्रमणे रात्रावेवानुष्ठानं कर्त्तव्यमित्युक्तं भवति अतएवाह याज्ञवल्क्यः "राहुदर्शनसंक्रान्तिविवाहात्ययवृद्धिषु । स्नानदानादिकं कार्य्यं निशि काम्यव्रतेषु च" इति वशिष्ठोऽपि "सुतजनने संक्रान्तावुपरागे चन्द्रसूर्य्ययोर्नियतम् । रात्रावपि कर्त्तव्यं स्नानं दानं विशेषतो मध्यामिति" सुमन्तुश्च "ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च । श्रवणे चेतिहासस्य रात्रौ दानं प्रशस्यते" इति । एषु वाक्येषु सामान्यवाचिनोऽपि संक्रान्तिपदस्य मकरकर्कटसंक्रान्तिपरत्वमवसीयते यत्तु "रात्रौ स्नानं न कुर्वीत दानं चैव विशेषतः" इति निषेधः स संक्रान्त्यन्तरे व्यवतिष्ठते यथोक्तं कश्यपेन "स्नानं दानं ग्रहणवत् सौम्ययाम्यायनद्वये" इति । तस्मादयनसंक्रमे रात्रौ सत्यां तत्रैव स्नानदानाद्यनुष्ठातव्यमिति । वङ्गाः शास्त्रद्वयेन तुल्यबलत्वाद्विकल्पसिद्धौ तत्तद्देशप्रसिद्धशिष्टाचारेण व्यवस्था कल्प्या । तत्र गौर्जरास्तु कश्यपादिवाक्यमभ्युपेत्य रात्रावयनसम्भवे सति रात्रौ एव स्नानदानादिकं कुर्वन्ति । दाक्षिणात्यास्तु वृद्धगार्ग्यादिवाक्यमङ्गीकृत्य दिवस एव स्नानदानादि कुर्वन्तीत्यलमतिप्रसङ्गेन । यदा तु दिने कर्कटमकरसंक्रमस्तदा क्रमेण पूर्वोत्तरघटिकानियममाह वृद्धवशिष्ठः "अतीतानागते पुण्ये द्वे उदग्दक्षिणायने । त्रिंशत् कर्कटके नाड्यो मकरे विंशतिः स्मृताः" इति । उत्तरायणमतीतं सत् पुण्यं कर्कटायनमागामि पुण्यं तत्र कर्कटसंक्रान्तेः प्राक् त्रिंशत् घटिकाः पुण्याः मकरे तूत्तरविंशतिर्घटिकाः पुण्या इत्यर्थः । अत्र वाक्ये यद्यपि दिनपदानुपादानं तथापि यदास्तमयवेलायामिति रात्रिपर्विशेषवाक्यालोचनादिदं दिनपरं प्रतिभाति तथा सति तेनापि हेतुना समीपघटीषु श्राद्धाद्यनुष्ठानासम्भवे परमावधित्वेन त्रिंशदादयो घटिका अत्रानुज्ञायन्ते यदा तु प्रतिबन्धस्तदा "याः याः सन्निहिता नाड्यस्ताः पुण्यतमाः स्मृता" इति कश्यपोक्तेः समीपघटिकास्वेव श्राद्धादि विधेयं 'सन्निहितपरित्यागे कारणाभावादिति' न्यायविद्" । "अथ पूर्वापराः षोडश घटिकाः पुण्या इति पूर्वं सामान्येनोक्तमिदानीं विष्णुपदादिषु संक्रमेषु विशेषमनुष्टुभाह यास्यति । याम्यायने कर्कटसंक्रान्तौ तथा विष्णुपदे वृषसिंहवृश्चिककुम्भसंक्रान्तिकाले आद्याः नाड्यः प्रथमाः षोडशघटिकाः अतिपुण्यदाः स्नानदानादावनन्तफलदा ज्ञेयाः अन्तिमास्तु न तथेति निष्कृष्टोऽर्थः । विषुवयोस्तुलामेषयोः मध्या उभयतः षोडश षोडश घटिकाः पुण्याः अथ वा षोडशैव घटिकाः पुण्या । षडशीत्यानने मिथुनकन्याधनुर्मीनसंक्रान्तिषु तथा सौम्ये मकरसंक्रान्तौ संक्रान्तिकालात्परा अन्तिमाः षोडश घटिकाः अतिपुण्यदाः प्रथमास्तु न तथेति निष्कृष्टोऽर्थः । यदाह श्रीपतिः "याम्यायने विष्णुपदे तथाद्यौ दानाद्यनन्तं विषुवे च मध्ये । वदन्त्यतीते षडशीतिवक्त्रे मह्वैवः सत्ययने च सौम्ये" । तत्र कर्के प्रागेव मकरसंक्रान्तौ पश्चादेव पुण्यकाल इति तु प्राङ्निरणायि । विष्णुपदे तु अन्तिमादिघटीनां पुण्यकाले तरतमभावः "पुण्याद्यां विष्णुपद्यां च प्राक्पश्चादपि षोडशेति" वृद्धवशिष्ठोक्तेः । विषुवे तु सामान्यनिर्णय एवेति केचित् दीपिकाटीकाकारस्त्वेवमाह "मेषे तुलायां संक्रान्तिमध्य एव संक्रान्तिकालात्पूर्वमष्टौ घटिकाः परतश्चाष्टौ घटिका पुण्य इति" । युक्तं चैतत् । विषुवे च मध्यपदोपादानात् मध्ये षोडश घटिकाः पुण्याः इत्युच्यते कथात्

मेषे गोलमध्ये तथापराः । धनुर्मिथुनकन्यासु मीने च षडशीतयः । वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी स्मृता । मूर्ध्नि सप्त मुखे त्रीणि हृदये पञ्च विन्यसेत् । त्रितयं करपादेषु महाविषुवभक्रमात् । मस्तके भूपतेः सौख्यं वदने पटुता शुभे । हृदये च धनाध्यक्षोऽर्थप्राप्तिर्दक्षिणे करे । वामे करे महद्दुःखं दुःखं पादे च दक्षिणे । भ्रमणं वामपादे च कथितं विषुवत् फलम् । षड्मूर्ध्नि वदने पञ्च चत्वारि हृदये तथा । त्रितयं करपादेषु यथाविषुवतः क्रमात् । मानं मूर्ध्नि मुखे वैरं हृदये सुखसम्भवः । दोःपदाद्द्वयोर्भोगस्तोषश्च वामयोः क्रमे" जलविषुवफलम् । "शीर्षे पञ्च मुखे त्रीणि हस्तयोश्च भयं त्रयम् । हृदि पञ्च शमी नाभौ गुह्ये च पादयोरपाः । उत्तरायणभाजश्चेयं धनधान्यस्थितेः फलम् । शीर्षेऽथ नाभौ वदने हस्तानि द्वौ करेऽङ्घ्रौ हृदये च सौख्यम् । नाभौ शुभं वामकरेऽर्थनाशो गुह्ये भयं वामपदे प्रवासः उत्तरायणफलम् । "शीर्षे त्रीणि मुखे त्रीणि हृदये पञ्च हस्तयोः । षट् पादद्वयेऽष्टौ दक्षिणायनसंक्रमात् । शीर्षे मानो मुखे विद्या हृदये वित्तसञ्चयः । प्रवासः स्यात् करे वामे भिक्षालाभश्च दक्षिणे । निष्फलं वामपादे च किञ्चिल्लाभश्च दक्षिणे" दक्षिणायनफलम् । "शुभे संक्रमणं यत्र विष्णुपद्यां मुखे तु तत् । चत्वारि दक्षिणे बाहौ त्रीणि त्रीणि पदद्वये । चत्वारि वामबाहौ च हृदये पञ्च निर्दिशेत् । कण्ठोर्ध्वं द्वयं योज्यं मूर्ध्नि द्वे चैककं गुह्ये" "रोगो भोगस्तथा वामं बन्धनं लाभ एव च । ऐश्वर्यं राजपूजा च चपलत्वमिति क्रमात्" विष्णुपदीफलम् "मुखे चैकं करे वेदाः पादयुग्मे द्वयं द्वयम् । क्रोडे बाणास्तथा वेदाः करे सव्येतरेऽपि च । द्वयं द्वयं तथा नेत्रे मस्तके त्रितयं तथा । द्वयञ्चैव तथा गुह्ये षडशीत्यां क्रमे स्थिते । मुखे दुःखं करे लाभः पादयोर्भ्रमणं हृदि । कान्ता स्याद्बन्धनं वामे हस्ते स्यात् शोभनं धनाम् । सम्माने नेत्रयोश्चैव बन्धमानश्च मस्तके । गुह्ये चैव भवेन्मृत्युः षडशीतिफलस्तुतिः" षडशीतिफलम्" । गुरुसंक्रान्तिफलमुक्तं ज्यो० त० यथा "शीर्षे चत्वारि राज्यं जलधिरपि करे दक्षिणे चापि सौख्यं चैकं कण्ठे विभूतिं मदनशरमितं वक्षसि प्रीतिमङ्गम् । पादस्थाः षट् च पीडां पुनरपि जलधिर्वामहस्ते च मृत्युं नेत्रे त्रीणि प्रदद्युः सुखमथ निखिलं वाक्पतेः संक्रमात्" ।

संक्रान्तिपुण्यकालव्यवस्था ति०त० संक्षेपतो दर्शिता यथा "तदयं संक्षेपः । दिनसंक्रमणे कृत्स्नं दिनं पुण्यं भवतीति मुख्यं इत्याद्युक्तं पुण्यतरं मन्दामन्दाकिनीत्यादि रूपेण त्रिंशद्रादिघटिकाः पुण्यतमाः । दिनकृत्तोत्तरायणादिविहितविंशतिदण्डादीनां रात्रिप्रविष्टभागस्यापि पुण्यत्वं रात्रिसंक्रमणे तु कर्कान्यून मकरार्धगते तद्दिवसीयशेषयामद्वयं पुण्यम् । कालद्वयात्मकमध्यरात्रगते तद्दिवसीयतिथेरभेदे तद्दिवसीयशेषयामद्वयं पुण्यं भेदे तु तद्दिवसीयशेषयामद्वयं परदिवसीयाद्ययामद्वयञ्च पुण्यम् । उभयदिने पुण्यकालेऽपि पूर्वदिनाकरणे एव परदिने तद्विहितं कार्यम् । तिथिभेदाभेदयोर्दक्षिणायने तद्दिवसीयशेषयामद्वयम् उत्तरायणे तु परदिवसीयाद्ययामद्वयं पुण्यमिति मध्यरात्रीयकर्कोत्तरशेषार्द्धरात्रसंक्रमणमात्रे तु परदिनाद्ययामद्वयं पुण्यमिति सन्ध्यासंक्रमणे तु दिनदण्डे दिनस्य रात्रिदण्डे रात्रेर्व्यवस्थितिः" । तत्प्रमाणं ति०त० दृश्यम् । संक्रान्तौ कालाशुद्धिदोषादिकं नास्ति यथोक्तं ति०त०स्कान्दे "एकान्ततो मया प्रोक्ताः कालाः संक्रान्तिसंज्ञकाः । नैतेषु विद्यतेऽनिष्टं यतश्चाक्षयसंज्ञिताः । अन्यत्रापि यद्दत्तं सुपात्रेभ्योऽपि मानवैः । अकालेऽपि हि तत्सर्वं सम्यक् मक्षयतां व्रजेत्" ।

सङ्ख्या न० संख्यायते परस्परनामोच्चारणं क्रियतेऽत्र सम्+ख्या-अधिकरणे अङ् । १ बुद्धौ अमरः । अङ् । २ विचारे स्त्री अमरः । एवं ३ सम्यगबुद्धौ राजनि० ४ द्रव्याश्रिते एकत्वद्वित्वादौ गुणभेदे च स्त्री टाप् । एकादिसंख्यावाचकस्य संख्यासंख्येयोभयपरता "द्व्येकयोर्द्विवचनैकवचने" इति पा० महाभाष्ये उक्ता । तेन घटानां पञ्चत्वमपि स्यात् "दशानुक्रमा गुणसम्प्रयुक्ता" इत्यादि वेदादौ संख्यापरतया निर्देशोऽपि साधुः । किन्तु संख्यात्वजातावेव शक्तिः संख्यायुक्ते निरूढलक्षणेति विवेकः तत्र एकादिदशान्ताः शब्दास्त्रिलिङ्गाः विंशत्याद्यास्तु नियतस्त्रीलिङ्गादिकाः । तत्रापि विंशत्यादिशब्दानां बहुत्वसंख्यावाचकत्वेऽपि एकवचनान्ततैव । तदाहुः बहुवचनान्ता क्वचित् पञ्च विंशतयः षट् शतानीत्यादि । तेषां विशेषसंज्ञा लीला० दर्शिता यथा "एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः । अर्बुदमब्जं (पद्मः) खर्वनिखर्वमहापद्मशङ्कवस्तस्मात् । जलधिश्चान्त्यं मध्यं परार्द्धमिति दशगुणोत्तराः संज्ञाः संख्याया स्थान-

सङ्घर्ष पु० सम्+घृष्-घञ् । १परस्परघर्षणे २स्पर्द्धायां ३सं-मर्षे च शब्दर० ।

सङ्घशस् अव्य० सङ्घ+वीप्सार्थे-शस् । भूरिशः इत्यर्थे ।

सङ्घाटिका स्त्री सङ्घटयति सम्+घट-णिच्-ण्वुल् । १युग्मे २कुट्टन्यां ३जलकण्टके मेदि० । ४घ्राणे विश्वः ।

सङ्घात पु० सम्+हन-घञ् । १समूहे २नरकभेदे अमरः । ३सम्यग्हनने मेदि० ४दृढसंयोगे ५कफे च राजनि० ।

सङ्घातपत्त्रिका स्त्री सङ्घातयुक्तं पत्त्रमस्याः कप् अत इत्वम् । शतपुष्पायां राजनि० ।

सचि(ची) स्त्री सच-इन् वा ङीप् । इन्द्राण्यां रामाश्रमः

सचिल्लक पु० सह क्लिदेन चक्षुषा वः कप् नि० । क्लिन्ननेत्रे (पिचुटियुक्तनेत्रे) शब्दच० ।

सचिव पु० सच-इन् तथा सन् वाति-क । १सहाये २म-न्त्रिणि अमरः ३२१पृ० दृश्यम् । ३कृष्णधुस्तूरे राजनि० । [रोगभेदे राजनि० ।

सचिवामय पु० सचिवः सहाय आमयो यस्य । विसर्पे

सचीनन्दन न० ६त० । वैष्णवसम्प्रदायप्रवर्त्तके नवद्वीपाधि-भूते वैष्णवाचार्य्यभेदे तदाविर्भावश्च "शाके कुनिध्योम-युगेन्दुमाने(१४०७) पुण्ये तिथौ फाल्गुनपौर्णमास्याम् । त्रैलोक्यभाग्योदयपुण्यकीर्त्तिर्देवः सचीनन्दन आवि-रासीत्" चैतन्यचन्द्रोदयः । अस्य सर्वो शुभभगवदवता-रत्वं वैष्णवशास्त्रोक्तं तत्र न किञ्चित् प्रमाणमुपलभामहे

सचेतन त्रि० सह चेतनया सहितं सः । विशिष्टज्ञानयुक्ते ।

सचेष्ट पु० सचते सच-अच् तथाभूतः सन् इष्टः । १आम्रे शब्दमा० । सह चेष्टया सहितः सः । २चेष्टान्विते त्रि० ।

सच्चारा स्त्री सन् चारो गात्रानुलेपने विन्यगतिरस्याः । हरिद्रायां शब्दच० ।

सच्चिदानन्द पु० सत् नित्यः चित् चैतन्यमानन्दः त्रिपद कर्म० । १नित्यज्ञानसुखमये ब्रह्मणि वेदा० । ६त० । २तद्युते ईश्वरादौ त्रि० न्यायमतम् ।

सच्छूद्र पु० कर्म० । गोपनापितादौ शूद्रभेदे "सच्छूद्रो गोपनापितादिरिति" स्मृतिः । [अमरः ।

सजम्बाल त्रि० सह जम्बालेन सहितः सः । पङ्कयुक्ते देशे

सजाति पु० समाना जातिरस्य समानस्य सः । सवर्णेन सवर्णायामूढायाम् उत्पादिते पुत्रे । २तज्जातौ त्रि० "सव-र्णेभ्यः सवर्णासु जायन्ते च सजातयः" मिता० स्मृतिः ।

सजातीय त्रि० समानां जातिमर्हति छ समानस्य सः । समानधर्म्मयुक्ते अमरः ।

सजुष् अव्य० सह जुषते क्विप् सहस्य सः । १सहार्थे जुषा-द्यादौ र । सजुः चर्या० । "सजुःस्थ रतिं वसेदिति" भट्टिः । २प्रीतियुक्ते ३सेवायुक्ते च त्रि० ४तापसे संक्षिप्तसा०

सज्ज त्रि० सस्ज-अच् । १उद्युक्ते २संनद्धे अमरः । ३सज्जिते विश्वः ४निश्चिते शब्दर० । भावे घञ् । ५आयोजने ६वेशे च स्त्री सतो जायते जन-ड । ७साधुजाते त्रि० ।

सज्जन न० सस्ज-णिच्-ल्युट् । १रक्षार्थं सैन्यस्थापने अमरः २घट्टे (घाटी) मेदि० । ३आयोजने । सन् जनः । ४शी-लान्वयवति जने पु० "निजाचारपालिनो ये कुर्वन्ति वेदस-म्मतम् । पापाभिलाषरहिताः सज्जनास्ते प्रकीर्त्तिताः" पद्मपु० "कुरु सज्जनसङ्गमिति" उद्भटः । ५सत्कुलोद्भवे च पु० । सस्ज-णिच्-युच् । ६आपादीनामारोहणार्थं गजभूषाकरणादौ स्त्री अमरः ।

सज्जित त्रि० सज्जा जातास्य तार० इतच् सस्ज णिच्-कर्म्मणि क्त वा । १कृतवेशे २भूषिते ३संनद्धे च । [देवीपु० ।

सञ्च सञ्चीयतेऽत्र सम्+चि-ड । लेखनार्थे पत्रभेदे (साँच) ।

सञ्चत् त्रि० सम्+चत-क्विप् । प्रतारके सि०कौ० ।

सञ्चय पु० सम्+चि-अच् । १समूहे अमरः । २संग्रहे च । ल्युट् । सञ्चयन । सङ्ग्रहे न० । [चीयतीति पुराणम्

सञ्चयिन् पु० सम्+चि-इनि । सङ्ग्रहकारके "सञ्चयी नाव-

सञ्च(ञ्चा)र पु० सञ्चरत्यनेन सम्+चर-घञर्थे करणे घ वा । १सेतौ रत्नमा० २देहे हेमच० । भावे घञ् । ३रा-श्यादेः राश्यन्तरगमने ४अध्वगतौ च ।

सञ्चाय्य पु० सञ्चीयतेऽग्निरत्र सम्+चि-ण्यत् नि० यज्ञभेदे ।

सञ्चारिका स्त्री सञ्चारयति नायकयोर्वार्त्ताम् सम्+चर-णिच्-ण्वुल् । १दूत्याम् अमरः । २कुट्टिन्यां ३युग्मे ४घ्राणे च मेदि० ।

सञ्चारिन् पु० सम्+चर-णिनि । १धूपे त्रिका० २वायौ शब्दच० । अलङ्कारोक्ते शृङ्गारादिरसाद्यनुगुणे ३भाव-भेदे च भावभेदश्च व्यभिचारिभावः । "नानाभिनयसम्ब-न्धात् भावयन्ति रसान् यतः । तस्माद्भावा अमी प्रोक्ताः स्थायिसञ्चारिसात्त्विकाः" । "व्यक्तः सञ्चारिणा तथेति" सा० द० । ४सञ्चारकारके त्रि० स्त्रियां ङीप् । "सञ्चारिणी दीपशिखेवेति" रघुः । सा च ५हंसपद्याम् राजनि० ।

सञ्चाली स्त्री सञ्चलति सम्+चल-अच् गौरा० ङीप् । गु-ञ्जायां युक्तिकल्पतरुः ।

सञ्चित्रा स्त्री प्रा० स० । मूषिकपर्ण्यां शब्दर० । [कर्म्मभेदे च

सञ्चित त्रि० सम्+चि-क्त । १स्फीते २अनारब्धफलके

**सञ्ज** पु० सम्+जन–ड । चतुर्मुखे १ब्रह्मणि २शिवे च मेदि० ३कान्त्यां स्त्री त्रिका० ।

**सञ्जय** पु० भारतप्रसिद्धे धृतराष्ट्रसारथिभेदे ।

**सञ्जवन** न० सम्+जु-युच् । परस्पराभिमुखतया स्थिते च-तुःशाले स्थले अमरः ।

**सञ्जीवन** न० सम्+जीव-ल्युट् । १चतुःशालस्थले शब्दर० । २सम्यक्प्राणधारणे च । संजीवयति सम्+जीव-णिच्-ल्युट् । ३औषधीभेदे स्त्री ङीप् ।

**सट** न० स्त्री सट-अच् पृषो० ठस्य टः । १व्रतिनां केशचूडाते २जटायाम् शब्दर० । ३सिंहादीनां ४स्कन्धे केशरे च मेदि० "सटच्छटाभिन्नघनेनेति" माघः । [ङीप् ।

**सटाङ्क** पुंस्त्री० सटा अङ्को यस्य । सिंहे शब्दर० स्त्रियां

**सटि(टी)** स्त्री सठ-इन् वा ङीप् पृषो० । १शट्यां शब्दरत्ना० स्वार्थे क । २गन्धपत्त्रद्रव्ये राजनि० । सठ-इन् ङीप् । पृषो० । सटीव्यल । ठान्तः तमार्थे राजनि० ।

**सट्टा** स्त्री सठ-अ पृषो० । १पक्षिभेदे २वाद्ये च त्रिकाण्ड० ।

**सठ** चुरा० गतौ संस्कारे असंस्कारे च चुरा० उभ० सक० सेट् । साठयति ते ओपदेशत्वमेव न्यायम् ।

**सणसूत्र** न० शणसूत्र+पृषो० । शणसूत्रे रायमुकुटः ।

**सण्डिश** पु० संदंश+पृषो० । सन्दंशे (साँड़ाशि) "सण्डिशैरप-कृष्यन्ते नरैर्याम्यैः सुदारुणैः" मार्कण्डेयपु० १४अ० ।

**सण्डीन** न० सम्+डी-क्त । पक्षिणां सङ्गत्य गमनरूपे गति-भेदे अमरः ।

**सत्** त्रि०अस–शतृ । १सत्ये २साधौ ३पूजिते ४धीरे ५प्रशस्ते ६विद्यमाने च अमरः । स्त्रियां ङीप् । सा च ७पति-व्रतायां स्त्रियां दक्षकन्याभेदे "सती सती योगवि-सृष्टदेहेति" कुमारः । दक्षीराद्युक्तदि हेमच० ९०ब्रह्मणि न० "ओंतत्सदितिनिर्देशो ब्रह्मणस्त्रिविधः स्मृतः" इति गीता । ११आदरे अव्य० "सदसती आदरानादरयो-रिति" पाणिनिः उद्ध०ग० "सत्कृत्य" सि०कौ० । पतिव्र-तापरत्वे संज्ञात्वात् तस्याभावः त्व "सतसोदुमशयनम" पा०न स्नुसः सतीत्वम् "तेन नारद ! नारीणां सतीत्व-मुपजायते" पुराणम् ।

**सतत** न० संम्+तन–क्त समोऽन्त्यलोप । १निरन्तरे २तद्वति त्रि० अमरः । ["सततताऽन्यथा प्रथा" वेदा०प० ।

**सतत्त्व** न० सह सदृशं तत्त्वेन । १स्वभावे हेमच० २स्वार्थे

**सतानन्द** पु० गौतमपुत्रे अहल्यागर्भजे मुनिभेदे शब्दच० ।

**सतीन** पु० सतीं नयति नी–ड । १वंशभेदे शब्दच० (कुड़मटर) २कलायभेदे भरतः । स्वार्थे क । तत्रैव अमरः ।

**सतीर्थ्य** पु० समाने तीर्थे गुरौ वसति यत् समानस्य सः । एकगुरुकशिष्ये अमरः । ड्या० । निर्गमादोऽपप-मतार्थे । [स्थाडिः । २वंशे हारा० ३वायौ रायमु० ।

**सतील** पु० सतीं सम्यक् अति अल–क । (कुड़मटर) १कलाये

**सतीलक** पु० सतीलः इव कायति कै–क, सह तिलेन तिलचि-ह्नेन कप् पृषो० दीर्घः । १वंशे (कुड़मटर) २कलायभेदे च अमरः । [दीर्घः । कलायभेदे (तेओड़ा) अमरः ।

**सतीला** स्त्री सह तिलेन तिलचिह्नेन सहस्य सः पृषो०

**सतेर** पु० सन–एर नान्तादेशः । तुषे त्रिकाण्ड० ।

**सत्कदम्ब** पु० नित्यक० । श्वेतकदम्बे शब्दच० ।

**सत्कर्तृ** पु०सत्+कृ–तृच् । १विष्णौ विष्णुस०२सत्कारके त्रि०।

**सत्कर्मन्** न० कर्म० । वेदादिविहिते यागादौ कर्मणि ।

**सत्काञ्चनार** पु०कर्म० । रक्तकाञ्चने शब्दच० । [स्त्रियां ङीप्

**सत्काण्ड** पुंस्त्री०सत्काण्डं यस्याधारोऽस्य । चिल्ले शब्दच०

**सत्कार** पु० सत्+कृ–घञ् उप०स० । १सम्मानने २पूजने च ।

**सत्कार्य्यवाद** पु० ६त० । कार्य्यस्य सत्त्वनिर्णायके वादे कथा-भेदे स च वादः उत्पत्तिशब्दे ११०८पृ० दृश्यः ।

**सत्कृत** त्रि० सत्+कृ–क्त । १पूजिते २कृतसम्माने च ।

**सत्क्रिया** स्त्री सत्+कृ–श । १सत्कारे २सम्मानने ३पूजने च

**सत्तम** त्रि० अतिशयेन सत् तमप् । अतिशयसाधौ अमरः ।

**सत्ता** स्त्री सतोभावः तल् । १द्रव्यगुणकर्मवृत्तौ २जातिभेदे "द्रव्यादित्रिकवृत्तिस्तु सत्ता परतयोच्यते" भाषा० । जाति-शब्दे ३०८१ पृ० दृश्यम् । ३विद्यमानतायाञ्च विद्यमा-नत्वं च कालसम्बन्धः । आत्मधारणानुकूलव्यापार इति शाब्दिकाः "आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते । आत्मभावाश्च तेनासौ कर्मणा न सकर्मकः" हरिः ।
तत्र विद्यमानता च वेदान्तमते त्रिविधा पारमार्थिकी१ ब्रह्मणः लौकिकाबाध्यत्वरूपा व्यावहारिकी२ घटादीनां सा च तत्त्वज्ञानबाध्या प्रातीतिकी३ शुक्तिरजतादेः सा चाधिष्ठानसाक्षात्कारनाश्या । ब्रह्मसत्तयैव सर्वेषां स-त्ताव्यवहारः तदुपलक्षत्वात् इति वेदान्तिनः ।

**सत्त्र** न० सद–ष्ट्रन् । १स्थाने २यज्ञभेदे ३सदादाने ४आच्छा-दने ५अरण्ये ६कैतवे मेदि० ७धने ८तडागे ९दाने १०स-रसि नानार्थकोषः । सदादानञ्च सदन्नियं सतताम्नदानम् । यज्ञभेदश्च द्वादशाहादिसाध्यः ज्योतिष्टोमादिः यथोक्तं कात्या०श्रौ०१२।१।४। तद्भाष्यादौ "द्वादशाहः सत्त्र-महीनश्च" "दशाहः अहीनरूपश्च भवति द्विविधः ।

हले ३स्कन्दफलवृक्षे च मेदि० । ४बिल्वे० जटा० । ५वा-र्त्ताकुभेदे स्त्री राजनि० टाप् । "सदाफला त्रिदोषघ्नी रक्तपित्तप्रसादनी । कण्डूकच्छूहरी चैव वार्त्ताकी गुणवत्समा" राजव० ।

**सदाभद्रा** स्त्री सदा भद्रमस्याः ५ब० । गाम्भारीवृक्षे रत्नमा० ।

**सदायोगिन्** पु० सदा युज्यते युज्-घिनुण् । १विष्णौ त्रिका० २सदायोगयुते त्रि० स्त्रियां ङीप् ।

**सदाशिव** पु० सदा शिवमस्मात् ५ब० । महादेवे ।

**सदुत्तर** न० कर्म० । १व्यवहारे प्रतिज्ञापक्षानुसारिण्युत्तरे प्रश्नस्य २सत्यमुत्तरे च । ६त० । ३तद्वति त्रि० ।

**सदृक्ष** त्रि० समानं दर्शनमस्य दृश+क्स समानस्य सादेशः । तुल्यरूपे अमरः । [तुल्यरूपे अमरः ।

**सदृश्** त्रि० समानं दर्शनमस्य समान+दृश–क्विप् सादेशः ।

**सदृश** त्रि० समानं दर्शनमस्य समान+दृश-टक् । तुल्यरूपे स्त्रियां ङीप् । [६ब० । निष्पन्दे त्रिका० ।

**सदृशस्पन्दन** त्रि०स्पन्द-गतौ कर्म सद् स्पृशं गतं स्पन्दनं यस्मात्

**सदेश** पु० सह देशेन सहस्य सः । १निकटे अमरः २देशा-न्विते त्रि० ।

**सद्धेतु** पु० कर्म० । न्यायोक्ते हेत्वाभासदोषरहिते हेतौ । पक्षसत्त्वं१ सपक्षसत्त्वं२ विपक्षासत्त्वं३ अबाधितविषय-त्वं४ असत्प्रतिपक्षितत्वं५ इति पञ्चरूपोपन्नो हेतुः स-द्धेतुः "व्याप्त्यादिविशिष्टो हेतुः सः" नीलकण्ठः "प्रमि-तव्याप्तिपक्षताको हेतुः सः" गदा० । २वृत्तिमद्धेतौ च "अव्याप्यवृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्याह" दीधितिः । अत्र सद्धेतौ वृत्तिमति हेतावित्यर्थः गगनादेः संयोगेन वृत्तिमत्त्वाभावात् तत्राव्याप्तिर्न सम्भवतीत्युक्तं सदिति ।

**सद्भाव** पु० सतोभावः, सन् वा भावः । १विद्यमानत्वे २सा-धुभावे च "सद्भावमागतः" इति भट्टिः ।

**सद्भूत** न० असत् सत् भूतम् सत्+च्वि–भू-क्त । १यथार्थे २तद्वति त्रि० हेमच० । [च मेदि० ।

**सद्मन्** न० सीदत्यस्मिन् सद्–मनिन् । १गृहे अमरः २जले

**सद्यःकृत** त्रि० सद्यस्तत्क्षणात् कृत कृ-क्त । तत्क्षणकृते ।

**सद्यःप्राणकर** त्रि० सद्योझटित् प्राणं बलम् आयुर्वा हितं करोति कृ-अच् । "सद्योमांसं नवान्नं च बाला स्त्री क्षीरभोजनम् । घृतमुष्णोदकं चैव सद्यःप्राणकराणि षट्" इति चाणक्योक्ते द्रव्यसमूहे

**सद्यःप्राणहर** त्रि०सद्यः प्राणमायुर्बलं वा हरति हृ-अच् । "शुष्कं मांसं स्त्रियो वृद्धा बालार्कः तरुणं दधि । प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट्" इति चाणक्योक्ते शुष्कमांसादिद्रव्यसमूहे । [शब्दच०

**सद्यःशोथा** स्त्री सद्यः शोथो यस्याः ५ब० । कपिकच्छ्वाम्

**सद्यःशौच** न० सद्यः शौचमपनेयमशौचम् । १सद्यस्तत्क्षणाशौचनाशके अशौचे ६त० । २तद्वति शिल्पिकारुप्रभृत्यादौ त्रि० । अशौचशब्दे ४८८ पृ० दृश्यम् ।

**सद्यस्** अव्य० समेऽह्नि नि० । १तत्क्षणे अमरः । २समान दिवसे एकस्मिन् दिने इत्यर्थे च ।

**सद्यस्क** त्रि० सद्योभवः कन् कल्पा० । सद्योजाते ।

**सद्यस्क्री** पु० सद्यःक्रीणाति सोमम् यत्र क्री-आधारे क्विप् कल्पा० । सद्यःसोमक्रयसाध्ये यागभेदे "एकरात्रोऽति-रात्रः सद्यःक्रीः प्रक्रीरुक्थ्यः" अथर्व० ११।७।१० । नाना-चक्रोक्तौ । भावे क्विप् । २सद्यस्क्रये स्त्री । तया साध्यः अच् । साद्यस्क्र सद्यःसोमक्रयेण एकाहसाध्ये यज्ञभेदे । "साद्यस्क्राश्च षट्" कात्या०श्रौ०२२।२।८। उक्ता यथा "षट् साद्यस्क्राः" सू० "स्वर्गकामपशुकामभ्रातृव्यवतां प्रथमः" सू०।१ साद्यस्क्र एकस्तुर्भवति ।"दीर्घव्याधिप्रतिष्ठाकामा-न्नाद्यकामानां द्वितीयः" सू०। साद्यस्क्रो२ भवति यथा-सङ्ख्याधिकारः । "हीनस्यानुक्रीः" सू० अनुक्रीनाम३ साद्यस्कः स हीनस्य भवति यः कर्मणा हीन तस्यासौ भवति । "विश्वजिच्छिल्पः" सू० नाम साद्यस्कः४ । "श्येनोऽभिचरतः" सू० श्येनो५ नाम साद्यस्क्रः पञ्चमः सोऽभिचरतो भवति । "एकत्रिकः" सू०षष्ठः६ साद्यस्क्रः । तत्र षट् प्रतिपत्तं दक्षिणा । साद्यःक्रधर्माः व्याख्या-स्यन्त इति सूत्रशेषः । दीक्षादि सद्यः सर्वं क्रियते" भाष्यम् तापड्या० भाष्ये चोक्तं यथा

अथ साद्यस्क्रा नाम षड् एकाहास्तेषु प्रथमद्विती-ययोर्दीक्षाप्रभृत्यवभृथान्तं, सर्वमेकस्मिन्नेवाहन्यनु-ष्ठेयं तृतीयस्य तु एकस्मिन् दिवसे दीक्षा परस्मिन् दिवसे सोमक्रयाद्यवभृथान्तं, चतुर्थपञ्चमयोरप्येवं यद्वा एकत्र दीक्षा सोमक्रयप्रभृति उपवसथान्तं द्वितीयेऽहनि सुत्येति एवं सूत्रकारमतं षष्ठस्यापि साद्यस्क्रान्तत्वात् सद्य एव एकस्मिन्नेवाहनि दीक्षाद्यवभृथान्तं कर्त्तव्य-मिति मतान्तरम् । एतत्सर्वं साद्यस्क्रेषु वक्ष्यमाणे म-न्त्रब्राह्मणे प्रातराङ्क्रमिं कुर्वीतादिना सूत्रकारेण विस्प-ष्टमुक्तम् । तत्र प्रथमस्य यदुक्तं सर्वं सद्योऽनुष्ठेयमिति तद्विधत्ते ब्राह्मणं 'आदित्याश्चाङ्गिरसश्चादीक्षन्त ते स्वर्गे लोकेऽस्पर्द्धन्त तेऽङ्गिरस आदित्येभ्यः श्वः सुत्यां प्राब्रुवं

**सनामक** पु॰ सना सदा आमयति अम-ण्वुल् । १योनाभ्रुनदके शब्दच॰ । तस्य पत्र्यादिभोजनस्य रोगहेतुत्वात् तथात्वम् । बह नाम्ना सह । २नामयुक्ते त्रि॰ ।

**सनि** पु॰ सन-भावे इन् । १पूजायां २दाने च सि॰कौ॰ । ३सनकारपूर्वकनियोगे पुंस्त्री॰ अमरः स्त्रियां वा ङीप् । ४ज्ञीवनः उच्छिकर्णाद्भ्याले शब्दर॰ ५दिशि स्त्री शब्दमा॰

**सनित** त्रि॰ सन-बा॰ इत । प्रतिपन्ने हेमच॰ ।

**सनिष्ठी(ठे)व** न॰ सह निष्ठी(ठे)वेन । १सनिष्ठ्युतवाक्ये सथूत्कारे अमरः ।

**सनीड** त्रि॰ समानं नीडं यस्य नीडेन वा सादेशः । १निकटस्थे अमरः । २नीडयुक्ते त्रि॰ ।

**सन्त** पु॰ सन-बा॰ त । सङ्गतौ शब्दर॰ ।

**सन्तत** न॰ सम्+तन-क्त । १सतते निरन्तरे । २वैस्तार्य्ययुते त्रि॰ अमरः ३विस्तीर्णे च ।

**सन्तति** स्त्री सन्तन्यते सम्+तन-क्तिच् । १गोत्रे अमरः । २पुत्रे ३कन्यायाञ्च विश्वः । भावे क्तिन् । ४विस्तारे ५पङ्क्तौ ६अविच्छिन्नधारायाञ्च विश्वः ।

सन्तानश्च दैशिको कालिको च । तत्र दैशिको तैलादीनां, कालिको ज्ञानसुखादीनाम् । तत्र दैशिकसन्ततित्वं स्वाधिकरणदेशीयनानावच्छेदकहार्त्तिधर्मत्वं तच्च मूर्त्तानामेव कालिकसन्ततित्वञ्च नानाकालीनकार्य्यमात्रहार्त्तिधर्मत्वम्, तत्रिकपादि सङ्क्षेपः तच्च मूर्त्तामूर्त्तयोरतएव हस्त तु ज्ञानादिसन्तानभवतीति तदुक्तं तत्रैव "देशसहार्त्तिदुःखत्वं दुःखत्वं वा नाम्रयसमानकालीनध्वंसप्रतियोगिवृत्ति नाय्यमात्रहत्तिधर्मत्वात् सन्ततित्वादेत्युक्ता सन्ततित्वं च नानाकालीनकार्य्यमात्रहत्तिधर्मत्वम्" इत्युक्तम् ।

**सन्तप्त** त्रि॰ सम्+तप-क्त । १अध्वगमनादिना परिश्रान्ते २अग्नितप्ते ३तेन विशुद्धे च "सन्तप्तचामीकरवल्गुवज्र"मिति भट्टिः ।

**सन्तमस** न॰ सन्ततं तमः प्रा॰स॰ अच् समा॰ । १गाढान्धकारे अमरः । २महामोहे च मोहस्य सर्व्वावरणात् तमसा न सहामोहस्य गाढान्धकारस्वरूपत्वात्तथात्वम् ।

**सन्तर्पण** न॰ सन्तृप्यतेऽनेन सम्+तृप-करणे ल्युट् । "द्राक्षादाडिमखर्ज्जूरीचर्करामधुसंयुतम् । लाजाचूर्णन्तु कांस्यं यत् तत्तु सन्तर्पणं विदुः" राजनि॰ उक्ते द्राक्षादिभिर्युते लाजाचूर्णे खाद्यभेदे । सम्+तृप-णिच् ल्यु । २सम्यक्तर्पके त्रि॰ । [हेम॰ ३सम्पदे ४निस्तारे च मेदि॰ ।

**(स)न्तान** पु॰ सम्+तन-घञ् । १वंशे सन्ततौ अमरः । २कल्प-

**सन्तानिका** स्त्री सम्+तन-ण्वुल् टाप् इत्वम् । १क्षीरसरे "सन्तानिका गुडः सीता क्षुधाः पिताश्वभञ्जित्" राजप॰ । २मर्कटजाले ३फेने ४क्षुरिकाफले च शब्दार॰ । [२सम्यक्तापे च ।

**सन्ताप** पु॰ सम्यक् तापः प्रा॰स॰ । १वह्निजाते तापे अमरः ।

**सन्तापन** पु॰ सन्तापयति सम्+तप-णिच्-ल्यु । कामदेवस्य १पञ्चशरान्तर्गते शरभेदे त्रिका॰ । २सन्तापकारके त्रि॰ ।

**सन्ति** स्त्री सन-ति । १दाने २अवसाने च सायणो टीका ।

**सन्तोष** पु॰ सम्+तुष-करणादौ घञ् । १धैर्य्ये २सुखे च हेमचः । ३सम्यक्तुष्टौ "सन्तोषमूलं हि सुखम्" मनुः ।

**सन्दंश** पु॰ सम्+दन्श-अच् । (साँड़ासी) यन्त्रभेदे हेमच॰ ।

**सन्दंशपतित** पु॰ सन्दंशे तन्मध्ये पतित इव । मीमांसकोक्ते न्यायभेदे न्यायशब्दे ४१६६ पृ॰ दृश्यम् ।

**सन्दर्भ** पु॰ सम्+दृभ-घञ् । १रचनायां हला॰ । २प्रमते ३प्रबन्धे त्रिका॰ "गूढार्थस्य प्रकाशश्च सारोक्तिः श्रेष्ठता तथा । नानार्थवत्त्वं वेद्यत्वं सन्दर्भः कथ्यते बुधैः" इत्युक्ते ४कथनभेदे ५वक्तृतात्पर्य्यविशेषे च ।

**सन्दान** न॰ सम्+दो-करणादौ ल्युट् । १दाम्नि २बन्धने अमरः ३सम्यक्खण्डने च । दा-ल्युट् । ४सम्यग्दाने न॰ ५गजस्याक्षिवर्त्मोरधोभागे पु॰ त्रिका॰ । [राजनि॰ ।

**सन्दानिका** स्त्री सन्दानं संबन्धनमस्त्यस्य ठन् । विट्खदिरे

**सन्दानित** त्रि॰सन्दानं आसञ्जनं तार॰ इतच् । बद्धे अमर "रसनासन्दानितचरणे"ति भावविशाखिनिलम् ।

**सन्दानिनी** स्त्री सन्दानं बन्धनं गवामत्र बा॰ इनि ङीप् । गवां शालायाम् हलच॰ ।

**सन्दाव** पु॰ सम्+द्रु-भावे घञ् । पलायने अमरः ।

**सन्दाह** पु॰ सम्+दह-करणादौ घञ् । १मुखादिशोषे राजनि॰ । २सम्यग्दाहे च ।

**सन्दिग्ध** त्रि॰ सम्+दिह-कर्त्तरि क्त । १सन्देहयुक्ते । कर्मणि क्त । २अस्फुटविषये ३सम्यग्लिप्ते च । भावे क्त । ४सन्देहे ५संलेपे च ।

**सन्दित** त्रि॰ सम्+दो-क्त । बद्धे अमरः ।

**सन्दिष्ट** न॰ सम्+दिश-भावे क्त । १वाचिकार्थकथने वार्त्तायाम् शब्दर॰ । कर्मणि-क्त । २उपदिष्टे त्रि॰ ।

**सन्दिहान** त्रि॰ सम्+दिह-शानच् । सन्देहयुक्ते जटा॰ ।

**सन्दी** स्त्री सम्+दो-ड गौरा॰ ङीप् । खट्वायां त्रिका॰ ।

**सन्दीप्य** पु॰ सन्दीप्यतेऽसौ सम्+दीप-कर्मणि य । मयूरशिखावृक्षे शब्दच॰ ।

संयुक्तविशेषणतया भूतले संख्यादौ रूपाद्यभावः संयुक्तसमवेतसमवेतविशेषणतया, शब्दाभावः केवलश्रोत्रावच्छिन्नविशेषणतया, कादौ खत्वाद्यभावः श्रोत्रावच्छिन्नसमवेतविशेषणतया। एवं कत्वावच्छिन्नाभावे खत्वाभावादिकं विशेषणविशेषणतया। एवं घटाभावादौ पटाद्यभावः संयुक्तविशेषणविशेषणतया। एवमन्यदप्यूह्यं तथापि विशेषणतात्वरूपेणैकैव सा गण्यते अन्यथा षोढा सन्निकर्ष इति प्राचां प्रवादो व्याहन्यतेति" सि०मु०।

**सन्निकर्षण** न० सम्+नि+कृष-ल्युट्। सन्निधाने अमरः।

**सन्निकृष्ट** त्रि० सम्+नि+कृष-क्त। १निकटस्थे अमरः २इन्द्रियसम्बन्धविषये च। [पस्थिते त्रि०।

**सन्निध** न० सम्+नि+धा-क्त। १नैकट्ये योपालितः। २समी-

**सन्निधान** न० सम्+नि+धा-ल्युट्। १नैकट्ये सामीप्ये हेमच०। २आश्रये च।

**सन्निधि** पु० सम्+नि+धा-कि। १सामीप्ये अमरः कर्मणि कि। २इन्द्रियविषये मेदि० कर्म०। ३साधुनिधौ। ६त०। ४सतां निधौ। [२स्तूते च।

**सन्निपतित** त्रि० सम्+नि-पत-क्त। १मिलिते २उपस्थिते

**सन्निपात** पु० सम्+नि+पत-घञ्। १मेलने "सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्येति" व्या० परि०। २कफादिधातुत्रयस्य वैषम्यरूपत्रिदोषजे ज्वरभेदे ३नाशे ४उपस्थितौ च। ५तालभेदे "एक एव गुरुर्यत्र सन्निपातः स कथ्यते" सङ्गीतदा०।

ज्वरभेदस्य निदानभेदादिकं भावप्र० उक्तं यथा "तत्र सन्निपातज्वरस्य विप्रकृष्टसन्निकृष्टकारणकथनपूर्विकां संप्राप्तिमाह "त्रिदोषजनकैर्वातपित्तश्लेष्मामलोद्गमाः। बहिर्निरस्य कोष्ठाग्निं रसगा ज्वरकारिणः"। पूर्वरूपमाह "प्राग्रूपाणि त्रिदोषाणां स्युस्त्रिदोषज्वरे तथा"। अथ सन्निपातज्वरस्य सामान्यानि लक्षणान्याह "क्षणे दाहः क्षणे शीतमस्थिसन्धिशिरोरुजा। सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने। सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः। तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः। परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परा। ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च। शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा। स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः। कृशत्वं नातिगात्राणां सततं कण्ठकूजनम्। कोठानां श्यावरक्तानां मण्डलानाञ्च दर्शनम्। मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च। चिरात्पाकश्च दोषाणां सन्निपातज्वराकृतिः।" लोचने सास्रावे साश्रुणी कलुषे आविले निर्भुग्ने निर्गते कुटिले च कण्ठः शूकैरिवावृतः धान्यादिशूकैरिवावृतः। जिह्वा परिदग्धा परिदग्धेव ज्ञायते।" अथवा परिदग्धा इव कृष्णा दृश्यते स्रस्ताङ्गता शिथिलाङ्गता। ष्ठीवनमित्यादि कफसंयुक्तस्य रक्तस्य ष्ठीवनं शिरसो लोठनमितस्ततश्चालनं नात्यत्यर्थमतिमात्राणामिति गात्राणाम् अतिमात्रं कार्श्यं न व्याधिप्रभावात् सततं निरन्तरं कोठः। "वरटीदष्टसंस्थानं कोठ इत्यभिधीयते" श्यावः कपिशो वर्णः। मूकत्वमवचनत्वमस्वनत्वं वा स्रोतसां कर्णनासादीनाम्।

अथ सामान्यसन्निपातज्वरस्य त्रयोदश विशेषानाह "एकोल्बणास्त्रयस्तेषु द्व्युल्बणाश्च तथैव षट्। तुल्याल्वणश्च भवेदेको विज्ञेयः स तु सप्तमः। प्रवृद्धमध्यहीनैस्तु वातपित्तकफैश्च षट्। सन्निपातज्वरस्यैवं स्युर्विशेषास्त्रयोदश"। तत्र प्रवृद्धवातः मध्यपित्तो हीनकफः १ मध्यवातः प्रवृद्धपित्तो हीनकफः २ हीनवातः प्रवृद्धपित्तो मध्यकफः ३ प्रवृद्धवातः हीनपित्तो मध्यकफः ४ मध्यवातः हीनपित्तः प्रवृद्धकफः ५ हीनवातो मध्यपित्तः प्रवृद्धकफः ६ इति षट्। तेषां नामानि क्रमादाह "विस्फारकश्चाशुकारी कम्पनो बभ्रुसंज्ञकः। शीघ्रकारी तथा भल्लुः कुम्भः कूटपाककः। संमोहकः पाककश्च याम्यः क्रकच इत्यपि। ततः कर्कटकः प्रोक्तस्ततो वैदारिकाभिधः" तन्त्रान्तरे विस्फारक इत्यत्र विस्फोरक इति पाठः। बभ्रुस्थाने बभ्रुरितिपाठः कुत्रापि बब्रु इति पाठः भल्लुरित्यत्र फल्गुरिति पाठः याम्य इत्यत्र संग्राम इति पाठः कर्कटक इत्यत्र कर्कोटक इति पाठः। तत्र वातोल्बणस्य लक्षणमाह "श्वासः कासो भ्रमो मूर्च्छा प्रलापो मोहवेपथू। पार्श्वस्य वेदना जृम्भा कषायत्वं मुखस्य च। वातोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत्। एष विस्फारको नाम्ना सन्निपातः सुदारुणः।" अथ पित्तोल्बणस्य लक्षणमाह "अतिसारो भ्रमो मूर्च्छा मुखपाकस्तथैव च। गात्रे च बिन्दवो रक्ता दाहोऽतीव प्रजायते। पित्तोल्बणस्य लिङ्गानि सन्निपातस्य लक्षयेत्। भिषग्भिः सन्निपातोऽयमाशुकारीति कीर्तितः"। अथ कफोल्बणस्य लक्षणमाह "जड़ता गद्गदा वाणी रात्रौ निद्रा भवत्यपि। प्रस्तब्धे नयने चैव मुखस्य

स्वगोत्रसम्बन्धाभावादिति चेत् तद्गोत्रतयेति ब्रूमः । वंशप्रयोजकस्य सामान्यशास्त्रविषयत्वम् । ततश्चाव-त्सिद्धप्रपितामहावधिकाधस्तनानां षण्णां पुंसां प्रत्येका-पेक्षया सप्तमत्वेकगोत्राणां तदधस्तनानां सप्तमानाञ्च सापिण्ड्यं पिण्डलेपयोर्दातृत्वभोक्तृत्वसम्बन्धादिति । स्त्रीणान्तु भर्तृसापिण्ड्येन सापिण्ड्यम् "प्रत्तानां भर्तृ-सापिण्ड्यमिति" वचनात् । नन्वेवं कन्यायाः कथं स-पिण्डतेति चेत् आदिपुराणवचनात् त्रैपुरुषं सापिण्ड्यम् । यथा "सपिण्डता तु कन्यानां सर्वेषां त्रिपौरुषी" । अत्र कन्याशब्दात् "अप्रत्तानां त्रिपौरुषमिति" वसि-ष्ठवचनात् । तेन आत्मप्रभृति प्रपितामहे सापिण्ड्यं निवर्त्तते इति प्रतिपादितम् । अत एव कन्यायाः प्र-पितामहभ्रात्रा तत्सन्ततिभिः सह सापिण्ड्याभावात् कन्यामरणजननयोस्तेषां सपिण्डाशौचं नास्ति किन्तु समानोदकनिमित्तमेवाशौचमिति एवं तेषामपि जनन-मरणयोः कन्यानामिति शूलपाणिमहामहोपाध्यायः । यत्तु कूर्मपुराणम् "अप्रत्ता तथा स्त्रीणां सापिण्ड्यं साप्तपौरुषम् । प्रत्तानां भर्तृसापिण्ड्यं प्राह देवः पितामहः" इति रत्नाकरधृतम् । तद्विवाहे पितृपक्ष-विषयम् । यथा विष्णुपुराणम् "सप्तमीं पितृपक्षाच्च मातृपक्षाच्च पञ्चमीम् । उद्वहेत द्विजो भार्यां न्यायेन विधिना नृप ।" सप्तमीं पञ्चमीं हित्वेति शेषः । भर्तृ-सापिण्ड्यमित्यत्र साप्तपौरुषमित्यनुषज्यते । तेन भर्तृ-समानसापिण्ड्यमित्यर्थः । शङ्खलिखितौ "सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी । पिण्डश्चोदकदानञ्च शौचाशौचं तदानुगम्" । गोत्रतः गोत्रैक्ये तेन माता-महकुले कदाचित् षट्पुरुषपर्यन्तं पिण्डसम्बन्धेऽपि न सपिण्डता । तान् सप्तपुरुषान् वा समन्तात् पिण्डा-दिकमनुगच्छतीति तदानुगम् । एतेन "सपिण्डता एकशरीरावयवान्वयेन भवति तथाहि पितुः शरीरावय-वान्वयेन पित्रा सह एवं पितामहादिभिरपि पितृद्वारेण तच्छरीरावयवान्वयात् । एवं मातृशरीरावयवान्वयेन मातामहादिभिरिति । एवं पत्या सह पत्न्या एकशरीरा-रम्भकतया सापिण्ड्यम् । तथाच गर्भोपनिषदि "एतत् षाट्कौशिकं शरीरं त्रीणि पितृतः त्रीणि मातृतः अस्थिस्नायुमज्जानः पितृतः, त्वङ्मांसरुधिराणि मातृत-श्चेति" तत्र तत्तदवयवान्वयप्रतिपादनात् । निर्वाप्यपिण्डा-भावे तु सापिण्ड्ये भ्रातृपितृव्यादिसापिण्ड्यं न स्यात् ।

अतिप्रसङ्गस्तु सप्तम्यन्तमत्वेन प्रयोगोपाधिना निरस-नीयः । यद्येवं मातामहादीनामपि मरणे सपिण्डत्वेन दशाहाशौचं प्राप्नोति, स्यादेतत् यदि मातामहादीनां मरणे "त्रिरात्रं स्यादशौचकम्" इत्यादिविशेषवचनं न स्यात् । यत्र तु विशेषवचनं नास्ति तत्र दशाहमिति मिताक्षराकाररत्नाकरादिमतमपास्तं लेपभाजश्चादि वा-चनिकेऽर्थे सापिण्ड्ये एकशरीरावयवान्वयरूपस्य स्वपोल-रचितार्थानवकाशात् निर्वाप्यपिण्डसम्बन्धेन भ्राता-दीनां सापिण्ड्यस्य मत्स्यपुराणबौधायनाभ्यां पूर्वमुक्त-त्वात् कामधेनुहारलताकल्पतरुपारिजातकारादिभिस्त-थैव व्याख्यातत्वाच्च । रेतःशोणितपरिणामरूपत्वादन्य-शरीरस्य भवतु वा तथा पत्या सह पत्न्याः एकशरीरा-रम्भकतायाः प्रत्यक्षबाधितत्वात् कथं सापिण्ड्यं प्रमाता-महादीनां विशेषवचनाभावात् सपिण्डत्वेन दशाहाद्य-शौचप्रसङ्गाच्च मातामहादौ सापिण्ड्यस्य लोकविरुद्ध-त्वाच्च । भवतु वा तथा शरीरद्वारा सापिण्ड्यं तथापि वचनात् यथासम्प्रत्ययनियतत्वं तत्र तथा "गोत्रतः साप्त-पौरुषीति" वचनात् गोत्रैक्यमपि प्रागुक्तवचनात् कन्यायाः स्त्रीपौरुषम् ऊढायाश्च भर्तृसपिण्डनेन सापिण्ड्यमिति चेत् तदेतन्मतेऽपि अवस्थायां न क्षतिरिति अतएव सुमन्तुवचनाभिहितं षष्ठपुरुषपर्यन्तमशौचं तत् सप्तम-पुरुषाभ्यन्तराशौचाभ्यूनं त्रिरात्रं यथा "ब्राह्मणा-नामेकपिण्डस्वधानामादशमाद्धर्मविच्छित्तिर्भवति आस-प्तमात् त्र्यहर्विच्छित्तिर्भवति आतृतीयात् आशावि-च्छित्तिर्भवति" अन्यथा पिण्डशौचक्रियाद्युच्छेदात् तत्प्र-त्यासन्नो भवति" इत्यर्थः । एकाः समानाः पिण्डस्वधा-येषां ते तथा यथैकोद्दिष्टस्य पिण्डे तु स्वधाशब्दो न युज्यते इत्यभावादनुशब्देनानुशब्दयुक्तमन्त्रो लभ्यते अनु-युक्तमन्त्रस्तु "ये चात्र त्वामनु यांश्च त्वमनु तस्मै ते स्वधा" इति तथा पिण्डस्वधाशब्देन पिण्डसम्बन्धिस्वधाशब्द-युक्तमन्त्रकरणकदेयजलं लक्षितम् । तथा च "ऊर्ज्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतं स्वधास्थ तर्पयत मे पितॄन्" इत्यनेन पिण्डान् सिञ्चेदित्युक्तम् । ततश्च एक-पिण्डस्वधानां समानोदकानामित्यर्थः । अतएव मनुः । "जन्मन्येकोदकानान्तु त्रिरात्रात् शुद्धिरिष्यते" । विष्णुपु-राणं "मातृपक्षस्य पिण्डेन सम्बद्धाः ये जलेन वा" मातृप-क्षस्य मातामहपक्षस्य ये जलेन सम्बद्धाः समानोदका इति श्राद्धविवेकेऽपि व्याख्यातम् । "असम्बन्धा भवेद्या तु

नेकार्थीभावात्। एकार्थीभावश्च विशेष्यविशेषणभावापन्नार्थैकोपस्थितिजनकत्वम्। तथा च राजपुरुषादिशब्देन विशिष्टैकार्थबोधकतया न तदेकदेशे ऋद्धादेरन्वयः पुरुषांशे विशेषणतयोपस्थितस्य नाथादिसम्बन्धिता राजादीनाम् अन्वितत्वाच्च निराकाङ्क्षतया न देवदत्तादेः श्रानितया प्रकृतादावन्वय इति द्रष्टव्यम्। देवदत्तस्य गुरुकुलमित्यादौ देवदत्तादेस्तु प्रधानीभूतकुलादिनैवान्वयः सम्बन्धस्तूपस्थितगुरुद्वारक एव भासते यथोक्तं हरिणा "समुदायेन सम्बन्धो येषां गुरुकुलादिना। संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह" इति। यद्वा सम्बन्धिशब्दार्थस्य पदार्थैकदेशत्वेऽपि भवत्येव क्वचित् सम्बन्धान्वयः तदुक्तं तेनैव "सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते। वाक्यवत् सा व्यपेक्षापि वृत्तावपि न हीयते"। अतएव वार्त्तिककृता "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति वक्तव्यमिति" सामान्यतो वृत्तिमतो विशेषणस्य सातन्त्र्येण प्रयोगाभावमभिधाय "अगुरुकुलपुत्रादीनां वक्तव्यम्" इत्यनेन गुरुकुलपुत्रादीनां विशेषणत्वेऽपि पृथक्प्रयोगाय गत्या पर्युदासः कृतः। समानाधिकरणविशेषणस्य तु "समानाधिकरणसमर्थवृत्तीत्यनेन सर्वथा सातन्त्र्येण सामर्थ्याभावात् प्रयोगाभावो भङ्ग्याऽभिहितः। एतन्मूलकमेव प्राचां गाथा "सापेक्षे प्रत्ययो न स्यात् समासो वा कथञ्चन। सापेक्षं तद्विजानीयादसमस्तविशेषणम्। प्रतियोगिपदादन्यत् यदन्यत् कारकादपि। वृत्तिशब्दैकदेशस्य सम्बन्धस्तेन नेष्यते" इति। अस्यायं विशेषः भवति प्रधानस्य सापेक्षत्वेऽपि समास इत्युक्तेः प्रधानस्य एतदुपस्थाप्यविशेष्यस्य राजपुरुषादेः सुन्दरादिविशेषणापेक्षायामपि समासः। समासे वाक्यवदवयवशक्त्यैव तत्तदर्थपदार्थोपस्थित्या विशेष्यविशेषणभावाद्यभ्युपगमे सापेक्षत्वादौ समासाभावादिकं वाचनिकं कल्प्यम् तथा न्यायाधिककल्पना स्यादतः समुदायशक्तिकल्पनम् यथोक्तं हरिणा "बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः। चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्। कर्त्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितमिति"। तथाहि द्वन्द्वादिविग्रहवाक्ये चकारादि प्रयुज्यते समासे तु न तत्र वचनैरेव तन्निषेधः कल्पनीयः समुदायशक्तिपक्षे तु उक्तार्थानामप्रयोग इत्युक्तन्यायादेव सिद्धम्। नामार्थयोरभेदान्वयः क्लृप्तः स च राजपदादुपस्थापितराजादेः पुरुषे स्वस्वामिभावसम्बन्धेनान्वये परित्यक्तः स्यात्। समस्तलक्षणायान्तु किमपराद्धम् विशिष्टलक्षणया। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानमिति नियमश्च क्लृप्तः स च प्राप्तानन्दादौ भज्येत आनन्दकर्तृकप्राप्तिकर्मत्वार्थबोधकोभयसमासत्वेन कर्त्तृविहितक्तान्तार्थस्य कर्त्तुर्विशेष्यतौचित्येन प्रकृते तद्वैपरीत्यात् आनन्दसम्बन्ध्यादिलक्षणास्वीकारे समुदायशक्तिपक्षे एव प्रवेशः। तथा प्राप्त आनन्दो यमिति विग्रहे आनन्दादौ अत्यन्तादिविशेषणयोगवत् समासे तद्वारणाय वृत्तस्य न विशेषणयोग इति वाचनिकत्वकल्पनाऽधिका एतन्मते न्यायसिद्धा इत्यादि बहु वक्तव्यापत्तिरतः समुदाये शक्तिरित्यन्यत्र विस्तरः। वार्त्तिककृता तु अवश्यं कश्चित् नञ्समासस्यासमर्थसमासस्य गमकस्य साधुत्वं वक्तव्यमित्युक्तत्वात् असूर्यम्पश्यादौ असमर्थेन नञा दात्रेन हतमारीचो राम इत्यादौ चापादेर्विग्रहार्थस्य गमकत्वे सापेक्षत्वेऽपि तदर्थबोधकतयैव समास इति द्रष्टव्यम्" [illegible]

"पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः" सि॰कौ॰ "पदस्य पदयोः पदानां वा विधिः पदविधिरिति वचनविशेषणाविवक्षितत्वं द्योतयन्नाह पदसम्बन्धीति। तत्र पदेति किम् वर्णाश्रये कार्येऽसमर्थेऽपि यथा स्यात् तथा च तिष्ठतु दधि अशान त्वमित्यत्र दध्याशानेति पदयोः सामर्थ्याभावेऽपि वर्णाश्रयं यणादिकं भवत्येव। सूत्रे समर्थपदं सामर्थ्यिकमिति द्योतयन्नाह समर्थाश्रित इति समर्थेति किं पश्यति कृष्णं श्रितो राममित्यादौ समासो मा भूत् वस्त्रं कृष्णस्य अपत्यं देवदत्तस्येत्यादौ मा भूत् कृष्णशब्दादपत्यार्थकतद्धितः। इयञ्च परिभाषा समासकृत्तद्धितादिवृत्तिमात्रे प्रवर्त्तते इति बोध्यम्" [illegible]। स च समासः षड्विधः।

"सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा। सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः"। (सुपां सुपा) पदद्वयमपि सुबन्तम्। राजपुरुष इत्यादिः। (सुपां तिङा)। पूर्वपदं सुबन्तमुत्तरं तिङन्तम्। पर्य्यभूषयत्। "गतिमतोदात्तवता तिङापि समासः" इति वार्त्तिकात् समासः। (सुपां नाम्ना) कुम्भकार इत्यादि। "उपपदमतिङि"ति समासः। स च "गतिकारकोपपदानां कृद्भिः समासवचनं प्राक् सुबुत्पत्तेरिति" परिभाषया भवति सुबुत्पत्तेः प्राक्। अतोत्तरपदे सुबुत्पत्तेः प्रागि-

व्यवहारोत्तरं "श्रुत्वाभियोगं प्रत्यर्थी यदि तं प्रतिपद्यते। सा तु सम्प्रतिपत्तिः स्यादि"ति स्मृत्युक्ते व्यवहारे उत्तरभेदे च "मिथ्या सम्प्रतिपत्तिश्च प्रत्यवस्कन्दनं तथा। प्राङ्न्यायश्चोत्तराः प्रोक्ताश्चत्वारः शास्त्रवेदिभिः" उत्तरशब्दे १०१८ पृ० दृश्यम्।

**सम्प्रदातृ** त्रि० सम्+प्र+दा—तृच्। दानकर्त्तरि स्त्रियां ङीप्।

**सम्प्रदान** न० सम्+प्र+दा—भावे ल्युट्। १सम्यक्प्रदाने। सम्प्रदीयतेऽस्मै ल्युट्। "कर्मणा यमभिप्रैति स सम्प्रदानमिति" पाणिन्युक्ते २दानकर्मोद्देश्ये। तच्च त्रिविधम्। "अनिराकरणात्कर्तुस्त्यागाङ्गं कर्मणेप्सितम्। प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्" इत्युक्तेः। तत्र विप्राय गां ददातीत्यादौ अनिराकर्तृ सम्प्रदानम्, याचकाय धनं ददातीत्यादौ प्रेरयितृ सम्प्रदानम्, गुरवे धनं ददातीत्यादौ अनुमन्तृ सम्प्रदानम्। गोचतुर्थ्यादिधारणे सम्प्रदाने चतुर्थी पा०। तल्लक्षणं तु शब्दश० प्र० दर्शितं यथा "गत्यादिभिन्ने धात्वर्थे चतुर्थ्या विषयत्वया। ह स्वार्थो बोधनीयस्तत्सम्प्रदानत्वमीरितम्"। "गत्यादिभिन्ने यद्धातूपस्थाप्ये धात्वर्थे विषयत्वसम्बन्धेन चतुर्थ्या यः स्वार्थो बोधयितुं शक्यते स तद्धातूपस्थाप्यतादृशक्रियायां सम्प्रदानत्वमुच्यते। ब्राह्मणाय दानं धनस्येत्यादौ ददातेः स्वत्वजनकत्यागोऽर्थस्तादृशविषये च स्वत्वे ब्राह्मणादेः प्रतियोगित्वं निरूपितत्वं वा चतुर्थ्या बोध्यते इति तदेव तत्र सम्प्रदानत्वं तु ब्राह्मणप्रतियोगिकं ब्राह्मणनिरूपितं वा यद्यपि स्वत्वं तज्जनकत्याग इत्येवं तत्र प्रत्ययात् धात्वर्थतावच्छेदकीभूतत्यागस्य फलतया धनादेर्दानकर्मत्वात्। न चैवं पशुकामनया यागकरणदशायां चैत्रः स्वात्मने पशुं ददातीत्यपि प्रयोगापत्तिस्तादृशयागस्य चैत्रीयं यत् पशुनिष्ठं स्वत्वं तज्जनकत्यागत्वादिति वाच्यं स्वत्वध्वंसजनकक्रियापर्यवसन्नस्य त्यागस्यैकदेशे स्वत्वध्वंसेऽपि द्वितीयाद्यर्थस्यान्वयेन पशुफलकयागे पशुनिष्ठस्य स्वत्वध्वंसस्य जनकत्वविरहादेव तादृशवाक्यस्याप्रमाणत्वात्। ग्रामाय गत इत्यादौ विषयत्वेन चतुर्थ्या धात्वर्थं साध्यमपि कर्मत्वं न गत्यादिभिन्ने चतुर्थ्या बोधनीयम्। संरद्धं विहितमित्यादि तु चतुर्थी न विषयत्वयेति न तत्र प्रसङ्गः। सम्प्रदानशब्दस्तु स्वाश्रयगोचरत्यागजन्यस्वत्वस्य प्रतियोगिन्येव शक्त इति स्वत्वप्रतियोगित्वं सम्प्रदानत्वमित्यादिको न प्रयोगः। न च दानस्य स्वत्वहेतुत्वे प्रमाणाभावः। "सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। प्रयोगः कर्मयोगश्च सत्प्रतिग्रह एव च" इत्यादिमन्वादिवचनैर्दानस्य स्वत्वहेतुत्वप्रतिपादनादिति वाच्यं ब्राह्मणाय दत्तायां गवि गौरियं ब्राह्मणस्य न तु ममेत्यादिसर्वजनीनप्रतीतेरेव तत्र प्रमाणत्वात् "प्रदानं स्वाम्यकारणमिति" वचनाच्च। अतएव विदेशस्थं पात्रमुद्दिश्य त्यक्तधने स्वीकारमन्तरेणैव पात्रस्य मरणे पितृदायत्वेन तद्धनं पुत्रादिभिर्विभज्य गृह्यते अन्यथा तैरिव चाण्डालैरपि तद्धनस्वीकारतत्कृतादेरशोपादाने यथेष्टविनियोगे च प्रत्यवायो न स्यात्। नन्वेवं दानादेव स्वत्वसिद्धेः प्रतिग्रहस्तु स्वीकारो व्यर्थ इति चेन्न "अवध्या चाटुवं फलम्" इत्यादिस्मृतेः प्रतिग्रहीतृसम्प्रदानस्य फलविशेषं प्रति हेतुत्वेन तादृशफलस्वरूपस्यैव प्रतिग्रहस्योपयोगात् "याजनाध्यापनप्रतिग्रहैर्ब्राह्मणो धनमर्जयेदित्यादि" श्रुत्या प्रागुक्तस्मृत्या च प्रतिग्रहस्यापि स्वत्वहेतुत्वबोधनाच्च स्वत्वजनकव्यापारस्यैवार्जनपदार्थत्वात्। दासाय भक्तं ददाति रजकाय वेतनं ददातीत्यादावपि स्वत्वजनकत्यागं प्रतिपादयन् ददातिर्मुख्य एव पुण्यजनकन्तु न तादृशं दानमवैधत्वात्। केचित्तु स्वीकारजन्यस्य स्वत्वस्य जनकस्त्यागो दानं मनसा पात्रमुद्दिश्य धनत्यागस्तु न दानं किन्तूत्सर्गमात्रं प्रतिग्रहजन्यस्वत्वं प्रति हेतुभूतवैधत्यागस्यैव तथात्वात्, अवैधात्तु स्वत्वध्वंसमात्रजनकस्त्यागो न तु तत्र स्वत्वजनकत्वमस्तीति केचिदेतदुक्तं तन्न युक्तं बाधकेन स्वत्वजनकत्यागस्यैव ददात्यर्थत्वात्। तिलानश्वे प्रतिसम्प्रति तुरगमश्वे विक्रीणीते इत्यादौ द्रव्यान्तरग्रहणपूर्वकं दानमेव प्रतिदानं मूल्यग्रहणपूर्वकं दानमेव च विक्रय इति तत्रापि मुख्यमेव सम्प्रदानत्वं चतुर्थ्या बोध्यते तिलादिकञ्च न मूल्यं पशुपुरोडाशादेरिव ग्राह्यं तथात्वोपदेशात्। अदृष्टार्थं दत्तस्यैव च स्वीकारः प्रतिग्रह इति परैः प्रीतिदत्तस्य विक्रीतस्य वा तिलतुरगादेः स्वीकारो न दोषावहः। मैत्राय रोचते मोदक इत्यत्र चतुर्थ्या धात्वर्थान्वितमाधेयत्वं धातुना च अभ्यवहार्यत्वप्रकारकेच्छोपस्थाप्यते तिङा तु प्रकाश्यत इत्यादाविव विषयत्वलक्षणं कर्तृत्वं तथाच मैत्रनिष्ठाया अभ्यवहार्यत्वप्रकारकेच्छाया विषयतावान् मोदक इत्याकारकस्तत्र बोधः। गुरवे गां धारयते इत्यत्र धृञा ऋणावस्थितिर्हि नीयते तदन्वितं कर्तृत्वं चतुर्थ्या च तद्विशिष्टान्वितं स्वत्वनिरूपकत्वमाप्यते तेन गोकर्तृकाया गुरुस्वत्वविशिष्टाव-

यदा वैश्यः पयाहै मूत्रं आदयेत् । पदकाले तु संप्राप्ते पीड्यमाना महाविषाः । अवेलायां दशन्ते वै मैथुनार्त्ता भुजङ्गमाः । पुष्पगन्धाः स्मृता विप्राः क्षत्रियाश्चन्दना-गन्धकाः । वैश्याश्च घृतगन्धा वै शूद्राः मत्स्यस्य गन्धिनः । वासं तेषां प्रवक्ष्यामि यथावदनुपूर्वशः । नदीकूप-तडागेषु गिरिप्रस्रवणेषु च । आरामेषु पवित्रेषु शुचि-ष्वायतनेषु च । वसन्ति ब्राह्मणाः सर्पा द्वारद्वारे चतुष्पथे । क्षत्रियो वसते नित्यं तोरणेषु पुरेषु च । गोशालाश्वशालासु चत्वरेषु तटेषु च । गोष्ठेषु पथि दृष्टेषु विप्र ! वैश्या वसन्ति च । अविविक्तेषु स्थानेषु निर्झरेषु वनेषु च । शून्यागारे श्मशाने च शूद्रा विप्र ! वसन्ति च । श्वेताश्च कपिलाश्चैव ते सर्पाः स्वर्णसप्रभाः । अग्निनः सात्त्विका ये ब्राह्मणास्ते बुधैः स्मृताः । रक्तवर्णसुवर्णाभाः प्रवालमणिसन्निभाः । स्वर्णप्रभास्तथा विप्र ! क्षत्रियास्ते भुजङ्गमाः । नानाविचित्रराजीभि-स्तसीवर्णसन्निभाः । शणपुष्पसवर्णाभा वैश्यास्ते च भुजङ्गमाः । काकोदरनिभाः केचित् ये च अञ्जन-सन्निभाः । कालवर्णा धूम्रवर्णास्ते शूद्राः परिकीर्त्तिताः । यस्य सर्पेण दष्टस्य दंशमङ्कुशमन्तरम् । ब्राह्मणं विजा-नीयात् ब्राह्मणस्य वधो यथा । यस्य सर्पेण दष्टस्य दंशं द्व्यङ्कुशमन्तरम् । वीजमध्येन दष्टस्य एतद्भवति बन्धनम् । यस्य सर्पेण दष्टस्य सार्द्धद्व्यङ्कुशमन्तरम् । शूद्रदष्टं वि-जानीयात् वैश्यस्य वधो यथा” भविष्यपु० । “स्थाना-न्यादौ प्रवक्ष्यामि यत्रां दष्टो न जीवति । चितावल्-मीकशैलादौ कूपे च विवरे तरोः । दंशे रेखात्रयं यस्य प्रच्छन्नं स न जीवति । पश्चाच्च कर्कटे मेषे मूलाश्लेषा मघादिषु । कक्षाश्रोणिगते बस्तौ शङ्खकर्णोदरादिषु । दण्डी शस्त्रधरो भिक्षुर्नग्नादिः कालदूतकः । शङ्खे बाह्वौ च ग्रीवायां पृष्ठे च न हि जीवति । पूर्वं दिनपतिर्भुङ्क्ते सार्द्धयामन्ततो परे । शेषाः पञ्चाः प्रतिदिनं षट्संख्यापरिवर्त्तनैः । नागभोगक्रमो ज्ञेयो रात्रौ वाग्विवर्त्तनैः । शेषोऽर्कः फणिपश्चन्द्रस्तक्षको भौम ईरितः । कर्कोटोऽज्ञो गुरुः पद्मो महापद्मश्च भार्गवः । शङ्खः शनैश्चरो राहुः कुलिकश्चाहयो ग्रहाः । रात्रौ दिवा सुरगुरोर्भोगे स्यादमरान्तकः । पङ्गोः रात्रौ दिवा राहुः कुलिकेन सह स्थितः । यामार्द्ध-सन्धिसंस्थः स वेलां कालवतीमुरेत् । काल हिमवद् वज्रिवाञ्जिमुगमभूरेखमागतः । दिवा षडब्देन्द्रादि-पञ्चत्रिवह्न्यब्धिकैः । पादाङ्गुष्ठे पादपृष्ठे गुल्फे जानुनि लिङ्गके । नाभौ हृदि स्तनतटे कण्ठे नासा-पुटे गले । कर्णयोश्च भ्रुवोः शङ्खे मस्तके प्रतिपत् क्रमात् । तिष्ठेच्चन्द्रस्य जीवेन पुंसो दक्षिणभागके । का-मस्य वामभागे तु स्त्रिया वामवहक्रमात् । अमृतस्य-न्दतो मोहो निवर्त्तेत च मर्द्दनात्” गारुडे १९अ० । “आषाढादित्रिमासैः स्यात् गर्भो मासचतुष्टये । अण्ड-कानां शतं द्वे च चत्वारिंशत् प्रसूयते । सर्पा ग्रसन्ति सूतौ तान् विना स्त्रीं, पुंनपुंसकान् । उन्मीलतेऽक्षि सप्ताहात् कृष्णो मासाद्भवेद्धरिः । द्वादशाहात् सुबोधः स्यात् दन्ताः स्युः सूर्यदर्शनात् । द्वात्रिंशद्दिनविंशत्या चतस्रस्तेषु दंष्ट्रिकाः । कराली मकरी कालरात्री च यमदूतिका । एतास्ताः सविषा दंष्ट्रा वामदक्षिणपार्श्वगाः । षण्मा-सान्मुञ्चते कृत्तिं जीवेत् षष्टिसमाद्वयम् । नागाः सूर्यादिवारेशाः सप्त उक्ता दिवानिशि । तेषां षट् प्रतिचारेषु कुलिकः सर्वसन्धिषु । शङ्खेन वा महाब्जेन सह तस्योदयोऽथ वा । द्वयोश्चैव नाडिकयोरन्तरं कुलिकोदयः । दुष्टः स्यात्सः सर्वत्र सर्पदंशे विनि-र्द्दिशेत् । कृत्तिका भरणी स्वातिर्मूलं पूर्वत्रयाश्विनी । विशाखार्द्रा मघाश्लेषा चित्रा श्रवणरोहिणी । हस्ता म-न्दकुजौ वारौ पञ्चमी चाष्टमी तिथिः । षष्ठी रिक्ता शिवा निन्द्या पञ्चमी च चतुर्दशी । सन्ध्याचतुष्टयं दुष्टं दग्धयोगाश्च राशयः । एकद्विबहवो दंशा दष्टविद्धञ्च खण्डितम् । अदंशमवगुप्तं स्यात् दंशमेवं चतुर्विधम् । त्रयो द्व्येकक्षता दंशा वेदना रुधिरं नखाम् । मञ्जं द्व्येकाङ्कि कूर्माभा दंशाश्च समपोदिताः । दाही पिपीलिकास्पर्शी कण्ठशोषरुजान्वितः । सतोदो ग्र-न्थितो दंशः सविषो न्यस्तनिर्विषः । देवालये शून्यगृहे वल्मीकोद्यानकोटरे । रथ्या सन्ध्या श्मशाने च शुष्कद्रौ सिन्धुसङ्गमे । द्वीपे चतुष्पथे सौधे गृहेऽब्जे पर्वता-ग्रतः । बिलद्वारे जीर्णकूपे जीर्णवेश्मनि कुड्यके । शिग्रुश्लेष्मातकाक्षेषु जम्बूदुम्बरकेषु च । वटे च जीर्णप्राकारे खास्यहृत्कक्षजत्रुणि । तालौ शङ्खे गले मूर्ध्नि चिबुके नाभिपादयोः । दंशोऽशुभः” अग्निपु० । सुश्रुते तद्दंशलक्षणभेदादिर्दर्शितो यथा

“तत्र सर्वेषां सर्पाणां सामान्यत एव दष्टलक्षणं वक्ष्यामः । किं कारणं विषं हि निशितमिवाशनिर्हुतवहवदाशु-कारि मुहूर्त्तमप्युपेक्षितमातुरमतिपातयति । न चाव-

सत्वेव अच् सातः विष्णुदयाद्याते नाशस्य सत्यपि अशोपम्यान्यायः इत्युक्तम् ।

**सात्वत** त्रि॰ सत्त्वमेव सात्त्वं तत्तनोति तन—ड । १विष्णौ त्रिका॰ यदुवंश्ये अंशुपुत्रे २नृपभेदे "अंशोः सात्वतो नाम विष्णुभक्तः प्रतापवान्" कूर्मपु॰ २२ अ॰ । तदंशज्ये ३बलरामे हेमच॰ । "सत्त्वं सत्त्वाश्रयं सत्त्वगुणं सेवेत केशवम् । योऽनन्यत्वेन मनसा सात्वतः स उदाहृतः" इत्युक्ते ४विष्णुभक्तभेदे । ५सात्वतनृपाधिष्ठितदेशे सोऽभिजनोऽस्य अण् । पित्रादिक्रमेण ६तद्देशवासिनि च त्रिका॰ । यदुवंश्यगोत्रापत्यत्वेन ७शिशुपालमातरि स्त्री ङीप् । "न दूये सात्वतीसूनुः" माघः । सा च नाटकस्य वृत्तिभेदे च । तल्लक्षणादि सा॰ द॰ उक्तं यथा "सात्वती बहुला सत्त्वशौर्यत्यागदयार्जवैः । सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा । उत्थापकोऽथ सांघात्यः संलापः परिवर्त्तकः । विशेषा इति चत्वारः सात्वत्याः परिकीर्त्तिताः । उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते । मन्त्रार्थदैवशक्त्यादेः सांघात्यः सङ्घभेदनम् । संलापः स्याद् गभीरोक्तिर्नानाभावसमाश्रयः । प्रारब्धादन्यकार्याणां करणं परिवर्त्तकः" । तल्लोपे एकारोऽपि । ८जातिभेदे पुंस्त्री॰ शुध्माचार्यशब्दे दृश्यम् ।

**सात्त्विक** पु॰ सत्त्वात् सत्त्वगुणप्रधानात् विष्णोर्भवति ठञ् । १चतुर्मुखे ब्रह्मणि हेमच॰ । तस्य विष्णुनाभिकमलजत्वात् तथात्वम् । सत्त्वमेव सात्त्वमस्त्यस्य ठन् । २विष्णौ । सत्त्वगुणेन तत्कार्य्येण मनसा वा निर्वृत्तः ठञ् । ३सत्त्वगुणजाते ४सत्त्वप्रधानमनोविशेषजाते च । ५शृङ्गारादिरसानुगुणे भावभेदे सा॰ द॰

"ङ्गाः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः । तद्रूपाः सात्त्विका भावास्तथा चेष्टाः परा अपि । विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः । सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः । स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः" । एतेषां लक्षणानि तत्तच्छब्दे दृश्यानि । स्त्रीणां यौवने सत्त्वजाते ६अलङ्कारभेदे सा॰ द॰ "यौवने सत्त्वजास्तासामष्टाविंशतिसंख्यकाः" । अलङ्कारशब्दे ४॰८ पृ॰ दृश्यम् । ७सत्त्वप्रधाने त्रि॰ । ८देवीपूजाभेदे स्त्री "शारदी चण्डिकापूजा त्रिविधा परिकीर्त्तिता । सात्त्विकी राजसी चैव तामसी चेति तां शृणु । सात्त्विकी जपयज्ञैश्च नैवेद्यैश्च निरामिषैः" ति॰त॰ । ९भावभेदे पु॰ "सत्त्वोत्कटे मनसि ये प्रभवन्ति भावास्ते सात्त्विका इति विदुस्तन्निपुणास्तु" सर्वान॰ । १०सत्त्वप्रधाने पुराणभेदे "वैष्णवं नारदीयञ्च तथा भागवतं शुभम् । गारुडञ्च तथा पाद्मं वाराहं शुभदर्शने ! । सात्त्विकानि पुराणानि विज्ञेयानि शुभानि वै । सात्त्विकेषु पुराणेषु विष्णुमाहात्म्यवर्णनम्" उपपुराणशब्दे दृश्यम् । ११स्मृतिभेदे स्त्री "वाशिष्ठं चैव हारीतं व्यासं पाराशरं तथा । भारद्वाजं काश्यपञ्च सात्त्विक्यो मुक्तिदाः शुभाः" पद्मपु॰ उत्त॰ ४२ अ॰ । १२दुर्गायां स्त्री ङीप् । १३गीतोक्तेषु श्रद्धादिभेदेषु यथायथं त्रि॰ यथा "सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ! । श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः । यजन्ते सात्त्विका देवान्" (श्रद्धा) "आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः । यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु" इत्युपक्रमे "आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्द्धनाः । रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः" (आहारः) "अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते । यष्टव्यमेवेति मनः समाधाय स सात्त्विकः" (यज्ञः) "श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः । अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते" (कायिकादि त्रिविधं तपः) "दातव्यमिति यद्दानं दीयतेऽनुपकारिणे । देशे काले च पात्रे च तद्दानं सात्त्विकं मतम्" (दानम्) "सर्वभूतेषु येनैकं भावमव्ययमीक्षते । अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्" (ज्ञानम्) "नियतं सङ्गरहितमरागद्वेषतः कृतम् । अफलप्रेप्सुना कर्म यत्तत् सात्त्विकमुच्यते" (कर्म) "मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः । सिद्ध्यसिद्ध्योर्निर्विकारः कर्त्ता सात्त्विक उच्यते" (कर्त्ता) "प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये । बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ ! सात्त्विकी" (बुद्धिः) "धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः । योगेनाव्यभिचारिण्या धृतिः सा पार्थ ! सात्त्विकी" (धृतिः) "यत्तदग्रे विषमिव परिणामेऽमृतोपमम् । तत् सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्" (सुखम्) "कार्यमित्येव यत् कर्म नियतं क्रियतेऽर्जुन ! । सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः" (त्यागः) । तत्र सात्त्विकाहारस्य चित्तशुद्धौ हेतुत्वं छान्दो॰ उक्तं यथा "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" । सत्त्वं मनः । "अन्नमयं हि सोम्य ! मनः इत्यादिना" तस्य

**साधकतम** न० अतिशयेन साधकं तमप् "साधकतमं करणम्" पा० परिभाषिते करणे कारकभेदे ।

**साधन** न० सिध-णिच्-साधादेशे यथायथं करणे भावे ल्युट् कर्त्तरि ल्यु वा । १करणरूपे कारकभेदे २मारणे ३मृतसंस्कारे अग्निदाने ४गतौ ५द्रव्ये ६धने ७अर्थदापने ८दानप्रापणे ९उपकरणे १०इन्द्रियग्राह्यसुखसामग्र्याम् ११अनुगमने अमरः । १२सैन्ये १३उपाये १४सिद्धौषधे १५मेढ्रे मेदि० १६वैते १७आपधि १८मित्रौ धरणिः । १९कारके २०प्रमाणे हेमच० । २१व्याप्ये त्रिका० २२मोचने २३जये अजयः २४ब्रह्मविद्याहेतौ नित्यानित्यवस्तुविवेकवैराग्यशमादिषट्कमोक्षेच्छाचतुष्टये च । युच् । साधनाऽपि उपासनायां निष्पादनायाञ्च स्त्री ।

**साधनाप्रसिद्धि** स्त्री हेतुदोषभेदे सा च साधने साधनतावच्छेदकधर्माभावरूपा यथा "पर्वतो वह्निमान् काञ्चनधूमादित्यादौ धूमनिष्ठः काञ्चनत्वाभावः साधनाप्रसिद्धिः ।

**साधर्म्य** न० सधर्मस्य समानधर्मस्य भावः ष्यञ् । १स्वकीयसाधारणधर्मरूपे लक्षणे २अनुगतधर्मे "यदुक्तं यस्य साधर्म्यम्" भाषा० । समानो धर्मो यस्य तस्य भावः ष्यञ् । ३समानधर्मे यथा पद्ममिव सुन्दरं मुखमित्यादौ सौन्दर्य्यमुभयोः समानधर्मः ।

**साधर्म्यसम** पु० साधर्म्येण समः । स्थापनाहेतुदूषके जात्युत्तरभेदे "साधर्म्योपसंहारे तद्धर्मविपर्य्ययोपपत्तेः साधर्म्यसमः" गौ० "वादिनाऽन्वयेन व्यतिरेकेण वा साध्ये साधिते प्रतिवादिना साधर्म्यमात्रप्रयुक्तहेतुना तदभावस्थापनम् यथा शब्दोऽनित्यः कृतकत्वात् घटवत् व्यतिरेकेण वा व्योमवदित्युपसंहृते नैतदेवं शब्दोऽनित्यघटसाधर्म्यात् नित्याकाशवैधर्म्याद्वाऽनित्यः स्यात् नित्याकाशसाधर्म्यादमूर्त्तत्वात् नित्यः स्यात् विशेषो वा वक्तव्यः" वृत्तिः भाष्ये तु निदर्शनान्तरेणास्य व्याख्यातं यथा "क्रियावानात्मा द्रव्यस्य क्रियाहेतुगुणयोगात् द्रव्यं लोष्टः क्रियाहेतुगुणयुक्तः क्रियावान् तथा चात्मा तस्मात् क्रियावानिति एवमुपसंहृते परः साधर्म्येणैव प्रत्यवतिष्ठते । निष्क्रिय आत्मा विभुनो द्रव्यस्य निष्क्रियत्वात् विभु चाकाशं निष्क्रियं च तथा चात्मा तस्मान्निष्क्रिय इति न चास्ति विशेषहेतुः क्रियावत्साधर्म्यात् क्रियावता भवितव्यं न पुनरक्रियसाधर्म्यात् निष्क्रियेणेति विशेषहेत्वभावात् साधर्म्यसमः प्रतिषेधो भवति" ।

**साधारण** त्रि० सह धारणया वर्त्तते अण् । १सदृशे अमरः । २अनेकसम्बन्धिनि ३धने "साधारणं समाश्रित्य यत् किञ्चिद्दानादिकम्" स्मृतिः । स्त्रियां गौरा० ङीष् । सा च ३कुञ्चिकायां ४वेश्यादिनायिकायाञ्च "यः सपक्षे विपक्षे च भवेत् साधारणस्तु सः" भाषा० उक्ते ५हेत्वाभासभेदे पु० । यथा वह्निमान् द्रव्यत्वादित्यादौ द्रव्यत्वहेतुः सपक्षे पर्वते विपक्षे ह्रदादौ च वर्त्तते इति साधारणः । स चानैकान्तिकभेदः "आद्यः साधारणस्तु स्यादन्योऽसाधारणो मतः । तथैवानुपसंहारी त्रिधाऽनैकान्तिको मतः" भाषा० ।

**साधारणधर्म्म** पु० कर्म० । "अहिंसा सत्यमस्तेयं शौचमिन्द्रियनिग्रहः । दमः क्षमार्ज्जवं दानं धर्मं साधारणं विदुः" इत्युक्ते अहिंसादौ सर्ववर्णाश्रमसाध्ये १धर्मे । न्यायादुक्ते २संशयहेतौ समानधर्मे च तथाहि रज्जुः रजतं वेति संशये रज्जुरजतयोः सामान्यधर्मचाकचिक्यशुभ्रत्वादिर्हेतुः । ३प्रजावर्धनरूपे जन्तुमात्रधर्मे च "प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः । तस्मात् साधारणो धर्मः श्रुतौ पत्न्या सहोदितः" मनुः । स च धर्मः सर्वेषां जन्तूनां साधारण इति मानवा पृथगुपलक्षणम् ।

**साधारणस्त्री** स्त्री कर्म० । वेश्यायां हेमच० । सा च नायिकाभेदः । "अथ नायिका त्रिविधा स्वाऽन्या साधारणस्त्रीति" सा० द० नायिकाशब्दे ४०४२ पृ० तल्लक्षणं दृश्यम् । सामान्यस्त्रीप्रभृतयोऽप्यत्र ।

**साधारणी** स्त्री साधयति बाधां चारणीव । १कुञ्चिकायां हेमच० साधारणशब्दात्स्वार्थे स्त्रीप्रकृतौ स्त्री ङीप् स्वार्थे ष्यञ् । साधारण्य कुञ्चिकायां न० । भावे ष्यञ् । साधर्म्यधर्मे च ।

**साधिका** स्त्री साधयति नमयति सर्वोपशमम् सिध-णिच्-साधादेशः ण्वुल् । १दुर्गो हेमच० । सिध-णिच् ण्वुल् । २कार्य्यसाधिकायां स्त्रियाञ्च ।

**साधित** त्रि० सिध-णिच्-क्त । १दापिते अमरः २प्रमाणादिना उद्भाविते च "साधितात् दशकं शतमि"ति स्मृतिः ३निष्पादिते ४शोधिते च ।

**साधिदैव** त्रि० सह अधिदैवेन वर्त्तते अच् त्रिपदब० । अधिदैवतसहिते । साधिभूताधियज्ञमपि परमेश्वरं ।

**साधिष्ठ** त्रि० अतिशयेन साधुः बाढो वा इष्ठन् साधादेशः टिलोपो वा । १अत्यन्तदृढे अमरः २अतिसाधौ ३अतिशोभने च । ४अत्यार्थ्ये मेदि० ५न्याय्ये हेमच० ।

**साधिष्ठान** त्रि० सह अधिष्ठानेन। १अधिष्ठिते तन्त्रोक्ते षट्चक्रमध्ये सुषुम्नामध्यस्थे चक्रभेदे न० चक्रशब्दे २८०८ पृ० दृश्यम्।

**साधीयस्** त्रि० अतिशयेन साधुः बाढो वा ईयसुन् साधादेशो वा। १साधुतरे च २अत्यन्तदृढे अमरः। ३व्याप्ये हेमच०। स्त्रियां ङीप्।

**साधु** त्रि० साध-उन्। १उत्तमकुलजाते अमरः। २सुन्दरे ३उचिते च। स्त्रियां वा ङीप्। ४मुनौ ५जिने च पुं० हेमच० "न प्रहृष्यति सम्माने नापमाने च कुप्यति। न क्रुद्धः परुषं ब्रूयादेतद्धि साधुलक्षणम्" गरुडपु० धर्मयुते ६जने ७वार्द्धुषिके ८मनोहरे मेदि०। साधु लक्षणान्तरं यथा "यदृच्छालाभसन्तुष्टः समचित्तो जितेन्द्रियः। हरिपादाश्रयो लोके विप्रः साधुरनिन्दकः। निर्वैरः सदयः शान्तो दम्भाहङ्कारवर्जितः। निरपेक्षो मुनिर्वीतरागः साधुरिहोच्यते। लोभमोहमदक्रोधकामादिरहितः सुखी। कृष्णाङ्घ्रिशरणः साधुः सहिष्णुः समदर्शनः" पद्मोत्त०ख० ९९अ० "त्यक्तात्मसुखभोगेच्छाः सर्वसत्त्वसुखैषिणः। भवन्ति परदुःखेन साधवो नित्यदुःखिताः। परदुःखातुरा नित्यं स्वसुखानि महान्त्यपि। नापेक्षन्ते महात्मानः सर्वभूतहिते रताः। परार्थमुद्यताः सन्तः सन्तः किं किं न कुर्वते। तादृगप्यम्बुधेर्वारि जलदैस्तत् प्रदीयते। एक एव सतां मार्गो यदङ्गीकृतपालनम्। दहन्तमकरोत् क्रोडे पावकं यदपांपतिः। आत्मानं पीडयित्वापि साधुः सुखयते परम्। ह्लादयन्नाश्रितान् वृक्षो दुःसहं सहते स्वयम्" वह्निपु०।
९व्याकरणव्यङ्ग्यसाधुताजात्याश्रये शब्दे "अनपभ्रंशताऽनादिर्येषाऽभ्युदययोग्यता। व्याक्रियाव्यञ्जनीया वा जातिः कापीह साधुता" हरिः। तथा च अपभ्रंशभिन्नत्वमनादित्वम् अभ्युदयसाधनप्रयोगविषयत्वं व्याकरणव्यङ्ग्यजातिर्वा साधुता इति तदर्थः। स च ईश्वरसङ्केताश्रयः शब्द इति नैयायिकाः। तथा च यः शब्दो यस्मिन्नर्थे ईश्वरेण सङ्केतितः स शब्दस्तदर्थे साधुः। वैयाकरणमते यः शब्दः यस्मिन्नर्थे व्याकरणे व्युत्पादितः स शब्दस्तत्र साधुः यथा "कर्मणि द्वितीया" पा० द्वितीया कर्मार्थे साधुः।

**साधुज** त्रि० साधौ सत्कुले जायते जन-ड। उत्तमकुलोद्भवे शब्दर०।

**साधुधी** स्त्री द्व०। १श्वश्र्वां हारा०। २सुन्दरबुद्धियुते त्रि०। कर्म०। ३साधुबुद्धौ स्त्री। [२उत्तमकुलजे।

**साधुपुष्प** न० साधु पुष्पं यस्य। १स्थलपद्मे शब्दमा०। कर्म०।

**साधुवाह** पु० कर्म०। विनीते सुशिक्षिते घोटके हेमच०।

**साधुवाहिन्** पु० साधु यथा तथा वहति णिनि। १विनीतेऽश्वे अमरः २सुन्दरवहनकर्त्तरि त्रि०।

**साधुवृक्ष** पु० नित्यकर्म०। १कदम्बवृक्षे शब्दमा०। २वटवृक्षे राजनि०। ३शोभनवृक्षमात्रे च।

**साष्टत** न० सहाष्टतेन दलेन यः। १भाग्यपत्त्रे २मयूरशेखरे ३पर्णवीथ्यासु अजयः।

**साध्य** पु० सिध–णिच्–यत्। "मनोऽनुमन्ता तथा प्राणो नरोऽपानश्च वीर्यवान्। निर्भयो नरकश्चैव दंशो नारायणो वृषः। प्रभुश्चेति समाख्याताः साध्या द्वादश देवताः" इत्युक्ते द्वादशसंख्यके १गणदेवताभेदे ज्यो० उक्ते विष्कम्भादिषु योगेषु २एकविंशे योगे च। ३साधनीये त्रि० मेदि०। ४अष्टादशविवादेषु प्रमाणादिना साध्ये पदार्थे "प्रतिज्ञादोषनिर्मुक्तं साध्यं सत्कारणान्वितम्। निश्चितं लोकसिद्धञ्च पक्षं पक्षविदो विदुः" इत्युक्ते व्यवहारे साधनार्हे प्रतिज्ञेये ४पक्षे पु० "ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम्। ऊने वाऽप्यधिके वार्थे प्रोक्ते साध्यं न सिध्यति" कात्या०। ५अनुमित्या साधनीये वह्न्यादौ च यथा वह्निमान् धूमादित्यादौ सिषाधयिषितो वह्निः साध्यः। साध्यमस्त्यस्य अर्श आद्यच्। ६साध्यवति पक्षे पु० "साध्यनिर्देशः प्रतिज्ञे"ति गौ० सूत्रम्। साध्यवत्तया पक्षनिर्देश इति दीधितिकारः तन्त्रोक्ते ७मन्त्रमात्रे याज्ञमन्त्रस्य आनुकूल्यताप्रापके २८८पृ०उक्ते अकथहचक्रस्थे द्वितीयपञ्चमादिकोष्ठस्थाद्यक्षरके "सिद्धः साध्यः सुसिद्धोऽरिः क्रमात् ज्ञेया मनीषिभिः" इत्युक्ते ८मन्त्रभेदे। १०देवमात्रे मेदि०। व्याकरणोक्ते विकृतसंख्यानन्यविक्रियाभेदे क्रियाशब्दे २११७पृ० दृश्यम्। "साध्यरूपा क्रिया तत्र धातुरूपनिबन्धना" हरिः। "साध्यस्य साधनाकाङ्क्षा" हरिः।

**साध्यता** स्त्री साध्यस्यानुमितिविधेयस्य भावः तल्। अनुमितिविधेयतारूपे न्यायोक्ते १विषयताभेदे। २इच्छाविषयताभेदे च। यथा घटो जायतामित्यत्र घटीया साध्यताख्या विषयता।

**साध्यताघटकसम्बन्ध** पु० ६त०। कर्म०। येन सम्बन्धेन साध्यस्य अनुमेयता तादृशे सम्बन्धे यथा पर्वतः संयोगेन वह्निमान् धूमात् इत्यादौ संयोगः।

**साध्यतावच्छेदक** पु० साध्यतामवच्छिनत्ति विशेषयति अव+

सिद्ध-ण्यत् । येन रूपेण सम्बन्धेन वा यस्य साध्यताऽऽरूपा विषयता । तस्मिन् १सम्बन्धे २धर्मे । यथा वह्निमान् धूमादित्यत्र वह्निः साध्यः तस्य साध्यतां वह्नित्वमवच्छिनत्तीति वह्नित्वं साध्यतावच्छेदकम् । एवं संयोगसम्बन्धोऽपि ।

**साध्यसम** पु० १हेत्वाभासभेदे "साध्याविशिष्टः साध्यत्वात् साध्यसमः" गौ० सू० "द्रव्यं छायेति साध्यम् । गतिमत्त्वादिति हेतुः । साध्येनाविशिष्टः साधनीयत्वात् साध्यसमः । अयमप्यसिद्धत्वात् साध्यवत् प्रज्ञापयितव्यः । साध्यं तावदेतत् किं पुरुषवच्छायापि गच्छति ? आहो स्विदावरकद्रव्ये संसर्पत्यावरणसंतानादसंनिधिसंतानोऽयं तेजसो गृह्यत इति ? सर्पता खलु द्रव्येण यो यस्तेजोभाग आव्रियते तस्य तस्यासंनिधिरेवावच्छिन्नो गृह्यत इति । आवरणं तु प्राप्तिप्रतिषेधः" वात्स्या० २जात्युत्तरभेदे "उभयसाध्यत्वात् साध्यसमः" गौ० सू० "हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः । तं दृष्टान्ते प्रसजतः साध्यसमः । यदि यथा लोष्टस्तथात्मा प्राप्तस्तर्हि यथात्मा तथा लोष्ट इति । साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः । अथ नैवम् । न तर्हि यथा लोष्टस्तथात्मा" वात्स्या०। तत्र "पक्षदृष्टान्तादेः प्रकृतसाध्यतुल्यतापादनम्" गौ० वृ० दृष्टान्तस्य पक्षतुल्यताकथनम् । यथा, आत्मा सक्रियः क्रियाहेतुगुणवत्त्वादित्यादौ यदि यथा लोष्टस्तथात्मेति त्वयोच्यते तदा यथात्मा तथा लोष्ट इत्यप्यायातम् । तथा च यद्यात्मनि क्रियावत्त्वं साध्यते । तर्हि लोष्टेऽपि तत्साधनीयम् । नेति चेत्तर्हि यथा लोष्टस्तथात्मेति न साम्यम् । लोष्टवत्तव आत्मात्मवत्तो लोष्ट इत्यत्र नियामकाभावादिति" नीलकण्ठः ।

**साध्यसिद्धि** स्त्री साध्यस्य सिद्धिः विनिर्णयः । साध्यस्य व्यवहारादेः अनुमित्यादिना साधनाधीने १निर्णये २तन्निष्पत्तौ । साध्यस्य प्रतिज्ञेयार्थस्य सिद्धिर्निर्णयो यत्र । व्यवहारे प्रतिज्ञातार्थस्य प्राड्विवाकादिभिः विनिर्णयरूपे ३व्यवहारपादभेदे च ।

**साध्याप्रसिद्धि** स्त्री ६त० साध्ये साध्यतावच्छेदकस्याभावरूपे हेत्वाभासभेदे । यथा पर्वतः काञ्चनमयवह्निमान् धूमादित्यादौ वह्निनिष्ठः काञ्चनमयत्वाभावः साध्याप्रसिद्धिः ।

**साध्वस** न० साधु+अस्यति अस-अच् । भये अमरः ।

**साध्वी** स्त्री साधु-ङीप् । १मेदायां राजनि० "आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा । मृते म्रियेत या पत्यौ साध्वी ज्ञेया पतिव्रता" उक्तलक्षणायां २स्त्रियां तत्रार्थे संज्ञात्वात् न पुंवद्भावः । साधुतायुक्तं ३स्त्रीमात्रे च । तत्रार्थे पुंवद्भाव इति भेदः ।

**सानन्द** त्रि० सह आनन्देन । १आनन्दसहिते "सानन्दं नन्दिहस्ताहतमुरजरवाहूतकौमारबर्हि" मालतीमा० । २ध्रुवकभेदे "षडाद्याक्षरैर्युक्तो- यथोक्तपदो ध्रुवः । षड्कलसंज्ञके तालै सानन्दो वीररसे रसे" सङ्गीतदा० । ३गुच्छकरञ्जे पु० राजनि० ।

**सानन्दूर** पु० तीर्थविशेषे "सानन्दूरेति विख्यातं भूमे ! गुह्यं परं मम । उत्तरे तु समुद्रस्य मलयस्य च दक्षिणे । तत्र तिष्ठामि वसुधे ! दक्षिणां दिशमाश्रितः । प्रतिमा वै मदीयास्ति नात्युच्चा नातिनीचका । आयसीं तां वदन्त्येके अन्ये ताम्रमयीं तथा । कांस्यां रीतिमयीमन्ये केचित् सीसकनिर्मिताम् । शिलामयीमित्यपरे महाश्चर्यस्वरूपिणीम्" वराहपु० ।

**सानसि** पु० सन इण् असुक् च । सुवर्णे उणादिकोषः ।

**सानिका** स्त्री सन-ण्वुल् टापि अत इत्त्वम् । वंश्यां शब्दच० ।

**सानु** पुंन० सन-ञुण् । १पर्वतस्य समभूमिदेशे प्रस्थे अमरः २वने ३वातसमूहे ४पथि ५पल्लवे ६कोविदे ७अर्के मेदि०। ८दर्पणे च जटा० ।

**सानुज** न० सानौ जायते जन-ड । १प्रपौण्डरीके राजनि० २तुम्बुरुवृक्षे पु० राजनि०। सह अनुजेन । ३अनुजसहिते त्रि० ।

**सानुमत्** पु० सानुरस्त्यस्य मतुप् । पर्वते हेमच० ।

**सानेयी** स्त्री सह आनेयेन आरेण सहस्य सः गौरा० ङीष् । वंश्यां शब्दर०। स्वार्थे क ह्रस्वः। सानेयिकाऽप्यत्र ।

**सान्तपन** न० सन्तापयति सम्+तप-णिच् ल्युट्-स्वार्थेऽण् सन्तपनाय साधु अण्-वा ।
"गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् । एकरात्रोपवासश्च कृच्छ्रं सान्तपनं विदुः" मनूक्ते कृच्छ्रसाध्ये व्रतभेदे एकदिने गोमूत्रादिषट्कप्राशनं परदिने उपवास इति कृच्छ्रसाध्यताऽस्य ।

**सान्तर** न० सह अन्तरेण सहस्य सादेशः । १विरले जटा० २व्यवधानसहिते त्रि० । [नसाधने विधानभेदे ।

**सान्तानिक** त्रि० सन्तानः प्रयोजनमस्य सन्तना० ठञ् । सन्ता-

**सान्त्व** आनुकूल्यकरणे अद० चु० उभ० सक० सेट् । सान्त्वयति ते अससान्त्वत् त सान्त्वापयतीत्यन्ये अनेकाच्कत्वात् न षोपदेशः ।

**सान्त्व** न० सान्त्व–घञ् । १अत्यर्थमधुरे २आनुकूल्ये मेदि० । ३स्त्रीमनःप्रीतिदवाक्ये प्रियवाक्यादिना क्रोधोपशमनरूपे सामनि च अमरः ।

**सान्त्वन** न० सान्त्व–ल्युट् । १आनुकूल्यकरणे प्रियवादादिना क्रोधाद्युपशमने च । युच् । अत्रैव स्त्री ।

**सान्दीपनि** पु० सन्दीपनस्यापत्यम् इञ् । रामकृष्णयोराचार्ये अवन्तिपुरवासिनि मुनिभेदे ।
"विदिताखिलविज्ञानौ सर्वज्ञानमयावपि । शिष्याचार्यक्रमं वीरौ ख्यापयन्तौ यदूत्तमौ । ततः सान्दीपनिं काश्यमवन्तिपुरवासिनम् । अस्त्रार्थं जग्मतुर्वीरौ बलदेवजनार्दनौ" विष्णुपु० ५ अंशे २१ अ० ।

**सान्द्र** त्रि० अदि-रक् सह अन्द्रेण । १निबिडे अमरः २मृदौ मेदि० । ३स्निग्धे ४मनोज्ञे शब्दर० । ५वने न० मेदि० ।

**सान्द्रपुष्प** पु० सान्द्रं पुष्पमस्य । विभीतकवृक्षे शब्दर० ।

**सान्द्रस्निग्ध** त्रि० सान्द्रं स्निग्धः । १अतिस्निग्धे शब्दर० । २अतिमनोहरे च ।

**सान्धिक** पु० सन्धा सुराद्यासवनं शिल्पं वेत्ति ठक् । १शौण्डिके शब्दमा० । सन्धिः प्रयोजनमस्य ठञ् । २सन्धिकर्त्तरि त्रि० ।

**सान्ध्य** त्रि० सन्ध्यायां भवः सन्धिवेला० अण् न ठञ् । [सन्ध्याकालिके ।

**सान्ध्यकुसुमा** स्त्री ६ब० । त्रिसन्धिपुष्पवृक्षे राजनि० ।

**सान्नाय्य** न० सम्नीयते सम्+नी–ण्यत् नि० । मन्त्रादिना संस्कार्ये हविरादौ अमरः । [कल्पय" आवाहनमन्त्रः ।

**सान्निध्य** न० सन्निधिरेव ष्यञ् । नैकट्ये "सान्निध्यमिह

**सान्निपातिक** त्रि० सन्निपातात् त्रिदोषविकारात् आगतः तेन निर्वृत्तो वा ठञ् । सान्निपातजाते रोगे सन्निपातशब्दे ५२१६ पृ० दृश्यम् "विकारे सान्निपातिके" कुमारः ।

**सान्न्यासिक** पु० सन्न्यासः प्रयोजनमस्य ठक् । सन्न्यासिनि हेमच० ।

**सापत्न** पु० सपत्न एव स्वार्थे अण् । १शत्रौ अमरः ; सपत्न्या भवः तस्या अपत्यं वा अण् । २सपत्नीपुत्रे । ष्यञ् । सापत्न्योऽप्यत्र ।

**सापिण्ड्य** न० सपिण्डस्य भावः ष्यञ् । दायाशौचप्रकरणाद्युक्तेषु ज्ञातिधर्मभेदे "सापिण्ड्यं साप्तपौरुषमि"ति स्मृतिः । सपिण्डशब्दे ५२२० पृ० दृश्यम् ।

**साप्तपदीन** न० सप्तभिः पदैः उच्चारितैर्निर्वृत्तम् खञ् । सख्ये मैत्र्यादौ अमरः "साप्तपदीनं सख्यम्" पा० ।

**साप्तपौरुष** त्रि० सप्त पुरुषान् व्याप्नोति अण् उभयपदवृद्धिः । सप्तपुरुषव्यापके ।

**साफल्य** न० सफलस्य भावः ष्यञ् । सामर्थ्ये सम्पूर्णतायाञ्च ।

**साम** सान्त्वने अद०चु०उ०स०सेट् । सामयति ते अससामत् त अनेकाच्त्वात् न षोपदेशः ।

**सा(षा)म** सान्त्वे चु०उभ० सक०सेट् । सामयति अयं षोपदेश एव न्यासः दुर्गादासेन दन्त्यादित्वमस्योक्तमप्रमाणम् ।

**सामक** पु० साम–ण्वुल् । १ऋणाणे त्रिका० । समकमेव अण् । २हिरक्षिते मूलमात्रे ऋणे त्रिका० ।

**सामग** पु० साम तद्वेदं गायति । सामवेदाध्यायिनि जटा० ।

**सामगर्भ** पु० साम गर्भे यस्य । विष्णौ शब्दर० ।

**सामग्री** स्त्री समग्रस्य भावः ष्यञ् स्त्रीत्वपक्षे ङीष् ङीपि यलोपः । १समस्ततायाम् । स्त्रीत्वाभावपक्षे सामग्र्य तत्रार्थे न० । "प्रायेण सामग्र्यविधौ गुणानाम्" कुमारः । स्वार्थे ष्यञ् । २करणसमूहे ३द्रव्ये च स्त्री ।

**सामज** पुंस्त्री० साम्नो वेदभेदात् जायते जन–ड । १गजे । स्त्रियां ङीष् । तस्य तज्जन्मकथा पालकाप्ये उक्ता तच्च सामयोनिशब्दे दृश्यम् । २सामपाठजे स्वरादौ त्रि० मेदि० ।

**सामञ्जस्य** न० समञ्जसस्य भावः ष्यञ् । औचित्ये ।

**सामन्** न० षो–मनिन् । "अग्न आयाहि" इत्यादिके १वेदभेदे तत्रोक्तास्वृक्षु अधिरूढस्य गेये २गानभेदे "ऋच्यध्यूढं साम गीयते" छान्दोग्योप० । साम्नो गानरूपत्वं गानशब्दे २५७२ पृ० दृश्यम् तद्भेदादिकं वेदगाने जडमानादौ सूत्रपन्थे च दृश्यं सामवेदस्य विभागादि चरणव्यूहे दृश्यम् । तच्छाखाभेदाः वेदशब्दे ४९२४ पृ० दृश्याः । दाने "सामभेदस्तथा दानो दण्डश्चेत्युक्ते ३उपायभेदे तस्य विषयादिकं मत्स्यपु० २२१ अ० उक्तं यथा
मत्स्य उवाच "सामभेदस्तथा दानो दण्डश्च मनुजेश्वर ! । उपेक्षा च तथा माया इन्द्रजालञ्च पार्थिव ! । प्रयोगाः कथिताः सप्त तन्मे निगदतः शृणु । द्विविधं कथितं साम तथ्यञ्चातथ्यमेव च । तत्राप्यतथ्यं साधूनामाक्रोशायैव जायते । तत्र साधुः प्रयत्नेन सामसाध्यो नरोत्तम ! । महाकुलीना ऋजवो धर्मनित्या जितेन्द्रियाः । सामसाध्या न चातथ्यन्तेषु साम प्रयोजयेत् । तथ्यं साम च कर्त्तव्यं कुलशीलादिवर्णनम् । तथा तदुपचाराणां कृतानाञ्चैव वर्णनम् । अनयैव तथा युक्त्या कृतज्ञाख्यापनं स्वकम् । एवं साम्ना च कर्त्तव्या वशगाः धर्मतत्पराः । साम्ना यद्यपि रक्षांसि गृह्णन्तीति पराश्रुतिः । तथाप्येतदसाधूनां प्रयुक्तं नोपकारकम् । अतिशङ्कितमित्येवं पुरुषं सामवादिनम् । असाधवो

स्वत्युक्ते देशविशेषे: सोऽभिजनोऽस्य अण् । एतद्देश-वासिजने । तत्रत्यब्राह्मणभेदश्च "सारस्वताः कान्यकुब्जा गौडमैथिलकोत्कलाः । पञ्च गौडा इति ख्याता विन्ध्य-स्योत्तरवासिनः" पुराणान्तरम् ।

सारस्वतकल्प पु० कर्म० । १तन्त्रोक्ते सरस्वत्या उपासना-याः विधानभेदे २तदाख्ये ब्रह्मदिने च । कल्पशब्दे १८१६ पृ० दृश्यम् । [शब्दर० २दूर्वायाम् शब्दच० ।

सारा स्त्री सारयति सृ-णिच्-अच् । १कृष्णत्रिवृतायाम्

साराल पु० सारमालाति आ+ला-क । तिलवृक्षे शब्दर०।

सारि(री) पु० स्त्री० सृ-इण् स्त्रीत्वपक्षे वा ङीप् । १पाशके ''सारीं चरन्तीं सखि ! मारयेति'' नैषधम् । २पक्षि-भेदे च (शालिक) शब्दच०। स्त्रीत्वमतः ३सप्तलायां राजनि०

सारिका स्त्री सरति गच्छति सृ-ण्वुल् । पक्षिभेदे(शालिक) अमरः ।

सारिणी स्त्री सृ-णिनि । १कटुदेवीलतायां २कार्पास्यां ३दुरालभायां ४अपविषविंशपायां ५प्रसारिण्यां ६रक्त-पुनर्नवायाम् राजनि० ।

सारिवा स्त्री सारिरिव वाति वा-क । (अनन्तमूल)लताभेदे सा च दुग्धगर्भा तनुत्वपत्रा सुगन्धा च । सा च कृष्णशुक्लभेदात् द्विविधा "सारिवायुगलं स्वादु स्निग्धं शुक्रकरं गुरु । अग्निमान्द्यारुचिश्वासकासाम-विषनाशनम् । दोषत्रयास्रप्रदरज्वरातीसारनाशनम्" भावप्र० । [भवः ठञ् । चित्रभेदे अमरः ।

सारोष्ट्रिक पु० सारः श्रेष्ठ उष्ट्रो यत्र सारोष्ट्रः देशभेदस्तत्र

सार्थ पु० सह-अर्थ सार्थं अण् । १समूहे २वन्तुसमूहे अमरः "स जयत्यरिसार्थसार्थकीकृतनामा" नैषधम् । सह अर्थेन धनेन वा । ३सधनसमूहे मेदि० । ४धनिनि त्रि० । अण् । सार्थक । ५अर्थयुक्ते त्रि० ६शब्दे पु० "सार्थकः सार्थवाधकादिति" शब्दार्थप्रकाशिका ।

सार्थवाह पु० सार्थं वहति वह-अण् । वणिग्जने अमरः

सार्द्र त्रि० सह आर्द्रेण । आर्द्रतायुक्ते अमरः ।

सार्द्धम् अव्य० सह+ऋध-अमु । १साहित्ये अमरः । सह अर्द्धेन । सार्द्ध २अर्द्धयुक्ते त्रि० ।

सार्प न० सर्पोदेवताऽस्य अण् । अश्लेषानक्षत्रे ।

सार्पिष्क त्रि० सर्पिषा संस्कृतम् ठक् । घृतसंस्कृते अन्न-नादौ हेमच० । [विदिते ।

सार्वजनीन त्रि० सर्वेषु जनेषु विदितः खञ् । सर्वलोक-

सार्वत्रिक त्रि० सर्वत्र भव ठक् । सर्वस्मिन् कालादौ भवे ।

सार्वधातुक न० सर्वधातून् व्याप्नोति ठक् । व्याकरणोक्त प्रत्ययात्मकतिङ् लट् लोट् लङ् विधिलिङ् इत्याख्यके । भवकारे [वृद्धिः । सर्वभूतव्यापके ।

सार्वभौतिक त्रि० सर्वाणि भूतानि व्याप्नोति ठञ् द्विपद-

सार्वभौम पु० सर्वस्या भूमेरीश्वरः सर्वासु भूमिषु विदितो वा अण् द्विपदवृद्धिः । १चक्रवर्त्तिनि नृपे २उत्तरदिक्स्थे गजे च अमरः । ३विदूरथस्यपुत्रे पु० भाग० ९।२२।३४। ४सर्वभूमिसम्बन्धे त्रि० ।

सार्वलौकिक त्रि० सर्वेषु लोकेषु विदितः ठञ् द्विपदवृद्धिः । सर्वलोकेषु विदिते "स राजा सार्वलौकिकः" भट्टिः ।

सार्वविभक्तिक त्रि०सर्वासु विभक्तिषु तदर्थे भवः-ठञ् । सर्वविभक्त्यर्थे विहिते तसिलादौ प्रत्यये पा० ।

सार्षप त्रि० सर्षपस्य विकारः अण् । सर्षपविकारतैलादौ "कटुकं सार्षपं तैलम्" स्मृतिः ।

साल पु० सल-घञ् । १प्राकारे "रसालसालः समदृश्यता-मुना"नैषधम् । २सर्जाख्यशालवृक्षभेदे "शालस्तु सर्ज-कार्श्याश्वकर्णकः सस्यसंवरः । सालस्तु तुवरः स्वादु ब्रणस्वेदकफक्रमीन् । प्रविद्रधिवाधिर्य्ययोनिकर्ण-गदान् हरेत् । सर्ज्जोऽन्योऽश्वकर्णः स्यात् शालो मरिच-पत्रकः । अश्वकर्णः कटुस्तिक्तः कषायोष्णो व्यपोहति । कफवातरुजस्तितदान् मेहकुष्ठविनाशनान्" भावप्र० । एतत्परत्वे तालव्यादितादपि । ३प्राकारे मेदि० ४शाख-मत्स्ये भरतः ०५राले राजनि० ।

सालन पु० सालः कारणत्वेनाऽस्त्यस्य पामादित्वात् न । सालनिर्यासे (धुना) रत्नमा० ।

सालनिर्यास पु० ६त० । सर्ज्जरसे (धुना) रत्नमा० ।

सालपर्णी स्त्री सालस्येव पर्णान्यस्याः ङीप् । (शालपानि) क्षुपे शब्दर० ।

सालपुष्प न० सालस्येव पुष्पं यस्य । स्थलपद्मे शब्दर० ।

सालभञ्जिका स्त्री सालं भनक्ति भञ्ज-ण्वुल् । १काष्ठादि-निर्मिते क्रीडार्थपुत्तलिकाभेदे २वेश्यायाम् जटा० ।

सालरस पु० ६त० । (धुना) राले राजनि० ।

सालवेष्ट पु० सालं वेष्टयति वेष्ट-अण् । राले (धुना)राजनि०

सा(शा)ला स्त्री सालः प्राकारोऽस्त्यस्याः अच् । स्कन्धे भरतः

सा(शा)लाहक पुंस्त्री० शालायां वृक इव । कुक्कुरे । स्त्रियां ङीष् । [शब्दर० स्त्रियां ङीष् ।

सा(शा)लूर पु स्त्री० स(श)ल-ऊरच् णिच्च । भेके मण्डूके

**सा(शा)लेय** पु० सा(शा)लायां भवः ढक्। मधुरिकायाम् अमरः

**सालोक्य** न० समानो लोकोऽस्य तस्य भावः ष्यञ्। सायुज्यशब्दोक्ते पञ्चविधमुक्तिमध्ये एकलोकस्थवासरूपे मुक्तिभेदे।

**सा(शा)ल्व** पु० ब०व० देशभेदे। तेषां राजा अण्। तद्देशाधिपे नृपभेदे स च श्रीकृष्णेन हतः भा० व० १४अ० दृश्यम्। [हेमच०।

**सा(शा)ल्वहन्** पु० साल्वं नृपं हतवान् हन-क्विप्। विष्णौ

**सावधान** त्रि० सह अवधानेन। १सचेतने सतर्के २मनोभिनिवेशयुक्ते च।

**सावन** न० सवनं यागाङ्गं स्नानं सोमाभिषवणं वा तस्येदमण्। "अहोरात्रेण चैकेन सावनो दिवसः स्मृतः" ज्योतिषोक्ते १अहोरात्रात्मके दिवसे, सवनत्रयस्य अहोरात्रसाध्यत्वादस्य तत्सम्बन्धित्वम्। तत्त्रिंशद्दिवसात्मके २मासभेदे च पु० "चान्द्रः शुक्लादिदर्शान्तः सावनस्त्रिंशता दिनैः" विष्णुध० "सावने च तथा मासि त्रिंशत्सूर्य्योदयाः स्मृताः" म० त०। "सूतकादिपरिच्छेदो दिनमासाब्दपस्तथा। मध्यमग्रहभुक्तिश्च सावनेन प्रकीर्त्तितः" इति सूर्य्यसिद्धान्तः। सावनमासकृत्यानि च विशेषतः कानिचित् म०त० पितामहेनोक्तानि "विवाहादौ स्मृतः सौरो यज्ञादौ सावनो मतः" "आदिपदेन जन्ममृतिवृद्धिप्रायश्चित्तायुर्दायाशौचगर्भाधानपुंसवनसीमन्तोन्नयनअन्नप्राशननिष्क्रमणचूडादिग्रहणम्" म० त० रघु०। एषु सावनेन मानेनैव कर्म्म गणना "चान्द्राब्द-पादान्त्यस्य सावनेन लोकस्य यत् साहस्रसहारकर्म्म विष्णुध० ३वर्षभेदे "सौरेणाब्दस्तु मानेन सदा भवति भार्गव!। सावनेन च मानेन दिनषट्कं प्रपूर्य्यते"। "सौरवर्षे दिनषट्काधिक्यसावनवर्षो भवतीति रघु०। दिनषट्कमिति प्रायिकम् सौरवर्षे सावनस्य ५।१५।३१।३०।२४ दिनाद्याधिक्यस्यैव सिद्धान्तोक्तेः। ४यज्ञान्ते ५यजमाने ६वरुणे च पु० मेदि०।

**सा(शा)वर** पु० श(स)वरेण निर्वृत्तः अण्। १पापे २अपराधे च विश्वः। ३लोध्रे शब्दच०।

**सावर्णि** पु० सवर्णायां सूर्य्यपत्न्यां संज्ञायां भवः अण्। सवर्णागर्भजे सूर्य्यपुत्रे अष्टमे मनौ इञ्। सावर्णिरप्यत्र "सावर्णिः सूर्य्यतनयो यो मनुः कथ्यतेऽष्टमः" "सूर्य्यात्सवर्णासञ्जाता सावर्णिर्भविता मनुः" देवीभा०। "छायासंज्ञासुतो योऽसौ द्वितीयः कथितो मनुः। पूर्वजस्य सवर्णोऽसौ सावर्णस्तेन कथ्यते" देवीभाग० तन्नामनिरुक्तिरन्तरसङ्गतम् "विवस्वतश्च द्वे भार्य्ये विश्वकर्म्मसुते उभे। संज्ञा छाया च राजेन्द्र! ये प्रागभिहिते तव। तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः। यमो यमी श्राद्धदेवश्छायायाश्च सुतान् शृणु। सावर्णिस्तपती कन्या भार्य्या संवरणस्य या। शनैश्चरस्तृतीयोऽभूत् अश्विनौ वडवात्मजौ। अष्टमेऽन्तर आयाते सावर्णिर्भविता मनुः" भाग० ८।१३अ०। कल्पभेदादविरोधः।

**सावित्र** पु० सविता देवताऽस्य अण्। १शिवे हेमच०। २ब्राह्मणविशेषे स्त्री ङीप्। "सावित्रीमात्रसारोऽपि" मनुः। सा च ३सधवस्त्रीभार्य्यायाम् स्त्री ४सवितृदेवताके चर्वादौ त्रि०। ५यज्ञोपवीते न० शब्दच०। स्वार्थे अण्। ६सूर्य्ये पु० शब्दच०। तस्येदम् अण्। ७महादेवे दशाहे च पु० मेदि०। ८गर्भे हला० १०ब्रह्मपत्न्यां स्त्री ११दुर्गायां च स्त्री मेदि०। तन्नामनिरुक्तिः देवीपु० ४४अ० "त्रिदशैरर्चिता देवी वेदभागेषु पूजिता। भावशुद्धस्वरूपा तु सावित्री तेन सा स्मृता" वह्निपु०। अन्या निरुक्तिः "सर्वलोकप्रसवनात् सविता स तु कीर्त्त्यते। यतस्तद्देवता देवी सावित्रीत्युच्यते ततः। वेदप्रसवनाच्चापि सावित्री प्रोच्यते बुधैः"। मत्स्यपु० च तत्कथा "ततः संजपतस्तस्य भित्त्वा देहमकल्मषम्। स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत्। शतरूपा च सा ख्याता सावित्री च निगद्यते। सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप!" मत्स्यपु० ३अ०। गायत्रीशब्दे दृश्यम्।

**सावित्रीव्रत** न० सावित्रीपूजनसहितम् कर्त्तव्यं व्रतम्। ज्यैष्ठकृष्णचतुर्दश्यां सावित्रीपूजनार्थे व्रते तद्विधिर्यथा "शिवाऽघोरा तथा प्रेता सावित्री च चतुर्दशी। पूर्व्वविद्धैव कर्त्तव्या कृष्णायेव हि पारणम्" ति०त०धृतवचनम् यमः "दृष्ट्वा यमाङ्गनान् वा कृष्णपक्षे चतुर्दशीम्। धर्म्मराजं समुद्दिश्य सर्वपापैः प्रमुच्यते"। लिङ्गपुराणे "उपवासचतुर्दश्यां महापातकनाशकः"। पराशरः "मेषे वा वृषभे वापि सावित्रीं तां विनिर्दिशेत्"। तां चतुर्दशीम् "ज्यैष्ठे कृष्णचतुर्दश्यां सावित्रीमर्चयन्ति याः। वटमूले सोपवासा न ता वैधव्यमाप्नुयुः"। राजमार्त्त०कृत्यचिन्तामण्योः "ज्यैष्ठे मासि चतुर्दश्यां सावित्रीव्रतमुत्तमम्। अवैधव्याय कुर्वन्ति स्त्रियः श्रद्धासमन्विताः"। व्रतमाले तु अनन्ततृतीयाव्रतोक्तमाचरन्ति इष्टपरिकल्पनान्यायात् तदुक्तं भविष्यपुराणे "गर्भिणी सूतिका नक्तं कुमारी च रजस्वला। यदाऽशुद्धा तदा०

सिप्राप्रादुर्भावो यथा "तत्तोयं वप्रधा भूत्वा पतितं मान-साच्चलात्। हेमाद्रेः कन्दरे सानौ सरसाञ्च पृथक् पृथक्। तत्तोयं पतितं सिप्रे देवभोग्ये सरोवरे। तेन सिप्रा नदी जाता विष्णुना प्रेरिता क्षितिम्" कालिपु० २२अ०। [नामता।

**सिम** पु० सि-मन् किच्च। सर्वस्मिन् इत्यर्थे। तदर्थेऽस्य सर्व-

**सिम्बा(म्बि)** स्त्री शाम्यति उदिरनया शम-वन् इत् वा पृषो०। (छुटि) १शिम्बायाम् द्विरूपको० इत्यन्तः। २नखी-नामगन्धद्रव्ये राजनि० वा ङीप्। ङीबन्तः। ३शुक-म्बाख्यां शब्दच०। [धान्ये कलायादौ भावप्र०।

**सि(शि)म्बिजा** स्त्री सि(शि)म्बेजायते जन-ड। शमी-

**सिर** पु० सि-रक्। १पिप्पलीमूले हेमच०। २नाड्याम् ३अम्बुवाहिन्याञ्च स्त्री हेमच०। [बल्लकीदण्डे भरतः।

**सिलकी** स्त्री सि-क्विप् लक-अच् गौरा० ङीप् कर्म०।

**सिवर** पुंस्त्री० सि-वरच्। गजे जटा० स्त्रियां ङीष्।

**सिहुण्ड** पु० सो-कि सिः छेदस्तं हुण्डते कण्टकावृतत्वात् हुडि-अण्। स्नुहीवृक्षे शब्दर०। [आर्ते च तत्रैव।

**सिह्ल** पु० सिह-लक् पृषो०। इन्धुपाख्ये गन्धद्रव्ये अमरः

**सिह्लकी** स्त्री सिह-ल्वक् पृषो० गौरा० ङीप्। शल्लकी-वृक्षे शब्दर०। [शब्दर०।

**सिह्लभूमि** स्त्री सिह्लस्य गन्धद्रव्यस्य भूमिः। शल्लकीवृक्षे

**सीक** सेचने भ्वा० आ० सक० सेट्। सीकते असीकिष्ट। ऋदित् चङि न ह्रस्वः। षत्वं दन्त्येन न सोपदेशः।

**सीक** स्पर्शे वा चु० उभ० पक्षे भ्वा० प० सक० सेट्। सीक-यति ते सीकति असीसिकत् त असीकीत्। षत्वं दन्त्यादेव सोपदेशः। [भरतः।

**सीकर** पु० सीक्यते सिच्यतेऽनेन सीक-अरन्। जलकणे

**सीता** स्त्री सि-क्त पृषो० दीर्घः। १लाङ्गलपद्धतौ अमरः २जनकराजदुहितरि ३मद्राश्ववर्षस्थितगङ्गायाञ्च।

"अथ मे कर्षतः क्षेत्रं लाङ्गलादुत्थिता ततः। क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता। भूतलादु-त्थिता सा तु व्यवर्द्धत ममात्मजा" रामा० बाल० "अथ लोकेश्वरी लक्ष्मीर्जनकस्य पुरे स्वतः। शुभक्षेत्रे ह-लोत्खाते तारे चोत्तरफाल्गुने। अयोनिजा पद्मकरा बालार्कशतसन्निभा। सीतामुखे समुत्पन्ना बालभावेन सुन्दरी। सीतामुखोद्भवात् सीता इत्यस्या नाम चा-करोत्" पद्मपु०। भद्राश्ववर्षनदीभेदश्च स्वर्गगङ्गाया धारा-भेदः जम्बुद्वीपशब्दे ३०४६ पृ० दृश्यः। ४उमायाम् ५उमायां ६लक्ष्म्यधिदेवतायां ७वानालक्ष्म्यां मदिरायां राजनि०।

**सीतापति** पु० ६त०। श्रीरामे शब्दर०।

**सीतायाःपति** पु० ६त० अलुक्समा०। श्रीरामे शब्दर०। "सीतायाः पतये नमः" इति प्रयोगम् अवलम्ब्य पक्षे इत्येव साधु।

**सीत्कार** पु० सीदित्यव्यक्तस्य कारः सीत्+कृ-घञ्। अनु-रागजे शब्दे। [शब्दे हेमच०।

**सीत्कृत** न० सीत्+कृ-भावे क्त। १सीत्कारे २अनुरागज-

**सीत्य** न० सीतया लाङ्गलपद्धत्या निर्वृत्तं यत्। १धान्ये हेमच०। सीतामर्हति यत्। २कृषकर्मयोग्ये क्षेत्रादौ त्रि०

**सीधु** पु० सिध-उ पृषो०। १मद्ये २मद्यभेदे च "इक्षोः पक्वै रसैः सिद्धः सीधुः पक्वरसश्च सः। आमैस्तैरेव यः सीधुः (सेरका) स च शीतरसः स्मृतः। सीधुः पक्वरसः श्रेष्ठः स्वराग्निबलवर्णकृत्। वातपित्तकरो हृद्यः स्नेहनो रोचनो हरेत्। विबन्धमेदःशोफार्शःशोफोदरकफा-मयान्। तस्मादल्पगुणः शीतरसः संलेखनः स्मृतः" राजनि०। [शब्दर०।

**सीधुगन्ध** पु० सीधोरिव गन्धोऽस्य वा न इत्समा०। बकुले

**सीधुपुष्प** पु० सीधुगन्धयुक्तं पुष्पमस्य। १कदम्बे २बकुले च ३धातक्यां स्त्री राजनि० ङीष्।

**सीधुरस** पु० सीधोरिव रस आस्वादोऽस्य। आम्रवृक्षे राजनि०

**सीमन्त** पु० सीम्नोऽन्तः शक०। १केशान्तर्गतरेखाकारे पदार्थे (सिँति) हेमच० २केशरचनाभेदे। "षष्ठेऽष्टमे वा सीमन्त" इत्युक्ते गर्भावधिके षष्ठे अष्टमे वा मासि कर्त्तव्ये ३गर्भ-संस्कारभेदे च सीमन्तोन्नयनशब्दे दृश्यम्।

**सीमन्तक** न० सीमन्ते कायति कै-क। १सिन्दूरे राजनि०

**सीमन्तिनी** स्त्री सीमन्त+अस्त्यर्थे इनि। नार्याम् अमरः।

**सीमन्तोन्नयन** न० सीमन्तस्य केशरचनाभेदस्य उन्नयनम् उ-न्नोऽस्मिन्। अन्नप्राशने गर्भसंस्कारभेदे।

तत्कालादि संस्कारत० दर्शितं यथा

"यदि पुंसवनं न कृतं तदा तस्मिन्नेव दिने प्रायश्चित्त-त्वकमहाव्याहृतिहोमं कृत्वा पुंसवनं कृत्वा सीमन्तोन्न-यनं कार्य्यम्। तथा च नारदः "येषान्तु न कृताः पूर्वं संस्कारविषयः क्रमात्। कर्त्तव्या व्याहृतिभिर्वा पैतृकादेव तद्भवात्। अविद्यमाने पितर्यपि ज्ञात्वा कुर्य्यात् वा पुनः। अयमत्रकालार्थः संस्काराभ्याहृतिभिः पूर्वसंस्काराः"। क्रमात् भ्रातॄणां संस्काराणाञ्च पौर्वापर्य्यक्रमात् व्याहृ-

सीमायञ्चिह्नितदेशकर्षकाणामसत्त्वे विज्ञेयम् । अत-एवोक्तं नारदेन "सीमायां च बहिर्ये स्युर्येऽपि तत्कर्मजीविनः । गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः" इति । अत्र च सर्वत्र स्थावरविवादे क्षेत्रादिविवादे च सामन्तादयो निर्णायकाः तथा च कात्यायनः "तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः । स्थावरे षट्प्रकारेऽपि कार्य्या नात्र विचारणा । क्षेत्रवास्तुतडागेषु आरामवनसेतुषु । एतेनभावात् सा-मन्तैः कुर्य्यादत्र विनिर्णयम् । ग्रामसीमासु च तथा तद्वन्नगरदेशयोः" । तेषां साक्षिणाम् । याज्ञवल्क्योऽपि "आरामायतनग्रामनिपानोद्यानवेश्मसु । एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु" । आयतनं निवेश-नस्थानं पानीयस्थानं वर्षाम्बुप्रवहो वृष्टिजात जल-प्रवाहः । पुनः कात्यायनोऽपि "क्षेत्रकूपतडागानां केदा-रारामयोरपि । गृहप्रासादावसथनृपदेवगृहेषु च" । केदारः जलसेतुयुक्तः क्षेत्रविशेषः । गोवलीवर्दन्यायेन भिन्नोक्तिः प्रसादः प्रासादः । बृहस्पतिरपि "सर्वत्र स्थावरे वादे विधिरेष प्रकीर्त्तितः" । राजा ग्रामीणानां वादि-प्रतिवादिनोश्च समक्षं सामन्तादयः प्रष्टव्याः तैर्यदुक्तं तत्तत्ते लेखनीयमित्याह मनुः "ग्रामीयककुलानान्तु समक्षं सीम्नि साक्षिणः । प्रष्टव्याः सीमलिङ्गानि तयो-श्चैव विवादिनोः । ते पृष्टास्तु यथा ब्रूयुः समस्ताः सीम्नि निश्चयम् । निबध्नीयात्तथा सीमां सर्वांस्तांश्चैव नामतः" । सीमाभिप्रायेण सीमलिङ्गानीत्युक्तम् । सीमासाक्षिणस्तु सीमां ब्रूयुः । तथा च बृहस्पतिः "शपथैः शापिताः स्वैः स्वैर्ब्रूयुः सीमाविनिर्णयम् । दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितिः" । स्वैः स्वैः । सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः" इत्यादिनोक्तविप्रत्वानतिक्रमेणेत्यर्थः । यदा तु सी-मासाक्षिणः सीमालिङ्गानि दर्शयितुं शक्नु-वन्ति केवलं सीमामात्रं जानन्ति तदा ते कथं ब्रूयु-रित्याकाङ्क्षायामाह मनुः "शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः । सुकृतैः शापिताः स्वैः स्वैर्नये-युस्ते समञ्जसम्" इति । उर्वीं मृदम् । सीमाक्रम-माणा इति शेषः । नयेयुरिदं द्वयोर्विवादार्थं बहुवचन-मत्येकस्य, नारदेन "एकश्चेदुन्नयेत् सीमां सोपवासः समुन्नयेत् । रक्तमाल्याम्बरधरो भूमिमादाय मूर्द्धनि" इति एकस्याप्यनुज्ञानात् । बृहस्पतिरपि "साक्षिचिह्नै-विना साधुरेकोऽप्युभयसम्मतः । रक्तमाल्याम्बरधरो मृदमादाय मूर्द्धनि । सत्यव्रतः सोपवासः सीमां तां दर्श-येन्नरः" । साक्षिचिह्नैर्विना सीमायाः ज्ञातव्यां चिह्ना-भावाभावे । ननु कथमेकस्य सीमानिर्णायकत्वम् "नैकः समुन्नयेत् सीमां नरः प्रत्ययवानपि । गुरुत्वादस्य कार्य्यस्य क्रियैषा बहुषु स्थिता" इत्येकस्य नारदेन निषेधा-दिति चेन्नैवम् स उभयानुमतधर्मविद्व्यतिरिक्तविषय इति न काप्यनुपपत्तिः । अयन्तु निर्णयः सीमाक्रमण-दिवसादारभ्य पक्षत्रयपर्य्यन्तं साक्षिसामन्तादीनां दैविक-राजिकोपद्रवाभावे अवसेयः न तु सीमाक्रमणाव्यवहित-क्षणोत्तरमेव । तथा च कात्यायनः "सीमाचङ्क्रमणे कोषे पादस्पर्शे तथैव च । त्रिपक्षपञ्चसप्ताहं दैवराजिक-मिष्यते" । यथाक्रममिति शेषः । यदा तु साक्ष्या-दीनां पक्षत्रयाभ्यन्तरे दैविकराजिकोपद्रवः अन्यथा वा मिथ्यावादित्वनिश्चयस्तदा ते पणशतद्वयं दण्डं प्रत्येकं दाप्याः । तथा च मनुः "यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः । विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्" । यथोक्तेन शिरोभिस्ते गृहीत्वोर्वीमित्यादि-नोक्तप्रकारेण नयन्तो निर्णयं कुर्वन्तः यथाभूतार्थे-नेति शेषः । द्विशतं पणशतद्वयम् प्रत्येकम् दाप्या इत्यर्थः । सामन्तानां मिथ्यावादित्वे राज्ञा ते मध्यमसा-हसाख्येन दण्डेन दण्डनीयाः । तथा चाह याज्ञ-वल्क्यः "अनृते तु पृथक् दण्ड्या राज्ञा मध्यमसाह-सम्" । सामन्ता यद्यनृतं मिथ्याभूतं सीमानिर्णयं कुर्य्युः तदा मध्यमसाहसं कार्षापणानां चत्वारिंशदधि-कानि पञ्च शतानि दण्डनीयाः । नारदोऽपि "अथ चेदनृतं ब्रूयुः सामन्ताः सीम्नि निर्णये । सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहसम्" । सामन्तव्यति-रिक्तानां तत्संसक्तादीनां मिथ्यावादित्वे पूर्वसाहसाख्येन दण्डेन प्रत्येकं ते दण्डनीयाः । तथा च नारदः "शेषाश्चेदनृतं ब्रूयुर्नियुक्ता भूमिकर्मणि । प्रत्येकन्तु जघन्यास्ते विनेयाः पूर्वसाहसम्" इति । मौलादी-नामनृतवादित्वे तमेव दण्डं स एवाह "मौलवृद्धा-दयश्चान्ये दण्डनीयाः पृथक् पृथक् । विनेयाः प्रथ-मेनैव साहसेनानृते स्थिताः" इति । आदिपदेन गोपशाकुनिकादिवनगोचराणां ग्रहणम् । दण्डनीयाः मिथ्यावादित्वेन दण्डयितव्याः मौलवृद्धादयः पृथक् पृथक् प्रथमेन साहसेन विनेया दण्ड्या इत्यर्थः ।

त्येवं व्याख्येयम्। तेन न पूर्ववचनविरोधः क्षेत्रग्रहणं गृहाद्युपलक्षणार्थम्। अज्ञानात् क्षेत्रादिहरणेऽधम एव यथाह मनुः "गृहं तडागमारामं क्षेत्रं वा भीषया हरन्। शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः"। बृहस्पतिः "स्थापितां चैव मर्यादामुभयोः पार्श्वयोस्तथा। अतिक्रामन्ति ये पापास्ते दण्ड्या द्विगुणं दमम्"। अपह्नूयमानक्षेत्रादिभूयस्त्वे उत्तमोऽपि दण्डः प्रयोक्तव्यः "वधः सर्वस्वहरणं पुरान्निर्वासनाङ्कने। तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहस" इति स्मरणात्। यत्तु मनुर्लिखिताभ्याम् सीमातिक्रमणे दण्डाभिधानम् "सीमाव्यतिक्रमे त्वष्टशतकार्षामिति" तत् अन्यपूर्वसीमातिक्रमणविषयम्। सीमायाश्चिह्नभूतपादपादिफलं नैवैकेन ग्राह्यं यथाह कात्यायनः "सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः। फलं पुष्पञ्च सामान्यं क्षेत्रस्वामिषु निर्दिशेत्। सामान्यं साधारणं क्षेत्रयोः स्वामिषु क्षेत्रस्वामिषु। तथा चान्यतरेणैव तद्वृक्षीयफलादिग्रहणे तदनुरूपेण दण्ड इति ध्वनितम्। यदा पुनरन्यक्षेत्रे वृक्षादिस्तच्छाखाऽन्यक्षेत्रे शाखाः प्रसृताः तत्र कः स्वामीत्याकाङ्क्षायां स एवाह "अन्य क्षेत्रे तु जातानां शाखा यत्रान्यसंस्थिताः। स्वामिनं तं विजानीयाद् यस्य क्षेत्रे तु संश्रिताः। संश्रिताः प्ररूढाः। परक्षेत्रे प्रार्थनया क्रियमाणं सेतुकूपादिकं क्षेत्रस्वामिना न निषेद्धव्यं तथाह याज्ञवल्क्यः "न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः। परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः"। अल्पबाधः अल्पपीडाकरः कल्याणकारको बहूपकारकः। अयमर्थः परक्षेत्रवर्त्ती बाध्यां विनिष्पाद्यो यः सेतुः क्षेत्रमध्यवर्त्तितया बहुपीडाकरस्तदा दिक्षु संचि-च्छितवीप्रवर्त्तितया अल्पोपकारको वा तदा निषेद्धव्य इति दर्शितम्। तत्र नारदोऽपि "परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते। महागुणोऽल्पदोषश्चेद् वृद्धिरिष्टा क्षये सति" क्षये जलस्य क्षये सत्यपि वृद्धिरिष्टा अतो महागुणः स्वल्पोऽपि उपकारकरोऽल्पदोषश्चेत्तदा न प्रतिषेद्धव्य इत्यर्थः। अन्यक्षेत्रे सेतुकूपादिप्रवर्त्तनं तत्स्वाम्यनुज्ञां विना न कर्त्तव्यमित्याह याज्ञवल्क्यः "स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत्। उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः"। यस्तु क्षेत्रस्वामिनं तद्वंश्यं तदभावे राजानं वा प्राप्य मर्यादानेन वा तत्क्षेत्रे सेत्वादिकं करोति स सेत्वाद्युत्पन्नफलोपभोगं दृष्टमदृष्टं वा न लभते किन्तु तत्स्वाम्येव तल्लभते तदभावे राजा। अतस्तदाज्ञां गृहीत्वा सेत्वादिकं कर्त्तव्यमित्यर्थः। जीर्णानाम् अन्यदीयसेत्वादीनाम् उद्धारोऽपि तत्स्वाम्याद्यनुज्ञां गृहीत्वा कार्य्य इत्याह नारदः "पूर्वप्रवृत्तमुत्सन्नमपृष्ट्वा स्वामिनन्तु यः। सेतुं प्रवर्त्तयेद् यस्तु न स तत्फलभाग्भवेत्। मृते तु स्वामिनि पुनस्तद्वंश्ये वापि मानवे। राजानमामन्त्र्य ततः कुर्य्यात् सेतुप्रवर्त्तनम्। अतोऽन्यथा क्लेशभाक् स्यान्मृगव्याधनिदर्शनात्"। मृगव्याधदृष्टान्तः स्फुटीकृतस्तेनैव, "इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति"। तस्य मृगव्याधस्य। कात्यायनोऽपि "अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः। गृहोद्यानतडागानां संस्कर्त्ता लभते न तु। देयं स्वामिनि चायाते तन्निवेद्य नृपे यदि। कथावेद्य प्रयुक्तस्तु तद्धतं लभते व्ययम्"। नृपे अनावेद्य कृतं यत्तडागादिसंस्कारार्थं व्ययमात् स्वामिनि प्रवासान्तरादागते तेन देयमपि न प्राप्नोति। नृपे निवेद्य संस्करणे तदर्थं व्ययं प्राप्नोति। फलन्तु स्वाम्यनुमत्यभावे न प्राप्नोतीत्यर्थः। यः परक्षेत्रमकृष्टमिदं कृषामीत्यङ्गीकृत्य पश्चाद् न करोति नाप्यन्येन कर्षयति तं प्रत्याह याज्ञवल्क्यः "फालाहतमपि क्षेत्रं यो न कुर्य्यान्न कारयेत्। स प्रदाप्यः कृष्टफलं क्षेत्रमन्येन कारयेत्"। यद्यपि फालाहतं किञ्चित् कर्षणेन विदारितं सस्यस्योत्पादयोग्यं न भवति तथाप्यकृष्टक्षेत्रस्य फलं यावत् तत्क्षेत्रोत्पत्तियोग्यं सामन्तादिकल्पितं तावदसौ स्वामिने दापनीयः तच्च पूर्वकर्षकादाच्छिद्याऽपरेण कारयेत्। व्यासोऽपि "क्षेत्रं गृहीत्वा यः कश्चिन्न कुर्य्यान्न कारयेत्। स्वामिने स मदं दाप्यो राज्ञे दण्डश्च तत्समम्"। मदं क्षेत्रफलम्। तत्समं तदनुरूपमित्यर्थः। स्वामिग्राह्यं क्षेत्रफलमपि कियदित्याकाङ्क्षायां स एवाह "चिरावसन्ने दशमं क्षयनाशे तथाष्टकम्। सुसंस्कृतेऽपि षष्ठं स्यात् परिकल्प्यं यथास्थिति" इति। "चिरावसन्ने चिरकालमकृष्टे क्षेत्रेऽकृष्टमिदं कृषामीत्यङ्गीकृत्योपेक्षिते सामन्तैर्यावत्स्थिति क्षेत्रस्थित्यनुसारेणैतावदत्रोत्पन्नं योग्यमिति परिकल्प्य क्षेत्रस्वामिने तस्य दशमभागं, क्षयनाशे ईषच्चिरावसन्ने स्वीकृत्यानुपेक्षिते तु अष्टमं भागं सुसंस्कृते तूपेक्षित षष्ठं भागं दाप्य इत्यर्थः। यस्तु क्षेत्रस्वामिनः

त्मनो नित्यत्वे तत्सम्बन्धादिरूपोऽविशेषप्रसङ्गात् पुरुषप्रयत्नं विना तस्य सत्त्वादपुरुषार्थत्वाच्च अविद्यानिवृत्तिः प्रयत्नसाध्येति चेत् अविद्या यदि मिथ्याज्ञानमर्थान्तरं वा उभयथापि सुखदुःखाभावसाधनेतरत्वेन तन्निवृत्तेरपुरुषार्थत्वात्"।

तत्र दुःखाभावस्यैव परमप्रयोजनत्वं न सुखस्येति व्यवस्थापितं यथा

"ननु दुःखाभावो न पुरुषार्थः सुखस्यापि कामनातुल्यागमकत्वात् न च बहुतरदुःखानुविद्धतया सुखस्यापि प्रेक्षावद्धेयत्वम् आवश्यकत्वेन दुःखस्येव हेयत्वात् सुखस्य निरुपधीच्छाविषयत्वात् अन्यथा दुःखाननुविद्धतया तथात्वेन पुरुषार्थत्वविरोधादिति चेत् सुखमनुद्दिश्यापि दुःखभीरूणां दुःखाभावदशायां सुखमस्तीत्युद्दिश्य दुःखाभावार्थं प्रवृत्तेः वैपरीत्यस्यापि सत्त्वे सुखस्याप्यपुरुषार्थतापत्तेः अतो दुःखाभावदशायां सुखं नास्तीति ज्ञानं न दुःखाभावार्थिप्रवृत्तिप्रतिबन्धकं तथाऽविवेकिनः सुखमात्रलिप्सवो बहुतरदुःखानुविद्धमपि सुखमुद्दिश्य "शिरो मदीयं यदि याति यात्विति, मत्वा परदारेष्वपि प्रवर्त्तमानाः "वरं वृन्दावनेऽरण्ये" इत्यादि वदन्तोऽनात्माधिकारिणः। ते च विवेकिनोऽपि तु संसारापारकान्तारे कियन्ति दुःखदुर्दिनानि कियती सुखखद्योतिका कुपितफणिफणामण्डलच्छायाप्रतिममिदमिति मन्यमानाः सुखमपि हातुमिच्छन्ति तेऽत्राधिकारिणः। न च भोगार्थिनामप्रवृत्तौ पुरुषार्थता हीयते कदाचिदप्रवृत्तावपि चिकित्सादेः पुरुषार्थत्वात्। अथवा "दुःखाभावोऽपि नावेद्यः पुरुषार्थतयेष्यते। न हि मूर्च्छाद्यवस्थार्थं प्रवृत्तो दृश्यते सुधीः, पुरुषार्थत्वं सुखवज्ज्ञायमानं नियमात् न च मुक्तिज्ञानं सम्भवतीति न हि दुःखाभावं जानीयामित्युद्दिश्य प्रवृत्तिः किन्तु दुःखं मे मा भूदित्युद्दिश्य अतो दुःखाभाव एव पुरुषार्थः तस्य ज्ञानन्तु तदाकारबोधेन न तु पुरुषार्थतोपयोगि सुखी स्यामित्युद्दिश्य प्रवर्त्तते न तु सुखं जानीयामिति सुखमेव तथास्तु न तदवगमः तस्याभावप्रयुक्तत्वे नान्यथासिद्धत्वात् गौरवाच्च। किञ्च बहुतरदुःखसंवलितकलेवराद् दुःखाभावमुद्दिश्य मरणेऽपि प्रवर्त्तमाना दृश्यन्ते न च मरणे तस्य ज्ञानमस्ति न ते विवेकिन इति चेन्न पुरुषार्थत्वे विवेकानुपयोगात्"। ~

तत्र सुखं चित्तधर्मोऽपि अध्यस्ततया प्रतिबिम्बरूपेण वा आत्मनि वर्त्तते इति सांख्या वेदान्तिनश्च। आत्मगुण इति नैयायिकाः। ८दुःखाभावे। भारवाहकस्य भारापगमे सुखी संवृत्तोऽहमिति प्रत्ययस्य दुःखाभावविषयत्वोपगमात्।

**सुखकरी** स्त्री सुखं करोति कृ-अच् गुण् च ङीप्। १जीवन्तीवृक्षे राजनि०। २सुखकारके त्रि०।

**सुखकुण** पु० सुख क-सुन्। प्रियङ्गुवृक्षे त्रिका०।

**सुखचार** पु० ६त० सुखकारक चारो यस्य। उत्तमाश्वे शब्दमा०

**सुखजात** त्रि० जातं सुखमस्य परनिपातः। जातानन्दे "सुखजातः सुरापीत" भट्टिः।

**सुखद** पु० सुखं ददाति दा-क। १विष्णौ विष्णुस०। "विंशत्यक्षरसंयुक्तो ध्रुवः सुखदसंज्ञकः। शृङ्गारवीरयोर्ज्ञेयो गुरुणैकेन भण्यते" संगी०उक्ते २ध्रुवभेदे। ३सुखदातरि त्रि० ४स्वर्गवेश्यायां स्त्री शब्दरत्ना०। ५शमीवृक्षे स्त्री राजनि०

**सुखदोह्या** स्त्री सुखेन दोह्या दुह-ण्यत्। क्लेशं विना दोहनीयायां गवि हेमच०। सुखसंदोह्याप्यत्र।

**सुखभाज्** त्रि० सुखं भजते भज-ण्वि। सुखयुक्ते। [राजनि०

**सुखमोदा** स्त्री सुखः सुखकरो मोदो यस्याः। शल्लकीवृक्षे

**सुखरात्रि** स्त्री सुखा सुखकरी रात्रिर्यस्याम्। आश्विनामावास्यायाम् दीपान्विताभावास्यायाम्। उल्काशब्दे ११७१ पृ० दृश्यम्।

**सुखरात्रिका** स्त्री सुखा रात्रिर्यस्याः ५ब० कप्। दीपान्वितामावास्यायां पूज्यायां लक्ष्म्याम् दीपान्वितामुपक्रम्य "पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका" ज्योतिर्वचनम्। स्त्रभावे सुखरात्रिरप्यत्र "लक्ष्मीर्या भूतले देवि! सुखरात्रि! नमोऽस्तु ते" इति दीपान्वितामावस्यायां लक्ष्मीपूजनमन्त्रः।

**सुखवर्चक** पु० सुखं वर्चयति उद्दीपयति वर्च-णिच्-ण्वुल्। सर्जिकाक्षारे (साजिमाटी) अमरः।

**सुखवर्चस्** पु० सुखं सुखकरं वर्चो यस्य। सर्जिकाक्षारे (सांजिमाटि) राजनि०। [फलप्रधानवृक्षे रत्नमा०।

**सुखवास** पु० सुखः सुखकरो वासो गन्धो यस्य। (तरमुज)

**सुखवासन** पु० सुखं सुखकरं वासनं गन्धो यस्य। सुखवासनगन्धद्रव्ये शब्दर०। [सुखकरावासे।

**सुखाधार** पु० सुखानामाधारः। स्वर्गे शब्दर०। स्वर्गे०।

**सुखायत** पु० सुखेनायम्यते आ+यम-क्त। विनीताश्वे शब्दमा०

**सुखायन** पु० सुखेनायतेऽनेन अय-ल्युट्। सुविनीताश्वे शब्दमा०

लतायाम् ६अपराजितायां ७आरनीलवृक्षे च स्त्री राजनि०
**सुनीलक** पु० सुनील इव कायति कै-क । १नीलभृङ्गराजे २नीलासने ३नीलरत्ने च राजनि० ।
**सुन्द** पु० १दैत्यभेदे उपसुन्दशब्दे १२२७ पृ०दृश्यम् ।२वानरभेदे रामा०कि०४७स०। ३राक्षसभेदे रामा०बा०२०स० ।
**सुन्दर** त्रि० सु+उन्द–अरन्–पृष०। १मनोहरे अमरः स्त्रियां ङीप् सा च २उत्तमस्त्रियां ३त्रिपुरसुन्दर्यां देव्याम् । ४कामदेवे ५वृक्षभेदे च (सुन्दारि) पु० मेदि० ६योगिनीभेदे स्त्री तन्त्रम् "अयुजोर्यदि सौ जगौ, युजोः । सभरा लगौ यदि सुन्दरी तदा" छन्दो० उक्ते ७अर्द्धसमे वृत्तभेदे स्त्री । छ०र० तु इयं वियोगिनीत्युक्ता ।
**सुपक्व** पु० सुन्दरं पच्यते सु+पच–क्त तस्य वः । १शोभनाम्रे शब्दच० । २सुन्दरपरिणते त्रि० । [पाके दृश्यमाने ।
**सुपच** त्रि०सुखं यथा सुखेन पच्यते पच–कर्मणि खल् । सुसु-
**सुपत्र** न० सुष्ठु पत्त्रमस्य । १तेजपत्रे शब्दच० २आदित्यपत्रे पु० । ३पर्णिकाशाकवृक्षे राजनि० ४सुन्दरपत्त्रयुक्ते त्रि०। ५रुद्रजटायां ६शतावर्य्यां ७पालक्यां ८शम्यां ९गाङ्गपत्र्यां च स्त्री राजनि० ।
**सुपत्त्रक** पु० सुष्ठु पत्त्रं पक्षोऽस्य कप् । १शोभाञ्जनवृक्षे २अलकायां स्त्री राजनि० अत इत्त्वम् ।
**सुपथ** पु०सुष्ठु पन्थाः प्रा०स०वा अच्समा०। १सत्पथे २सदाचारे च सुष्ठु पन्था यत्र अच्समा०। ३सुन्दरपथयुक्ते त्रि०।
**सुपथिन्** पु० प्रा० स० वा समासान्ताभावः । सत्पथे शब्दर० सुपन्थाः । [त्रि० ।
**सुपथ्या** स्त्री प्रा०स० । १श्वेतचिल्लीवृक्षे राजनि० २शोभनपथ्ये
**सुपद्मा** स्त्री सुष्ठु पद्यते पद–म ।१वचायाम् शब्दच०। प्रा०स०। २पद्मिन्यां स्त्री ।
**सुपर्ण** पु० सुष्ठु पर्णं पत्त्रं पक्षो वा यस्य । १गरुडे अमरः २सुन्दरपर्णयुक्ते त्रि० ३स्वर्णचूडखगे पुंस्त्री० स्त्रियां ङीष् ।४ऋतमालवृक्षे पु०मेदि०५नागकेशरे पु०त्रिका०। अप् सुपर्णक । आरग्वधे वृक्षे सप्तच्छदवृक्षे जटा० गरुडे च हेमच० । मांसपर्ण्यां रेणुकायां पलाश्यां स्वर्णजीवन्त्यां वाकुच्यां स्त्री कापि अत इत्त्वम् ।
**सुपर्णकेतु** पु० सुपर्णो गरुडः केतुर्यस्य । विष्णौ जटा० ।
**सुपर्णी** स्त्री सुष्ठु पर्णान्यस्याः गौरा०ङीष् । १पद्मिन्यां सुपर्णो गरुडोऽस्त्यस्या अच् गौरा०ङीष् ।२गरुडमातरि च मेदि०
**सुपर्णीतनय** पु० ६त० । गरुडे जटा० ।
**सुपर्वन्** पु० सुष्ठु पर्व यस्य । १देवे अमरः २वाणे ३वंशे ४धूमे च मेदि० । प्रा०स० । ५सुन्दरे पर्वणि न० । [राजनि०।
**सुपर्वा** स्त्री सुष्ठु पर्व अस्त्यस्याः अच् टाप् । श्वेतदूर्वायाम्
**सुपाक्य** न० सुपाकाय हितम् यत् । १विड्लवणे राजनि० ।
**सुपार्श्व** पु० सुष्ठु पार्श्वोऽस्य । १प्लक्षवृक्षे (पाकुड) वृक्षभेदे २सम्पातिपुत्रे विहगभेदे च राजनि० ३सुन्दरपार्श्वान्विते त्रि० ।४मेरोरुत्तरस्थविष्कम्भपर्वते पु०धान्यशैलशब्दे ३८८२ पृ०दृश्यम्। संज्ञायां कन् । १गर्दभाण्डवृक्षे पु०अमरः ।
**सुपिङ्गला** स्त्री प्रा०स०। १ज्योतिष्मत्यां २जीवन्त्याम् राजनि०
**सुपीत** न० प्रा० स०। १गर्जरे (गाँजर) राजनि०। २सुन्दरपीतवर्णे पु० ३तद्वति त्रि० । [राजनि० ।
**सुपुट** पु० सुष्ठु पुटमस्य । १कोलकन्दे २विष्णुकन्दे च
**सुपुत्रिका** स्त्री सुष्ठु पुत्र इव पक्षः अस्याः कप् अत इत्त्वम् । जतुकायाम् (तेलापोका) राजनि० । [राजनि०।
**सुपुष्करा** स्त्री सुष्ठु पुष्करमस्याः अच् । स्थलपद्मिन्याम्
**सुपुष्प** न० प्रा० स० । १लवङ्गकुसुमे शब्दच० २प्रपौण्डरीके ३आहुल्ये ४तूदे राजनि० ५स्त्रीणां रजसि च "सुपुष्पैराकीर्णं कुसुमधनुषो मन्दिरमहो" भर्तृ०शतकम् । सुष्ठु पुष्पमस्य कप् । (पारिजातमन्दार) वृक्षे । पाटलायां स्त्री राजनि० अत इत्त्वम् ।
**सुपुष्पी** स्त्री सुष्ठु पुष्पमस्याः ङीष् । १श्वेतापराजितायां २शतपुष्पायाम् ३मिश्रेयायां ४द्रोणपुष्प्यां ५जीर्णफञ्ज्यां राजनि० । ६कदल्यां शब्दच० ।
**सुपूर** पु० सुष्ठु पूर्य्यते सु+पूर–क । बीजपूरे राजनि० ।
**सुपूरक** पु० सुष्ठु पूरयति पूर–ण्वुल् । बकवृक्षे रत्नमा० ।
**सुप्** स्त्री व्याकरणपरिभाषिते सुप्रभृतौ सुप्पर्य्यन्ते प्रत्ययभेदे ।
**सुप्त** न० स्वप–भावे क्त संप्रसारणम् । १निद्रायां २शयने च ३सुप्तौ हेमच० कर्त्तरि क्त । ४निद्रिते त्रि० । "बुभुक्षितस्तृषितः कामी विद्यार्थी भाण्डागारिकः । भाण्डारी च प्रवासी च सप्त सुप्तान् प्रबोधयेत् । अहिकं भ्रमरः सर्पो राजा वै बालकस्तथा । परश्वाऽपि च मूर्खश्च सप्त सुप्तान् न बोधयेत्" नीतिसारः ।
**सुप्तघातक** त्रि० ६त० । हिंस्रे त्रिका० ।
**सुप्तजन** पु० सुप्तो जनो यत्र । १अर्द्धरात्रे जटा० । कर्म० । २निद्रिते लोके च ।
**सुप्ति** स्त्री स्वप–क्तिन् । १शयने २निद्रायाम् ३स्वप्ने च "करोति मर्त्यं दर्शनदुर्लभातिथिम् नैष०। ४स्पर्शतायां ५विश्वासे मेदि० ।
**सुप्रतिभा** स्त्री सुष्ठु प्रतिभा यस्याः ब०व० । १सुरायाम् प्रा०

व०, । २छन्दसायां वृत्तौ । वृ० । ३तद्वति त्रि० ।

**सुप्रतिष्ठा** स्त्री प्रा०स० । १प्रतिष्ठायाम् । वृ० २तद्वति त्रि० । ३पञ्चाक्षरपादके छन्दोभेदे स्त्री । "प्रतिष्ठाख्या सुपूर्विका" वृ०र० । [राजनि० । २प्रतिष्ठिते त्रि० ।

**सुप्रतिष्ठित** पु० सु+प्रति+स्था-क्त प्रत्यये । १उडुम्बरवृक्षे

**सुप्रतीक** पु० सुष्ठु प्रतीकं यस्य । १ईशानकोणस्थिते दिग्गजे अमरः । २शिवे ३कामे च ४सुन्दराङ्गे त्रि० । प्रा०स० । ५सुन्दरे अङ्गे न० ।

**सुप्रभा** स्त्री सुष्ठु प्रभा यस्याः । १अग्निजिह्वाभेदे तन्त्र० २वाकुच्यां राजनि० । ३सुन्दरदीप्तियुते त्रि० । प्रा० स० । ४शोभनायां दीप्तौ स्त्री ५सुप्रभकवधे हेमच० । ६सरस्वतीनदीभेदे स्त्री सरस्वतीशब्दे ५२४९ पृ० दृश्यम् ।

**सुप्रभात** न० प्रा० स० । १शुभसूचकप्रातःकाले २तत्र पाठ्यमाङ्गल्यवाक्ये च । [व्यासपाटवयुक्ते हेमच० ।

**सुप्रयुक्तशर** पु० सुप्रयुक्तः शरो येन । बीभत्सौ शब्दमाला०

**सुप्रयोगविशिख** पु० सुष्ठु प्रयोगो निक्षेपो यस्य तादृशो विशिखो यस्य । बीभत्सौ शब्दमालायामप्रयोगताल्पपाटवयुक्ते भरतः ।

**सुप्रलाप** पु० सु+प्र+लप-घञ् । सुवचने अमरः ।

**सुप्रसन्न** पु० सु+प्र+सद-क्त । १कुबेरे शब्दच० । २अतिप्रसादयुक्ते त्रि० । संज्ञायां कन् । कृष्णार्जके पु० राजनि० ।

**सुप्रसरा** स्त्री सु+प्र+सृ-अच् । १प्रसारिण्यां लतायाम् राजनि० । २विस्तारयुक्ते त्रि० ।

**सुप्रसाद** पु० सुखेनानायासेन प्रसादो यस्य । १शिवे शिवका० प्रा०स० । २सुन्दरप्रसन्नतायाम् ।

**सुफल** पु० सुष्ठु फलमस्य । १दाडिमे २बदरे ३मुद्गे ४कर्णिकारे राजनि० ५कपित्थे शब्दच० ६सुन्दरफलयुते त्रि० । ७इन्द्रवारुण्यां ८कुष्माण्ड्यां ९कदल्यां १०कपिलद्राक्षायां ११काश्मर्याञ्च स्त्री राजनि० ।

**सुफेन** न० प्रा० स० । समुद्रफेने राजनि० ।

**सुबन्ध** पु० सुखेन बध्यतेऽसौ बन्ध-घञ् । तिलवृक्षे शब्दच० ।

**सुभग** पु० सुष्ठु भगः भाग्यमाहात्म्यादिः यस्य । १चम्पके २अशोके ३रक्ताम्लाने ४टङ्कणे च राजनि० ५सुदण्डे ६शिवे मेदि० । ७शोभनैश्वर्ययुक्ते च त्रि० । ८कैवर्तीमुस्तायां ९शालपर्ण्याम् १०हरिद्रायां ११नीलदूर्वायां १२तुलस्यां १३प्रियङ्गौ १४कस्तूर्यां १५स्वर्णकदल्यां स्त्री राजनि० । १६वनमल्लिकायां शब्दर० १७पतिप्रियायां स्त्रियां च स्त्री । सुभगाया अपत्यं ढक् इनङ् च । सौभागिनेय तदपत्ये पुंस्त्री०

**सुभगम्भावुक** त्रि० असुभगः सुभगो भवति भू-च्व्यर्थे खुकञ् मुम् च । प्रियतया भव्ये सि०कौ० । [अमरः ।

**सुभगासुत** पु० सुभगायाः पतिप्रियायाः सुतः । सौभागिनेये

**सुभङ्ग** पु० सुखेनानायासेन भज्यते निःसारत्वात् सु+भञ्ज-कर्मणि घञ् । नारिकेलवृक्षे जटा० ।

**सुभट** पु० प्रा०स० । सुन्दरयोद्धरि ।

**सुभद्र** पु० सुष्ठु भद्रं यस्मात् । १विष्णौ शब्दमा० । वृ० । २राजभेदे हेमच० ३शोभनमङ्गलयुते त्रि० । ४व्यामालतायाम् स्त्री शब्दच० । ५श्रीकृष्णस्य भगिन्याञ्च स्त्री । कप् । सुभद्रक देवरथे शब्दर० बिल्ववृक्षे च पु० शब्दच० ।

**सुभद्राणी** स्त्री सुभद्रं सुमङ्गलमानयति आ+नी-ड गौरा० ङीष् णत्वम् । त्रायन्तीलतायाम् रत्नमा० ।

**सुभद्रेय** पु० ढक् । अर्जुने हेमच० । सुभद्रापत्यादयोऽप्यत्र ।

**सुभाञ्जन** पु० सुष्ठु भाति भा-क कर्म० । शोभाञ्जनवृक्षे हिकुपकोषः । [प्रचुरान्नयुते देशकालादौ ।

**सुभिक्ष** त्रि० सुखेन लभ्या भिक्षा यत्र प्रचुरान्नवत्त्वात् ।

**सुभिक्षा** स्त्री सुष्ठु भिक्ष्यते याच्यतेऽसौ सु+भिक्ष-अ । धातृपुष्पिकायाम् (धाइफुल) शब्दर० ।

**सुभीरक** पु० सुष्ठु भीः सुभीः तामीरयति निरस्यति ईर-ण्वुल् । पलाशवृक्षे जटा० ।

**सुभूति** पु० सुष्ठु भवति सु+भू-क्तिच् । १पक्षिभेदे प्रा०स० । २सुन्दरविभूतौ स्त्री । वृ० । ३तद्वति त्रि०बहु । ४तित्तिरपक्षिणि पु० राजनि० । [चक्रवर्तिभेदे हेमच० ।

**सुभूम** पु० सुष्ठु भूमिरस्य अच्समा० । कार्त्तवीर्ये जिनानां

**सुभय** न० सुष्ठु भयम् । १अतिभये दाक्षे । २तद्वति त्रि० ।

**सुभ्रु(भ्रू)** स्त्री सुष्ठु भ्रुर्यस्याः वा ऊङ् । १नार्याम् २सुन्दरभ्रुयुक्ते त्रि० ।

**सुम** न० सुष्ठु मीयतेऽदः सु-मा-घञर्थे क । १पुष्पे भरतः । सु-मक् । २चन्द्रे ३कर्पूरे ४गगने च पु० उणा० ।

**सुमङ्गला** स्त्री सुष्ठु मङ्गलं यस्याः ५ब० । (माकड़हाता) इति रत्नमा० । २सुमङ्गलयुक्ते त्रि० स्त्रियां ङीप् । "सुमङ्गलीरियं वधूः" इति श्रुतिः ।

**सुमति** त्रि० सुष्ठु मतिर्यस्य । १शोभनबुद्धियुते २कल्किमातरि विष्णुयशसः पत्न्यां स्त्री । ३अर्हन्मातरि च स्त्री हेमच० । प्रा०स० । ४सुन्दरायां बुद्धौ स्त्री । [इत्ये त्रिका० ।

**सुमदन** पु० सुष्ठु मदयति कोकिलान् मद-णिच्-ल्यु । आम्र-

**सुमदात्मजा** स्त्री सुमद आत्मजा यस्याः । अप्सरःसु त्रिका०

**सुमधुर** न० प्रा०स० । १अत्यन्तप्रियवाक्ये अमरः २सान्त्व-

शाके च । २अतिमधुररसे ३तद्युक्ते त्रि० ४जीवशाके पु० राजनि० । [शब्दमा० ५मनोहरे त्रि० शब्दर०।

**सुमन** पु० सुष्ठु मन्यते मन-अच् ।१गोधूमे अमरः ।२धुस्तूरे

**सुमनःपत्त्रिका** स्त्री सुमनसः जात्या इव पत्त्रमस्याः कप् अत इत्वम् । जातीपत्त्रिकायाम् राजनि० ।

**सुमनःफल** पु० सुष्ठु मनो यस्मात् तादृक् फलमस्य । १क-पित्थे शब्दच० । ६त० । २जातीफले न० ।

**सुमनस्** न० सुष्ठु मनो यस्मात् यस्य वा । १पुष्पे अमरः । ब०व०इत्यन्ये "किं सेव्यते सुमनसां मनसापि गन्धः" इति रघुगङ्गाधरः । २मालत्यां स्त्री अमरः ३प्रसन्नचित्तयुक्ते त्रि० । प्रा० स० । ४प्रशस्ते मनसि न० । ६ब० । ५देवे पु०अमरः ।६पण्डिते मेदि० ७पूतिकरञ्जे शब्दमा० ८निम्बे ९नक्तमालकरञ्जे १०गोधूमे ११शतपत्र्यां स्त्री राजनि० ।

**सुमना** स्त्री सुष्ठु मन्यते मन-अच् । मालतीवृक्षे शब्दर० ।

**सुमनोरजस्** न० ६त० । पुष्पजे परागे अमरः ।

**सुमन्तु** पु० सु+मन+तुन् । १अथर्ववेदाध्यायिनि व्यासशिष्ये मुनिभेदे "अथर्वाङ्गिरसामासीत् सुमन्तुर्दारुणो मुनिः" भाग०१।४अ०। अतिशयितो मन्तुरपराधोऽस्य ।२अत्यन्ताप-राधयुते त्रि० । ३दशरथसारथौ रामा० । ४कश्चिद्देवस्य ज्योतिष्मातरि कल्किपु० ।

**सुमित्रा** स्त्री १लक्ष्मणमातरि दशरथपत्नीभेदे । २सुन्दर-मित्रयुक्ते त्रि० । ३यदुभेदे पु० हेमच०। ४सुरथराजपुत्रे नृपभेदे विष्णुपु० । ४अं०२२अ० ।

**सुमुख** पु० सुष्ठु मुखमस्मात् यस्य वा । १शाकभेदे २गणेशे ३नागभेदे ४गरुडपुत्रभेदे च शब्दर०। ६वितानके ७बर्बरे वनबर्बरिकायाञ्च राजनि० । ८सुप्रसन्नवदने १०मनोहरे च त्रि० । स्त्रियां ङीप् । ११नखक्षतभेदे शब्दर० ।

**सुमुष्टि** पु० सु+मुष-कर्त्तरि क्तिच् । विषमुष्टिवृक्षे राजनि०।

**सुमूल** पु०सुष्ठु मूलमस्य । १श्वेतशोभाञ्जने राजनि०।२शाल-पर्ण्यां ३पृश्निपर्ण्यां च स्त्री राजनि० टाप् । ४सुन्दर-मूलयुक्ते त्रि० । संज्ञायां कन् । गर्जरे न० राजनि० ।

**सुमेखल** पु० सुष्ठु मेखला यस्मात् ५ब० । १मुञ्जतृणे राजनि० ६ब० । २सुन्दरमेखलान्विते त्रि० ।

**सुमेधस्** स्त्री सुष्ठु मेधा अस्याः ५ब०असिच्समा०। १ज्यो-तिष्मत्यां लतायाम् । ६ब०। २सुन्दरमेधायुक्ते त्रि०मेदि०।

**सुमेरु** पु० प्रा० स० । १पर्वतभेदे अमरः । जम्बुद्वीपशब्दे ३०८१ पृ० दृश्यम् । २जपमालास्थितोच्चगुटिकायाम् तन्त्रम् ।

**सुम्पुलुण्ड** पु० कर्पूरे शब्दच० । [शवाहिनि पु० श०च० ।

**सुम्भ(म्ब)** पु० सुम्भ-अच् पृषो० । १देशभेदे शब्दर० २तद्दे-

**सुयामुन** पु० यमुनाया इदम् सुष्ठु यामुनं गिरित्वेनास्त्यस्य अच् । १विष्णौ २नृपराजे ३प्रासादविशेषे ४पर्वतभेदे हेमच० । ५मेघभेदे च मेदि० ।

**सुयोधन** पु० सुखेन युध्यतेऽसौ सु+युध-युच् । धृतराष्ट्र-राजपुत्रभेदे दुर्योधने त्रिका०। [२योद्धरि ३पण्डिते च।

**सुर** पु० सुष्ठु राति ददात्यभीष्टं सु+रा-क । १देवे अमरः ।

**सुरलता** स्त्री ६त० । १गुडूच्याम् राजनि० २देवनिर्मिते त्रि०

**सुरक्तक** पु० सुरक्त इव कायति कै-क । १कोषाम्रे २स्वर्ण-गैरिके च राजनि० ।

**सुरगुरु** पु० ६त० । बृहस्पतौ त्रिका० ।

**सुरग्रामणी** पु० सुराणां ग्रामणीः नेता । इन्द्रे त्रिका० ।

**सुरङ्ग** न० सुष्ठु रङ्गो यस्मात् ५ब० । १हिङ्गुले २पत्ताङ्गे (वर्णकमादि)भा०प्र०।२नागरङ्गे ३वर्णभेदे (सिँध) च पु० राजनि० । [राजनि०।

**सुरङ्गधातु** पु० सुष्ठु रङ्गो रञ्जनं यस्मात् ५ब० कर्म०। गैरिके

**सुरङ्गा** स्त्री सु-रञ्ज-घञ् नि० (सिँध) सन्धौ जटा० । २कैवर्त्तिकायाम् राजनि० ।

**सुरङ्गिका** स्त्री सुष्ठु रङ्गो रञ्जनं यस्याः ५ब० कप् अत इत्वम् । मूर्वायाम् राजनि० ।

**सुरङ्गी** स्त्री सुष्ठु रङ्गो यस्याः ५ब० गौरा० ङीष् । १काक-नासायाम् राजनि० । २रक्तशोभाञ्जने रत्नमा० ।

**सुरज्येष्ठ** पु० ७त० । चतुर्मुखे ब्रह्मणि अमरः ।

**सुरञ्जन** पु० सुरञ्जयति सु+रञ्ज-णिच्-ल्यु । गुवाके त्रिका०

**सुरत** न० सु+रम-भावे क्त । १स्त्रीपुंसयोः अन्योन्यरूपे रमण-भेदे मेदि०। सु-रम-कर्त्तरि क्त । २अत्यन्तरते त्रि० ३द-यालौ सारसुन्दरी ।

**सुरततालो** स्त्री सुरतं तालयति तल-णिच्-अण् गौरा० ङीष् । १दूत्यां २शिरःस्रजि च मेदि० ।

**सुरता** स्त्री सुराणां समूहः भावो वा तल् ।१देवसमूहे २देवत्वे च मेदि०। सु+रम-क्त । २अत्यन्तरतायां स्त्रियां स्त्री ।

**सुरताङ्ग** पु० सुरतस्याङ्गमत्र । सुरपुन्नागे राजनि०।

**सुरतोषक** पु०६त०। १कौस्तुभमणौ शब्दर०। २देवतोषके त्रि०

**सुरथ** पु० सुष्ठु रथोऽस्य । चन्द्रवंश्ये नृपभेदे "सुरथो नाम राजाऽभूत्" देवीमा०। २सुन्दररथयुक्ते त्रि० ।

**सुरदारु** न० सुरप्रियं सुरलोकपर्य्यन्तव्याप्तं वा उच्चत्वात् दारु । देवदारुवृक्षे रत्नमा०।

राजनि०। प्रा० व०। ६खादौ रसे। ६ब०। ७सुखादु-रसयुक्ते त्रि०। ८तुलस्यां पुं स्त्री०। ९रास्नायां १०नागमातरि स्त्री मेदि०। ११मिश्रेयायां शब्दच० १२श्राम्रातकमा० १३महाशतावर्य्यां च स्त्री राजनि०। नागमाता च कश्यपपत्नीभेदः। "अदितिर्दितिर्दनुश्चैव अरिष्टा सुरसा खसा" तत्पत्नीकथने हरिवं० ३अ०। "सुरसायाः सहस्रन्तु सर्पाणाममितौजसाम्। अनेकशिरसां तात खेचराणां महात्मनाम्"। तत्राध्याये तस्या नागमातृत्वमुक्तम्। "सुरसाऽजनयन्नागान् कद्रुः पुत्रांश्च पन्नगान्" भा० आ० ६६अ०। तेनानेकशिरः नागप्रसत्वं सुरसायाः कद्र्वास्तु सर्पमातृत्वमिति भेदः।

**सुरसाष्ट** पु० सुरसाभिरष्टः व्याप्तः अश-व्याप्तौ कर्मणि क्त। "निर्गुण्डी तुलसी ब्राह्मी कटुकी कष्टकारिका। पुनर्नवेति मुनिभिः सुरसाष्टः प्रकीर्त्तितः" शब्दचन्द्रिकोक्ते द्रव्यभेदव्याप्ते औषधभेदे [शिरीषभेदे तन्त्रसा०।

**सुरसुन्दरी** स्त्री सुरप्रिया सुन्दरी। १मेनकाद्यप्सरःसु २यो-

**सुरा** स्त्री सुर-क सु-रक् वा। १मद्ये २चषके च मेदि०। सुरा च मद्यभेदः मद्यशब्दे ४७२६ पृ० दृश्यम्। सौत्रामणीशब्दे वैदिककार्ये च तदभिषवप्रकारादिर्दृश्यः।

**सुराकर** पु० सुराया आकरः। मद्योत्पत्तिस्थाने।

**सुराचार्य्य** पु० ६त०। बृहस्पतौ अमरः।

**सुराजक** पु० राजते राज-ण्वुल्। १भृङ्गराजे शब्दच०। ६ब० कप्। सुन्दरराजान्विते त्रि०।

**सुराजन्** पु० सुष्ठु पूजितो राजा न टच्समा०। १सुन्दरे राजनि० ६ब०। २सुन्दरराजस्वामिके देशे त्रि०।

**सुराजीविन्** पु० सुरां सुराक्रयादनयाजीवति आ+जीव णिनि। शौण्डिके हेमच०।

**सुराप** त्रि० सुरां पिबति पा-क। १मद्यपानकारके "सुरापः स्यात् श्यावदन्तकः" इति याज्ञ०। [इयोऽप्यत्र

**सुरापगा** स्त्री ६त०। गङ्गायाम् जटा०। सुरतरङ्गिण्या-

**सुरापान(ण)** न० सुरा पीयतेऽनेन पा-करणे ल्युट् वा णत्वम्। १प्राच्यदेशे (जाठनी) सुरायाः पानं येषां णत्वम्। २प्राच्यदेशस्थे जने पु०शब्दच०। भावे ल्युट्। ३सुरापाने न० वा णत्वम्। [सुरापाणोऽप्यत्र

**सुराभाग** पु० सुराया भागः पश्चभागः। सुराकल्के शब्दच०

**सुरामण्ड** पु० ६त०। सुराया अग्रभागे अमरः।

**सुरारि** पु० ६त०। असुरे शब्दर०।

**सुरारिहन्तृ** पु० सुराणामरिं हन्ति हन-तृच्। विष्णौ।

**सुरार्ह** न० सुरान् देवानर्हति अर्ह-अण्। हरिचन्दने राजनि०।

**सुरालय** पु० ६त०। १सुमेरुपर्वते अमरः। २स्वर्गस्थाने च।

**सुराष्ट्र** पु० ६ब०। देशभेदे (सुरट)। सोऽभिजनोऽस्य तस्य राजा वा अण्। सौराष्ट्र पित्रादिक्रमेण तद्देशवासिनि जने तन्नृपे च बहुषु अणो लुक्। तत्र भवः अण्। तद्देशभवे त्रि० स्त्रियां ङीप्।

**सुराष्ट्रज** न० स्त्री० सुराष्ट्रदेशे जायते जन-ड। १तुवरिकायाम् अमरः २कृष्णमुद्गे राजनि०। ३विषभेदे च पु० शब्दच०। ४तद्देशजातमात्रे त्रि०।

**सुराह्व** पु० सुरपूर्विका आह्वा यस्य सुरान् आह्वयति गन्धेन वा आ+ह्वे-क वा। १देवदारुवृक्षे शब्दर०। २मरुवके ३हरिद्राद्रुमे च राजनि०।

**सुरुङ्ग** पु० सु+रुज-अङ्गच् पृषो०। १शोभाञ्जनवृक्षे शब्दर०। २सुरङ्गायां (सिँध) स्त्री जटा०।

**सुरुङ्गाहि** पु० सुरुङ्गायामहिरिव। सन्धिचौरे शब्दर०।

**सुरूप** न० सुन्दरं रूपमस्य। १तूले राजनि०। २सुन्दररूपयुते त्रि० सुरूपाश्च प्रसिद्धतया कतिचित् कविक० उक्ता यथा "सुरूपाश्चैव विख्याता नकुलश्च पुरूरवाः। कामदेवश्च शाम्बश्च विख्याता आश्विनौ तथा। नलकूबरः सुरूपेषु लोकेषु तु मता इमे"। ३पण्डिते पु०जटा०। ४शालपर्ण्यां ५भार्ग्याम् च स्त्री राजनि० प्रा०स०। ६सुन्दरे रूपे न०।

**सुरूहक** पु० सु+रुह-कुन् पृषो०। गर्दभाश्वे हेमच०।

**सुरेज्य** पु० इज्यते पूज्यते यज-क्यप् ६त०। १बृहस्पतौ २तुलस्यां स्त्री राजनि०।

**सुरेन्द्र** पु० सुरेषु इन्द्र ऐश्वर्य्ययुतः। सुरराजे इन्द्रे।

**सुरेन्द्रजित्** पु० सुरेन्द्रं जितवान् जि-भूते क्विप्। गरुडे हेमा० तत्कथा भा० आ० ३२अ० दृश्या।

**सुरेभ** न० सु+रेभ-अच्। रङ्गे धातौ (रांग) त्रिका०।

**सुरेवट** पु० सुष्ठु रेवटः सु+रेव-अटन् वा। राजपूगे त्रिका०।

**सुरेश्वर** पु० सुराणामीश्वरः। १रुद्रे जटा० २इन्द्रे च। ३स्वर्गगङ्गायां स्त्री शब्दर० ४दुर्गायाम् ङीप्।

**सुरेष्ट** पु० ६त०। १शाले वृक्षे २सुरपुन्नागे ३शिवमल्लिकायाम् ४ब्राह्म्यां स्त्री राजनि०।

**सुरोत्तम** पु० सुरेषूत्तमः। १सूर्य्ये २देवश्रेष्ठे त्रि०।

**सुरोत्तर** पु० सुरेषु तत्पूजनेषूत्तरः श्रेष्ठः। चन्दने शब्दच०।

**सुरोद** पु० सुरेव उदकमस्य उदादेशः। सुरासमुद्रे जटा०।

**सुलभ** त्रि० सुखेन लभ्यते सु+लभ-कर्मणि खल्। १अना-

मेरुवामे इडा नाडी पिङ्गलया समन्विता। सुषुम्णा मातुमार्गेण ब्रह्मद्वारावधि स्थिता” योगस्वरोदयः।

**सुषेण** पु० सुष्ठु सेनयति सेनां करोति णिच् अच् णत्वम्। १करमर्दके (करमचा) अमरः २वेतसे राजनि० ३चिकित्सके वानरभेदे। ४विष्णौ च मेदि० ५निर्ष्टति स्त्री राजनि० ङीप्। स्वार्थे क अत इत्वम्। तत्रार्थनिर्ष्टति स्त्री अमरः।

**सुषोमा** स्त्री नदीभेदे भाग० ५।१९ अ०।

**सुष्ठु** अव्य० सु+स्था–कु। १प्रशंसायाम् २अतिशये अमरः। ३सत्ये च संक्षिप्तसा०।

**सुष्म** न० सु–मक् सुट् च। रज्ज्वां गौरस्वामी।

**सुसंस्कृत** त्रि० सु+सम्+कृ–क्त सुट् च। १प्रयत्नेन घृतादिनानाद्रव्येण पक्वे व्यञ्जनादौ अमरः २उत्तमसंस्कारयुते त्रि०।

**सुसत्या** स्त्री जनकराजभार्यायाम् कालिकापु० १७ अ०।

**सुसम्पद्** स्त्री प्रा०स०। १सौभाग्ये त्रिका० सुष्ठु सम्पद् यस्य। २इसम्पद्युते त्रि०। [सारयुते त्रि०।

**सुसार** पु० सुष्ठु सारोऽस्य। १रक्तखदिरे राजनि०। २अति-

**सुसारवत्** न० सुष्ठु सारोऽस्त्यस्य मतुप् मस्य वः। स्फटिके त्रिका०। [कायाम् अ० र०।

**सुसिकता** स्त्री प्रा०स०। शर्करायाम् राजनि०। २उत्तमवालु-

**सुस्थ** त्रि० सुखेन तिष्ठति सु+स्था–क। १आरोग्येण युक्ते २सुखिनि च।

**सुस्ना** पु० सु+स्नै–क्विप्। (सँदारी) दन्तीधान्यभेदे राजनि० “सुस्ना दूर्वादलो रूक्षः कषायो विशदो गुरुः” राजनि०।

**सुस्नात** त्रि०सुष्ठु स्नातः सु+स्नै–क्त। मङ्गलद्रव्येण कृतस्नाने।

**सुस्मिता** स्त्री सुष्ठु स्मितमस्य। नारीभेदे हेमच०

**सुहित** त्रि०सु+धा–क्त।१तृप्ते २विहिते च विश्वः। प्रा०स०। ३सुन्दरहिते न०। ५त०। ४अग्निजिह्वाभेदे स्त्री जटा०।

**सुहृद्** पु० सुष्ठु हृदयं यस्य निपातने हृदादेशः। १मित्रे २ज्योतिषोक्ते लग्नाच्चतुर्थस्थाने च। [२सुचित्ते न०।

**सुहृदय** त्रि०सुष्ठु हृदयं यस्य।१प्रशस्तमनस्के अमरः। प्रा०स०।

**सुहृद्बल** न० सुहृदेव बलम्। मित्ररूपे सैन्ये।

**सुहोत्र** पु०। चन्द्रवंशीयबृहद्विषुराजपुत्रे। “बृहद्विषोश्च दायादः सुहोत्रो नाम धार्मिकः। सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह” हरिवं० २० अ०।

**सू** स्त्री सू–क्विप्। १सूतौ २प्रसवे ३क्षेपे ४प्रेरणे च।

**सूक** न० सू–प्रेरणे क्विप संज्ञायां कन्। १उत्पले २वाणे ३वाते च मेदि०।

**सूकर** पुंस्त्री० सू–इत्यव्यक्तं शब्दं करोति कृ–अच्। १वराहे २कुम्भकारे ३मृगभेदे च शब्दर० स्त्रियां ङीप्। ङीबन्तः ४वराहक्रान्तायां शब्दमा०।

**सूक्त** न० सु+वच–भावे क्त। १सुन्दरकथने २विशिष्टकार्यप्रतिपादके एकदेवत्ये वेदमन्त्रसमुदाये च यथा श्रीसूक्तं पुरुषसूक्तमित्यादि। तानि च वेदे बहूनि सन्ति तत्र महादानोपयोगीनि कति चित् सूक्तानि तुलादानादि पद्धतौ ध्रुवाभिः पठ्यतानि तानि च तत्र द्रष्टव्यानि। “जप्यानि सूक्तानि तथैव चैषाम्” वह्निपुराणम्। ३सारिकायां स्त्री त्रिका०। क्तिन्। सूक्ति सुष्ठूक्तौ स्त्री।

**सूक्ष्म** न० सूच–मन् सुकच नेट्। १कैतवे २अध्यात्मपदार्थे मेदि०। ३अर्थालङ्कारभेदे अलङ्कारशब्दे ४०७पृ०दृश्यम्। ४परमात्मनि पु० शब्दर०। ५अणुपरिमाणयुते ६अल्पे च त्रि०। [जम्बूद्रुमे रत्नमा०।

**सूक्ष्मकणफला** स्त्री सूक्ष्मं कणं फलं यस्याः। मध्यम-

**सूक्ष्मतण्डुल** पु० सूक्ष्मस्तण्डुलोऽस्य। (खसखस) इति ख्याते १क्षुपे २पिप्पल्यां स्त्री राजनि०। [कृष्णाजीरके।

**सूक्ष्मदर्शिन्** त्रि० सूक्ष्मं पश्यति दृश–णिनि। अत्यन्तकुशाग्रबुद्धौ

**सूक्ष्मपत्र** पु० सूक्ष्मं पत्रमस्य। १धान्यके २वनजीरके ३देवसर्षपे ४अधुबदरे ५सुरपर्णे ६लोहितेक्षौ च राजनि०। ७वनबर्बर्यां दवासवक्षे शब्दर०। अप् अत इत्वम्। सूक्ष्मपत्रिका शतपुष्पायां शतावर्यां अधुत्राब्राह्मीं दुरालभायाम् आकाशमांस्याम स्त्री राजनि०।

**सूक्ष्मपिप्पली** स्त्री कर्म०। वनपिप्पल्याम् राजनि०।

**सूक्ष्मपुष्पी** स्त्री सूक्ष्माणि पुष्पाण्यस्याः ङीप्। यवतिक्तायाम् राजनि०। [२भूकर्बुदारे राजनि०।

**सूक्ष्मफला** स्त्री सूक्ष्मं फलमस्याः। १भूम्यामलक्याम् रत्नमा०

**सूक्ष्मबदरी** स्त्री कर्म०। भूमिबदर्याम् राजनि०।

**सूक्ष्मभूत** न० कर्म०। वेदान्तप्रसिद्धे अपञ्चीकृते भूम्यादीनां पञ्चानां भूतानां सूक्ष्मांशभेदे। [अधवे राजनि०।

**सूक्ष्ममक्षिक** पु० सूक्ष्मा मक्षिका तदाकारोऽस्त्यस्य अच्।

**सूक्ष्ममूला** स्त्री सूक्ष्मं मूलमस्याः। जयन्त्याम् राजनि०।

**सूक्ष्मवल्ली** स्त्री कर्म०। १ताम्रवल्ल्यां २जतुकायाम् राजनि०।

**सूक्ष्मवीज** पु० सूक्ष्मं वीजमस्य। (खसखस) ख्याते क्षुपे राजनि०।

**सूक्ष्मशर्करा** स्त्री कर्म०। वालुकायाम् राजनि०।

**सूक्ष्मशाख** पु० सूक्ष्मा शाखाऽस्य। जलबर्बुरे राजनि०।

**सूक्ष्मशालि** पु० कर्म०। अणुधान्ये श्यामाकादौ राजनि०।

**सूक्ष्मषट्चरण** पु० सूक्ष्मः षट्चरण इव । पक्ष्मयूके राजनि०

**सूक्ष्मा** स्त्री सूक्ष्म–मन् तुक् च नेट् टाप् । १यूथिकायां शब्दच०। २क्षुद्रैलायां ३करुणायां ४वालुकायाञ्च राजनि०।

**सूक्ष्माङ्ग** न० कर्म० । "पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम् । अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्" वेदान्तोक्ते भोगसाधने लोकद्वयगामिनि लिङ्गदेहे । सूक्ष्मशरीरादयोऽप्यत्र । सांख्यमते त्वष्टाविंशत्यष्टादशावयवत्वं यथोक्तं सां० का० तत्त्वकौ० । "सूक्ष्मास्तेषां नियता मातापितृजा निवर्त्तन्ते" का० "सूक्ष्मादेहाः परिकल्पिता" तत्त्वकौ० । "परिकल्पिता अनुमिता परलोके कर्मफलभोगः सूक्ष्मदेहं विनाऽनुपपन्नः भोगत्वात् स्थूलदेहारब्धकाशादिजनितस्य भोगस्य स्वदेहेनैव भोगवत् स्वदेहारब्धकर्मादिफलं यत्तत् स्वदेहेनैव भोग्यम् नेतरेण अन्यथा कृतहानाकृताभ्यागमप्रसङ्ग इत्यादितर्कस्तत्रानुसन्धेयः । "पूर्वोत्पन्नमस(स)क्तं नियतं महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासितं लिङ्गम्" का०।"प्रधानेनादिसर्गे प्रतिपुरुषमेकैकमुत्पादितम् । अव्या(व्या)हतं शिलायामप्यनुविशति नियतम् आ आदिसर्गात् आ च महाप्रलयादवतिष्ठते महदादिसूक्ष्मपर्यन्तं महदहङ्कारैकादशेन्द्रियपञ्चतन्मात्रपर्यन्तम् एषां समुदायः सूक्ष्मशरीरं शान्तघोरमूढैरिन्द्रियैरन्वितत्वाद्विशेषः" कौ० ।

**सूक्ष्मैला** स्त्री कर्म० । क्षुद्रैलायाम् (गुजराटी एलाच्) रत्नमा०

**सूच** पैशून्ये (चलद्रोहे) अद० चु० उभ० सक० सेट् । सूचयति ते असुसूचत् त । अनुचकत्वान्न षोपदेशः ।

**सूचक** त्रि० सूचयति अन्तर्दुष्टं दर्शयति सूच–ण्वुल् । १पिशुने अमरः अन्तर्दोषख्यापके २बोधके च । ३काके ४कुक्कुरे ५बिडाले पुंस्त्री० मेदि० स्त्रियां ङीप् । ६पिशाचे ७सिद्धगणे ८बुद्धे शब्दर० । ९नाटकप्रसिद्धे सूत्रधाराख्ये प्रधाननटे १०कथके हेमच० ११सूक्ष्मशालौ पु० राजनि० १२सीवनसाधनद्रव्ये पु० मेदि०।

**सूचन** न० सूच-भावे ल्युट् । १हिंसने २ज्ञापने च । युच् । ततः टापि पीडायाम् अभिनये च स्त्री त्रिका० ।

**सूचि(ची)** स्त्री सूच–इन् वा ङीप् । १सीवनसाधने सूक्ष्माग्रलौहमयपदार्थे अमरः २शिखायां ३नृत्यभेदे रत्नको०। [जीविनि (दरजि) शब्दर० ।

**सूचिक** त्रि० सूचिः तया जीवनं शिल्पमस्य ठन् । सूच्या-

**सूचिका** स्त्री सूचि+स्वार्थे क । १सूच्याम् । २सूचिरिव कायति कै–क । २हस्तिशुण्डायाम् । सूचिकाधरः ।

**सूचिकाधर** पुंस्त्री० सूचिकां शुण्डां धरति धृ–अच् । गजे शब्दर० स्त्रियां ङीष् ।

**सूचिकाभरण** न० वैद्यकोक्ते औषधभेदे तत्पाकादि यथा "विषं पलमितं सूतः शाणकञ्चूर्णयेद् द्वयम् । तच्चूर्णं संपुटे कृत्वा काचलिप्तशरावयोः । मुद्रां कृत्वाथ संशोष्य ततश्चुल्ल्यां निवेशयेत् । वह्निं शनैः शनैः कुर्य्यात् प्रहरद्वयसंख्यया । तत उद्घाट्य तन्मुद्रामूर्ध्वपरिस्थशरावकात् । संलग्नो यो भवेत् सूतः स ग्राह्योऽथ शनैः शनैः । वायुस्पर्शो यथा न स्यात्ततः कूप्यां निवेशयेत् । यावत् सूच्या मुखे लग्नं कूप्या निर्याति भेषजम् । तावन्मात्रो रसो देयो मूर्च्छिते सन्निपातिनि । क्षुरेण प्रच्छिते मूर्ध्नि तन्मात्राङ्गुल्या च घर्षयेत् । रसभेषजसम्पर्कात् मूर्च्छितोऽपि हि जीवति । तथैव सर्पदष्टोऽपि मृतावस्थोऽपि जीवति । यदा तापो भवेत्तस्य मधुरं तत्र दीयते" भैषज्यरत्ना० । "विषं पल रसं शाणं तच्चूर्णं काचलेपिते । शरावसंपुटे च संरुध्य चुल्ल्यां संस्थाप्य पाचयेत् । शनैर्वह्निद्वयं पश्चात् तं समुद्धाय्य शीतलम् । ऊर्ध्वपात्रगतं चूर्णं [illegible]भावनम् । यावत् सूच्या मुखे लग्नं कूप्या याति भेषजम् । क्षुरेण प्रच्छिते मूर्ध्नि तन्मात्राङ्गुल्या च घर्षयेत् । त्रिदोषे मूर्च्छितो जीवो रसभेषजसङ्गमात् । सर्पदष्टो मृतावस्थः सोऽपि जीवति तत्क्षणात् । दद्याच्च मधुरं तोयं सूचिकाभरणे रसे" इति रसप्रदीपः ।

**सूचिकामुख** पु० सूचिकेव क्रमसूक्ष्मं मुखमस्य । १शङ्खे हारा० हेम० । २सूच्यग्रके न० ।

**सूचि(ची)खेट** न० सूच्याकारं खेटम् । लीलावतीप्रसिद्धे सूच्याकारके क्षेत्रभेदे क्षेत्रशब्दे २४०० पृ० दृश्यम् ।

**सूचित** त्रि० सूच–क्त । १कथिते २बोधिते ३हिंसिते च ।

**सूचिपत्रक** पु० सूचिरिव पत्रमस्य कप् । शितावरशाके राजनि० । सूचीदलादयोऽप्यत्र ।

**सूचिपुष्प** पु० सूच्याकारं पुष्पं पुष्पाग्रं यस्य । केतकवृक्षे जटा० । सूचीपुष्पादयोऽप्यत्र ।

**सूचिरोमन्** पु० सूचिरिव रोमाऽस्य । वराहे हारा० सूचीरोमन् तत्रार्थे त्रिका० ।

**सूचिवत्** पु० सूचिरिव तदाकारचञ्चुरस्त्यस्य मतुप् यवा० मस्य [षः । गरुडे शब्दर० ।

**सूचिवदन** पुंस्त्री० सूचिरिव वदनं यस्य । १नकुले स्त्रियां जातित्वात् ङीष् । २मशके पु० राजनि० ।

**सूचिशालि** पु० कर्म० । सूक्ष्मधान्ये श्यामाकादौ राजनि० ।

**सूचीकटाह** पु० न्यायभेदे न्यायशब्दे ४१७० पृ० दृश्यम् ।

**सूचीपत्रा** स्त्री सूचीव पत्रमस्याः । गण्डदूर्वायाम् राजनि० ।

**सूचीमुख** सूचीव मुखमस्य । १शितकुशे राजनि० । २हीरके न० हेमच० । ६त० । ३सूच्याग्रे न० ।

**सूच्यग्रस्थूलक** पु० सूच्यग्रमिव स्थूलः स्वार्थे क । (उलुखड़) तृणभेदे रत्नमा० ।

**सूच्यास्य** पुंस्त्री० सूचीव आस्यमस्य । १मूषिके हेमच० स्त्रियां योपधत्वात् टाप् । ६त० । २सूच्या अग्रे न० ।

**सूच्याह्व** पु० सूच्या आह्वा आह्वा यस्य । शितावरके हेमच० ।

**सूत** पु० सू–प्रसवे प्रेरणे ऐश्वर्य्ये वा क्त । १सूर्य्ये अनेकार्थको० । २अर्कवृक्षे ३क्षत्रियजाते ब्राह्मणीगर्भजे वर्णसङ्करभेदे ४त्वष्टरि ५सारथौ ६वन्दिनि मेदि० ७मागधे ८पारदे पुंन०अमरः । ९प्रसूते १०प्रेरिते च त्रि० । ११लोमहर्षणाख्ये पुराणवक्तरि च तदुत्पत्तिकथा

"यज्ञान्ते सूततनयं नैमिषीया महर्षयः । पुराणसंहितां पुण्यां पप्रच्छुर्लोमहर्षणम् । त्वया सूत ! महाबुद्धे भगवान् ब्रह्मवित्तमः । इतिहासं पुराणार्थं व्यासः सम्यगुपासितः । तस्य ते सर्वरोमाणि वचसा हृषितानि यत् । द्वैपायनस्य भगवांस्ततो वै रोमहर्षणः । भवन्तमेव भगवान् व्याजहार स्वयं प्रभुः । मुनीनां संहितां वक्तुं व्यासः पौराणिकीं पुरा । त्वं हि स्वायम्भुवे यज्ञे सुत्याहे वितते सति । संभूतः संहितां वक्तुं स्वांशेन पुरुषोत्तम !" कौर्मे १अ० । "ब्रह्मणः पौष्करे यज्ञे सुत्याहे वितते सति । पृषदाज्यात् समुत्पन्नः सूतः पौराणिको द्विजः । वक्ता वेदादिशास्त्राणां त्रिकालामलतत्त्ववित् । तीर्थयात्राप्रसङ्गेन नैमिषारण्यमागमत्" वह्निपु० १अ० ।

जातिभेदसूतोत्पत्तिकथा "हते तु दक्षिणे चक्रे ब्रह्मा तत्र पितामहः । विष्णोरंशं पृथुं मत्वा परितोषं परं ययौ । तस्य वै जातमात्रस्य यज्ञे पैतामहे शुभे । सूतः सूत्यां समुत्पन्नः सौत्येऽहनि महामते ! । तस्मिन्नेव महायज्ञे जज्ञे प्राज्ञोऽथ मागधः । प्रोक्तौ तदा मुनिवरैस्तावुभौ सूतमागधौ । स्तूयतामेष नृपतिः पृथुर्वैन्यः प्रतापवान्" विष्णुपु० १अंशे १३अ० । "तस्मिन्नेव काले तु यज्ञे पैतामहे शुभे । सूतः सूत्यां समुत्पन्नः सौत्येऽहनि पुराणवित् । तेषां यज्ञे पुनश्चैव समुत्पन्नौ सूतमागधौ । पृथोःस्तवार्थं तौ तत्र समाहूतौ महर्षिभिः । ते ऊचुस्तदा सर्वे स्तूयतामेष पार्थिवः । तेनियुक्तोऽथ कर्माणि पृथोर्यानि महात्मनः । तुष्टस्तांस्तानि सर्वाण्याशीर्वादांस्ततः परान् । तयोस्तवान्ते सुप्रीतः पृथुः प्रादात् जनेश्वरः" वह्निपु० । "क्षत्रियाद्विप्रकन्यायां सूतो भवति जातितः" । "सूतानामश्वसारथ्यमम्बष्ठानां चिकित्सितम्" मनुः ।

**सूततनय** पु० सूतस्य तनयः । भारतप्रसिद्धे राधेये कर्णे हेमच० । सूतपुत्रादयोऽप्यत्र । तस्य सूतपालितत्वात्तथात्वम्

**सूति** स्त्री सू+क्तिन् । १प्रसवे "प्रसवैः सूतिमारुतैः" स्मृतिः सूयते सवनं सोमोऽत्र षु–आधारे क्तिन् । २सोमाभिषवभूमौ श्रीधरः ।

**सूतिका** स्त्री सू-क्त स्वार्थे क अत इत्त्वम् । नवप्रसूतायां स्त्रियाम् "उदक्यां सूतिकां विना" इति स्मृतिः ।

**सूतिकागार** न० सूतिकाया निवासयोग्यमगारम् । सूतिकागृहे अरिष्टे । सूतिकागृहादयोऽप्यत्र ।

तत्करणप्रवेशमुहूर्त्तादिकं पीयू० उक्तं यथा

"उक्तश्च श्रीपतिना पुनर्वसौ च सूतिकागृहस्य निर्मितिः शुभा । विरञ्चिविष्णुमान्तरे प्रवेशनं हितं भवेत्" इति । विरञ्चिरभिजिन्नक्षत्रम् अन्तरे मध्ये विरञ्चिविष्णुतारयोरित्येव सप्तम्या अधिकरणत्वे बोधिते अन्तरपदोक्तिः स्पष्टार्था । तदेतद्ब्राह्मणव्यतिरिक्तवर्णत्रयविषयम् । यदाह वशः "पुनर्वसौ तु पादोनं कर्त्तव्यं सूतिकागृहम् । श्रवणाभिजितोर्मध्ये प्रवेशं तत्र कारयेत्" इति । आवश्यकत्वे तु श्रवणाभिजितोर्मुहूर्त्तमुदयो ग्राह्यः वा इत्यर्थः । ब्राह्मणस्य तु प्रागुक्तनक्षत्रेष्वेव सूतिकागृहनिर्माणप्रवेशौ तत्र सूतिकागृहं नैर्ऋत्यां कार्य्यम् । यदाह वृद्धवसिष्ठः "ऐन्द्र्यां तु विक्रमस्थानमाग्नेय्यां पचनालयः । वारुण्यां भोजनगृहं नैर्ऋत्यां सूतिकागृहम् । याम्यायां शयनस्थानं वायव्यां पशुमन्दिरम् । कौबेर्य्यां तु धनस्थानम् ऐशान्यां देवतालयः" इति । स्मृतिभास्करे गर्गः "वारेऽनुकूले रात्रौ तु दिने दोषविवर्जिते । सानुकूलदिशि प्रोक्तं सूतिकाभवनं बुधैः" इति । कालानियम उक्तो रत्नकोषे "आसन्नप्रसवे मासि कुर्य्याच्चैव विशेषतः । तद्वत् प्रसवकाले स्यादिति शास्त्रेषु निश्चयः" इति । वराहेणाप्यनेकनक्षत्राणामभिधानं कृतं यथा "इन्द्रादित्यशशाङ्कतिष्यपवनप्राज्येशमित्रोत्तराचित्राश्विश्रवणेषु हरिकघटौ हित्वा विरिक्ते तिथौ । शुक्राचार्य्यशने वरस्य शशिनां वारेऽनुकूले विधौ सद्भिर्वेश्मनि सूतिकागृहविधिः क्षेमङ्करः कीर्त्यते" इति । वेश्मनि चतुर्थस्थाने

यद्भिः शुभग्रहैः। सूतिकागृहप्रवेशे कालविशेषमाह ज्योतिर्निबन्धः "अथातः संप्रवक्ष्यामि सूतिकागारवेशनम्। मासि तु नवमे प्राप्ते पूर्वपक्षे शुभे दिने। प्रसूतिसमये काले सद्य एव प्रवेशयेत्" इति। पूर्वपक्षे शुक्लपक्षे नक्षत्रादीन्याह गर्गः "रोहिण्यैन्द्रवपौष्णेषु स्वातीवारुणयोरपि। पुष्ये पुनर्वसौ चैव धनिष्ठा तु उत्तरासु च" इति। "मैत्रत्वाष्ट्रे तथाश्विन्यां सूतिकागारवेशनम्। सर्वे शुभग्रहाः केन्द्रे पापाश्च त्रिषडायगाः। शुभांशे शुभसंदृष्टौ सूतिकागारवेशनमिति"।

तदाकारमाह भावप्र० "अष्टहस्तायतं चारु चतुर्हस्तविशालकम्। प्राचीद्वारमुदग्द्वारं विदध्यात् सूतिकागृहम्"।

**सूतिकारोग** पु० ६त०। भावप्र० उक्ते रोगभेदे तन्निदानादि यथा "मिथ्योपचारात् संक्लेशात् विषमाजीर्णभोजनात्। सूतिकायास्तु ये रोगा जायन्ते दारुणाश्च ते"। मिथ्योपचारात् अनुचिताचरणात् मद्यादिसेवनात्। संक्लेशात् संक्लिश्यन्ते दोषा अनेन इति संक्लेशः दोषजनकमशनं तस्मात्। दारुणाः कष्टसाध्याः। के ते व्याधय इत्याकाङ्क्षायामाह "अङ्गमर्दो ज्वरः कासः पिपासा गुरुगात्रता। शोथः शूलातिसारौ च सूतिकारोगलक्षणम्। एतेऽङ्गमर्दादयः प्रायेण सूतिकाया भवन्तः सूतिकारोगत्वेन उच्यन्ते। ज्वरादीनां रोगविशेषाणां निदानविशेषमाह "ज्वरातीसारशोथाश्च शूलानाहबलक्षयाः। तन्द्रारुचिप्रसेकाद्या वातश्लेष्मसमुद्भवाः। कष्टसाध्या हि ते रोगाः क्षीणमांसबलाश्रिताः। ते सर्वे सूतिकानाम्ना रोगास्ते चाप्युपद्रवाः" सूतिकाभवत्वेन सूतिकानाम्ना ते रोगाः आश्रयाश्रितयोरभेदोपचारात् ते चाप्युपद्रवा इति त एव ज्वरादयः उक्तानां रोगाणामन्यतमं प्रधानीकृत्योपद्रवाश्च"।

**सूतिकाषष्ठी** स्त्री सूतिकागृहे पूज्या षष्ठी शाक०। सूतिकागारे प्रसवावधि षष्ठे दिवसे पूज्यायां षष्ठीदेव्याम्। यथाह विष्णुधर्मोत्तरे "सूतिकावासनिलया जन्मदा नाम देवताः। तासां यागनिमित्तार्थं शुद्धिर्जन्मनि कीर्त्तिता। षष्ठेऽह्नि रात्रियामन्तु जन्मदानाञ्च कारयेत्। रक्षणीया तदा षष्ठी निशा तत्र विशेषतः। रात्रौ जागरणं कार्य्यं जन्मदानां तथा बलिः"। रात्रौति सम्बोधनम्। तत्राशौचान्तरदोषोऽपि नास्ति। "अशौचे तु समुत्पन्ने पुत्रजन्म यदा भवेत्। कर्त्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति" इति मत्स्यपुराणवचनात्। पुत्रजन्मेति श्रवणात् पितुरेवाशौचाभावः न तु मातुः कर्त्तुरिति पुंलिङ्गनिर्देशाच्च। कारयेदिति जन्मनोत्सवाभिप्रायेण। तत्रादौ विनायकादिसहितषोडशमातृकापूजनम्। तथा च कल्पचिन्तामणौ "जागजागरणं कार्य्यं खड्गी धार्य्यः समीपतः। आवाद्य पूजयेद्देवीं गणेशं मातृका गिरिम्"। देवीं षष्ठीम्। गिरिं मन्थानदण्डम्। भोजराजः "गणेशश्चैव नन्दा च पूतना मुखमण्डिका। बिडालिका शकुनिका शुष्कनन्दा च जम्भिका। आकार्य्यका रेवती च पिलिपिच्छा ततः परम्। स्कन्दा च द्वादशैतेऽथ्यौः रक्षार्हं मातृका मताः" ज्यो०त०। [ब्रमरः।

**सूत्थान** त्रि० सुष्ठु उत्थानम् उद्योगो यस्य। चतुरे कर्म्मकुशले

**सूत्पर** न० सु+उद्+पृ—अप्। सुरासन्धाने शब्दच०।

**सूत्या** स्त्री सू-क्यप् नि०। यज्ञाङ्गस्नानभेदे २अभिषवे सोमरसनिष्पीड़ने च अमरः।

**सूत्याशौच** न० सूतिनिमित्तकमाशौचम्। जननाशौचे "शावाशौचं न कर्त्तव्यं सूत्याशौचं विधीयते" स्मृतिः।

**सूत्र** ग्रन्थने वेष्टने च अद०चु०उभ०सक०सेट्। सूत्रयति ते असुसूत्रत् त। सकृद्धत्वात् न षोपदेशः।

**सूत्र** न० सूत्र-अच्। १यज्ञसाधने तन्तौ २व्यवस्थायां ३नाटकोपकरणे प्रस्तावे "स्वल्पाक्षरमसन्दिग्धं सारवत् विश्वतोमुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः" इत्युक्ते शास्त्रवाक्यभेदे च।

**सूत्रकण्ठ** पु० सूत्रं यज्ञसूत्रं तदिव वा कण्ठे यस्य। १विप्रे २कपोते ३खञ्जरीटे च मेदि०। [तन्नाथे त्रिका०।

**सूत्रकोण** पु० सूत्रबद्धः कोणोऽस्य। डमरौ डारा० बण्।

**सूत्रगण्डिका** स्त्री सूत्रं गण्डयति गण्ड-ण्वुल्। तन्तुवायोपकरणभेदे एकश्यां शब्दमा०।

**सूत्रतन्तु** पु० सूत्रमेव तन्तुः। सूत्राकारे तन्तौ हेमच०।

**सूत्रतर्कुटी** स्त्री सूत्रघटिता तर्कुटी। (टेको) पदार्थे जटा०

**सूत्रधार** पु० सूत्रं नाट्यसाधनं धारयति धृ-णिच्-अण्। नाट्याङ्गसाधनयुक्ते नाटकप्रस्तावके १प्रधाननटे। "नाट्योपकरणादीनि सूत्रमित्यभिधीयते। सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैः" इति तल्लक्षणं "पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते" सा० द०। "सूत्रधारेण सहिताः संलापं यत्र कुर्वते" दशरूपकम्। २इन्द्रे ३शिल्पिभेदे (छुतार) च। शिल्पभेदस्य सूत्रधारस्य शूद्रागर्भे विश्वकर्मणा जातो जातिभेदः ब्रह्मवै०ब्रह्मख०१०अ०।

**सूत्रपुष्प** पु० सूत्रगर्भं पुष्पं यस्य। कार्पासे त्रिका०।

**सूत्रभिद्** पु० सूत्रं भिनत्ति सूच्या, भिद–क्विप्। सूच्याजीवे (दरजी) शब्दर०। [शब्दच०।

**सूत्रमध्यभू** पु० सूत्रमध्यमिव भवति भू–क्विप्। यक्षधूपे

**सूत्रयन्त्र** न० सूत्रवापनं यन्त्रम् शाक०। (ताँत) सूत्रवापनयन्त्रे शब्दमा०। [हारा०।

**सूत्रला** स्त्री सूत्रं लाति–ला–क। तर्कुटयाम् (टेको)

**सूत्रवीणा** स्त्री सूत्रबद्धा वीणा शाक०। वीणाभेदे हारा०।

**सूत्रवेष्टन** न० सूत्रं वेष्ट्यतेऽनेन वेष्ट–करणे ल्युट्। तन्तुवायोपकरणभेदे लघरे (तासनी) अमरः।

**सूत्रात्मन्** पु० सूत्रमिव सर्वानुस्यूत आत्मा स्वरूपं यस्य। समष्ट्युपहितचैतन्ये हिरण्यगर्भे वेदा०सा०। [पत्तिः।

**सूत्रामन्** पु० इन्द्रे अमरे पाठान्तरम्। सुत्रामन् शब्दे व्युत·

**सूत्राली** स्त्री ६त०। १सूत्रश्रेणौ २गलमेखलायां हारा०।

**सूत्रिन्** त्रि० सूत्र+अस्त्यर्थे इनि। १सूत्रविशिष्टे स्त्रियां ङीप्। २काके पु० त्रिका०।

**सूद** पु० सूदयति पच्यान् पाकार्थं सूद–अच्। १सूपकारे २व्यञ्जनभेदे सूपे अमरः। ३सारथ्ये ४अपराधे ५लोध्रे ६पापे च अजयः। [च।

**सूदन** न० सूद–भावे ल्युट्। १हिंसने २निःक्षेपे ३अङ्गीकारे

**सूदशाला** स्त्री सूदाधिष्ठिता शाला शाक०। पाकशालायाम् पाचकशब्दे ४२४६ पृ० विवरणम्।

**सूदाध्यक्ष** पु० ६त०। पाकशालाध्यक्षे तल्लक्षणं यथा "अनाहार्य्यः शुचिर्दक्षो विविधान्नविदांवरः। सूदशास्त्रविशेषज्ञः सूदाध्यक्षः प्रशस्यते" पाचकशब्दे तल्लक्षणादि ४२८६ पृ० दृश्यम्।

**सून** न० सू–क्त तस्य नः। १पुष्पे २प्रसवे च। कर्त्तरि–क्त। ३विकसिते त्रि० मेदि० ४जाते च।

**सूना** स्त्री सू–क्त तस्य नः। १प्राणिवध स्थाने "पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्करः। कण्डनी चोदकुम्भश्च" मनुः २तनयायां ३गलशुण्डिकायां मेदि० ४मांसविक्रये च संक्षिप्तसा०। [५कन्यायां स्त्री वा अङ् हेमच०।

**सूनु** पु० सू–नु। १पुत्रे २अनुजे ३सूर्य्ये मेदि० ४अर्कवृक्षे च।

**सूनृत** न० सुष्ठु नृत्यति अनेन सु–नृत–घञर्थे क। १सत्ये प्रिये वाक्ये अमरः। २मङ्गले च ३तद्वति त्रि० अमरः।

**सूप** पु० सुखेन पीयते सु+पा–घञर्थे क पृषो०। (दालि) व्यञ्जनभेदे कृतान्नशब्दे २१८१ पृ० दृश्यम्। सुपपति सु+ष्प–मूलवि० क। २सूपकारे पाचके मेदि०। ३भाण्डे। सूद-करणे क पृषो०। ४शायके शब्दर०।

**सूपकार** त्रि० सूपं करोति कृ–अण्। पाचके अमरः। पाचकशब्दे ४२८६ पृ० दृश्यम्।

**सूपधूपन** न० सूपो धूप्यतेऽनेन धूप–करणे ल्युट्। १हिङ्गौ त्रिका० सूपपाके हि हिङ्गुधूपदानं पाकशास्त्रे प्रसिद्धम्

**सूपपर्णी** स्त्री सूपसाधनस्य मुद्गस्येव पर्णमस्याः ङीप्। मुद्गपर्ण्याम् रत्नमा०।

**सूपश्रेष्ठ** पु० सूपेषु तत्साधनेषु श्रेष्ठः। मुद्गे राजनि०।

**सूपाङ्ग** न० सूपस्य तद्रस्य कारकमङ्गमुपकरणम्। हिङ्गौ राजनि०।

**सूम** न० सू–मक् १आकाशे २क्षीरे मेदि०। ३जले शब्दर०।

**सूर** पु० सुवति प्रेरयति कर्म्मणि लोकानुदयेन सू–क्रन्। १सूर्य्ये २अर्कवृक्षे च अमरः। सूर–क। ३पण्डिते ४जिनभेदे पु० हेमच०। "सूर्य्योदयं विना नैव स्नानदानादिका क्रिया" इत्युक्तेस्तदुदयेन लोकानां सर्वकर्म्मप्रवर्त्तकत्वात्तथात्वम्।

**सूरण** पु० सूर–ल्युट्। शूरणे (ओल) शब्दरत्ना०। "मकरे मूलकञ्चैव सिंहे चालावुकं तथा। कार्त्तिके (सू)शूरणञ्चैव सद्यो गोमांसभक्षणम्" कर्मलो०।

**सूरत** त्रि० सु+रम-क्त पृषो०। दयालौ अमरः।

**सूरसूत** पु० ६त०। अरुणे गरुडाग्रजे सूर्य्यसारथौ अमरः। अनूरुशब्दे १८१ पृ० दृश्यम्।

**सूरि** पु० सू–क्रिन्। १सूर्य्ये २अर्कवृक्षे ३यादवभेदे ४पण्डिते च अमरः "सदा पश्यन्ति सूरयः" इति श्रुतिः। ५राजसर्षपे स्त्री ङीप् रत्नमा०।

**सूरिन्** पु० सूर–इनि। पण्डिते शब्दर०।

**सू(षू)र्क्ष(र्क्ष्य)** अनादरे भ्वा०पर०सक०सेट्। सूर्क्ष(र्क्ष्य)ति असूर्क्षी(र्क्ष्यी)त् षोपदेश एव न्याय्यः।

**सूर्क्ष** पु० सूर्क्ष–कर्म्मणि घञ्। माषे (कलाइ) शब्दर०।

**सूर्क्ष(र्क्ष्य)ण** न० सूर्क्ष(र्क्ष्य) भावे ल्युट्। अनादरे।

**सूर्प** पुंन०। शूर्प–पृषो० शस्य सः। १शूर्पशब्दार्थे शब्दर०। २कुम्भपरिमाणे ३द्रोणपरिमाणे च वैद्यकम्।

**सूर्पणखा** स्त्री शूर्पं इव नखा अस्याः पृषो० शस्य सः णत्वम्। रावणभगिन्याम्।

**सूर्म्मि** स्त्री शूर्म्मि+पृषो० शस्य सः। शूर्म्मिशब्दार्थे वा ङीप्।

**सूर्य्य** पु० सृ–क्यप् नि०। १दिवाकरे २अर्कवृक्षे च अमरः। ३दानवभेदे वह्निपु० ४अर्कपर्णवृक्षे मेदि०।

सूर्य्यग्रहणादिकं खगोलशब्दे २४२५ पृ० दृश्यम्। तस्य प्रकृतिस्वरूपादिकं मत्स्ये च० उक्तं यथा

न्तरम् । अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः । मीमांसा न्यायविद्याच प्रमाणाष्टकसंयुताः । वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः । मनसा पूर्वसृष्टा वै जाता यत्तेन मानसाः । मरीचिरभवत् पूर्वं ततोऽत्रिर्भगवान् ऋषिः । अङ्गिराश्चाभवत् पश्चात् पुलस्त्यस्तदनन्तरम् । ततः पुलहनामा वै ततः क्रतुरजायत । प्रचेताश्च ततः पुत्रो वशिष्ठश्चाभवत् पुनः । पुत्रो भृगुरभूत्तद्वन्नारदोऽप्यचिरादभूत् । दशेमान् मानसान् ब्रह्मा मुनीन् पुत्रानजीजनत् । शारीरानथ वक्ष्यामि मातृहीनान् प्रजापतेः । अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत । धर्मः स्तनान्तादभवत् हृदयात् कुसुमायुधः । भ्रूमध्यादभवत् क्रोधो लोभश्चाधरसम्भवः । बुद्धेर्मोहः समभवदहङ्कारादभून्मदः । प्रमोदश्चाभवत् कण्ठान् मृत्युर्लोचनतो नृप ! । भरतः करमध्यात्तु ब्रह्मसूनुरभूत्ततः । एते नव सुता राजन् ! कन्या च दशमी पुनः । अङ्गजा इति विख्याता दशमी ब्रह्मणः सुता । मत्स्ये च "बुद्धेर्मोहः समभवदिति यत्परिकीर्त्तितम् । अहङ्कारः स्मृतः क्रोधो बुद्धिर्नाम निगद्यते" । तत्र च "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् । साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता । केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः । एतदेव प्रजासृष्टिं करोति विकरोति च । गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे । एका मूर्त्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः । सविकारात् प्रधानात्तु महत्तत्त्वं प्रजायते । महानिति यतः ख्यातिर्लोकानां जायते सदा । अहङ्कारश्च महतो जायते मानवर्द्धनः । इन्द्रियाणि ततः पञ्च वक्ष्ये बुद्धिवशानि तु । प्रादुर्भवन्ति चान्यानि तथा कर्मवशानि तु । श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका च यथाक्रमम् । पायूपस्थं हस्तपादं वाक् चेतीन्द्रियसंग्रहः । शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः । मन एकादशं तेषां कर्मबुद्धिगुणान्वितम् । इन्द्रियावयवाः सूक्ष्मास्तस्य मूर्त्तिं मनीषिणः । श्रयन्ति यस्मात्तन्मात्राः शरीरं तेन संस्मृतम् । शरीरयोगाज्जीवोऽपि शरीरी गद्यते बुधैः । मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं शब्दतन्मात्रादभूच्छब्दगुणात्मकम् । आकाशविकृतेर्वायुः शब्दस्पर्शगुणोऽभवत् । वायोश्च स्पर्शतन्मात्रात्तेजश्चाविरभूत्ततः । त्रिगुणं तद्विकारेण तच्छब्दस्पर्शरूपवत् । तेजोविकारादभवद्वारि राजंश्चतुर्गुणम् । रसतन्मात्रसम्भूतं प्रायो रसगुणात्मकम् । भूमिस्तु गन्धतन्मात्रादभूत् पञ्चगुणान्विता । प्रायो गन्धगुणा सा तु बुद्धिरेषा गरीयसी । एभिः सम्पादितं भुङ्क्ते पुरुषः पञ्चविंशकः । ईश्वरेच्छावशः सोऽपि जीवात्मा कथ्यते बुधैः । एवं षड्विंशकं प्रोक्तं शरीर इह मानवे । सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते । एतत्तत्त्वात्मकं कृत्वा जगद्वेधा अजीजनत् । सावित्रीं लोकसृष्ट्यर्थं हृदि कृत्वा समास्थितः । ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् । स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् । शतरूपा च सा ख्याता सावित्री च निगद्यते । सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप ! । ततः स्वदेहसम्भूतामात्मजामित्यकल्पयत् । दृष्ट्वा तां व्यथितस्तावत्कामबाणार्दितो विभुः । अहो रूपमहोरूपमिति चाह प्रजापतिः । ततो वशिष्ठप्रमुखाः भगिनीमिति चुक्रुशुः । ब्रह्मा न किञ्चिद्ददृशे तन्मुखालोकनादृते । अहो रूपमहोरूपमिति प्राह पुनः पुनः । ततः प्रणामनम्रान्तां पुनरेवाभ्यलोकयत् । अथ प्रदक्षिणं चक्रे सा पितुर्वरवर्णिनी । पुत्रेभ्यो लज्जितस्यास्य तद्रूपालोकनेच्छया । आविर्भूतं ततो वक्त्रं दक्षिणं पाण्डुगण्डवत् । विस्मयस्फुरदोष्ठञ्च पाश्चात्यमुदगात्ततः । चतुर्थमभवत् पश्चाद्वामं कामशरातुरम् । ततोऽन्यदभवत्तस्य कामातुरतया तथा । उत्पतन्त्यास्तदाकाश आलोकनकुतूहलात् । सृष्ट्यर्थं यत् कृतं तेन तपः परमदारुणम् । तत् सर्वं नाशमगमत् स्वसुतोपगमेच्छया । तेनोर्द्ध्वं वक्त्रमभवत् पञ्चमं तस्य धीमतः । आविर्भवज्जटाभिश्च तद्वक्त्रञ्चावृणोत् प्रभुः । ततस्तानब्रवीद्ब्रह्मा पुत्रानात्मसमुद्भवान् । प्रजाः सृजध्वमभितः सदेवासुरमानुषीः । एवमुक्तास्ततः सर्वे ससृजुर्विविधाः प्रजाः । गतेषु तेषु सृष्ट्यर्थं प्रणामावनतामिमाम् । उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् । सम्बभूव तया सार्द्धमतिकामातुरो विभुः । सलज्जां चकमे देवः कमलोदरमन्दिरे । यावदब्दशतं दिव्यं यथान्यः प्राकृतो जनः । ततः कालेन महता तस्याः पुत्रोऽभवन्मनुः । स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम् । स तु तद्रूपसाम्यादधिपूरुष उच्यते । वैराजा यत्र ते जाता बहवः शंसितव्रताः । स्वायम्भुवा महाभागाः सप्त सप्त तथा परे । स्वारोचिषाद्याः सर्वे ते ब्रह्मतुल्यस्वरूपिणः । औत्तमिप्रमुखा-

**स्कन्धाग्नि** पु० स्कन्धजातोऽग्निः। वृहत्काष्ठजाते वह्नौ जटा०।

**स्कन्धावार** पु० स्कन्धानामावारः आ+वृ-घञ्। युद्धोद्यतचतुरङ्गसैन्यानां १स्थापने २तदाधारे कटके च ३राजधान्यां शब्दच०। [हेमादौ हेमच०

**स्कन्धिक** पु० स्कन्धेन वहनमस्त्यस्य ठन्। स्कन्धवाहके

**स्कन्धिन्** पु० स्कन्धेन वहनमस्त्यस्य इनि। स्कन्धेन वाहके वृषादौ रत्नमा०।

**स्कन्न** त्रि० स्कन्द-क्त। १च्युते अमरः २गलिते ३क्षरिते ४शुष्के ५गते च। भावे क्त। ६क्षरणे न०।

**स्कन्भ** प्रतिघाते क्र्या० स्वा० उ० सक० सेट्। स्कभ्नाति स्कभ्नोते स्कभ्नोति स्कभ्नुते। अस्कम्भीत् अस्कम्भिष्ट। चस्कम्भ चस्क(भ)म्भे। [सिद्ध।

**स्कभ** स्तम्भे भ्वा० आ० सक० सेट् इदित्। स्कम्भते अस्कम्भिष्ट

**स्कु** वृत्तौ आप्लावने च क्र्या० स्वा० उ० सक० अनिट्। स्कुनाति स्कुनीते स्कुनोति स्कुनुते। अस्कौषीत् अस्कोष्ट। चस्काव चस्कुवे। [स्कुन्दते अस्कुन्दिष्ट।

**स्कुद** आप्लावने उद्धृतौ च भ्वा० आ० सक० सेट् इदित्।

**स्कुन्भ** रोधने सौ० क्र्या० स्वादि० आर्य्यभावो प० सक० सेट् स्कुभ्नाति स्कुभ्नोति। अस्कुम्भीत्। उदित् क्त्वा वेट्।

**स्खद** विदारे दि० आ० सक० सेट्। स्खद्यते अस्खदिष्ट घटादि० स्खदयति। [स्खदयति स्खादयति।

**स्खल** चले भ्वा० प० अक० सेट्। स्खलति अस्खालीत् वा घटा०

**स्खलन** न० स्खल-भावे ल्युट्। १चलने २पतने अमरः।

**स्खलित** न० स्खल-भावे क्त। १कूटयुद्धादौ धात्वा धीरमर्य्यादातः २पतने ३स्खलनमात्रे च अमरः। कर्त्तरि क्त। ४चलिते त्रि०।

**स्तन** मेघशब्दे अद० चु० उभ० सक० सेट्। स्तनयति ते अतस्तनत् त। बहुवचनत्वाच्च षोपदेशः।

**स्तन** पु० स्तन-अच्। (माइ) स्त्रीणामङ्गभेदे पयोधरे अमरः। "करोऽस्मौ स्तनौ पीनौ घनावविषमौ शुभौ" स्तनयोः शुभलक्षणं मात्स्ये २६१ अ०। [शब्दे च मेदि०।

**स्तनन** न० स्तन-ल्युट्। १ध्वनिमात्रे २मेघशब्दे ३कुन्थनं

**स्तनन्धय** पुंस्त्री० स्तनं धयति धे-खश् मुम् च। अतिशिशौ श्वेतदिव्यत्वात् स्त्रियां ङीप्। [अमरः। स्त्रियां टाप्।

**स्तनप** पुंस्त्री० स्तनं पिबति पा-क। अतिशिशौ बालके

**स्तनभर** पु० ६त०। १स्थूलस्तनभारे २तदाभोगे च त्रिका०।

**स्तनयित्नु** पु० स्तन-इत्नु। १मेघे २मुस्तके अमरः ३मेघशब्दे मेदि० ४विद्युति शब्दर०। ५मृत्यौ ६रोगे च हेमच०।

**स्तनवृन्त** पु० स्तनस्य वृन्त इवाग्रम्। १स्तनाग्रे चूचुके हेमच० स्तनमुखमित्यादयोऽप्यत्र हेमच०। [च।

**स्तनान्तर** न० स्तनयोरन्तरम्। १हृदये हेमच० २स्तनमध्ये

**स्तनाभोग** पु० ६त०। स्तनस्य परिपूर्णतायाम् त्रिका०।

**स्तनित** न० स्तन-भावे क्त। १मेघशब्दे अमरः। २करतादिशब्दे च। कर्त्तरि-क्त। ३ध्वनिते त्रि०।

**स्तनितफल** पु० स्तनिते मेघशब्दे फलति फल-अच्। [विकङ्कतवृक्षे राजनि०।

**स्तन्भ** रोधने क्र्या० स्वा० प० सक० सेट् उदित् क्त्वा वेट्। स्तभ्नाति स्तभ्नोति इरित् अस्तभत् अस्तम्भीत्। इदित्वन्ये षोपदेश एव न्याय्यः सौत्रोऽयमित्यन्ये तेन न षोपदेशः।

**स्तन्य** न० स्तने भवम् यत्। स्तनजाते दुग्धे हेमच०। [भूते च

**स्तब्ध** त्रि० स्तम्भ-कर्मणि कर्त्तरि वा क्त। १जडीकृते २जडी

**स्तब्धरोमन्** पु० स्तब्धं रोमास्य। १शूकरे अमरः जडीकृतरोमणि त्रि० स्त्रियां वा डाप् ङीप् च।

**स्तम्ब** पु० स्था-अम्बच् किच्च पृषो०। काण्डरहिते व्रीह्यादौ वृक्षे २गुल्मगुल्मे ३तृणादेः गुच्छे च अमरः।

**स्तम्बकरि** पु० स्तम्बं गुच्छं करोति कृ-इन्। व्रीहिधान्ये अमरः। [मूलके खनित्रादौ अमरः।

**स्तम्बघन** पु० स्तम्बो हन्यतेऽनेन हन-क नि०। स्तम्बो-

**स्तम्बघ्न** त्रि० स्तम्बो हन्यतेऽनेन हन-घञर्थे क। स्तम्बोन्मूलके खनित्रादौ अमरः। स्तम्बहननमप्यत्र।

**स्तम्बपुर्** स्त्री स्तम्बप्रधाना पूः न समासान्तः। ताम्रलिप्ते पुरभेदे हेमच०।

**स्तम्बेरम** पुंस्त्री० स्तम्बे तृणादीनां काण्डे गुच्छे गुल्मे वा रमते रम-अच् अलुक्स०। गजे अमरः स्त्रियां ङीष्।

**स्तम्भ** पु० स्तम्भ-घञ्। (थाम) १स्थूणायाम् अमरः। भावे घञ्। २जडीभावे पु०।

**स्तम्भन** पु० स्तम्भयति स्तम्भ-णिच् ल्यु। कन्दर्पस्य पञ्चबाणेषु मध्ये १बाणभेदे जटा०। भ वे ल्युट्। २जडीकरणे न० करणे ल्युट्। षट्कर्मान्तर्गते तन्त्रोक्ते ३अभिचारकर्मभेदे

**स्तम्भित** त्रि० स्तम्भ जाड्ये णिच्-कर्मणि क्त। जडीकृते

**स्तरिमन्** पु० स्तृ-कर्मणि इमनिच्। तल्पे उणा०।

**स्तरी** स्त्री स्तृ-कर्मणि ई। धूमे हेमच०।

**स्तव** पु० स्तु-अप्। १प्रशंसायाम् २स्तुतौ च।

**स्तवक** पु० स्तूयते स्तु-अवक पृषो० वा। गुच्छे अमरः। २ग्रन्थपरिच्छेदे ३समूहे च मेदि०।

**स्तवेय्य** पु० स्तु-एय्य। इन्द्रे उणा०।

भोक्तव्यं गोदानमिति यावत्। अननुज्ञातत्यागभोगविषयमेतत्। तदनुज्ञया त्वनापद्यपि न दोषः "स्वयमेवेत्येवकारः स्वापत्यानां व्युदासार्थः। भर्तृव्युदासस्तु पतिर्नार्हतीत्यनेनाभिधानात्। भर्तृव्युदासे ततो वहिरङ्गाणां भ्रात्रादीनां व्युदासश्चापि दण्डापूपिकया सिद्धत्वात्। अनापदीत्यभिधानादापदि न दोषः। अतएव "पुत्रार्त्तिहरणे चापि स्त्रीधनं भोक्तुमर्हतीति" तस्यैव वाक्यशेषः। पतिरित्यनुषङ्गः। पुत्रग्रहणं कुटुम्बोपलक्षणं तस्यार्त्तिर्भक्ष्याद्यभावनिमित्ता पीड़ा तस्या हरणे। अवश्यादर्थाश्चदपि धनाभावात्तस्मिन् सङ्कटे स्त्रीधनमननुज्ञातमपि पतिस्त्यक्तुं भोक्तुं चार्हतीत्यर्थः। ननु परधने त्यागभोगयोः स्वाम्यनुज्ञया विना कथमर्हता बाधिताऽनेन बोध्यते। अननुज्ञायामनापद्यपि न विरोधः। उच्यते। वचनबलात्तदर्थविषये स्वत्वमेव तत्र तन्नेत्यदोषः। अतएव योगीश्वरोऽपि "दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ सम्प्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति"। धर्म्मकार्य्ये आवश्यके नित्ये नैमित्तिके च सम्प्रतिरोधके दण्डाद्यर्थं राजावरोधे सति। वाचस्पतिस्तु सम्प्रतिरोधक इति व्याधिविशेषणं व्याध्युत्थानबाधके इति च तदर्थं ह्याह। नाकामो दातुमर्हतीत्यपि दारिद्र्यादिकृतदानासामर्थ्ये दुर्भिक्षादिगृहीतमवश्यं देयमेतावतैव वचनोपपत्तौ सामर्थ्येऽप्यदानमित्यर्थकत्वस्य कल्पयितुमनर्हत्वात्। पतिग्रहणादापद्यपि पत्युरेव स्त्रीधनग्रहणाधिकारः पतिदानस्वेच्छया नान्यस्येति ध्येयम्। भर्त्रा दातुं प्रतिश्रुतं भार्य्यायै तस्मिन् मृते पुत्रादिभिस्तद्देयमित्याह स एव "भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैरिति"। सुतपदञ्च पौत्रप्रपौत्रयोरुपलक्षणमृणवदित्यभिधानात्। अनेन स्त्रीधने जीवन्मातृकाणां सुतानां अन्यना सत्वेऽपि नास्ति विभाग इति गम्यते। एवं स्त्रीधनतत्त्वम्"। दायभागमतं पारिभाषिकपरत्वमप्येव। अनयोर्युक्तायुक्तत्वं सुधीभिर्भाव्यम्। उत्तराधिकारिशब्दे ११०१ पृ० च तद्विभागो दृश्यः।

**स्त्रीधव** पु० स्त्रियं धुनाति धू–अच्। पुरुषे जटा०।

**स्त्रीधर्म्म** पु० ६त०। स्त्रीणां नारीकुसुमविकाशे रजसि हेमच०

**स्त्रीधर्म्मिणी** स्त्री स्त्रीधर्म्मोऽस्त्यस्या इनि। रजस्वलायां स्त्रियाम् अमरः।

**स्त्रीपण्योपजीविन्** पु० स्त्रीरूपेण पण्येन जीवति जीव–णिनि। धनं गृहीत्वा सम्भोगार्थमन्यस्मै स्त्रियं दत्त्वा तल्लब्धधनोपजीविनि।

**स्त्रीपुंधर्म्म** पु० स्त्रियाः पुंसश्च धर्म्मः तदभिज्ञस्य व्यवहारो वा। स्त्रीपुंसयोः व्यवहाराचाररूपे धर्म्मे तद्विषयके अष्टादशसु विवादपदेषु मध्ये विवादपदभेदे स्त्रीपुंसयोगोऽप्यत्र। वीर० तत्स्वरूपं यथा "तत्स्वरूपमाह नारदः "विवाहादिविधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्त्यते। स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते" इति। विवाहादिपरत्वेन स्त्रीपुंधर्म्मा व्यवहृन्ते। अतएव मनुर्व्यवहारपदोद्देशकाले स्त्रीपुंधर्म्मो विभागश्चेत्युद्दिश्य प्रतिज्ञापूर्वकं तेषां निरूपणं चकार "पुरुषस्य स्त्रियाश्चैव धर्म्मे वर्त्मनि तिष्ठतोः। संयोगे विप्रयोगे च धर्म्मान् वक्ष्यामि शाश्वतान्" इत्यादिना संयोगे अन्योन्यसन्निधाने विप्रयोगे देशतः कालतो वा व्यवधाने। शाश्वतान् नित्यान् अवश्यानुष्ठेयानिति यावत्। के ते धर्म्मा इत्याकाङ्क्षायामाह स एव "अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे" इत्यादि। पुरुषैः भर्त्तृपुरुषैः। विषये दण्डहेतुभूतव्यवहारादिविषये। नारदोऽपि "स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः। अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत्" इति। अतोऽन्यैरपि स्त्रीणामस्वातन्त्र्यं यथा भवति तथा कल्पयितव्यमित्याशयः। पुरुषेण स्त्री व्यभिचारादवश्यं रक्षणीया। तथा च हारीतः "एकव्रतत्वस्वभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति जीवति जारजः कुण्डोऽमृते भर्त्तरि गोलकस्तस्माद्गोत्रापायाशङ्कायां रक्षेच्छायानाशे कुलनाशः कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशो देवपितृयज्ञनाशे आत्मनाशः आत्मनाशे सर्व्वनाशः" इति। एकव्रतत्वस्वभावात् स्त्रीणां एकभर्त्तेति नियमनाभावात्। परेन्द्रियोपहतत्वात् परस्मिन् पुंसि इन्द्रियस्य मनसो रागादिना उपहतत्वात्। कुलसङ्करकारिण्यः जात्यतिस्वभावानुमतप्रजोत्पादनेन कुलसाङ्कर्य्यकारिण्यः। अतएव शङ्खलिखितौ "यस्मिन् भावोऽर्पितः स्त्रीणामात्मैव तादृशं तनुजं जनयन्तीति"। तन्तुः पुत्रादिसन्ततिः। मनुरपि "सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः। द्वयोर्हि

कुलयोः शोकमावहेयुररक्षिताः। इमं हि सर्व्ववर्णानां पश्यन्तो धर्म्ममुत्तमम्। यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्ब्बला अपि। स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च। स्वञ्च धर्म्मं प्रयत्नेन जायां रक्षन् हि रक्षति" इति। द्वयोः कुलयोः भर्तृपितृकुलयोः। अनेन कुलद्वयहेतोरपि रक्ष्या इति शोककथनमुखेन दर्शितम्। अतएव बृहस्पतिः "सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्य्या स्त्री स्वबन्धुभिः। श्वश्र्वादिभिः पालनीया गुरुस्त्रीभिर्दिवानिशम्"। मनुरपि "कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः। मृते भर्त्तरि पुत्रस्तु वाच्यो मातुररक्षिता" इति। काले कन्यादानयोग्ये काले। वाच्यो निन्द्यः। अनुपयन् अनुगच्छन्। स एव "पिता रक्षति कौमारे भर्त्ता रक्षति यौवने। पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति"। याज्ञवल्क्योऽपि "रक्षेत् कन्यां पिता, विन्नां पतिः, पुत्रस्तु वार्द्धके। अभावे ज्ञातयस्तेषां स्वातन्त्र्यं क्वचित् स्त्रियाः" इति। विन्ना विवाहिता। पतिपुत्रविहीनायास्तु रक्षणं पतिपक्षान्तर्गतेन प्रत्यासन्नेन कार्य्यम्। तथा च नारदः "मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियः। विनियोगात्मरक्षासु भरणे च स ईश्वरः। परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये। तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियः"। पितृपक्षाद्यभावे स एवाह "पक्षद्वयावसाने तु राजा भर्त्ता स्मृतः स्त्रियः। स तस्या भरणं कुर्य्यान्निगृह्णीयात् पथश्च्युताम्" इति। विनियोगः कर्म्मणि नियोजनम्। भर्त्ता पोषकः स्त्रीस्वभावं दर्शयति दक्षः "जलौकावत् स्त्रियः सर्व्वा भूषणाच्छादनाशनैः। सुहृतापि कृता नित्यं पुरुषं ह्यपकर्षति। जलौका रक्तमादत्ते केवलं सा तपस्विनी। इतरा तु धनञ्चित्तं मांसं वीर्य्यं बलं सुखम्। साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत्। तृणवन्मन्यते नारी वृद्धभावे स्वकम्पतिम्। अनुकूल्ये वर्त्तमाना या स्नेहाद्या च निवारिता। अपथ्या तु भवेत् पश्चाद् यथा व्याधिरुपेक्षितः" इति। सुहृता तृप्ता कृतापीत्यन्वयः। अपकर्षति सततमायासमात्रं करोति अनुकूल्ये स्वेच्छायाम्। अपथ्या अहितहेतुभूता। मनुरपि "नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः। सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते। पौंश्चल्याच्चलचित्ताच्च नैःस्नेह्याच्च स्वभावतः। रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते। शय्यासनमलङ्कारं कामं क्रोधमनार्जवम्। द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत्। नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मे व्यवस्थितः। निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः। तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि। स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतीः। यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता। तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम्। ध्यायत्यनिष्टं यत्किञ्चित् पाणिग्राहस्य चेतसा। तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते। एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम्। परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति" इति। निरिन्द्रिया निर्वीर्य्या धैर्य्यप्रज्ञादिरहिता इति यावत्। स्त्रियोऽनृतमिति प्रायशोऽनृतवदनशीलत्वादुच्यन्ते। श्रुतयः श्रुतिवाक्यानि। निगमेषु वेदेषु स्वालक्षण्यं स्वरूपं तासां श्रुतीनामध्ये या निष्कृतिरूपा व्यभिचारप्रायश्चित्तरूपास्ताः शृणुत स्त्रीस्वभावज्ञानार्थमित्यर्थः। महाभारतेऽपि "कुलीना रूपवत्यश्च नाथवत्यश्च योषितः। मर्य्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद!। अनर्थित्वान्मनुष्याणां भयात् परिजनस्य च। मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु। यौवने वर्त्तमानानां मृष्टाभरणवाससाम्। नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः। यदि पुंसां गतिर्ब्रह्मन्! कथञ्चिन्नोपपद्यते। अन्योन्यस्मिन् प्रवर्त्तन्ते न च तिष्ठन्ति भर्तृषु। अलाभात् पुरुषाणाञ्च भयात् परिजनस्य च। वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः। नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः। नान्तकः सर्व्वभूतानां न पुंसां वामलोचना। कामानामपि दातारं दातारं मानसान्त्वयोः। रक्षितारञ्च मृष्यन्ति भर्त्तारं ह्यसतः स्त्रियः" इति। श्रीरामायणेऽपि "नैवाङ्गनानामस्थितो नापि दृश्योऽस्ति कश्चन। सर्व्वमेवावगच्छन्ति सता मदनजा इवेति"। अथ रक्षणप्रकारः। तत्र मनुः "न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्। एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्" इति। प्रसह्य आक्रम्य बलेनेति यावत्। बद्ध्यावरोधेन शरीरव्यभिचाररक्षणं शक्यन्तथापि मानसव्यभिचाररक्षणमशक्यमित्यभिप्रायेण मनुना न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुमित्युक्तम्। न च मानसव्यभिचाररक्षणमनर्थकमन्यजत्वाभावेन गर्भाविशुद्धिविघाताभावादिति वक्तव्यम्। यत आह च

एव "यादृशं भजते स्त्री हि सुतं सूते तथाविधम् । तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत् प्रयत्नतः" इति । यादृशं पुरुषमृतुकाले स्त्री मनसा भजते तत्समानशीलं पुत्रं जनयतीति पूर्वार्द्धार्थः । अतएवाहुः शकुन्तलाखिलौ "यादृग् भावोऽर्पितः स्त्रीणामात्मैव तच्छीलं जनयन्तीति" । मानसव्यभिचारादपि स्त्रियं रक्षेदिति शेषः । तथा च मनुना तस्या रक्षणादिनोप रक्षणोपायमेवाह्वौ दर्शितः । परिरक्षणोपायमाह मनुरेव "अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत् । शौचे धर्मे च पक्त्यां च पारिणाह्यस्य चेक्षणे" इति । अर्थस्य संग्रहे स्वेन समानीतार्थसंविधाने । व्यये धनोत्क्रव्यये । शौचे गृहादेरुद्वकरसंमार्जनोपलेपनादौ । धर्मे अग्निहोत्राद्यातिथ्यलौकिकव्यापारे । पक्त्यां पाकव्यापारे । पारिणाह्यं पीठादि गृहोपकरणं तस्य ईक्षणे विचारणे । निरन्तरगृहव्यापारनियोजनात् पुरुषान्तरचिन्ताराहित्यं यथा भवति भार्यायाः तथा कुर्यादिति तात्पर्यार्थः । बृहस्पतिरपि "वाव्ययेऽथ संस्कारे गृहोपस्करणक्षणे । शौचाग्निकार्ये संयोज्याः स्त्रीणां शुद्धिरियं स्मृता" इति । एवंविधव्यापारासक्तचित्ततया साध्व्यः इति अपदिशन्न इत्याह मनुः "आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः" इति । आत्मना गृहव्यापारासक्तेनान्तःकरणेन सुरक्षिताः साध्व्यः । आप्तपुरुषरक्षितास्तु स्त्रियो न सम्यग्रक्षिता इत्याह स एव "अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः" इति । आप्तकारिभिः पुरुषैः गृहे रुद्धा इत्यन्वयः । आप्ताश्च ते कारिणश्चाप्तकारिणः । अरक्षिताः सम्यग्रक्षाविहीना इत्यर्थः । भर्तुर्गुणनिरत्वमपि स्त्रीणां रक्षणोपाय इति दर्शयितुं स एवाह "यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि । तादृग्गुणा सा भवति समुद्रेणेव निम्नगा । अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा । शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम्" इति । भार्याया भरणमप्यावश्यकमित्याह स एव "देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः । तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन्" । देवैर्दत्ता देवदत्ता दैववशादायातेति यावत् । तां भार्यां स्वयंवरे पतिर्विन्दते । तत्र स्वव्यापाराभावाद्देवदत्तामित्यनेन विवाहलक्षणस्य स्त्रीपुंसयोः सम्बन्धस्य न स्वाधीनत्वं किन्तर्हि दैवकृतत्वमिति दर्शितम् । देवदत्तत्वञ्च ...याम् "सोमोऽददद्गन्धर्वाय गन्धर्वो ददद्ग्नये । रयिञ्च पुत्रांश्चादादग्निर्मह्यमथो इमाम्" इत्यादिभ्यः श्रुतिवाक्येभ्योऽवगम्यते । तेन देवैर्दत्ताया अभरणेन दातॄणां देवानां द्रोह आपाद्यत इत्यर्थवाद इत्युक्तं मदनरत्ने । ... च साध्वीमित्यस्य पतिव्रतामित्यर्थपरत्वेन व्यभिचारिण्या भरणमनावश्यकमिति वक्तव्यम् । तस्या अपि कदन्नादिनाऽवश्यभरणीयत्वात् । तथा च नारदः "व्यभिचारे स्त्रियामौण्ड्यमधःशयनमेव च । कदन्नञ्च कुवासश्च कर्म चावस्करोज्झनम्" इति । स्त्रियाः स्वैरं व्यभिचारे जाते मुण्डनमधःशयनञ्च कारयेत् । कदन्नं कुवासश्च भरणार्थं दद्यात् । अवस्करशोधनरूपं कर्म कारयेदित्यर्थः । दोषरहितायाः भार्यायाः परित्यागिनं प्रत्याह नारदः "अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् । त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा" इति । विष्णुरपि "निर्दोषां परित्यजन् पत्नीं" चौरवच्छास्य इत्यनुषङ्गः । निर्दोषाम् त्यागहेतुभूतदोषरहिताम् । दण्डेन स्थापयितुमशक्ये त्वाह योगीश्वरः "आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् । त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियः" इति । तृतीयांशमिति धनतृतीयांशम् । राज्ञा भार्यायै दाप्यः । अधनः भरणमात्रपर्याप्तं धनं दाप्य इत्यर्थः" ।

**स्त्रीपुंस** पु० [द्व०] स्त्री च पुमांश्च अच् समा० । मिलितयोः स्त्रीपुरुषयोः ।

**स्त्रीपुंसलक्षणा** स्त्री स्त्रीपुंसयोर्लक्षणमस्याम् । स्तनश्मश्रुप्रभृतिस्त्रीपुरुषचिह्नधारिण्यां स्त्रियाम् पोटायाम् अमरः

**स्त्रीप्रिय** पु० ६त० । १आम्रवृक्षे त्रिका० । २स्त्रीप्रियमात्रे त्रि०

**स्त्रीमुखप** पु० स्त्रीमुखं पाति पा—क । दोहदवृक्षाद्यार्थे राजनि० ।

**स्त्रीरोग** पु० ६त० । स्त्रीणां रोगे योनिरोगादौ सुश्रुतः ।

**स्त्रीलिङ्ग** पु० स्त्रिया इव लिङ्गं तत्कार्यं यस्य । स्त्रीलिङ्गविहितव्याकरणोक्तसंस्कारयुक्ते शब्दभेदे । ६त० स्त्री-२चिह्ने स्तनादौ न० ।

**स्त्रीवश** पु० ६त० । स्त्रीवशीभूते ।

**स्त्रीविधेय** पु० ६त० । स्त्रीवशीभूते ।

**स्त्रीसंग्रहण** न० स्त्रियाः संग्रहणं यत्र । परस्त्रीहरणरूपे विवादपदभेदे । तत्स्वरूपादिकं वीरमि० दर्शितं यथा "अथ स्त्रीसंग्रहणाख्यं व्यवहारपदम् । तत्र तल्लक्षणमाह बृहस्पतिः "पापमूलं संग्रहणं त्रिप्रकारं

विशेषत। बलोपधिकृते द्वे तु तृतीयमनुरागजम्" इति। एतेषां स्वरूपं दर्शयति स एव "अनिच्छन्त्या यत् क्रियते सुप्तोन्मत्तप्रमत्तया। विलपन्त्या वा रहसि बलात्कारकृतन्तु तत्। छद्मना गृहमानीय दत्त्वा वा मदकारणम्। संयोगः क्रियते यत्र तदुपधिकृतं विदुः। अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन वा। कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम्" इति। अनुरागजसंग्रहस्य त्रिविधत्वं दर्शयति स एव "तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम्" इति। व्यासोऽपि "संग्रहस्त्रिविधो ज्ञेयः प्रथमोमध्यमस्तथा। उत्तमश्चेति शास्त्रेषु कथ्यते च पृथक् पृथक्" इति। एतेषां स्वरूपमाह तत्रैव स एव "कटाक्षावेक्षणं हास्यं दूतीसंप्रेषणं तथा। स्पर्शोऽभूषणवस्त्राणां प्रथमः संग्रहः स्मृतः। प्रेषणं गन्धमाल्यानां फलधूपान्नवाससाम्। सम्भाषणञ्च रहसि मध्यमं संग्रहं विदुः। एकशय्यासनं क्रीडा चुम्बनालिङ्गनं तथा। एतत् संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः" इति। स्त्रीसंग्रहणस्य ज्ञानोपायमाह याज्ञवल्क्यः "पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया। सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा" इति। परभार्यया सह केशाकेशि क्रीडनेन सद्यः अभिनवैः कामजैः करजदशनादिकृतव्रणादिचिह्नैः द्वयोः सम्प्रतिपत्त्या वा स्त्रीसंग्रहणवान् इति प्रतिपत्तव्य इत्यर्थः। उपायान्तरमाह स एव "नीवीस्तनप्रावरणसक्थिकेशावमर्शनम्। अदेशकालसम्भाषः सहैकस्थानमेव च" इति। कुर्वाण इति शेषः सक्थि ऊरुः। मनुरपि "स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत् तया। परस्परस्यानुमते सर्वं संग्रहणं स्मृतम्"। यस्तु दर्पादिना मयेयं भुक्तेति वदति सोऽपि तथाविधत्वेन ग्राह्य इत्याहतुर्मनुनारदौ "दर्पाद्वा यदि वा मोहात् श्लाघया वा स्वयं वदेत्। पूर्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम्" इति। बलात्कारकृतस्य स्त्रीसंग्रहणस्य साहसान्तर्भूतत्वेन तत्रैव दर्शितत्वादुपधिकृते दण्डमाह बृहस्पतिः "उपाधिना कामयेद्यस्तु तस्य सर्वहरो दमः। अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः" इति। सर्वहरः सर्वस्वहरः एतत् सजातीयविषयम्। हीनोत्कृष्टागमने तु क्रमेणार्द्धं धनं सर्वस्वहरणरूपो वधसहितसर्वस्वहरणरूपो वा दण्डोऽवगन्तव्यः। "दमानेयः यथायोग्यं" वाक्यवादनिरूपण-दर्शितत्वात्। तत्र च पुरुषस्यापकर्षाभावे युक्तो दण्डो न स्त्रिया इति नोक्तस्तस्याः दण्डः, तेन साहसस्त्रीसंग्रहणवत् प्रकृतेऽपि सजातीयोपभुक्तायाः मध्यमसाहसाधिकाः प्रायश्चित्ताचरणानन्तरं पुनरपि तेनोपभुक्ताया इति ज्ञातव्यमित्युक्तं मदनरत्ने। अनुरागजत्रिविधसंग्रहणे दण्डमाह स एव "त्रयाणामपि चैतेषां प्रथमो मध्यमोत्तमौ। विनयः कल्पनीयः स्यादधिकोद्धिकोऽधिकः" इति। अधिकः प्रथमसाहसादिभ्योऽधिकः। सम्भोगे दण्डमाह याज्ञवल्क्यः "सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः। प्रातिलोम्ये वधः पुंसो नार्याः कर्णादिकर्त्तनम्" इति। सवर्णामपि बलात्कारेण सजातीयपरभार्यागमने साशीतिपणसहस्रो दण्डः। यदा त्वानुलोम्येन हीनजातीयागमनं तदा मध्यमसाहसः, उत्कृष्टजातीयागमने गन्तुर्वधः। तस्याः कर्णादिकर्त्तनमित्यर्थः। एतच्चानुरागजसंग्रहणविषयं स्त्रिया अपि दण्डाभिधानात्। बलात्कारोपधिकृतयोस्तु स्त्रिया अनपराधत्वेन दण्डाभावात्। अस्मादेव प्रातिलोम्येन गमने पुरुषस्य वधं विधाय स्त्रियास्तदर्द्धतुल्यकर्णनासादिकर्त्तनविधानात् सजातीयागमने पुरुषस्य यावुक्तावुत्तममध्यमसाहसौ दण्डौ तदर्द्धं स्त्रियादण्ड इति सूचितम्। अतएव कात्यायनः "सर्वेषु चापराधेषु पुंसो योऽर्थदमस्तथा। तदर्द्धं योषिता दाप्या वधे पुंसोऽङ्गकर्त्तनम्"। इति। स्त्रिया इति शेषः। यदा पुनः सवर्णामगुप्तां आनुलोम्येन गुप्तां वा व्रजति तदा विशेषमाह मनुः "सहस्रं ब्राह्मणो दण्ड्योऽगुप्तां विप्रां बलाद् व्रजन्। शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः। सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्। शूद्रायां क्षत्रियविशोः साहस्रन्तु भवेद्दमः" इति। ते क्षत्रियवैश्ये। एतच्च गुरुसखिभार्यादिव्यतिरिक्तविषयम्। तत्र दण्डान्तरविधानात्। तदाह नारदः "माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा। पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा। दुहिताचार्यभार्या च सगोत्रा शरणागता। राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या। शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते" इति। यत्तु प्रातिलोम्येन गमने क्षत्रियादेः पुरुषस्य वध इत्युक्तं योगीश्वरवचने। तदगुप्ताविषयमन्यथाऽर्थदण्डः। तथा च मनुः "उभावपि हि तावेव ब्रा-

तस्या व्याघ्राद्यभिभवो न भवेत् । अतएव नारदः “व्याधिता सस्त्रना व्यङ्गा राजकर्मपरायणा । आमन्त्रिता चेदागच्छेद्दण्ड्या बहुवा स्मृता” इति । पारदार्यप्रसङ्गात् कन्यायामपि दण्डमाह याज्ञवल्क्यः “अलङ्कृतां हरन् कन्यामुत्तमं त्वन्यथाऽधमम् । दण्डं दद्यात् सवर्णासु प्रातिलोम्ये वधः स्मृतः” इति । अलङ्कृतां विवाहाभिमुखीं तां सवर्णां कन्यामपहरन् उत्तमसाहसं दण्डनीयः । तदनभिमुखीं हरन् प्रथमसाहसम् । उत्कृष्टवर्णजातां हरतः क्षत्रियादेर्वध इत्यर्थः । आनुलोम्येन सकामाहरणे न दण्डस्तथा च स एव “सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः” इति । कन्यादूषणे दण्डमाह स एव “दूषणे तु करच्छेद उत्तमायां वधः स्मृतः । शतं स्त्रीदूषणे दद्यात् द्वे तु मिथ्याभिशंसने” इति । “पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गां च मध्यमम्” इति । यदाकामां कन्यामङ्गुष्ठादिना प्रसह्य दूषयति तदा करच्छेदः । यदा तु अङ्गुलिप्रक्षेपेण तामेव योनिक्षतां कुर्वन् दूषयति तदा विशेषमाह मनुः “अभिषह्य तु यः कन्यां कुर्याद्दर्पेण मानवः । तस्याशु कर्त्ये अङ्गुल्यौ दण्डञ्चार्हति षट्शतम्” इति । सकामदूषणेऽप्याह स एव “सकामां दूषयन् कन्यां नाङ्गुलिच्छेदमर्हति । द्विशतं तु दमं दाप्यः प्रसक्तिविनिवृत्तये” इति । यदा कन्या विदग्धा वा कन्यां दूषयति तदाप्याह स एव “कन्यैव कन्यां या कुर्यात्तस्यास्तु द्विशतो दमः । या तु कन्यां प्रकुर्यात् स्त्री सा सद्यो मौण्ड्यमर्हति । अङ्गुल्योरेव वा छेदः खरेणोद्वहनं तथा” इति कुर्यात् योनिक्षतवतीमिति शेषः । यदा पुनरुत्कृष्टजातीयां कन्यां सकामामकामां वाभिगच्छति तदा हीनस्य क्षत्रियादेर्वधः । यदा सकामां सवर्णामभिगच्छति तदा शुल्कं गोमिथुनं तत्पित्रे दद्यात् । अनिच्छति तस्मिन् दण्डरूपेण राज्ञे दद्यात् । सवर्णामकामाङ्गच्छतो वध एव । तदाह मनुः “उत्तमां सेवमानस्तु जघन्यो वधमर्हति । शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि । योऽकामां दूषयेत् कन्यां स सद्यो वधमर्हति । सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः” इति । चाण्डाल्यादिगमने दण्डमाह याज्ञवल्क्यः “अन्त्याभिगमने त्वङ्क्यः कुबन्धेन प्रवासयेत् । शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे वधः” इति । अन्त्या चाण्डाली तद्गमने सवर्णिकान् प्रायश्चित्ताभिमुखान् “सहस्रं त्वन्त्यजस्त्रियमिति” मनुवचनानुसारेण पणसहस्रं दण्डयित्वा कुत्सितवर्णेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत् । शूद्रः पुनश्चाण्डालीङ्गच्छंश्चाण्डाल एव । अन्त्य एवेति माधवीये पाठः । चाण्डालस्य तूत्कृष्टजातिस्त्र्यभिगमने वध एवेत्यर्थः । योनिव्यतिरिक्तस्थले गच्छतो दण्डमाह स एव “अयोनौ गच्छतो योषां पुरुषं वाऽभिमेहतः । चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे” इति । यस्तु योषां मुखादावभिगच्छति पुरुषं वाभिमुखं मेहति तथा प्रव्रजितां वा गच्छति असौ चतुर्विंशतिपणा दण्डनीय इत्यर्थः । स्त्रीकृते संग्रहणे दण्डमाह बृहस्पतिः “स्वयमागता वा नारी प्रलोभ्य स्पर्शनादिना । कामयेत् तत्र सा दण्ड्या नरस्यार्द्धदमः स्मृतः” इति पञ्चमा स्त्रियं प्रलोभ्य गच्छतः पुरुषस्य यो दण्डस्तदर्द्धं दण्ड्या” ।

**स्त्रीसभ** न० स्त्रीणां सभा क्लीवत्वम् । स्त्रीसमाजे ।

**स्त्रीसेवा** स्त्री ६त० । स्त्रीसम्भोगे व्यवायमैथुनेषु नारीसेवने

**स्त्रीस्वभाव** पु० स्त्रिया इव स्वभावो यस्य । १अन्तःपुररक्षके षण्ढके शब्दमा० ६त० । २स्त्रीणां शीले च । स्त्रीपुंधर्मशब्दे दृश्यम् ।

**स्त्रैण** न० स्त्रिया इदम् अण् नञ् । १स्त्रीस्वभावे “स्त्रैणेन नीता विकृतिं लघिम्ना” भट्टिः । २स्त्रीविषये स्त्रिया अपत्ये स्त्रीणां समूहे वा अण् । ३स्त्र्यपत्ये स्त्रीसमूहे न० ।

**स्थ** त्रि० स्था–क । १स्थितिशीले प्रायेण उत्तरपदस्थित एवास्य प्रयुज्यते यथा पदस्थः मार्गस्थः । २स्थाने पु० शब्दर० ।

**स्थग** संवरणे भ्वा० पर० सक० सेट् घटा० मिचि न वृद्धिः । स्थगति अस्थगीत् । अणोपदेशत्वमस्य चिन्त्यमूलम् ।

**स्थग** त्रि० स्थग–अच् । धूर्त्ते शब्दर० ।

**स्थगन** न० स्थग–ल्युट् । आच्छादने हेमच० ।

**स्थगित** त्रि० स्थग–क्त । १आवृते २तिरोहिते हेमच० ।

**स्थगी** स्त्री स्थग्यतेऽनया घञर्थे क गौरा० ङीष् । ताम्बूलपात्रे करङ्के हेमच० ।

**स्थगु** न० स्थग–उन् । गड़ौ (कुज) “तदेव स्थगु यद्वीर रथघोषमिवायतम् । कुब्जायाः प्रतीता च लेपयिष्यामि ते स्थगु” रामा० वा० ९अ० ।

**स्थण्डिल** न० स्थल–इलच् नुक् लस्य डः । १चत्वरे उच्चत्ववर्जिते शून्ये समीकृते प्रदेशे अमरः । “निषेदुषी स्थण्डिल एव केवले” कुमारः । २यज्ञार्थं परिष्कृतस्थाने शब्दर०

स्नानं समाचरेत् । यथाकृतः स्नानविधिं वक्ष्यामि कलशोद्भव! । विधिस्नानं यतः प्राहुः स्नानाच्छतगुणोत्तरम् । विशुद्धां मृदमादाय बर्हींषि तिलगोमयम् । शुचौ देशे परिस्थाप्य चाचम्य स्नानमाचरेत् । उपपद्मो बद्धशिखो जलमध्ये समाविशेत् । उरुं हि राजेति मन्त्रेण तोयमावर्त्य संस्थितः । ये ते शतं ततो जप्यात् तोयस्था मन्त्रवाय च । सुमित्रायास्तो मन्त्रेण पूर्वं कृत्वा जलाञ्जलिम् । क्षिपेद् द्वेष्यं समुद्दिश्य जपन् दुर्मित्रिया इति । इदं विष्णुरिदं जप्त्वा लिम्पेदङ्गानि मृत्स्नया । मृदैकया शिरः क्षाल्यं द्वाभ्यां नाभेस्तथोपरि । नाभेरधस्तु तिसृभिः पादौ षड्भिर्विशोधयेत् । मन्त्रैस्तु प्रक्षाल्याभिस्तथ चापो यथाविधि जपन् । चद्विश्वाभ्यः शुचिरिति मन्त्रा मन्त्रज्ञ ते यतः । मानस्तोकमिमं जप्त्वा लिम्पेद्गात्राणि गोमयैः । इमं मे वरुणेत्यादिमन्त्रैः स्नात्वाभिषेचनम् । तत्त्वा यामि तथा त्वन्नः स त्वन्नश्चाप्युदुत्तमम् । धाम्नाधाम्नस्त्रयामापो मोषधीरिति संजपेत् । यदा दुरन्नद्या सुमन्तु सेतिमावश्चेति च । चत्वार्येता इमे मन्त्राः प्रोक्ताः स्नानाभिषेचने । प्रणवेन ततो विप्रो व्याहृतिभिस्ततः । स्नात्वानं पावयेद्विद्वान् गायत्र्या च ततः कृती । आपो हिष्ठेति तिसृभिः प्रत्यृचं पावनं स्मृतम् । एते वै पावना मन्त्रा इदमापोऽभिविश्रुतौ । देवीराप आपो देवा द्रुपदादिवसंज्ञकः । शन्नो देवी रपो देवीरपाश्च वरमित्यपि । पुनन्तमेति च नव पावमान्यः प्रकीर्त्तिताः । ततोऽघमर्षणं जप्त्वा द्रुपदां च ततो जपेत् । प्राणायामं च विधिवदथ वान्तर्जलं जपेत् । प्रणवं त्रिर्जपेदापि विष्णुं वा संस्मरेत् सुधीः । स्नात्वेत्थं वस्त्रमापीड्य स्थलीयाद्धौतवाससी" ।

**स्नानतृण** न० स्नानार्थं तृणम् । कुशे शब्दर० ।

**स्नानीय** त्रि० स्नानाय हितम् छ । स्नानसाधने तैलोद्वर्त्तनादौ

**स्नायु** स्त्री स्नाति—शुध्यति दोषोऽनया स्ना उण् । शरीरादिबन्धननाडीभेदे तत्स्वरूपसंख्यादि भावप्र० उक्तं यथा "तत्र स्नायोः स्वरूपमाह । मेदसः स्नेहमादाय सिरा स्नायुत्वमाप्नुयात् । सिराणां हि मृदुः पाकः स्नायूनान्तु ततः खरः । स्नायवो बन्धनानि स्युर्देहमांसास्थिमेदसाम् । सन्धीनामपि शस्तास्तु सिराभ्यः सुदृढाः स्मृताः । नौर्यथा फलकास्तीर्णा बन्धनैर्बहुभिर्युता । निर्भ्राऽगाधसलिले भवेद्भारसहा भृशम् । एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः । स्नायुभिर्बहुभिर्बद्धास्तेन भारसहा नराः" ; स्नवकं चाकृत्तैः कस्तौष्टी व्याप्ताः "शतानि नव जायन्ते शरीरे स्नायवो नृणाम् । तासां विवरणं ब्रूमः शिष्याः शृणुत यत्नतः । शाखासु षट्शतानि स्युः कोष्ठे त्रिंशत् शतद्वयम् । ग्रीवायां मूर्द्धदेशे तु स्नायूनां सप्ततिः स्मृताः" । तत्र शाखागताः प्राह । एकैकस्यां च शाखायां षट् षट् त्रिंशच्च । तावन्त्य एव तत्कूर्चगुल्फेषु । तावन्त्य एव जङ्घायां दश जानुनि । चत्वारिंशदूरौ । दश वङ्क्षणे । एवं सार्द्धशतमेकस्मिन् सक्थिनि भवन्ति । एतेनेतरसक्थि बाहू च व्याख्यातौ । अथ कोष्ठगताः प्राह षष्टिः कट्यां तावन्त्य एव पार्श्वयोः । अशीतिः षट्त्रिंशदुरसि । अथ ग्रीवोर्द्ध्वगताः प्राह षट्त्रिंशद् ग्रीवायाम् । चतुस्त्रिंशत् मूर्ध्नि एवं स्नायूनां नवशतानि भवन्ति" ।

**स्नायुरोग** पु० ६त० । स्नायुस्थे रोगभेदे तन्निदानादि भावप्र० उक्तं यथा

"तत्र स्नायुरोगस्य निदानं सामान्यलक्षणमाह "शाखासु कुपितो दोषः शोथं कृत्वा विसर्पवत् । भिनत्ति तं क्षतं तत्र सोष्मकं विशोष्य च । कुर्यात्तन्तुनिभं सूत्रं तत्पिण्डैर्लक्षयेत्तु तैः । शनैः शनैः क्षताद्वु याति छेदात्तत्कोपमावहेत् । तत्पाताच्छोथशान्तिः स्यात् पुनः स्थानान्तरे भवेत् । स्नायुरोग इतिख्यातः क्रियोक्ता तु विसर्पवत् । बाह्वोर्यदि प्रमादेन त्रुट्यते जङ्घयोरपि । सङ्कोचं खञ्जताञ्चापि छिन्नो नूनं करोत्यसौ" ।

**स्नायुर्मन्** न० नेत्ररोगभेदे "स्थिरं प्रस्तारिमांसाढ्यं शुष्कं स्नाय्वर्म पञ्चमम्" माधवनिदानम् ।

**स्निग्ध** त्रि० स्निह-क्त । १स्नेहयुक्ते वत्सले २मसृणे चिक्कणे अमरः । ३रक्तैरण्डे ४सरलवृक्षे च पु० राजनि० ५मधूच्छिष्टे न० ६मेदायां स्त्री राजनि० ।

**स्निग्धतण्डुल** पु० ६ब० । षष्टिधान्ये राजनि० । शब्दर० ।

**स्निग्धता** स्त्री स्निग्धस्य भावः । १मैत्रे राजनि० २प्रियत्वे च

**स्निग्धदारु** पु० स्निग्धं दारु काष्ठमस्य । १सरलवृक्षे जटा० २देवदारुवृक्षे च राजनि० ।

**स्निग्धपत्त्रक** पु० स्निग्धं पत्त्रमस्य कप् । १हस्तकरञ्जे २गुच्छकरञ्जे ३गञ्जरतृणे च राजनि० ४बदर्यां स्त्री जटा० । ५पालक्यां ६काश्मर्यां च स्त्री राजनि० । [च राजनि० ।

**स्निग्धपिण्डीतक** पु० कर्म० । १मदनवृक्षभेदे २पिण्डीतकवृक्षे

**स्निग्धफला** स्त्री स्निग्धं फलमस्याः । नाकुल्याम् राजनि० ।

**स्निट** स्नेहे चु० उभ० सक० सेट् । स्नेटयति—ते असिस्निटत्–

देहाच्चेदपेयात् पञ्चालेष्वेव प्रतिबुध्येत तानसावभिगत इति कुरुष्वेव तु प्रतिबुध्यते। येन चायं देहेन देशान्तरमश्नुवानो मन्यते तमन्ये पार्श्वस्थाः शयनदेश एव पश्यन्ति। यथाभूतानि चायं देशान्तराणि स्वप्ने पश्यति न तानि तथाभूतान्येव भवन्ति, परिधावंश्चेत् पश्येज्जाग्रद्वद्वस्तुभूतमर्थमाकलयेत्। दर्शयति च श्रुतिः "अन्तरेव देहे स्वप्नं स यत्रैतत् स्वप्न्यया चरति" इत्युपक्रम्य "स्वे शरीरे यथाकामं परिवर्त्तते" इति। अतश्च श्रुत्युपपत्तिविरोधाद्बहिःकुलायश्रुतिर्गौणी व्याख्यातव्या बहिरिव कुलायादमृतश्चरित्वा, इति यो हि वसन्नपि शरीरे न तेन प्रयोजनं करोति स बहिरिव शरीराद्भवति इति। स्थितिगतिप्रत्ययभेदोऽप्येवं सति विप्रलम्भ एवाभ्युपगन्तव्यः, कालविसंवादोऽपि च स्वप्ने भवति रजन्यां सुप्तो वासरं भारते वर्षे मन्यते तथा मुहूर्त्तमात्रवर्त्तिनि स्वप्ने कदाचिद् बहून् वर्षपूगानतिवाहयति। निमित्तान्यपि च स्वप्ने न बुद्धये कर्मणे वोचितानि विद्यन्ते, करणोपसंहाराद्धि नास्य रथादिग्रहणाय चक्षुरादीनि सन्ति, रथादिनिर्वर्त्तनेऽपि कुतोऽस्य निमेषमात्रेण सामर्थ्यं दारूणि वा। बाध्यन्ते चैते रथादयः स्वप्नदृष्टाः प्रबोधे, स्वप्न एव चैते सुलभबाधा भवन्ति आद्यन्तयोर्व्यभिचारदर्शनात्, रथोऽयमिति हि कदाचित् स्वप्ने निर्द्धारितः क्षणेन मनुष्यः सम्पद्यते, मनुष्योऽयमिति वा निर्द्धारितः क्षणेन वृक्षः। स्पष्टञ्चाभावं रथादीनां स्वप्ने श्रावयति शास्त्रम् "न तत्र रथा न रथयोगा न पन्थानो भवन्ति" इत्यादि। तस्मान्मायामात्रं स्वप्नदर्शनम्" भा०। "सूचकश्च हि श्रुतेराचक्षते च तद्विदः" सू०। "मायामात्रत्वात् तर्हि न कश्चित् स्वप्ने परमार्थगन्ध इति, नेत्युच्यते। सूचकश्च हि स्वप्नो भवति भविष्यतोः साध्वसाधुनोः। तथा हि श्रूयते "यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति। समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने" इति। तथा "पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ति" इत्येवमादिभिः स्वप्नैरचिरजीवित्वमावेद्यत इति श्रावयति। आचक्षते च स्वप्नाध्यायविदः "कुञ्जरारोहणादीनि स्वप्ने धन्यानि खरयानादीन्यधन्यानि" इति। मन्त्रदेवताद्रव्यविशेषनिमित्ताश्च केचित् स्वप्नाः सत्यार्थगन्धिनो भवन्तीति मन्यन्ते। तत्रापि भवतु नाम सूच्यमानस्य वस्तुनः सत्यत्वं, सूचकस्य तु स्त्रीदर्शनादेर्भवत्येव वैतथ्यं बाध्यमानत्वादित्यभिप्रायः। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्। यदुक्तमाह हीति तदेवं सति भाक्तं व्याख्यातव्यं यथा लाङ्गलं गवादीनुद्वहतीति निमित्तमात्रत्वादेवमुच्यते न तु प्रत्यक्षमेव लाङ्गलं गवादीनुद्वहति, एवं निमित्तमात्रत्वात् सुप्तो रथादीन् सृजते स हि कर्त्तेति चोच्यते न तु प्रत्यक्षमेव सुप्तो रथादीन् सृजति। निमित्तत्वन्त्वस्य रथादिप्रतिभाननिमित्तमोदत्रासदर्शनात् तन्निमित्तभूतयोः सुकृतदुष्कृतयोः कर्त्तृत्वेनेति वक्तव्यम्। अपि च जागरिते विषयेन्द्रियसंयोगादादित्यादिज्योतिर्व्यतिकराच्चात्मनः स्वयं ज्योतिष्ट्वं दुर्विवेचनमिति तद्विवेचनाय स्वप्न उपन्यस्तः, तत्र यदि रथादिसृष्टिवचनं श्रुत्या नीयेत स्वयं ज्योतिष्ट्वं न निर्णीतं स्यात्। तस्माद्रथाद्यभाववचनश्रुत्या रथादिसृष्टिवचनं भाक्तमिति व्याख्येयम्। एतेन निर्माणश्रवणं व्याख्यातम्। यदप्युक्तम् "प्राज्ञमेनं निर्मातारमामनन्ति" इति, तदप्यसत् श्रुत्यन्तरे स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति" इति जीवव्यापारश्रवणात्। इहापि च "य एष सुप्तेषु जागर्त्ति" इति प्रसिद्धानुवादाज्जीव एवायं कामानां निर्माता सङ्कीर्त्त्यते, तस्य तु वाक्यशेषेण "तदेव शुक्रन्तद्ब्रह्मेति" जीवभावं व्यावर्त्त्य ब्रह्मभाव उपदिश्यते "तत्त्वमसि" इत्यादिवदिति न ब्रह्मप्रकरणं विरुध्यते। न चास्माभिः स्वप्नेऽपि प्राज्ञव्यापारः प्रतिषिध्यते, तस्य सर्वेश्वरत्वात् सर्वास्ववस्थास्वधिष्ठातृत्वोपपत्तेः। पारमार्थिकस्तु नायं सन्ध्याश्रयः सर्गो वियदादिसर्गवदित्येतावत् प्रतिपाद्यते। न च वियदादिसर्गस्याप्यात्यन्तिकं सत्यत्वमस्ति, प्रतिपादितं हि "तदनन्यत्वमारम्भणशब्दादिभ्यः, इत्यत्र समस्तस्य मायामात्रत्वम्। प्राक् च ब्रह्मात्मदर्शनात् वियदादिप्रपञ्चो व्यवस्थितरूपो भवति, सन्ध्याश्रयस्तु प्रपञ्चः प्रतिदिनं बाध्यत इत्यतो वैशेषिकं सन्ध्यस्य मायामात्रत्वमुदितम्" भा०। "पराभिध्यानात् तु तिरोहितं ततो ह्यस्य बन्धविपर्य्ययौ" सू०। "अथापि स्यात् परस्यैव तावदात्मनोऽंशो जीवोऽग्नेरिव विस्फुलिङ्गः। तत्रैवं सति यथाऽग्निविस्फुलिङ्गयोः समाने दहनप्रकाशनशक्ती भवतः एवं जीवेश्वरयोरपि ज्ञानैश्वर्य्यशक्ती, ततश्च जीवस्यैश्वर्य्यवशात् साङ्कल्पिकी स्वप्ने रथादिसृष्टिर्भविष्यतीति, अत्रोच्यते। सत्यपि जीवेश्वरयोरंशांशिभावे प्रत्यक्षमेव जीवेश्वरविपरीतधर्मत्वं, किं पुनर्जी-

नस्येश्वरसमानधर्मत्वं नास्त्येव न नास्तीति, विद्यमानमपि तु तत् तिरोहितं, अविद्यादिव्यवधानात्। तत् पुनस्तिरोहितं सत् परमेश्वरमभिध्यायतो यतमानस्य जन्तोर्विधूतध्वान्तस्य तिमिरतिरस्कृतस्येव दृक्शक्तिरौषधवीर्यादीश्वरप्रसादात् संसिद्धस्य कस्यचिदेवाविर्भवति न स्वभावत एव सर्वेषां जन्तूनां, कुतस्ततो हि ईश्वराद्धेतोरस्य जीवस्य बन्धमोक्षौ भवतः, ईश्वरस्य स्वरूपापरिज्ञानाद् बन्धः तत्स्वरूपपरिज्ञानात्तु मोक्षः। तथा च श्रुतिः "ज्ञात्वा देवं सर्वपाशापहानिः क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः"। तस्याभिध्यानात् तृतीयं देहभेदे विश्वैश्वर्यं केवल आप्तकामः" इत्येवमाद्या" भा०। "देहयोगाद् वा सोऽपि" सू०। "कस्मात् पुनर्जीवः परमात्मांश एव सन् तिरस्कृतज्ञानैश्वर्यो भवति युक्तन्तु ज्ञानैश्वर्ययोरतिरस्कृतत्वं विस्फुलिङ्गस्येव दहनप्रकाशयोरिति। उच्यते सत्यमेवैतत्, सोऽपि तु जीवस्य ज्ञानैश्वर्यतिरोभावो देहयोगाद्देहेन्द्रियमनोबुद्धिविषयवेदनादियोगाद्भवति। अस्ति चात्रोपमा यथाग्नेर्दहनप्रकाशनसम्पन्नस्याप्यरणिगतस्य दहनप्रकाशने तिरोभवतः, यथा वा भस्मनाच्छन्नस्य, एवमविद्याप्रत्युपस्थापितनामरूपकृतदेहाद्युपाधियोगात् तदविवेकभ्रमकृतो जीवस्य ज्ञानैश्वर्यतिरोभावः। वाशब्दो जीवेश्वरयोरन्यत्वाशङ्काव्यावृत्त्यर्थः। नन्वन्य एव जीव ईश्वरादस्तु तिरस्कृतज्ञानैश्वर्यत्वात् किं देहयोगकल्पनया। नेत्युच्यते, न ह्यन्यत्वं जीवस्येश्वरादुपपद्यते "सेयं देवतैक्षत" इत्युपक्रम्य "अनेन जीवेनात्मनानुप्रविश्य" इत्यात्मशब्देन जीवस्य परामर्शात्। "तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो" इति च जीवायोपदिशतीश्वरात्मत्वम्, अतोऽनन्य एवेश्वरात् जीवः सन् देहयोगात् तिरोहितज्ञानैश्वर्यो भवति, अतश्च न साङ्कल्पिकी जीवस्य स्वप्ने रथादिसृष्टिर्घटते। यदि च साङ्कल्पिकी स्वप्ने सृष्टिः स्यात् नैवानिष्टं कश्चित् स्वप्नं पश्येत्। न हि कश्चिदनिष्टं सङ्कल्पयते। यत् पुनरुक्तं जागरितदेशश्रुतिः स्वप्नस्य सत्यत्वं ख्यापयतीति न तत्साम्यवचनं सत्यत्वाभिप्रायं स्वयंज्योतिष्ट्वविरोधात्, श्रुत्यैव च स्वप्ने रथाद्यभावस्य दर्शितत्वात्, जागरितप्रभववासनानिर्मितत्वात्तु स्वप्नस्य तत्तुल्यनिर्भासत्वाभिप्रायं तत्। तस्मादुपपन्नं स्वप्नस्य मायामात्रत्वम्"।

स्वप्नभेदस्य शुभाशुभसूचकत्वं नानापुराणेषूक्तं तत्र किञ्चि-न्मात्रं मत्स्यपुराणे २४२अध्याये उक्तानि प्रदर्श्यन्ते यथा "इदानीं कथयिष्यामि निमित्तं स्वप्नदर्शने। नाभिं विनान्यगात्रेषु तृणवृक्षसमुद्भवः। चूर्णनं मूर्ध्नि कांस्यानां मुण्डनं नग्नता तथा। मलिनाम्बरधारित्वमभ्यङ्गः पङ्कदिग्धता। उच्चात् प्रपतनञ्चैव दोलारोहणमेव च। अर्जनं पङ्कलोहानां हयानामपि मारणम्। रक्तपुष्पद्रुमाणाञ्च मण्डलस्य तथैव च। वराहर्क्षखरोष्ट्राणां तथा चारोहणक्रिया। भक्षणं पक्षिमांसानां तैलस्य कृसरस्य च। नर्त्तनं हसनञ्चैव विवाहो गीतमेव च। तन्त्रीवाद्यविहीनानां वाद्यानामभिवादनम्। स्रोतोऽवगाहगमनं स्नानं गोमयवारिणा। पङ्कोदकेन च तथा महीतोयेन चाप्यथ। मातुः प्रवेशो जठरे चितारोहणमेव च। शक्रध्वजाभिपतनं पतनं शशिसूर्ययोः। दिव्यान्तरिक्षभौमानामुत्पातानाञ्च दर्शनम्। देवद्विजातिभूपालगुरूणां क्रोध एव च। आलिङ्गनं कुमारीणां पुरुषाणाञ्च मैथुनम्। हानिश्चैव स्वगात्राणां विरेकवमनक्रिया। दक्षिणाशाभिगमनं व्याधिनाभिभवस्तथा। फलापहानिश्च तथा पुष्पहानिस्तथैव च। गृहाणाञ्चैव पातश्च गृहसम्मार्जनन्तथा। क्रीडा पिशाचक्रव्यादवानरर्क्षनरैरपि। परादभिभवश्चैव तस्माच्च व्यसनोद्भवः। काषायवस्त्रधारित्वं तद्वत् स्त्रीक्रीडनन्तथा। स्नेहपानावगाहौ च रक्तमाल्यानुलेपनम्। एवमादीनि चान्यानि दुःस्वप्नानि विनिर्दिशेत्। एषां सङ्कथनं धन्यं भूयः प्रस्वपनं तथा। कल्कस्नानं तिलैर्होमो ब्राह्मणानाञ्च पूजनम्। स्तुतिश्च वासुदेवस्य तथा तस्यैव पूजनम्। नागेन्द्रमोक्षश्रवणं ज्ञेयं दुःस्वप्ननाशनम्। स्वप्नास्तु प्रथमे यामे संवत्सरविपाकिनः। षड्भिर्मासैर्द्वितीये तु त्रिभिर्मासैस्तृतीयके। चतुर्थे मासमात्रेण पश्यतो नात्र संशयः। अरुणोदयवेलायां दशाहेन फलं भवेत्। एकस्यां यदि वा रात्रौ शुभं वा यदि वाऽशुभम्। पश्चाद् दृष्टस्तु यस्तत्र तस्य पाकं विनिर्दिशेत्। तस्माच्छोभनके स्वप्ने पश्चात् स्वप्नं न पश्यति। शैलप्रासादनागाश्ववृषभारोहणं हितम्। द्रुमाणां श्वेतपुष्पाणां गमने च तथा द्विज!। द्रुमतृणोद्भवो नाभौ तथैव बहुबाहुता। तथैव बहुशीर्षत्वं फलितोद्भव एव च। सुशुक्लमाल्यधारित्वं सुशुक्लाम्बरधारिता। चन्द्रार्कताराग्रहणं परिमार्जनमेव च। शक्रध्वजालिङ्गनञ्च तदुच्छ्रायक्रिया तथा। भूम्यम्बुधीनां ग्रसनं शत्रूणाञ्च

चोदात्तस्वरितपरत्वे श्रवणं स्यात्" सि०कौ०। स्वरिताः स्वराश्च पाणिनिना फिट्सूत्रेण च अनुशिष्टा यथा। "तित् स्वरितम्" पा० तकारेत् प्रत्ययः स्वरितः स्यात्। "तिल्यशिक्ययोः स्वरितो वा" फिट्सू० १पादः। "अनयोरन्तः स्वरितो वा पक्षे उदात्तः" सि० कौ०। "उदात्तस्वरितयोर्यणः स्वरितोऽनुदात्तस्य" पा० "उदात्तस्थाने स्वरितस्थाने च यो यण् ततः परस्यानुदात्तस्य स्वरितः स्यात्। अभ्यभि हि। स्वरितस्य यणः। खलप्व्याशा। अत्र स्वरितस्य त्रैपादिकत्वेनासिद्धत्वाच्छेषनिघातो न" सि०कौ० "स्वरितो वाऽनुदात्ते पदादौ" पा० "अनुदात्ते पदादौ परे उदात्तेन सहैकादेशः स्वरितो वा स्यात्। पक्षे पूर्वसूत्रेणोदात्तः। वीदं ज्योतिर्हृदये। अस्य श्लोको दिवीयते। व्यवस्थितविभाषात्वादिकारयोः स्वरितः दीर्घप्रवेशे तूदात्तः। किञ्च एङः पदान्तादिति पूर्वरूपे स्वरित एव। तेऽवदन्। सोऽयमागात्। उक्तञ्च प्रातिशाख्ये "इकारयोश्च प्रश्लेषे क्षैप्राभिनिहतेषु चेति" सि०कौ०। "उदात्तादनुदात्तस्य स्वरितः" पा० "उदात्तात् परस्यानुदात्तस्य स्वरितः स्यात्। अग्निमीळे"। अस्याप्यसिद्धत्वाच्छेषनिघातो न। "तमीशानासः" सि०कौ०। "नोदात्तस्वरितोदयमगार्ग्यकाश्यपगालवानाम्" पा० उदात्तपरः स्वरितपरश्चानुदात्तः स्वरितो न स्यात्। गार्ग्यादिमते तु स्यादेव। प्र य आरुः। क्व वोऽश्वाः। क्वा ३ भीशवः" सि०कौ०। "न्यङ्स्वरौ स्वरितौ" फि० "एतौ स्वरितौ। न्यङ्ङुत्तानः। व्यचक्षयत् स्वः" सि०कौ०। "न्यर्बुदव्यल्कशयोरादिः" फि०। स्वरितः स्यात्। "तिल्यशिक्यकाश्मर्यधान्यकन्याराजन्यमनुष्याणामन्तः" फि०। स्वरितः स्यात्। "तिलानां भवनं क्षेत्रं तिल्यम्। यतो ऽनाव इति प्राप्ते" सि०कौ०। "बिल्वभक्ष्यवीर्याणि छन्दसि" फि०४र्थपादः। "अन्तःस्वरितानि" सि०कौ०। "स्वरितेनाधिकारः" पा० "स्वरितत्वयुक्तं शब्दस्वरूपमधिकृतं बोध्यम्" सि० कौ० "स्वरितेनेति इत्थंभावे तृतीया स्वरितत्वमाग्योऽधिकार इत्यर्थः स्वरितत्वञ्च दोषविशेषजन्यमज्झल्साधारणाश्रयम् पारिभाषिकमाघण्टपदघटकाज्झाश्रितं वा बोध्यम्। तच्चानुनासिकत्ववत् प्रतिज्ञयैव निर्णीयते अधिकारश्च विच्छेदपरिमाणमपि बाधके व्याख्यानमेव शरणम्" शब्देन्दु०। "स्वरितञितः कर्त्रभिप्राये क्रियाफले" पा० स्वरितेतो ञितश्च धातोरात्मनेपदं स्यात् कर्त्रभिप्राये क्रियाफले" सि० कौ०। स्वर-क्त। ४स्वरयुक्ते त्रि०।

**स्वरु** पु० स्वृ-उ। १वज्रे अमरः २यूपखण्डे ३बाणे ४यज्ञे मेदि०। ५स्वर्य्यकिरणे ६वृश्चिकभेदे च उणा०।

**स्वरुचि** त्रि० स्वस्यैव रुचिः प्रवर्त्तिका स्वकार्ये यस्य। १स्वतन्त्रे हेमच० इत०। २स्वस्याभिलाषे स्त्री।

**स्वरूप** न० स्वस्य रूपम्। १स्वभावे अमरः। स्वमेव रूपम्। २स्वात्मके पदार्थे। स्वं यथा स्वं रूपयति रूप-अण्। ३यथास्वरूपाभिज्ञे पण्डिते पु० अमरः। स्वेन स्वभावेनैव रूपमस्य। ४मनोज्ञे त्रि० अमरः।

**स्वरूपसंबन्ध** पु० स्वरूपं सम्बन्धः स्वरूपयोर्वा सम्बन्धः। न्यायोक्ते स्वात्मके सम्बन्धे षट्पदार्थातिरिक्ते पदार्थभेदे यथा प्रतियोगित्वम् विषयत्वमित्यादि।

**स्वरोदय** पु० स्वरेणानुदयो शुभादिज्ञापकतया यत्र। स्वरस्य शास्त्रविशेषस्य शुभाशुभत्वज्ञानसाधने तन्त्रशास्त्रभेदे चक्रशब्दे २८१०पृ०दृश्यम्।

**स्वर्ग** पु० स्वरिति गीयते गै-क सु+ऋज-घञ् वा। १दुःखासम्भिन्ने सुखे २देवानामावासस्थाने च अमरः। स्वर्गकारणस्वरूपादिकं भा० व० २६० अ० उक्तं यथा "उपरिष्टाद् स्वर्लोको योऽयं स्वरिति संज्ञितः। ऊर्द्ध्वगः सत्पथः शश्वद्देवयानचरो मुने!। नातप्ततपसः पुंसो नामहायज्ञयाजिनः। नानृता नास्तिकाश्चैव तत्र गच्छन्ति मुद्गल!। धर्मात्मानो जितात्मानः शान्ता दान्ता विमत्सराः। दानधर्मरताः लोका शूराश्चाहवलक्षणाः। तत्र गच्छन्ति धर्माग्र्यं कृत्वा शमदमात्मकम्। लोकान् पुण्यकृताम् ब्रह्मन्! सद्भिराचरितान्नृभिः। देवाः साध्यास्तथा विश्वे तथैव च महर्षयः। यामा धामाश्च मौद्गल्य! गन्धर्वाप्सरसस्तथा। एषां देवनिकायानां पृथक् पृथगनेकशः। भास्वन्तः कामसम्पन्ना लोकास्तेजोमयाः शुभाः। त्रयस्त्रिंशत्सहस्राणि योजनानि हिरण्मयः। मेरुः पर्वतराड् यत्र देवोद्यानानि मुद्गल!। नन्दनादीनि पुण्यानि विहाराः पुण्यकर्म्मणाम्। न क्षुत्पिपासे न ग्लानिर्न शीतोष्णे भयं तथा। बीभत्समशुभं वाऽपि तत्र किञ्चिन्न विद्यते। मनोज्ञाः सर्वतो गन्धाः सुखस्पर्शाश्च सर्वशः। शब्दाः श्रुतिमनोग्राह्याः सर्वतस्तत्र वै मुने!। न शोको न जरा तत्र नायासपरिदेवने। ईदृशः स मुने! लोकः स्वकर्मफलहेतुकः। सुकृतैस्तत्र पुरुषाः सम्भवन्त्यात्मकर्मभिः। तैजसानि शरीराणि भवन्त्यत्रोपपद्यताम्। कर्मजान्येव मौद्गल्य! न मातृपितृजान्युत। न संस्वेदो न दौर्गन्ध्यं पुरीषं मूत्रमेव

च। तेषां न च रजो वस्त्रं बाधते तत्र वै मुने !। न म्लायन्ति स्रजस्तेषां दिव्यगन्धा मनोरमाः। संयुज्यन्ते विमानैश्च ब्रह्मन्नेवंविधैश्च ते। ईर्ष्याशोकक्लमापेता मोहमात्सर्य्यवर्जिताः। सुखं स्वर्गजितस्तत्र वर्त्तयन्ते महामुने !। तेषां तथाविधानान्तु लोकानां मुनिपुङ्गव !। उपर्य्युपरि लोकस्य लोका दिव्या गुणान्विताः। पुरस्तात् ब्रह्मणस्तत्र लोकास्तेजोमयाः शुभाः। यत्र यान्त्यृषयो ब्रह्मन् ! पूताः स्वैः कर्मभिः शुभैः। ऋभवो नाम तत्रान्ये देवानामपि देवताः। तेषां लोकाः परतरे तान् यजन्तीह देवताः। स्वयम्प्रभास्ते भास्वन्तो लोकाः कामदुघाः परे। न तेषां स्त्रीकृतस्तापो न लोकैश्वर्य्यमत्सरः। न वर्त्तयन्त्याहुतिभिस्ते नाप्यमृतभोजनाः। तथा दिव्यशरीरास्ते न च विग्रहमूर्त्तयः। न सुखे सुखकामास्ते देवदेवाः सनातनाः। न कल्पपरिवर्त्तेषु परिवर्त्तन्ति ते तथा। जरा मृत्युः कुतस्तेषां हर्षः प्रीतिसुखं न च। न दुःखं न सुखञ्चापि रागद्वेषौ कुतो मुने !। देवानामपि मौद्गल्य ! काङ्क्षिता सा गतिः परा। दुष्प्रापा परमा सिद्धिरगम्या कामगोचरैः। त्रयस्त्रिंशदिमे देवा येषां लोका मनीषिभिः। गम्यन्ते नियमैः श्रेष्ठैर्दानैर्वा विधिपूर्वकैः। सेयं दानकृता व्युष्टिरनुप्राप्ता सुखं त्वया। तां भुङ्क्ष्व सुकृतैर्लब्धां तपसा द्योतितप्रभः। एतत् स्वर्गसुखं विप्र ! लोका नानाविधास्तथा। गुणाः स्वर्गस्य प्रोक्तास्ते दोषानपि निबोध मे। कृतस्य कर्मणस्तत्र भुज्यते यत् फलं दिवि। न चान्यत् क्रियते कर्म मूलच्छेदेन भुज्यते। सोऽत्र दोषो मम मतस्तस्यान्ते पतनञ्च यत्। सुखव्याप्तमनस्कानां पतनं यच्च मुद्गल !। असन्तोषः परीतापो दृष्ट्वा दीप्ततराः श्रियः। यद्भवत्यवरे स्थाने स्थितानां तत् सुदुष्करम्। संज्ञा मोहश्च पततां रजसा च प्रधर्षणम्। प्रम्लानेषु च माल्येषु ततः पिपतिषोर्भयम्। आब्रह्मभवनादेते दोषा मौद्गल्य ! दारुणाः। नाकलोके सुकृतिनां गुणास्त्वयुतशो नृणाम्। अयं त्वन्यो गुणः श्रेष्ठश्च्युतानां स्वर्गतो मुने !। शुभानुशययोगेन मनुष्येषूपजायते। तत्रापि स महाभागः सुखभागभिजायते। न चेत् सम्बुध्यते तत्र गच्छत्यधमतां ततः। इह यत् क्रियते कर्म तत् परत्रोपभुज्यते। कर्मभूमिरियं ब्रह्मन् ! फलभूमिरसौ मतः"। स च लोको भूरादिषु सप्तसु तृतीयः।

**स्वर्गङ्गा** स्त्री ६त०। मन्दाकिन्यां शब्दर०।

**स्वर्गनाथ** पु० ६त०। इन्द्रे स्वर्गपत्यादयोऽप्यत्र हेमच०।

**स्वर्गवधू** स्त्री ६त०। अप्सरःसु हेमच०।

**स्वर्गाचल** पु० स्वर्गलोकस्थोऽचलः। सुमेरुपर्वते स्वर्गगिर्य्यादयोऽप्यत्र हेमच०।

**स्वर्गिन्** पु० स्वर्गोऽस्त्यस्य भोग्यत्वेन इनि। १देवे त्रिका० २देवलोकगामिनि च त्रि० स्वर्गगामित्वसूचकगुणभेदा गरुड़पु० ११३ अ० यथा "सर्वभूतेषु संवादः परलोकं प्रति क्रिया। सतां परीक्षिताः योक्तिर्वेदवाक्यदर्शनम्। गुरुदेवर्षिपूजा च वेश्वसं साधुसङ्गमः। सत्क्रियाध्ययनं मैत्री स्वर्गिणां लक्षणं विदुः"।

**स्वर्गौकस्** पु० स्वर्गं ओको यस्य। देवे हला०।

**स्वर्जिक** पु० सु+अर्ज–घञ् ततः स्वार्थे ठन्। सर्जिकाक्षारे राजनि० २यवक्षारे स्त्री भावप्र०।

"कथितः स्वर्जिकाभेदः विशेषज्ञैः सुवर्चिका। यवक्षारो लघुः स्निग्धः सुसूक्ष्मो वह्निदीपनः। निहन्ति शूलं वातामश्लेष्मास्मगुल्मामयान्। स्वर्जिकाल्पगुणा तस्मात् विशेषात् गुल्मशूलहृत्" भावप्र०। कर्म० स्वर्जिकाक्षारोऽपि तत्रार्थे राजनि० णिनि स्वर्जिन् तत्रार्थे राजनि०।

**स्वर्ण** न० सुष्ठु अर्णो वर्णो यस्य। १काञ्चने २धुस्तूरे अमरः ३नागकेशरे ४गौरवर्णशाके च राजनि०। सुवर्णगन्धे द्रव्यम्। [राजनि०] ६त०। २सुवर्णस्य शैले पु०।

**स्वर्णकण** न० स्वर्णमिव पीतत्वात् कणोऽस्य। १कणगुग्गुलौ

**स्वर्णकदली** स्त्री स्वर्णमिव कदली (चाँपाकला)कदलीभेदे।

**स्वर्णकाय** पु० स्वर्णमिव पीतत्वात् कायोऽस्य। १गरुड़े हेमच०। २स्वर्णवर्णदेहयुते त्रि०।

**स्वर्णकार** पु० स्वर्णं स्वर्णमयमलङ्कारादि करोति कृ-अण्। (सेकरा) जातिभेदे। "विश्वकर्म्मा तु शूद्रायां वीर्य्याधानं चकार सः। ततो बभूवुः पुत्राश्च नवैते शिल्पकारिणः। मालाकारः कर्मकारः शङ्खकारः कुविन्दकः। कुम्भकारः कांस्यकारः षडेते शिल्पिनां वराः। सूत्रधारश्चित्रकरः स्वर्णकारस्तथैव च। पतितास्ते ब्रह्मशापादयाज्या वर्णसङ्कराः। स्वर्णकारः स्वर्णचौर्य्यात् ब्राह्मणानां द्विजोत्तम ! बभूव सद्यः पतितो ब्रह्मशापेन कर्मणा" ब्रह्मवै० ब्र०ख० १०अ०। "तैलचौरस्तैलकीटो मूर्ध्निकीटश्च जातकम्। ततो भवेत् स्वर्णकारो सन्नैव दुष्टमानसः" ब्रह्मवै० जन्मख० ८५ अ०। तज्जातिमात्रके।

**स्वर्णकृत्** पु० स्वर्णं तन्मयभूषादिकं करोति कृ-क्विप्। स्वर्णकारे शब्दमा०।

**स्वर्णकेतकी** स्त्री स्वर्णमिव पीतत्वात् केतकी। पीतकेतक्याम् राजनि०। तत्पुष्पादिगुणाः "केतकीकुसुमं वर्ण्यं केशदौर्गन्ध्यनाशनम्। हेमाभं मदनोन्मादि सुगन्धि सौख्यकारि च। तस्याः स्तनोऽतिशिशिरः कटुः पित्तकफापहः। रसायनकरो वल्यो देहदार्ढ्यकरः परः" राजनि०।

**स्वर्णक्षीरी** स्त्री स्वर्णमिव पीतत्वात् क्षीरं निर्यासो यस्याः गौरा० ङीष्। ओषधिभेदे सा च हिमालये जायते। "हैमवर्णा रक्तस्रावा हिमवद्भूमिसम्भवा। सा नागजिह्विकाकारा तन्मूलं वाणिजौषधम्। स्वर्णक्षीरी हिमा तिक्ता कृमिपित्तकफापहा। मूत्रकृच्छ्राश्मरी शोथदाहज्वरहरा परा" राजनि०।

**स्वर्णगैरिक** न० स्वर्णमिव पीतं गैरिकम्। (वर्णकमाटि) पदार्थभेदे राजनि०।

**स्वर्णग्रीवा** स्त्री नदीभेदे। "या निःसृता पूर्वभागात् तस्मात् गिरिवरात् (नाटकशैलात्) नदी। स्वर्णग्रीवेति विख्याता सा गङ्गासदृशीफला" कालिकापु० ८२अ०।

**स्वर्णचूड** पुंस्त्री० स्वर्णमिव पीतत्वात् चूडा यस्य। चाषपक्षिणि जटा० स्त्रियां ङीष्। [जातमात्रे त्रि०।

**स्वर्णज** न० स्वर्णात् जायते जन–ड। १वङ्गे हेमच० २स्वर्ण-

**स्वर्णजीवन्ती** स्त्री० स्वर्णमिव पीतत्वात् जीवन्ती। पीतपुष्पजीवन्त्याम् राजनि०।

**स्वर्णदी** स्त्री स्वर्णं द्यति अपसारयति तुल्यवर्णत्वात् दो–क गौरा०ङीष्। १वृश्चिकाल्याम् राजनि०। ६त० णत्वम्। २गङ्गायाम् अमरः। [२चित्रकवृक्षे च त्रिका०।

**स्वर्णदीधिति** पु० स्वर्णमिव भास्वरा दीधितिरस्य। १वह्नौ,

**स्वर्णद्रु** पु० स्वर्णमिव पुष्पे पीतो द्रुः। आरग्वधे राजनि०।

**स्वर्णपक्ष** पु० स्वर्णमिव पीतः पक्षोऽस्य। गरुडे त्रिका०।

**स्वर्णपाटक** पु० स्वर्णं पाटयति पट–णिच्–ण्वुल्। टङ्कणे (सोहागा) शब्दर०।

**स्वर्णपुष्प** पु० स्वर्णमिव पीतं पुष्पमस्य। १चम्पके २आरग्वधे पुंस्त्री० राजनि० स्त्रीत्वे ङीष्। सा च ३स्वर्णकेतक्याम् राजनि०। ४सातलायाम् ५कलिकारी स्त्री राजनि० टाप्। [६सुवर्णकदल्याम् राजनि०।

**स्वर्णफला** स्त्री स्वर्णमिव पीतं फलमस्याः। (चांपाकला)

**स्वर्णवणिज्** पु० ६त०। सुवर्णवणिजि जातिभेदे।

**स्वर्णभृङ्गार** पु० स्वर्णमिव स्वर्णमयो वा भृङ्गारः। १पीतभृङ्गराजे राजनि०। २स्वर्णमयजलपात्रभेदे च।

**स्वर्णमाक्षिक** न० स्वर्णमिव पीतं माक्षिकम्। स्वनामख्याते उपधातुभेदे "किञ्चित् सुवर्णसाहित्यात् स्वर्णमाक्षिकमीरितम्। उपधातुः सुवर्णस्य किञ्चित्स्वर्णगुणान्वितम्। तथा च काञ्चनाभावे दीयते स्वर्णमाक्षिकम्। किन्तु तस्यानुकल्पत्वात् किञ्चिद्धीनगुणास्ततः। न केवलं स्वर्णगुणा वर्त्तन्ते स्वर्णमाक्षिके। द्रव्यान्तरस्य संसर्गात् सन्त्यन्येऽपि गुणास्ततः। सुवर्णमाक्षिकं स्वादु तिक्तं वृष्यं रसायनम्। चक्षुष्यं वस्तिरुक्कण्ठपाण्डुमेहविषोदरम्। अर्शःशोथं विषं कण्डुं त्रिदोषमपि नाशयेत्"। अशुद्धस्वर्णमाक्षिकस्य दोषमाह "मन्दानलत्वं बलहानिमुग्रां विष्टम्भितां नेत्रगदान् सकुष्ठान्। मालां तथैव व्रणपूर्विकाञ्च कुर्यादशुद्धं खलु माक्षिकञ्च"। तद्दोषशान्त्यर्थं शोधनमाह "माक्षिकस्य त्रयो भागा भागैकं सैन्धवस्य च। मातुलुङ्गद्रवैर्वाथ जम्बीरस्य द्रवैः पचेत्। चालयेल्लोहजे पात्रे यावत् पात्रं सुलोहितम्। भवेत्ततस्तु संशुद्धं स्वर्णमाक्षिकमीरितम्"। तन्मारणं यथा "कुलत्थस्य कषायेण घृष्टा तैलेन वा पुटेत्। तक्रेणैवाजमूत्रेण म्रियते स्वर्णमाक्षिकम्" भावप्र०।

**स्वर्णयूथी** स्त्री स्वर्णमिव पीता यूथी। पीतयूथिकायाम् शब्दच०।

**स्वर्णलता** स्त्री स्वर्णमिव पीता लता। ज्योतिष्मत्याम् राजनि०।

**स्वर्णवर्णा** स्त्री स्वर्णमिव वर्णो रूपमस्याः। १हरिद्रायाम् राजनि०। २सुवर्णवर्णे त्रि० ३हेममूल्यज्ञापके वर्णे च।

**स्वर्णवल्कल** पु० स्वर्णमिव पीतं वल्कलमस्य। श्योनाकवृक्षे शब्दच०।

**स्वर्णवल्ली** स्त्री स्वर्णमिव पीता वल्ली। लताभेदे "स्वर्णवल्ली रक्तफला काकायुः काकवल्ल्यपि। शिराःपीड़ा त्रिदोषघ्नी दुग्धदात्री च सा मता" राजनि०।

**स्वर्णशेफालिका** स्त्री स्वर्णमिव पीता शेफालिका। १पीतशेफालिकायाम्। २आरग्वधे राजनि०।

**स्वर्णाङ्ग** पु० स्वर्णमिवाङ्गं पुष्पं यस्य। १आरग्वधे राजनि० २पीतवर्णदेहयुते त्रि० स्त्रियां ङीष्।

**स्वर्णारि** पु० ६त०। गन्धके तस्य स्वर्णमारकत्वात्तथात्वम्।

**स्वर्णुली** स्त्री स्वर्णं तद्वर्णं चीयते पुष्पेऽत्र ची–आधारे क्विप् पृषो०। "स्वर्णुली हेमपुष्पी च स्वर्णपुष्पाध्वजा तथा। सा कषाया कटुः शीता अपहा परिकीर्तिता" राजनि० उक्ते लताभेदे। [यति ते अपस्वर्त्तत।

**स्वर्त्त** गतौ सक० दुःखेन जीवने अक० चु० उ० सेट्। स्वर्त्त-

**स्वर्द** प्रीतौ अक० शोधने छेदने च सक० भ्वा० आत्म० सेट्।

अर्हते अर्घार्हे च। [गोमेदमणौ राजनि०।

**स्वर्भानव** पु० स्वर्भानोः राहोः प्रियः अण् नि०नादिवृद्धिः।

**स्वर्भानु** पु० स्वः स्वर्गे भानुर्दीप्तिरस्य। राहौ अमरः। तस्य भूमिच्छायारूपतया भूमिस्थैर्भानुमत्त्वेनादर्शनात् दिवि दीप्तिमत्त्वात्तथात्वम्। [लोके शब्दच०।

**स्वर्लोक** पु०स्वरेव लोकः भुवनम्। १स्वर्गे हेम०। २स्वर्गस्थे

**स्वर्वापी** स्त्री ६त० स्वर्गस्य वापीव। १गङ्गायाम् हेमच०।

**स्वर्वेश्या** स्त्री स्वः स्वर्गस्य वेश्या। मेनकाद्यप्सरस्सु अमरः।

**स्वर्वैद्य** पु० द्वि०व०। स्वः स्वर्गस्य वैद्यौ। अश्विनीकुमारयोः अमरः। आयुर्वेदशब्दे ७७८पृ० दृश्यम्।

**स्वर्लीन** पु० दानवभेदे वह्निपु०।

**स्वल्प** त्रि० सुष्ठु अल्पम् प्रा० स०। अत्यल्पे शब्दर०।

**स्वल्पकेशरिन्** पु०स्वल्पः केशरो नित्यमस्त्यस्य इनि। कोविदारवृक्षे राजनि०।

**स्वल्पकेशिन्** त्रि० स्वल्पः केशो नित्यमस्त्यस्य। १अल्पकेशयुते स्त्रियां ङीप्। २पिशाचभेदे पु०शब्दच०। [रत्नमा०

**स्वल्पपत्रक** पु० स्वल्पं पत्त्रमस्य कप्। गौरशाके मधूकभेदे

**स्वल्पफला** स्त्री स्वल्पं फलं यस्याः। हपुषाभेदे राजनि०।

**स्ववासिनी** स्त्री स्वस्मिन् पित्रालये वसति वस-णिनि ङीप्। चिरं पितृगृहादिवासिन्यामूढायामनूढायां वा स्त्रियाम्। सुवासिनीत्यस्य स्थाने अमरे पाठान्तरम्।

**स्ववीज** पु० स्वमेव वीजं यस्य। १आत्मनि शब्दर०। २पुत्रे ३कन्यायां स्त्री हेम०। ४निजकारणे न० ५स्वस्य वीर्ये च न०।

**स्वसृ** स्त्री सु+अस-ऋन्। भगिन्याम् अमरः।

**स्वस्क** गतौ भ्वा० आ० सक० सेट्। स्वस्कते अस्वस्किष्ट।

**स्वस्ति** अव्य० सु-अस-क्तिच्, अस्तीति विभक्तिप्रतिरूपकम् अव्ययं प्रादि०वा। १क्षेमे २आशिषि ३पुण्यादौ अमरः ४अङ्गीकारसूचने च। एतद्योगे क्षेमादिसम्बन्धे चतुर्थी।

**स्वस्तिक** पुंन०। स्वस्ति शुभाय हितम् ठन्। "स्वस्तिकं प्राङ्मुखं यत् स्यादलिन्दानुगतं भवेत्। तत्पार्श्वानुगतौ चान्यौ तत्पर्यन्तगतोऽपरः" इत्युक्तलक्षणे गृहभेदे वास्तु। २सितावरशाके पु० राजनि० ३आसनभेदे तल्लक्षणम् आसनशब्दे ८८६ पृ० दृश्यम्। ४तण्डुलचूर्णनिर्मिते त्रिकोणाकारे द्रव्यभेदे च "एतं स्वस्तिकमिन्दूरम्" इत्यभिधायकवाक्यम् ५चतुष्पथे पु० मेदि०। ६जिनध्वजभेदे हेमच०। ७रतताडिते विटः

**स्वस्तिमुख** पु० स्वस्ति तद्वचो मुखे आदौ वा यस्य। १लेख्ये पत्रादौ २विप्रे पु० ३स्वस्तिवादिनि त्रि० मेदि०।

**स्वस्तिवाचन** न० स्वस्ति शुभस्य विप्रद्वारा वाचनम्। कर्मारम्भे विघ्नोपशान्तये ब्राह्मणद्वारा कर्त्तव्यकर्म्मणां शुभतावाचने। "संपूज्य गन्धपुष्पाद्यैर्ब्राह्मणान् स्वस्ति वाचयेत्। धर्म्ये कर्म्मणि माङ्गल्ये संग्रामेऽद्भुतदर्शने" व्यासः।

**स्वस्तिवाचनिक** त्रि० स्वस्तिवाचनाय हितं तत आगतम् तत्र भवं वा ठञ्। १स्वस्तिवाचनसाधने २तद्द्रव्ये ३तत्सम्बन्धिनि च।

**स्वस्त्ययन** न० स्वस्ति शुभमयनं लाभो यस्मात्। शुभार्थं क्रियमाणे वेदादिविहिते मन्त्रयागादौ।

**स्वस्थ** त्रि० स्वः परलोके तिष्ठति स्वेन स्वभावेन सुखेन, वा वा तिष्ठति स्था-क वा विसर्गलोपः। १स्वभावस्थे २स्वात्मस्थिते ३विनाशादिना दुःखेनानाविष्टे च। "स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः" वेणीसं०।

**स्वस्त्रीय** पु० स्वसुरपत्यम् छ। १भागिनेये अमरः २भागिनेय्यां स्त्री टाप्।

**स्वागत** न० सुखेन आगतम् सु+आ+गम्-भावे क्त। १सुखेनागमने "स्वागतं स्वानधीकारान्" कुमारः तद्वाचिनि अव्य०। २कुशले ३कुशलप्रश्ने शब्दर०।
स्वागतञ्च षोडशोपचारमध्ये द्वितीयोपचारः आसनं स्वागतं पाद्यमित्यादि। उपचारशब्दे दृश्यम्।

**स्वाङ्गिक** पु० स्वाङ्गमर्हति ठक्। १मड्डौ २महाढक्के शब्दर०।

**स्वाच्छन्द्य** न० स्वच्छन्दस्य भावः ष्यञ्। १स्वाधीनत्वे २स्वास्थ्ये च।

**स्वातन्त्र्य** न० स्वतन्त्रस्य भावः ष्यञ्। १स्वाधीनत्वे २परानधीनत्वे। व्या० उक्ते इतरव्यापारानधीनव्यापारवत्त्वरूपे कर्तृत्वे कर्तृशब्दे १७१६ पृ० दृश्यम्।

**स्वाति(ती)** पुंस्त्री० स्वेनैव अतति अत-इञ् स्त्रीत्वपक्षे वा ङीप्। १अश्विन्यादिषु पञ्चदशे नक्षत्रे अमरः "एका स्वातिः प्रवाला फलीव" ति०त० उक्तेरस्य एकताराकत्वम्। २सूर्य्यपत्नीभेदे स्त्री त्रिका० ३खड्गे धरणिः।
स्वातिनक्षत्राधिष्ठातृदेवयोगतारासङ्ख्यादिकम् नक्षत्रशब्दे ४८७ पृ० दृश्यम्।

**स्वातियोग** पु०आषाढशुक्लपक्षे यस्यां तिथौ श्रावणकृष्णपक्षस्य तिथौ च स्वातिनक्षत्रस्थचन्द्रस्य शुभफलादिज्ञापके योगभेदे यथोक्तं ज्यो० सं० २५अ०
"यद्रोहिणीयोगफलं तदेव स्वातावषाढासहिते च चन्द्रे।

चित्रविभ्रमा मत्ता या स्यात् स्वाधीनभर्तृका" सा०द०। सा च पञ्च यथा "मुग्धा मध्या प्रौढ़ा स्वकीया सामान्या चेति" रसमञ्जरी।

**स्वाध्याय** पु० स्वः स्वकीयत्वेन विहित अध्यायः द्विजानाम्, अधि+इङ्–कर्मणि घञ्। १द्विजैः पाठ्ये वेदभागभेदे "स्वाध्यायोऽध्येतव्यः" इति श्रुतिः। सु+आ+अधि इङ् भावे घञ्। २अवश्यपाठ्यवेदाध्ययने "स्वाध्यायो जप इत्युक्तो वेदाध्ययनकर्मणीति" स्मृतिः।

**स्वान्त** न० स्वन-क्त। १मनसि अमरः २गह्वरे मेदि०। ३ध्वनिते त्रि०। [४सर्वोन्नतायां च मेदि०।

**स्वाप** पु० स्वप-घञ्। निद्रायाम् अमरः। २शयने ३अज्ञाने

**स्वापतेय** न० स्वपतेरागतः ढञ्। धने अमरः।

**स्वाभाविक** त्रि० स्वभावादागतः ठञ्। स्वभावसिद्धे स्त्रियां ङीप् (स्वाभाविकी स्वभावेत्युत्कटः)।

**स्वामिन्** पु० स्व+अस्त्यर्थे मिनि दीर्घः। १भर्त्तरि पत्यौ भरतः। २कार्त्तिकेये मेदि०। ३राजनि अमरः। ४विभौ ५हरे ६हरौ च शब्दर०। ७आत्मस्वामिनि त्रिका०। ८अधिपतौ त्रि०अमरः। ९जैनभेदे पु० हेमच०। १०परिव्राजकोपाधिभेदे पु०। तस्य भावः त्व स्वामित्व स्वत्वनिरूपिते क्रयाद्यधीने आकस्मिके पदार्थभेदे स्वत्वशब्दे दृश्यम्।

**स्वामिपालविवाद** पु० स्वामी च पालो च तयोर्विवादः विवादभेदे तत्स्वरूपादिकं वीरमि०उक्तं यथा "अथ स्वामिपालविवादाख्यव्यवहारपदम्। तत्र मनुः स्वदभिधानप्रतिज्ञां करोति। "पशुषु स्वामिनां चैव पालानाञ्च व्यतिक्रमे; विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः" इति। स्वामिपालयोः प्रतिदिनकृत्यमाह नारदः "अपानवेद्गा गोपाय प्रत्यहं रजनीक्षये। चीर्णाः पीताश्च ता गोपः सायाह्ने प्रत्यर्पयेद्" इति। चीर्णाः तृणादिकं भक्षितवतीः। पीताः पीतवतीः। स्वामिना प्रातर्यावत्यः समर्पितास्तावत्यो गोपालेन सायं प्रत्यर्पणीया इत्यर्थः। गोग्रहणं पशुमात्रोपलक्षणार्थम्। तथा च याज्ञवल्क्यः "यथार्पितान् पशून् गोपः सायं प्रत्यर्पयेत् तथा" इति। गवादिपरिपालकस्य भृतिपरिमाणमाह नारदः "गवां शताद्वत्सतरी धेनुः स्याद् द्विशताद् भृतिः। प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि" इति। प्रतिसंवत्सरं संवत्सरे संवत्सरे गोशतपरिपालने वत्सतरी द्विहायनी गौर्भृतिः, द्विशतपरिपालने धेनुर्दोग्ध्री प्रसूतेति यावत्। अष्टमे दिवसे सन्दोहः सर्वासां गवां सन्दोहश्च भृतित्वेन कल्पनीय इत्यर्थः। बृहस्पतिरपि "तथा धेनुभृतः क्षीरं लभेताष्टमेऽह्नि" इति। धेनुभृतः धेन्वाभृतः द्विशतपालक इत्यर्थः। तथा च सन्दोहो धेन्वा सहस्रीयते न वत्सतर्येति मदनरत्ने। कल्पतरौ तु धेनुभृतो गोपाल इति व्याख्यातत्वेन वत्सतर्यापि सहस्रीयत इति गम्यते। गोग्रहणं महिष्यादीनामुपलक्षणम्। न्यूनाधिकपरिपालने तु तदनुसारेण भृतिकल्पना द्रष्टव्या। इयञ्च वत्सतर्यादिभृतिकल्पना परिभाषितभृत्यभावविषया। परिभाषिते तु परिभाषानतिक्रमेणैव देया। मनुस्तु प्रकारान्तरेण भृतिपरिमाणमाह "गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम्। गोस्वाम्यनुमतो भृत्यः सा स्यात् पालेऽभृते भृतिः" इति। दशानां सन्दोग्ध्रीणां मध्ये वरामुत्कृष्टां स्वामिनः तत्क्षीरभृतो भृत्यो गोपः दशदोग्ध्रीपालनकृद् गृह्णीयाद् इत्यर्थम्। सैषा भृतिः पूर्वं द्रव्यान्तरेणाभृते ज्ञेया। यस्तु द्रव्यान्तरेण भृतः तत्र तदेव भृतिरित्यर्थः। यस्तु भृतिं गृहीत्वा पशून्मारयेत् विनाशयति वा तं प्रत्याह याज्ञवल्क्यः "प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः" इति। प्रमादग्रहणं पशुपालकदोषोपलक्षणार्थम् मनुना प्रमादनाशः स्पष्टोक्तः "नष्टं विनष्टं कृमिभिः श्वहतं विषमे मृतम्। हीनं पुरुषकारेण प्रदद्यात् पाल एव तु" इति। श्वहतम् शुना हतम्। विषमे दुर्गमप्रदेशे। पुरुषकारः पुरुषप्रयत्नः। यत् पुरुषप्रयत्नेन हीनं सत्यास्यादिकं प्राप्तं तद्दातव्यमित्यर्थः। पुरुषकारश्च बृहस्पतिना दर्शितः "कृमिचोरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत्। व्यायच्छेच्छक्तितः क्रोशेत् स्वामिने वा निवेदयेत्" इति। व्यायच्छेत् अपनयनाय यतेतेत्यर्थः। चौरैर्बलात्कारेणापहृते न दाप्य इत्याह मनुः "विघुष्य तु हृतं चौरैर्न पालो दातुमर्हति। यदि देशे च काले च स्वामिनः स्वस्य शंसति" इति। विघुष्य डक्कादिभिर्घोषं कृत्वा। देशे स्वाम्यवस्थानदेशे। काले अपहरणकालाव्यवहितकाले। विषयविशेषे पशुपालस्य दण्डमाह व्यासः "गृहीतमूल्यो गोपालकांस्तत्रा निर्जने वने। ग्रामचारी कर्मीवाध्यः प्रयाकी च वनेचरः" इति। प्रयाकी नापित इति कल्पतरौ। पुरुषेण प्रयत्नाकरणे दण्डमाह नारदः "स्वाम्यधीनं व्यसनं गोपो नायच्छेत् तत्र यत्नतः। अशक्तस्तूर्णमागम्य स्वामिने च निवेदयेत्"। अव्यायच्छन्नविक्रोशन् स्वामिने चा-

निवेदयन् । वोढुमर्हति गोपस्तं विनयस्त्वेव राजनि" इति । तद्रूपादिकम् । पशूनां दैवात् मरणे पालकस्य दोषाभावज्ञानोपायमाह व्यासः "क्षतेषु च विशुद्धः स्याद् वालशृङ्गादिदर्शनात्" । आदिशब्देन कर्णादीनां ग्रहणम् । तथा च मनुः "कर्णौ चर्म च वालांश्च वस्तिं स्नायुञ्च रोचनाम् । पशुषु स्वामिनां दद्यान्मृतेष्वङ्कानि दर्शयेत्" इति । अङ्कादि दर्शयेदिति क्वचित् पाठः । अङ्कः शृङ्गकर्णादिकृतचिह्नम् । आदिशब्दः चापिसंग्रहार्थः । पशुषु मृतेष्वङ्कादिकं स्वामिने दर्शयेत् । रोचनादिकं यत्प्रयोजनं तत् तस्मै दद्यादित्यर्थः । नष्टमदर्शनाच्च तत्स्वामिने मूल्यद्वारेण दातव्यम् । अतएव विष्णुः "दिवा पशूनां वृकाद्युपघाते पालेऽनायति पालकदोषो विनष्टपशूनां मूल्यं स्वामिने दद्यादिति" । अनायति अनागच्छति । विनष्टद्रव्यप्रमाणमाह याज्ञवल्क्यः "पालदोषविनाशे तु पाले दण्डो विधीयते । अर्द्धत्रयोदशपणः स्वामिनो द्रव्यमेव च" इति । अर्द्धत्रयोदशपणः अर्द्धरहितत्रयोदशपणः । सार्द्धद्वादशपण इति यावत् । उत्तरपदलोपी कर्मधारयः । यत्तु केनचिदर्द्धाधिकत्रयोदशपणो दण्ड इति व्याख्यानं तत् सार्द्धद्विमासादिष्वर्द्धत्रिमासादि शब्द भाष्यकारशब्दप्रयोगदर्शनादुपेक्ष्यम् । पालदोषमाह मनुः "अजाविके तु संरुद्धे वृकैः पाले त्वनायति । यां प्रसह्य वृको हन्यात् पाले तत् किल्विषं भवेत्" इति । अनायति उपद्रवनिवारणाय अनागच्छतीत्यर्थः । यां अजाविकजातीयाम् । सुगमस्थलस्थविषयमेतत् । दुर्गमस्थलस्थविषये त्वाह स एव "तासाञ्चेदवरुद्धानां चरन्तीनां मिथो वने । यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्विषी" इति । अवरुद्धानां पालकेन स्थापितानामित्यर्थः । गवादिप्रचारार्थं भूमिमाह याज्ञवल्क्यः "ग्राम्येच्छया गोप्रचारो भूमीराजवशेन वा" । ग्राम्येच्छया ग्रामीणजनवशेन राजेच्छया वा । गोप्रचारो गवां तृणादिभक्षणार्थं कियानपि भूभागोऽकृष्टः परिकल्पनीय इत्यर्थः । गवां स्थानासनशौचाय ग्रामक्षेत्रयोरन्तरमाह स एव "धनुःशतपरीणाहो ग्रामक्षेत्रान्तरं भवेत् । द्विशते खर्व्वटस्य स्यान्नगरस्य चतुःशतम्" इति । परीणाहशब्देनात्र सर्वासु दिक्षु चतुष्प्रगव्यस्यकं गृह्यते । एतादृशं धनुःशतं परिमितं ग्रामक्षेत्रयोरन्तरं कार्य्यम् । खर्व्वटस्य शतद्वयपरिमितमित्यर्थः । खर्व्वटः अनेककारुकुटीवलयुक्तो ग्राम इति मदनरत्ने । माधवाचार्य्यैस्तु प्रचुरकण्टकमल्लाणो ग्राम इति व्याख्यातम् । तत्र शस्योत्पत्तेः प्रागेवावरणं कार्य्यमित्याह कात्यायनः "शस्यातस्त्वेव शस्येषु कुर्य्यादावरणं महत् । दुःखेन विनिवार्य्यन्ते लब्धस्वादरसा मृगाः" इति । एवं पशुनिवारणार्थं कृतेऽप्यावरणे तमतिक्रम्य पशुभिः शस्यादिविनाशे कृते कर्त्तव्यमाह मनुः "पथिक्षेत्रे परिवृते ग्रामान्तीयेऽथ वा पुनः । स पालः शतदण्डार्हो विपालं वारयेत् पशुम्" इति । पथिक्षेत्रे मार्गसमीपे क्षेत्रे । ग्रामान्तीये ग्रामसमीपवर्त्तिनि । सपालः पशुः पणशतदण्डार्हः तत्पशुपालः पणशतं दण्डनीय इत्यर्थः । अयञ्च दण्डः पशुपालने समर्थेन सता पशावनिवार्य्यमाणे वेदितव्यः । अतएव नारदः "उत्क्रम्य तु वृतिं यः स्याच्छस्यघातो गवादिभिः । पालः शास्यो भवेत् तत्र न चेच्छक्तो निवारयेत्" इति । आवरणाभावेनापरिहार्य्ये शस्योपघातेऽपि न पालस्य दण्डः । तथा च मनुः "तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि । न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्" इति । अनेनावृतक्षेत्रशस्योपघाते पशुरक्षिणां दण्ड इत्यर्थादुक्तं भवति । अदीर्घकालप्रचारविषयमेतत् । दीर्घकालप्रचारे तु अपरिवृतेऽपि पशुपालो दण्डार्हो भवति । अतएवाल्पकालप्रचारे दोषाभावं दर्शयति विष्णुः "पथि ग्रामविवीतान्ते न दोषोऽल्पकालमिति" । पशुविशेषे दण्डपरिमाणमाह याज्ञवल्क्यः "माषानष्टौ तु महिषी शस्यघातस्य कारिणी । दण्डनीया तदर्द्धं तु गौस्तदर्द्धमजाविकम् । भक्षयित्वोपविष्टानां यथोक्ताद् द्विगुणो दमः । सममेषां विवीतेऽपि खरोष्ट्रं महिषीसमम्" इति । परशस्यघातकारिण्या महिष्याः स्वामी अष्टौ माषान् दण्ड्यः । गोः स्वामी चतुरः । छागस्वामी मेषस्वामी च द्वौ । एतेषां पशूनां शस्यभक्षणादारभ्य तत्रैव उपविष्टानां स्वामी यथोक्तदण्डाद् द्विगुणं दाप्यः । विवीतस्यतृणाद्युपघातेऽपि शस्योपघातवद्दण्डनीयः । खरस्वाम्युष्ट्रस्वामी च महिषीस्वामिवद्दण्डनीयः । अत्र पशुस्वामिनो दण्ड इत्यभिधातव्ये महिष्यादिग्रहणं प्रतिपशुदण्डप्राप्त्यर्थम् । भक्षयित्वोपविष्टवत्सविषये यथोक्ताच्चतुर्गुणो दण्डः । तथा च स्मृत्यन्तरम् "वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः" इति । अत्रापराधानुसारेण दण्डनार्थं ताम्रिकमाषो ग्राह्यः न पुनः

गर्भनिस्रावणे तत्प्रकारादिकं चरकेणाभिहितं यथा 'अतः स्वेदाः प्रवक्ष्यन्ते यैर्यथावत् प्रयोजिताः । स्वेदसाध्याः प्रशाम्यन्ति गदा वातकफात्मकाः । स्नेहपूर्वं प्रयुक्तेन स्वेदेनावजितेऽनिले । पुरीषमूत्ररेतांसि न सज्जन्ति कथञ्चन । शुष्काण्यपि हि काष्ठानि स्नेहस्वेदोपपादनैः । नमयन्ति यथान्यायं किं पुनर्जीवतो नरान् । रोगर्त्तुव्याधितापेक्षो नात्युष्णोऽतिमृदुर्न च । द्रव्यवान् कल्पितो देशे स्वेदः कार्यकरो मतः । व्याधौ शीते शरीरे च महान् स्वेदो महाबले । दुर्बले दुर्बलः स्वेदो मध्यमे मध्यमो हितः । वातश्लेष्मणि वाते वा कफे वा स्वेद इष्यते । स्निग्धरूक्षस्तथा स्निग्धो रूक्षश्चाप्युपकल्पितः । आमाशयगते वाते कफे पक्वाशयाश्रिते । रूक्षपूर्वो हितः स्वेदः स्नेहपूर्वस्तथैव च । वृषणौ हृदयं दृष्टी स्वेदयेन्मृदु नैव वा । मध्यमं वङ्क्षणौ शेषमङ्गावयवमिष्टतः । सुशुद्धैर्नक्तकैः पिण्ड्या गोधूमानामथापि वा । पद्मोत्पलपलाशैर्वा स्वेद्यः संवृत्य चक्षुषी । मुक्तावलीभिः शीताभिः शीतलैर्भाजनैरपि । जलार्द्रैर्जलजैर्हस्तैः स्विद्यतो हृदयं स्पृशेत् । शीतशूलव्युपरमे स्तम्भगौरवनिग्रहे । सञ्जाते मार्दवे स्वेदे स्वेदनाद्विरतिर्मता । पित्तप्रकोपो मूर्च्छा च शरीरसदनं तृषा । दाहः स्वेदाङ्गदौर्बल्यमतिस्विन्नस्य लक्षणम् । उक्तस्तस्याशितीये यो ग्रैष्मिकः सर्वशो विधिः । सोऽतिस्विन्नस्य कर्त्तव्यो मधुरः स्निग्धशीतलः । कषायमद्यनित्यानां गर्भिण्या रक्तपित्तिनाम् । पित्तिनां सातिसाराणां रूक्षाणां मधुमेहिनाम् । विदग्धभ्रष्टब्रध्नानां विषमद्यविकारिणाम् । श्रान्तानां नष्टसंज्ञानां स्थूलानां पित्तमेहिनाम् । तृष्यतां क्षुधितानाञ्च क्रुद्धानां शोचतामपि । कामल्युदरिणाञ्चैव क्षतानामाढ्यरोगिणाम् । दुर्बलातिविशुष्काणामुपक्षीणौजसां तथा । भिषक् तैमिरिकाणाञ्च न स्वेदमवतारयेत् । प्रतिश्याये च कासे च हिक्काश्वासेष्वलाघवे । कर्णमन्याशिरःशूले स्वरभेदे गलग्रहे । अर्द्दितैकाङ्गसर्वाङ्गपक्षाघाते विनामके । कोष्ठानाहविबन्धेषु शुक्राघाते विजृम्भके । पार्श्वपृष्ठकटीकुक्षिसंग्रहे गृध्रसीषु च । मूत्रकृच्छ्रे महत्त्वे च मुष्कयोरङ्गमर्दके । पादजानूरुजङ्घार्त्तिसंग्रहे श्वयथावपि । खल्लीष्वामेषु शीते च वेपथौ वातकण्टके । सङ्कोचायामशूलेषु स्तम्भगौरवसुप्तिषु । सर्वाङ्गेषु विकारेषु स्वेदनं हितमुच्यते । तिलमाषकुलत्थाम्लघृततैलामिषौदनैः । पायसैः कृशरैर्मांसैः पिण्डस्वेदं प्रयोजयेत् । गोखरोष्ट्रवराहाश्वशकृद्भिः सतुषैर्यवैः । सिकतापांशुपाषाणकरीषायसपूटकैः । श्लैष्मिकान् स्वेदयेत् पूर्वैर्वातिकान् समुपाचरेत् । द्रव्याण्येतानि शस्यन्ते यथास्वं प्रस्तरेष्वपि । भूगृहेषु च जेन्ताकेषूष्णगर्भगृहेषु च । विधूमाङ्गारतप्तेष्वभ्यक्तः स्विद्यति ना सुखम् । ग्राम्यानूपौदकं मांसं पयोवस्तशिरस्तथा । वराहमध्यपित्तासृक्स्नेहवत्तिलतण्डुलान् । इत्येतानि समुत्क्वाथ्य नाडीस्वेदं प्रयोजयेत् । देशकालविभागज्ञो युक्त्यपेक्षो भिषक्तमः । वारुण्यामृतकैरण्डशिग्रुमूलकसर्षपैः । वासावंशकरञ्जार्कपत्रैरश्मन्तकस्य च । शोभाञ्जनकशैरीयमालतीसुरसार्जकैः । पत्रैरुत्क्वाथ्य सलिलं नाडीस्वेदं प्रयोजयेत् । भूतीकपञ्चमूलाभ्यां सुरया दधिमस्तुना । मूत्रैरम्लैश्च सस्नेहैर्नाडीस्वेदं प्रयोजयेत् । एत एव च निर्यूहाः प्रयोज्या जलकोष्ठके । स्वेदनार्थं घृतक्षीरतैलकोष्ठांश्च कारयेत् । गोधूमशकलैश्चूर्णैर्यवानामम्लसंयुतैः । सस्नेहकिण्वलवणैरुपनाहः प्रशस्यते । गन्धैः सुरायाः किण्वेन जीवन्त्या शतपुष्पया । उमया कुष्ठतैलाभ्यां युक्तया चोपनाहयेत् । चर्मभिश्चोपनद्धव्यः सलोमभिरपूतिभिः । उष्णवीर्यैरलाभे तु कौशेयाविकशाटकैः । रात्रौ बद्धं दिवा मुञ्चेन्मुञ्चेद्रात्रौ दिवाकृतम् । विदाहपरिहारार्थं स्यात् प्रकर्षस्तु शीतले । सङ्करः१ प्रस्तरो२ नाडी३ परिषेको४ऽवगाहनम्५ । जेन्ताको६ऽश्मघनः७ कर्षूः८ कुटी९ भूः१० कुम्भिकैव११ च । कूपो१२ होलाक१३ इत्येते स्वेदयन्ति त्रयोदश । तान् यथावत् प्रवक्ष्यामि सर्वानेवानुपूर्वशः" इति । तत्र वस्त्रान्तरितैरवस्त्रान्तरितैर्वा पिण्डैर्यथोक्तैरुपस्वेदनं सङ्करस्वेद इति विद्यात् । शूकशमीधान्यपुलाकानां वेशवारपायसकृशरोत्कारिकादीनां वा प्रस्तरे कौशेयाविकोत्तरप्रच्छदे पञ्चाङ्गुलोरुबूकार्कपत्रप्रच्छदे वा स्वभ्यक्तसर्वगात्रस्य शयानस्योपरि स्वेदनं प्रस्तरस्वेद इति विद्यात् । स्वेदनद्रव्याणां पुनर्मूलफलपत्रभङ्गादीनां मृगशकुनपिशितशिरस्पदादीनामुष्णस्वभावानां वा यथार्हमम्ललवणस्नेहोपसंहितानां मूत्रक्षीरादीनां वा कुम्भ्यां वाष्पमनुद्वमन्त्यामुत्क्वथितानां नाड्या शरेषीकावंशदलकरञ्जार्कपत्रान्यतमकृतया गजाग्रहस्तसंस्थानया व्यामदीर्घया व्यामार्द्धदीर्घया वा व्यामचतुर्भागाष्टभागमूलाग्रपरिणाहस्रोतसा सर्वतो वातहरपत्रसंवृतच्छिद्रया द्विस्त्रिर्वा विना-

भितया वातहरसिद्धस्नेहाभ्यक्तगात्रो बाष्पमपहरेत् । बाष्पो ह्यनूर्द्ध्वगामी विहतचण्डवेगस्त्वचमविदहन् सुखं स्वेदयतीति नाड़ीस्वेदः ३। वातिकोत्तरवातिकानां पुनर्मूलादीनामुत्क्वाथैः सुखोष्णैः कुम्भीर्वालुकाः प्रनाड़ीर्वा पूरयित्वा यथार्हसिद्धस्नेहाभ्यक्तगात्रं वस्त्रावच्छन्नं परिषेचयेदिति परिषेकः ४। वातहरोत्क्वाथक्षीरतैलघृतपिशितरसोष्णसलिलकोष्ठकावगाहस्तु यथोक्त एवावगाहः" ५। "अथ जेन्ताकं चिकीर्षुर्भूमिं परीक्षेत इत्यादि" ।
( जेन्ताकशब्दे ३१४४ पृ० दृश्य तत्पाठ्युक्तप्रायम् । )
"शयानस्य प्रमाणेन घनामश्ममयीं शिलाम् । तापयित्वा मारुतघ्नैर्दारुभिः सम्प्रदीपितैः । व्यपोह्य सर्वानङ्गारान् प्रोक्ष्य चैवोष्णवारिणा । तां शिलामथ कुर्वीत कौषेयाविकसंस्तराम् । तस्यां स्वभ्यक्तसर्वाङ्गः शयानः स्विद्यते सुखम् । रौरवाजिनकौषेयप्रावाराद्यैः सुसंवृतः । इत्युक्तोऽश्मघनस्वेदः ७ । कर्षूस्वेदः प्रवक्ष्यते । स्थानेऽत्यवनस्याधः कर्षूं स्थानविभागवित् । दीप्तैरधूमैरङ्गारैस्तां कर्षूं पूरयेत् ततः । तस्यामुपरि शय्यायां स्वपन् स्विद्यति ना सुखम् ८। अनत्युत्सेधविस्तारां वृत्ताकारामलोचनाम् । घनभित्तिं कुटीं कृत्वा कुष्ठाद्यैः सम्प्रलेपयेत् । कुटीमध्ये भिषक् शय्यां स्वास्तीर्णां चोपकल्पयेत् । प्रावाराजिनकौषेयकुथकम्बलगोलकैः । हसन्तिकाभिरङ्गारपूर्णाभिस्तां च सर्वशः । परिवार्यान्तरारोहेदभ्यक्तः स्विद्यते सुखम् ९ । य एवाश्मघ्नस्वेदविधिर्भूमौ स एव तु । प्रशस्तायां निवातायां समायामुपदिश्यते १० । कुम्भीं वातहरक्वाथपूर्णां भूमौ निखातयेत् । अर्द्धभागं त्रिभागं वा शयनं तत्र चोपरि । स्थापयेदासनं वापि नातिसान्द्रपरिच्छदम् । अथ कुम्भ्यां सुसन्तप्तान् प्रक्षिपेदयसो गुडान् । पाषाणान् वोष्मणा तेन तत्स्थः स्विद्यति ना सुखम् ११ । सुसंवृताङ्गः स्वभ्यक्तः स्नेहैरनिलनाशनैः । कूपं शयनविस्तारं द्विगुणं चापि वेधतः । देशे निवाते शस्ते च कुर्यादन्तः सुमार्जितम् । हस्त्यश्वगोखरोष्ट्राणां करीषैर्दग्धपूरिते । स्वनवच्छन्नः सुसंस्तीर्णेऽभ्यक्तः स्विद्यति ना सुखम् १२ । धीतीकां तु करीषाणां यथोक्तानां प्रदीपयेत् । शयनान्तःप्रमाणेन शय्यामुपरि तत्र च । सुदग्धायां विधूमायां यथोक्तामुपकल्पयेत् । स्वनवच्छन्नः स्वपंस्तत्राभ्यक्तः स्विद्यति ना सुखम् । होलाकस्वेद इत्येष सुखः प्रोक्तो महर्षिणेति" । इति त्रयोदशविधः स्वेदोऽग्निगुणसंश्रयः । व्यायाम उष्णसदनं गुरुप्रावरणं क्षुधा । बहुपानं भयक्रोधावुपनाहाहवातपाः । स्वेदयन्ति दशैतानि नरमग्निगुणादृते । इत्युक्तो द्विविधः स्वेदः संयुक्तोऽग्निगुणैर्न च । एकाङ्गसर्वाङ्गगतः स्निग्धो रूक्षस्तथैव च । इत्येतत् त्रिविधं द्वन्द्वं स्वेदमुद्दिश्य कीर्त्तितम् । स्निग्धः स्वेदैरुपक्रम्यः स्विन्नः पथ्याशनो भवेत् । तदहः स्विन्नगात्रस्तु व्यायामं वर्जयेन्नरः" इति । तत्र श्लोकाः "स्वेदो यथा कार्यकरो हितो येभ्यश्च यद्विधः । यत्र देशे यथायोग्यो देशो रक्ष्यश्च यो यथा । स्विन्नातिस्विन्नरूपाणि तथातिस्विन्नभेषजम् । अस्वेद्याः स्वेदयोग्याश्च स्वेदद्रव्याणि कल्पना । त्रयोदशविधः स्वेदो विना दशविधोऽग्निना । संग्रहेण च षट् स्वेदाः स्वेदाध्याये निदर्शिताः । स्वेदाधिकारे यद्वाच्यमुक्तमेतन्महर्षिणा । शिष्यैस्तु प्रतिपत्तव्यमुपदेष्टा पुनर्वसुरिति" ।

**स्वेदज** पु० स्वेदाज्जायते जन—ड । १स्वेदजाते दंशादिजन्तौ अमरः २स्वेदजातमात्रे त्रि० ।
"संस्वेदजा विकाराश्च यथा तेभ्यो भवन्ति च । मानुषस्वेदमलजा मक्षिकाद्या भवन्ति च । नवमेघाभिषिक्तायां पिपीलिकगणादयः । संस्वेदजास्तु विज्ञेया इन्द्रगोपादिजन्तवः । धामिकुम्भ्या माषमुद्गेभ्यः फलेभ्यश्चैव जन्तवः । जायन्ते क्रिमयो विप्राः । काष्ठेभ्यो घुणकादयः । तथा शुक्रविकारेभ्यः पूतिकाः प्रभवन्ति च । संस्वेदजाश्च जायन्ते वृश्चिकाः शुष्कगोमयात् । गोभ्यो हि मक्षिकेभ्यश्च मानुषेभ्यश्च जन्तवः । मत्स्यादिभ्यश्च विविधा जन्तवः कुणपो विशेषतः । तथान्यानि च सूक्ष्माणि सूक्ष्मभूतानि चैव च । गोभ्योऽश्वेभ्यस्तथा चैव चतुष्पदविभीनकाः । मांसिकानां विकाराश्च पञ्चशष्पोदकर्दमैः । घरावति विकाराश्च करीषेभ्यो भवन्ति हि । एवमादिरसंख्यातो गणः संस्वेदजो मया । यथोद्देशाभिहितो ह्येष प्राकृतर्णशयजः स्मृतः" वह्निपु० ।

**स्वेदन** न० स्विद—णिच् ल्युट् । गात्रादितो घर्मादेर्निःसारणव्यापारे (भापरा) । स्वेदशब्दे दृश्यम् ।

**स्वेदनी** स्त्री स्विद्यते पच्यतेऽनया स्विद—ल्युट् । लौहपात्रभेदे (तावोया) अमरः । संज्ञायां कन् टापि ह्रस्वः स्वेदनिका तन्दुकपे पात्रे हेमच० भर्जनपात्रे मल्लमा० ।

**स्वैर** न० स्वस्य ईरम् ईर—घञ् वृद्धिः । १स्वेच्छायाम् २तद्वति ३मन्दे च त्रि० मेदि० ।

**स्वैरिन्** त्रि० स्वेनैव ईरितं शीलमस्य ईर—णिनि वृद्धिः । १स्वेच्छाचारिणि अमरः । २व्यभिचारिण्यां स्त्रियां स्त्री

पूर्वं धान्यावाहनं मन्त्रैः, गुरवे निवेदयेदिति, स्वर्णवृक्षदाने चाचार्याय यच्च उदात् कल्पितम्बो यथाशक्ति वस्त्रादि दद्यात्। गङ्गकपकादिकल्पदाने तु प्रकृतिवदनुवस्था, व्यस्ततरत्ने काम्यतोऽपि द्रष्टव्या" हेमा॰दा॰

**हिरण्याश्वरथ** पु॰ हिरण्येन निर्मितः अश्वः तद्युक्तरथः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना १कल्पिते सुवर्णमयाश्वयुक्तरथे २तद्दाने न॰। तद्विधिर्यथा "अथातः संप्रवक्ष्यामि महादानमनुत्तमम्। हिरण्याश्वरथं नाम महापातकनाशनम्। पुण्यं दिनमथासाद्य कृत्वा च ब्राह्मणवाचनम्। लोकेशावाहनं कुर्यात् तुलापुरुषदानवत्। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्"। तुलापुरुषदानवदिति, मत्स्यपुराणोक्ततुलापुरुषदानवदेदितव्यम्, आदिग्रहणस्यापि पूर्ववदेव व्याख्या "कृष्णाजिने तिलान् कृत्वा काञ्चनं कारयेद्रथम्। सप्ताश्वं चतुरश्वं वा चतुश्चक्रं सकूवरम्। इन्द्रनीलेन कुम्भेन ध्वजरूपेण संयुतम्। लोकपालाष्टकोपेतं पद्मरागदलान्वितम्"। अत्र तिलानां रथस्य च परिमाणापेक्षायां पुरुषेच्छया नियमः प्रकृतौ परिमाणाश्रवणात्. केचित्तु सन्निधानात् हेमहस्तिरथादिदानस्थितं तिलानां द्रोणपरिमाणत्वमिह वदन्ति। कूवरं युगाधारकाष्ठम्। ध्वजो दण्डः, स च रथस्य सौवर्णत्वात् सौवर्ण एव तथा चोपरिस्थितेन इन्द्रनीलमणिमयेन कलशेन युतः कर्त्तव्यः। लोकपालकलशाष्टकञ्च गजरथदाने, "चत्वारः पूर्णकलशा धान्यान्यष्टौ दशैव तु। कौशेयवस्त्रसंयुक्तमुपरिष्टाद्वितानकम्। माल्येक्षुफलसंयुक्तं पुरुषेण समन्वितम्। यो यत्तत्र पुमान् कुर्यात् स तस्याधिवासनम्"। वितानकम् पञ्चवर्णं, पुरुष इष्टदेवताकारः सौवर्णरथे स्थापनीयः। मन्त्रोपानत्पादुकाश्च। "सोऽभिर्निधनतः सार्द्धं दद्याच्च मधनाशनम्। आम राशिनावादूर्ध्वं पश्चितः कारयेद् बुधः"। भारः पञ्चकलशवत्, एतत्र सुवर्णभारं ध्वजयुक्तमात्राकालाश्वचक्ररक्षणरहितञ्च वेदितव्यम्। "षडश्वोरथसंयुक्तं चतुर्भिरथ वाजिभिः। इत्यादिना युतं दद्याद्धेमसिंहध्वजान्वितम्"। हेमेन सिंहाङ्कितेन युक्तमिति षडश्वपक्षे, चतुरश्वपक्षे च इन्द्रनीलमयकुम्भो ध्वजे कार्यः, अश्वद्वयपक्षे हेमसिंह इति व्यवस्था। "चक्ररक्षावुभौ तत्र तुरगस्थावथाश्विनौ। पुण्यं कालं ततः प्राप्य पूर्ववत् स्थापितो द्विजैः। शुक्लमाल्याम्बरो दद्यादिमं मन्त्रमुदीरयेत्"। हेमा॰ दा॰ मत्स्यपुराणीयम्।

**हिरुक्** अव्य॰ हि–बा॰ रुकिक् रुट् च। १वर्जने २अन्ते मेदि॰ ३विनार्थे ४मध्यार्थे ५सामीप्ये च अमरः। ६अधमे शब्दच॰

**हिल** हावकरणे तु॰ प॰ सक॰ सेट्। हिलति अहेलीत्।

**हिलमोचि(ची)** स्त्री हिल–क मुच–इन् कर्म॰ वा ङीप् (हेलेञ्चा) शाके शब्दर॰ स्वार्थे क तत्रैव शब्दच॰। "शोथं कुष्ठं कफं पित्तं हरते हिलमोचिका" भावप्र॰।

**हिल्ल** पुंस्त्री॰ हिल बा॰ ल्लक्। मराणिभेदे शब्दच॰ स्त्रियां ङीष्।

**हिल्लोल** दोलने अद॰ चु॰ उभ॰ सक॰ सेट्। हिल्लोलयति ते अजिहिल्लोलत् त।

**हिल्लोल** पु॰ हिल्लोल–अच्। १तरङ्गे "हृदि कृत्वा स्त्रियः पादौ कराभ्यां धारयेत् करौ। यथेष्टं ताडयेद् योनिं बन्धो हिल्लोलसंज्ञकः" रतिम॰ उक्ते २रतिबन्धभेदे। घञ्। ३दोलने।

**हिल्वला** स्त्री इल्वला+पृषो॰। मृगशिरानक्षत्रशिरोदेशस्थे पञ्चताराङ्गे मृगव्याधे शब्दर॰। [ङीप्।

**हिष** प्रीणने स्वा॰ प॰ सक॰ सेट् इदित्। हिम्वति अहि-

**हिवुक** न॰ हिवि–उकन् नि॰। लग्नाच्चतुर्थे स्थाने ज्यो॰।

**हिंस** वधे वा चु॰ रु॰ पक्षे रुधा॰ प॰ सक॰ सेट् इदित्। हिनस्ति हिंसयति ते च हिंसीत् अजिहिंसत् त।

**ही** अव्य॰ हि–डी। १विस्मये अमरः। २दुःखे ३विषादे ४हेतौ मेदि॰। ५शोके च शब्दर॰।

**हीन** त्रि॰ हा–क्त तस्य नः ईत्त्वम्। १ऊने २निन्द्ये अमरः। ३अधमे त्रि॰। व्यवहारे ४प्रतिवादिभेदे पु॰ व्यव॰त॰ "अन्यवादी क्रियाद्वेषी नोपस्थायी निरुत्तरः। आहूतप्रपलायी च हीनः पञ्चविधः स्मृतः" नारदः।

**हीनवादिन्** पु॰ कर्म॰। "पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः। वादसंक्रमणाज्ज्ञेयो हीनवादी स वै नरः" इत्युक्ते व्यवहारे १वादिभेदे। २मूके हेमच॰।

**हीनाङ्ग** त्रि॰ हीनमङ्गं यस्य। अभावतो न्यूनाङ्गयुक्ते "हीनाङ्गं विकलाङ्गं च" इति स्मृतिः। स्त्रियां वा ङीप् सा च। २क्षुद्रपिप्पल्यां हेमच॰। [ताल) भरतः।

**हीन्ताल** पु॰ हीनस्तालो यस्मात् पृषो॰। हिन्तालवृक्षे (हे॰

**हीर** न॰ हृ–क नि॰। १वज्रे २हीरके च। ३सिंहे ४सर्पे पु॰ हेमच॰ ५हारे ६सिंहे च पु॰ ७लक्ष्म्यां ८तैलाम्बुके स्त्री मेदि॰। ९पिपीलिकायां हेमच॰ १०काष्ठीयांकृ स्त्री र.अनि॰ स्वार्थे क। हीरक (हीरा) मणिभेदे शब्दर॰। वज्रशब्दे ८४३१ पृ॰ दृश्यम्।

वि+अव विवादे अवनभोजनादिना संवर्गे उपभोगे च।
आ+भोजने आहारः। नानास्थानस्थितानामेकत्रसङ्ग्रहणे च।
अधि+आ+तर्के अन्यत्रश्रुतपदस्यान्यत्राकर्षणे च।
अभि+आ+आभिमुख्येनाहरणे।
उद्+आ+उदाहरणोपन्यासे कथने च।
प्रति+उद्+आ–प्रतिरूपतया उपन्यासे।
परि+आ+परित आहरणे [विषयेभ्यो मनसो निवारणे च
प्रति+आ+तन्त्रे च पठितानामेकैकस्य ग्रहणे प्रत्याहारः
वि+आ–कथने शब्दोच्चारणव्यापारे।
सम्+आ–संक्षेपे नानास्थानस्थितानामेकत्रोपन्यासे संघाते च
उद्+उत्तोलने उत्क्षेपणे च।
अभि+उद्+आभिमुख्येन उद्धरणे। अभितो वा उत्क्षेपणे।
प्रति+उद्+प्रतिकूलतया प्रातिकूल्येन वा उद्धरणे।
उप+सामीप्येन आनयनार्थं दाने उपढौकने।
प्रति+उप+प्रतिरूपतया उपढौकने।
नि+नितरां हरणे हिंसनिवारणे च।
निर्+(र)बहिष्करणे अपधारणे च।
परि+दोषादिनिवारणे।
प्र+ताडने विघाते।
प्रति+प्र+प्रतिरूपतया ताडने।
प्रति+प्रत्येकहरणे प्रतिरूपतया हरणे च।
वि+ईर्याविशेषेण गत्यादिना स्वसन्तोषकरणार्थव्यापारे विहारः।
वि+अति परस्परमेकजातीयक्रियाकरणे व्या०।
अव+हारणे आह्वाने च। [भोजने यथा तुरीयसंहारः,
उप+सम्+प्रकरणपठितस्य समापने अन्यत्र पठितस्यान्यत्र

**हृ** बलात्कारकरणे जु०पर०सक०अनिट् वैदिकः। जहर्त्ति अहार्षीत्। [दयस्थिते त्रि०।

**हृच्छय** पु० हृदि शेते शी–अच्। १कामदेवे हला०। २हृ-

**हृच्छूल** न० हृतत्... शूलरोगभेदे वैद्यकम्।

**हृणी** लज्जायां कण्ड्वा०आत्म०अक०सेट्। हृणीयते अहृणीयिष्ट "हृणीयते वीरवती न भूमिः" भट्टिः।

**हृणीया** स्त्री हृणीय–भावे अ। निन्दायाम् अमरः।

**हृत्(द्)** न० हृ–क्विप् तुक् च। १हार्दिणि। पृषो०तस्य दः, हृदयस्य हृदादेशो वा। २हृदये ३मानसे च न० अमरः।

**हृत्कम्प** पु० ६त०। भयादिहेतुके हृदयकम्पे।

**हृत** त्रि० हृ–क्त। १अपहृते २स्थानान्तरं गमिते च ३विभक्ते

**हृदय** न० हृ–कयन् दुक् च। १मनसि २वक्षसि च मेदि०। हृद् एति इण–अच्। परमात्मनि "हृद्ययं तस्माद्धृदयम्" छा० उ०

**हृदयग्रन्थि** पु० हृदयस्य ग्रन्थिरिव। अविद्याजन्यकर्मरूपे संसारबन्धे "भिद्यते हृदयग्रन्थिः" इति भागवतम्।

**हृदयङ्गम** त्रि० हृदयं गच्छति गम–खच् मुम् च। १युक्तियुक्ते २मनोहरे त्रि० अमरः "हृदयङ्गममूर्त्ति स्वम्" भट्टिः।

**हृदयस्थान** न० हृदयस्य मनसः स्थानम् हृदयरूपं वा स्थानम् वक्षःस्थले हेमच०। [दनि। हृदयिन् तत्रार्थे अटा०

**हृदयिक** त्रि० हृदयं प्रशस्तं मनोऽस्त्यस्य ठन्। प्रशस्तचित्ते

**हृदयेश** पु० ६त०। १भर्त्तरि २भार्य्यायां स्त्री हेमच०।

**हृदावर्त्त** पु० हृदिस्थ आवर्त्तः। अश्वस्य हृदयस्थे आवर्त्ताकारे रोमावर्त्तभेदे त्रिका०। [हरिवं०२८अ०।

**हृदिक** पु० यदुवंशजे कृतवर्मपितरि यादवभेदे

**हृदिकात्मज** पु० ६त०। कृतवर्मणि यादवे।

**हृदिस्पृश्** त्रि० हृदि हृदये स्पृश्यतेऽसौ कर्मणि क्विन् अलुक्स०। १हृद्ये मनोज्ञे। कर्त्तरि क्विन्। २मर्मस्पृशि दुःखदे च। [क्रमेण तद्देशवासिनि त्रि० शौ०।

**हृद्गोल** पु०पर्वतभेदे सोऽभिजनोऽस्य छ। हृद्गोलीय पित्रादि-

**हृद्गन्ध** पु० हृद् पद्मादि गन्ध–अच्। हृद्गन्धे राजनि०

**हृद्य** न० हृदि साध्यते मनोज्ञत्वात् हृद्+यत्। १गुडत्वचि (दारचिनि) शब्दर०। २मनोज्ञे त्रि०अमरः। ३वृद्धिनामौषधौ स्त्री। ४वशमन्त्रभेदे पु० मेदि०।

**हृद्यगन्ध** न०हृद्यो गन्धोऽस्य। सुद्रजीरके हेमच०। २बिल्ववृक्षे पु० जटा०। ३मालत्यां स्त्री राजनि०। हृद्यगन्धा०। हृद्यगन्धीत्यपि ४सुद्रजीरके न० राजनि०।

**हृद्रोग** पु० ६त०। हृदयस्य रोगभेदे हृदामयोऽप्यत्र। भावप्र० तस्य निदानादि तत्रोक्तं यथा "हृद्रोगस्य विप्रकृष्टनिदानमाह "अत्युष्णगुर्व्वन्नकषायतिक्तश्रमाभिघाताध्यशनप्रसङ्गैः। संचिन्तनैर्वेगविधारणैश्च हृदामयः पञ्चविधः प्रदिष्टः"। प्रसङ्गः सततं सेवा। संचिन्तनम् अतिचिन्ता राजभयादिजनितेति। हृदामयः स च पञ्चविधः वातिकः पैत्तिकः श्लैष्मिकः सान्निपातिकः क्रिमिजश्चेति। तस्य संप्राप्तिपूर्वकं लक्षणमाह। "दूषयित्वा रसं दोषा विगुणा हृदयङ्गताः। हृदि बाधां प्रकुर्वन्ति हृद्रोगं तं प्रचक्षते"। विगुणाः दुष्टाः बाधां दोषभेदेन नानाविधां व्यथाम्। प्रकुर्वन्तोऽङ्गानिति गयदासः। वातिकं हृद्रोगमाह "आयम्यते मारुतजे हृदयं तुद्यते तथा। निर्मथ्यते दीर्य्यते च स्फोट्यते पाट्यतेऽपि वा"। मारुतजे हृद्रोग इति शेषः। आयम्यते अथवा विकृष्यते इव। व-

न्वेतवचायाञ्च स्त्री मेदि०ङीप् ८गङ्गायां १०रेणुकायां स्त्री धरणिः ङीप् । [सर्वचूर्णिकायां शब्दर० ।

हैमा(मी) स्त्री हेम तद्वर्णोऽस्त्यस्य अच् वा ङीप् ।

हैयङ्गवीन न० ह्योगोदोहाद् भवम् ह्यस्+गो+ख नि० । १नवनीते रत्नमा० पूर्वदिनदुग्धोद्भूते २घृते च अमरः ।

हैरिक पु० हिर—र हेरः तत्र प्रसृतः ठक् । चौरे धरणिः ।

हैहय पु० पश्चिमस्थे देशविशेषे बृ०स० कूर्मविभाग २१६८ पृ० दृश्यम् तेषां राजा अण् । २हैहयेश्वरे कार्त्तवीर्य्ये हेमच० पृषो० हैहेय तत्रार्थे शब्दर० ।

हो अव्य० हु—डो नि० । १सम्बोधने २आह्वाने च मेदि० ।

होड गतौ अनादरे च भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । होडते अजुहोडत् ।

होड पु० होड—अच् हुड-अच् वा । १वहद्गामिनौकाभेदे (डिङि) त्रिका० २चौरापहृते च त्रिका० ।

होतृ पु० हु-तृच् । १ऋग्वेदाभिज्ञे अमरः । २होमकर्त्तरि त्रि० स्त्रियां ङीप् । "या हविर्वह च होत्री" शकुन्तला

होत्र न० हु-ष्ट्रन् । १होमे हेमच० । २हविषि घृतादौ च त्रिका० ३स्तुतौ स्त्री टाप् ।

होत्रीय न० होत्राय हितम् होतुरिदं वा छ । १हविर्गृहे हेमच० । २होत्रसम्बन्धिनि त्रि० ।

होम पु० हु—मन् । देवतोद्देशेन वह्नौ मन्त्रद्वारा घृतादित्यागरूपे हवने नित्यं स्वकर्त्तव्येषु पञ्चसु यज्ञेषु मध्ये (२देवयज्ञे अमरः । ३आहोत्रविक्षेपणे आहोयाध्यायस्य मन्त्रेण दाने च न्या० त० ।

होमकुण्ड पुं न० होमार्थं कुण्डम् । होमार्थे कुण्डे त्रिका०

होमधान्य न० होमोपयुक्तं धान्यम् । १तिले २यवे च राजनि० ।

होमधूम पु० होमस्य धूमः । होमार्थाग्निजाते धूमे च हेमच०

होमभस्मन् न० होमस्य भस्म । हुतद्रव्यजाते भस्मनि हेमच०

होमाग्नि पु० ६त० । यज्ञियाग्नौ हेमच० ।

होमि पु० हु-मिन् डट् च । १अग्नौ २घृते च मेदि० ३जले शब्दर० । ४चित्रकवृक्षे ।

होमिन् पु० होमोऽस्त्यस्य इनि । होमकर्त्तरि । [राजनि०

होम्य त्रि० होमाय हितम् यत् । होमोपयुक्ते घृतादौ

होरा स्त्री हु-रन् । ज्योतिषोक्ते १लग्ने २राश्यर्द्धभागे ३होराशास्त्रपद्यशास्त्रभेदे ४रेखायाञ्च मेदि० । "विषमर्क्षेषु प्रथमा होराः सूर्यस्य कीर्त्तिताः । द्वितीयाः शशिनो युग्मे त्वन्यथा तु भवेत् सदा" ज्यो० त० ।

"चतुर्विंशतिभेदाभिर्होरात्रं प्रचक्षते । पश्चिमादर्क-राशादि होराणां विद्यते क्रमः" वह्निपु० ।

होलक पु० हु-क्विप् चलति चल-अच् कर्म० । "अर्द्धपक्वैः शमीधान्यैस्तृणभृष्टैश्च होलकः" इत्युक्ते तृणादिना अर्द्धपक्वे शमीधान्ये "होलकोऽल्पानिलो मेदःकफदोषश्रमापहः । भवेद् यो होलको यस्य स च तत्तद्गुणो भवेत्" भावप्र० ।

होलाक पु० स्वेदविशेषाख्यव्यापारभेदे चरकः तत्र होलाक इत्यत्र होलक पाठान्तरम् ।

होलाका स्त्री हु-क्विप् तं लाति ला-क संज्ञायां कन् । १वसन्तोत्सवभेदे उपचारात् तत्काले फाल्गुनपौर्णमास्याञ्च १० पृषो० होली होलिका होलकाऽप्यत्र । होलाकादिश्च आचारप्राप्त इति माधवादयः । पुराणादिसिद्धः शास्त्रमूलोऽयम् आचार इति हेमाद्रिनिर्णयसिन्धुप्रभृतयः । तद्विधिकालौ नि०सि० उक्तौ यथा "फाल्गुनपौर्णमासी होलिका सा च रात्रिव्यापिनी ग्राह्या "रात्रौ होलिकां कुर्यात् पूर्वाह्णे क्रीडनं गवामिति" वचनादिति निर्णयामृते उक्तम् । ज्योतिर्निबन्धे तु "प्रतिपद्भूतभद्रासु याऽर्चिता होलिका दिवा । संवत्सरं तद्राष्ट्रं पुरं दहति साद्भुतम् । प्रदोषव्यापिनी ग्राह्या पूर्णिमा फाल्गुनी सदा । तस्यां भद्रामुखं त्यक्त्वा पूज्या होला निशामुखे" इति नारदवचनात् प्रदोषव्यापिनीत्युक्तम् । हेमाद्रौ मदनरत्ने च भविष्ये "अस्मिन् निशागमे पार्थ ! संरक्ष्याः शिशवो गृहे । गोमयेनोपलिप्ते च सचतुष्के गृहाङ्गणे" इत्यादिना तत्रैव तद्विधानोक्तेश्च । तेनेयं पूर्वविद्धा "श्रावणी दुर्गनवमी दूर्वा चैव हुताशनी । पूर्वविद्धैव कर्त्तव्या शिवरात्रिर्बलेर्दिनम्" इति बृहद्यमवचनेनैवोक्तेश्च । दिनद्वये प्रदोषव्याप्तौ परैव पूर्वदिने भद्रासत्त्वात् तत्र च होलिकानिषेधात् तदुक्तं निर्णयामृते मदनरत्ने च पुराणसमुच्चये "भद्रायां दीपिता होली राष्ट्रभङ्गं करोति वै । नगरस्य च नैवेष्टा तस्मात् तां परिवर्जयेत्" । तथा "भद्रायां द्वे न कर्त्तव्ये श्रावणी फाल्गुनी तथा । श्रावणी नृपतिं हन्ति ग्रामं दहति फाल्गुनी" । तथा "दिनार्धात् परतोऽपि स्यात् फाल्गुनी पूर्णिमा यदि । रात्रौ भद्रावसाने तु होलिका दीप्यते तदा" इति । यदा तु पूर्वदिने चतुर्दशी प्रदोषव्यापिनी परदिने च सूर्यास्तात् प्रागेव पूर्णिमा समाप्यते तदा पूर्वदिने संपूर्ण

रात्रौ भद्रासत्त्वात् तत्र च तन्निषेधात् परेऽहनि प्रतिपद्येव कुर्य्यात्। "सार्द्धयामत्रयं वा स्याद् द्वितीयदिवसे यदा। प्रतिपद्वर्द्धमाना तु तदा सा होलिका स्मृता" इति भविष्यवचनादिति निर्णयामृतकारः। मदनरत्नेऽप्येवम्। यत् तु "वह्नौ वह्निं परित्यजेदिति" भविष्यम्। वह्नौ होलिकायां वह्निं प्रतिपदं वर्जयेदित्यर्थः तदुक्तभिन्नविषयमिति तत्रैवोक्तम्। अन्ये तु तस्यां भद्रामुखं त्यक्त्वा कार्य्या। "प्रदोषव्यापिनी चेत् स्याद् तदा पूर्वदिने तथा। भद्रामुखं वर्जयित्वा होलिकायाः प्रदीपनम्" इति नारदवचनात्। "निशागमे प्रपूज्येत होलिका सर्वदा बुधैः। न दिवा पूजयेद्धोलां पूजिता दुःखदा भवेत्" इति दिवोदासीयवचनात्। "सायाह्नयोर्द्धयुक्ता चेत् प्रतिपत्तु भवेत्तिथिः। भद्रामुखं परित्यज्य कार्य्या होला मनीषिभिः" इति विद्याविनोदेऽभिधानाच्च। भद्रामुखं विहाय पूर्वदिन एव कार्य्येत्याहुः। भद्रामुखन्तु "नाड्यस्तु पञ्च वदनं गणकास्तथैके" इति रत्नमालोक्तं ज्ञेयम्। शिष्टाचारोऽप्येवमेव। यत्र चेच्चन्द्रग्रहणं तदा ततोऽर्वाङ्निशि भद्रावर्जं पौर्णमास्यां होलिकादीपनम्। अथ परेऽह्नि प्रत्युदयस्तदा पूर्वदिने भद्रावर्जं रात्रौ चतुर्थयामे विष्टिपुच्छे वा होलिका कार्य्या। पञ्चोत्तरं प्रतिपत्सत्त्वाच्च तत्पूर्वं दिवा होलानिषेधादिति दिवोदासचन्द्रप्रकाशौ। यस्तु परदिने प्रदोषे पौर्णमासीसत्त्वे सर्व्वकालव्याप्ते चतुर्थयामादिगौणकालव्याप्ते भानाभावाद्भद्राभावाच्च प्रदोषकाल एव होला कार्य्या। न च "सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने। स्नात्वा कर्म्माणि कुर्वीत शृतमन्नं विवर्जयेदिति" निषेधात् कथं सूतके होलेति वाच्यम् तस्योत्तराङ्गभेदत्वात्। पूजामन्त्रस्तु "असृक्पाभयसन्त्रस्तैः कृता त्वं होलि! बालिशैः। अतस्त्वां पूजयिष्यामि भूते भूतिप्रदा भव" इति। यत्तु वार्त्तिककारैर्होलिका आचारप्राप्तेत्युक्तम्। तत्र हेमाद्र्याद्युदाहृतभविष्यवचनान्यविज्ञानि मत्वा चिन्त्या ज्ञेया आन्त्यधिकरणवत्। कृतायनी मलमासे न भवति" नि॰ सि॰।

**होलाकाधिकरण** न॰ जैमि॰ प्रथमस्य द्वितीयपादे दर्शिते न्यायभेदे तच्च तत्त्वबोधन्याम संक्षिप्य दर्शितं यथा "होलाका प्राच्यैरभिमानिभिरनुष्ठीयते होलाका च वसन्तोत्सवविशेषः इति प्रसिद्धः। एवमाह्नीनैबुकादिकं दाक्षिणात्यैः, आह्नीनैबुकं स्थलकूपागतं करञ्जकादि-स्थावरदेवतापूजादिकं तद्देशप्रसिद्धम्। उद्वृषभयज्ञादिकमुदीच्यैः क्रियते उद्वृषभयज्ञश्च ज्यैष्ठ्यां पौर्णमास्यां गवीवर्द्दानभ्यर्च्य धावयन्ति यत्र सः तद्देशप्रसिद्धः एवं हारीताद्युक्तस्मृतयोऽपि काश्चित् काश्चिद्देशविशेषे दृश्यन्ते तथोक्तकर्माणि तत्तत्प्राच्यादिकर्तृकानीत्येषां मूलभूताः श्रुतयः कल्पनीयाः। तत्र किं प्राच्यैर्होलाका कर्त्तव्येत्यादिरूपा प्राच्यादिपदघटिता व्यवस्थितविषया उत होलाका कर्त्तव्या इति तत्तत्पदाघटिता सामान्यविषया इति संशयः तत्र प्राच्यादिपदघटितैव कल्प्या तेषु विशेषाणामाचारदर्शनात् लिङ्गव्यवस्थया हि लिङ्ग्यनुमीयते यथा यत्र धूमोऽवगतस्तत्रैव वह्निरनुमीयते नान्यत्र तथा च सूत्रम् "अनुमानव्यवस्थानात्तत्संयुक्तं प्रमाणं स्यात्" अस्यार्थः। अनुमानव्यवस्थानात् धूमादिव्यवस्थया वह्न्याद्यनुमानव्यवस्थादर्शनात् तत्संयुक्तं प्राच्यादिपदघटितम् अनुमेयश्रुतिवाक्यं प्रमाणं स्यादिति प्राप्ते राद्धान्तायोक्तम् "विशेषाभावमात्रेण प्रसिध्येत् सर्वधर्म्मता। विशेषणात् व्यवस्था स्यात् तच्च नेहोपपद्यते"। अस्यार्थः विशेषाभावमात्रेण हारीतस्मृतिहोलाकादौ प्राच्यविशेषप्रतिपादकपदाभावेन तत्तत्स्मृत्युक्तस्य सर्वधर्म्मता सर्वसाधारणी कर्त्तव्यता प्रसिध्येत्। तथा हि छन्दोगादि गोभिलादिः कल्पिताध्यापयामास तेऽप्यन्यान् छन्दोगानेवमन्यानपि बह्वृचाश्वलायनादिकल्पसूत्रमतस्तत्तच्छाखिनस्तत्तच्छाखोक्तमाचरन्ति इति प्रतिवाक्यानुसारिणी श्रुतिः कल्पनीया। आचारे त्वत्र विशेषणात् प्राच्यादीनां विशेषणव्यवहारदर्शनेनानुमेयश्रुतौ प्राच्यादिविशेषणपदान्तर्भावात् व्यवस्था स्यात् प्राच्यादीनामेव तदाचरणमिति विधानव्यवस्था स्यात् तच्च नेहोपपद्यते। अयमाशयः पूर्वापरिदृष्टमनुगतम् अनाचरितस्य आहत्य आकृतिव्यक्तिगुणादिकं किञ्चित् विशेषणं न लभ्यते यदुपादाय होलाकाद्यधिकरणं स्यात्। न च प्राचीभवत्वादिरूपप्राच्यादिपदवाच्या तथेति वाच्यं तद्देशभवानामपि केषाञ्चिदनाचरणात् चिरविनिर्गतस्य तद्देशीयस्य पुरुषपौत्रस्य समाप्तायामस्यामपि होलाका कर्त्तव्येति सामान्यश्रुत्यैवोपपत्तौ प्राच्यादिपदघटितश्रुतिकल्पनमन्याय्यं गौरवात् न चाप्राच्यानाम् अनुष्ठानार्थं प्राच्यादिपदवती कल्पनीया अनाचरणरूपस्य अनुष्ठानस्याश्रुतिकल्पकत्वात् तस्याविरहेणैव सम्भवात्। न हि यदि श्रुतिविहितं स्यात् तदा अप्राच्यैरपि अ-

रः ह्रीवेर तन्नार्थे अमरटीकायामाह च भरतः ।

ह्रुड गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । ह्रोडते अह्रोडिष्ट । [ह्रुडति अह्रुडिष्ट

ह्रूड गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः ।

ह्रेप गतौ भ्वा० आ० सक० सेट् । ऋदित् चङि न ह्रस्वः । ह्रेपते अह्रेपिष्ट ।

ह्रेष अव्यक्तशब्दे अक० गर्वणे सक० भ्वा० आ० सेट् ऋदित् चङि न ह्रस्वः । ह्रेषते अह्रेषिष्ट ।

ह्रेषा स्त्री ह्रेष–भावे अ । अश्वशब्दे अमरः ।

ह्रौड गतौ भ्वा० आ० सक० सेट् ऋदित् चङि न ह्रस्वः । ह्रौडते अह्रौडिष्ट । [दित् । ह्लगति अह्लगीत् ।

ह्लग संवरणे भ्वा० प० सक० सेट् घटा० ऋदित् चिणि न

ह्लप भाषणे चु० उ० द्विक० सेट् । ह्लापयति ते अजिह्लपत् त ।

ह्लस रवे भ्वा० प० अ० सेट् । ह्लसति अह्लसीत् अह्लासीत् ।

ह्लाद शब्दे भ्वा० आत्म० अक० मोदने सक० सेट् ईदित् निष्ठायामनिट् । ह्लादते अह्लादिष्ट । ह्लादः ।

आ+आनन्दे अक० आह्लादः ।

ह्लादिनी स्त्री ह्लाद–णिनि ङीप् । १विद्युति २वज्रे, अमरः ३अन्नतरस ३ईश्वरशक्तिभेदे च शब्दरः ४ह्लादविशिष्टे त्रि०

ह्वल चलने भ्वा० प० अक० सेट् । ह्वलति अह्वालीत् । घटा० प्रह्वलयति अनुपसर्गस्य वा ह्रस्वः ह्वलयति ह्वालयति ।

ह्वान न० ह्वे-ल्युट् । आह्वाने । [अह्वरत् ।

ह्वृ कौटिल्यकरणे भ्वा० प० सक० अनिट् । ह्वरति अह्वार्षीत् ।

ह्वे स्पर्द्धायां शब्दे च अक० आह्वाने सक० भ्वा० उभ० यजा० अनिट् । ह्वयति अह्वत्–अह्वत अह्वास्त सम्प्र० जुहाव आहूतः आहूतिः ।

आ+स्पर्द्धायाम् आत्म० शत्रुमाह्वयते । शिवम् ।

ओँ तत्सत् ।

इति श्रीतारानाथतर्कवाचस्पतिभट्टाचार्य्यसङ्कलिते
वाचस्पत्ये हकारादिशब्दार्थसङ्कलनम् ।

---

## ग्रन्थकर्तृवंशादि ।

राढ़ीयश्रेणीविख्यातके जिडिग्रामिकः किल । यशोहरप्रदेशस्थसारसावसथे स्थितः ॥
सार्वभौमोपाधियुक्तः कमलाकान्तसंज्ञकः । सच्छ्रोत्रियः क्षितौ ख्यातो वात्स्यवंशावतंसकः ॥
मुकुन्दरामनामासीत् तदन्वयसमुद्भवः । तत्प्रदेशस्थवैचण्डीग्रामवासी स्वकार्य्यतः ॥
तर्कसिद्धान्तोपनामा रामरामस्तदात्मजः । सदा शिवशिवेत्युक्त्या प्राप्तः शिवशिवाभिधाम् ॥
नानाविद्याधरत्वेन प्राप विद्याधराह्वयम् । भागीरथीतीरवासी भवबन्धजिहीर्षया ॥
वर्द्धमानप्रदेशस्थाम्बिकाग्रामेऽवसच्चिरम् । अन्ते काशीं समासाद्य पञ्चत्वं प्राप्य मुक्तिभाक् ॥
अम्बिकावासकालेऽस्य जातौ वंशधरौ सुतौ । तर्कपञ्चाननोपाधिर्दुर्गादासस्तु मध्यमः ॥
सार्वभौमोपाधियुतः कनीयांस्तु तदात्मजः । कालिदासाभिधो नानाशास्त्रविद्याविशारदः ॥
तस्याहं प्रथमः पुत्रस्तारानाथाह्वयो द्विजः । तर्कवाचस्पत्युपाधिं गुरुतो लब्धवान् स्वतः ॥
नगरे कलिकाताख्ये गवर्णमेण्टनिवेशिते । संस्कृतपाठशालाख्ये मठे पूर्वमधीतवान् ॥
काश्यादिनानास्थानेषु लब्धविद्यस्ततः क्रमात् । तत्रैव पाठशालायां तदध्यक्षेण पूर्वतः
पाणिन्यादिव्याकरणपाठनार्थे नियोजितः । पश्चात् दर्शनशास्त्रस्याध्यापनार्थापि योजितः ॥
प्रायस्त्रिंशत्समान्तं तत्कर्मानुष्ठितं मया । सिद्धान्तकौमुदीव्याख्या सरलाख्या तदा कृता ॥
तदैव तत्त्वकौमुद्या व्याख्याऽपि यत्नतः कृता । सिद्धान्तबिन्दुसारोऽपि शब्दस्तोममहानिधिः ॥

आशुबोधं व्याकरणं शब्दार्थरत्ननामकः। धातुरूपादर्शनामा ग्रन्थोऽपि रचितो मया॥
गायत्र्यर्थो विनिर्णीतः गयाश्राद्धादिपद्धतिः। वादो बहुविवाहस्य तुलादानादिपद्धतिः॥
राजप्रशस्ती रचिता कादम्बर्य्याश्च टिप्पनी। वेणीसंहारमुख्येषु विवृतिर्नाटकेषु च॥
एते ग्रन्था विनिर्माय मुद्रिता बहुयत्नतः। गवर्णमेण्टानुकूल्यञ्च क्वचिदेषु च मुद्रणे॥
तत्पदापसृतेनापि गवर्णमेण्टप्रकाल्पिताम् अर्द्धवृत्तिं समासाद्य वाचस्पत्यं समापितम्॥
मुद्रणे व्ययबाहुल्यात् गवर्णमेण्टे निवेदिते। तद्दत्तव्ययसाहाय्यं लब्ध्वेदं मुद्रितं मया
अष्टादशभिरानायि वर्षैः पूर्तिं मयाधुना। शब्दरत्नमयः कोषो मोषदोषविवर्जितः।
नानाधातुरव्ययाढ्यो नानार्थोऽयं विराजताम्। वाचस्पत्याभिधो नानाशास्त्रार्थानां प्रदर्शकः॥
वाचस्पत्युपनाम्नाथ श्रीतारानाथशर्म्मणा। निरमायि प्रयत्नेन मुद्रायन्त्रे च मुद्रितः॥
वाणशून्यदन्तिचन्द्रविमिते शकवत्सरे। सौरपौषे षोड़शांशे मुद्रा तस्य समापिता॥
यदत्र स्खलितं किञ्चित् प्रमादेन भ्रमेण वा। तत्सर्वं शोधयन्त्वार्य्याः कस्य न स्खलितं मनः।
बहुच्छिद्रं परित्यज्य गुणलेशजिघृक्षया। परिगृह्णन्त्वदोषिज्ञा ऋजवो दम्भवर्जिताः॥

एतस्य मुद्रणविधौ परिशोधनार्थं यत्ने कृतेऽपि बहुले भ्रमतः मादात्।
दृष्टेर्विकारवशतो यदशुद्धमस्ति संशोधयन्तु सुधियो नतियाचितास्तत्॥

अनुद्बोधाद्विस्मृता ये शब्दाः केचित् प्रमादतः। परिशिष्टे प्रकाश्यास्ते इत्याशा पूरको विभुः॥
ये शब्दाम्बुधिपारमापुरमलप्रज्ञातरीवैभवात् तानुद्दिश्य नमस्क्रियैव सततं तेभ्यो न चैषा क्रिया।
ये शास्त्रेऽकृतबुद्धयो निजधिया व्युत्पित्सवो मानवाः नानाकोषनिरीक्षणे श्रमभियस्तेभ्यो ममैषा क्रिया
पदानुशासने रतं मुनित्रयं हृदा नतम्। तदस्य भूमिमण्डले करोतु सुप्रचारणम्॥ शिवम्

ओँ तत्सत्।

इति कलिकाताख्यगवर्णमेण्टसंस्कृतपाठशालीयदर्शनव्याकरणाध्यापकवर श्रीतारानाथतर्कवाचस्पति-
भट्टाचार्य्येण विरचितं वाचस्पत्याभिधमभिधानं समाप्तम्।

१८०५ शालिवाहन वत्सरे, १९४० विक्रमादित्यसंवत्सरे, १८८४ ख्रीष्टाब्दे
कलिकातानगरे मुद्रितमभूत्।

*Skylark Printers*

K 2/8 MODEL TOWN DELHI - 9